महाकविश्रीकालिदासविरचितं

# ज्योतिर्विदाभरणम्

भावरत्नविरचितसुखबोधिकासमेतम् ।

---

जांभेकरोपाव्ह श्रीकृष्णात्मज-

सीतारामशर्मणा यथामति संशोधितम्

टिप्पण्यादिभिर्युक्तीकृतं च ।

---

प्रथमं संस्करणम्

---

तच्च

मुम्बय्याख्यराजधान्यां सु-वर्णाख्यमुद्रणयंत्रालये

पण्डितमूलजीतनुजनुषा पण्डितनारायणशर्मणा

मुद्रयित्वा प्रकाशितम्

---

शकाब्दाः १८३० ख्रिस्ताब्दाः १९०८

मूल्यं सार्धरूपकद्वयम्

## ॥ अथ ज्योतिर्विदाभरणस्थविषयानुक्रमणिका ॥

विवाहप्रकरणम् १२

## वस्त्रालंकारपरिधानप्रकरणम् १४



## प्राकारप्रकरणम् १५

## गृहारंभप्रकरणम् १६

## ग्रंथाध्यायनिरूपणप्रकरणम् २२



॥ श्रीः ॥

॥ श्रीः ॥

## भावमुनिविरचितसुखबोधिकाव्याख्यया समलंकृतम्

# ज्योतिर्विदाभरणम् ।

### मानप्रकरणम् ।

श्रीगणेशाय नमः ॥ श्रीसरस्वत्यै नमः ॥ श्रीगुरुचरणकमलेभ्यो नमः ॥ अविघ्नमस्तु ॥
श्रीमान्पार्श्वजिनोतिशेषकगणंप्राप्तःप्रभुःपूर्णगीर्द्राक्क्षिप्रप्रचलत्कुयोगकमवप्रौढिःप्रजानाम्पुरः॥
सत्कीर्त्यानकनादपूरितजगत्साकल्यइष्टार्थदो गीर्वाणेश्वरसेवितो विजयते विश्वैकचिंतामणिः ॥१॥
नत्वा गुरुं गिरमपीभमुखं च खेटान् श्रीकालिदासकविशक्रविनिर्मितस्य ॥
ज्योतिर्विदाभरणनामवरागमस्य संतन्यते गुरुकृपं सुखबोधिकेयम् ॥ २ ॥
श्रीपत्तने प्रवरपौर्णिमिकाङ्कगच्छेढंढेरपाठकशुभाश्रयसंश्रितानाम् ॥
श्रीयुक्तपूज्यमहिमाप्रभसूरिराज्ञां शिष्येण भावमुनिना रचिता यथाचित् ॥ ३ ॥

**रैभ्याऽत्रिहारितवसिष्ठपराशराद्यैर्नत्वोदितं जनघनव्यवहारसिद्ध्यै ॥ ग्रथ्नाम्यहं ननु तदेव गिरं यदाकर्यं ज्योतिर्विदाऽभरणनाम्नि महश्च शैवम् ॥ १ ॥**

युग्मम् ॥ अथ ग्रंथारंभे ग्रंथकृत् श्रीकालिदासकविशक्रो वसंततिलकावृत्तेन समुचितेष्टदेवतानमस्काररूपमंगलमाचरन्ननुबंधचतुष्टयमाह—रैभ्येति । ननु इति ग्रंथप्रारंभे निश्चितं वा यदुक्तम् । 'ननु । निश्चये च विरोधे च क्षमायां माक्षिकाक्षिपे । पक्षांतरे च स्वीकारे प्रारंभे प्रश्नतर्कयोः' इतिविश्वप्रकाशबृहट्टिप्पनके । अहं कालिदासनामा कविर्गिरं नत्वा प्रणम्य जनघनव्यवहारासिद्ध्यै जनानां विप्रादीनां घनो गात्रं तस्य व्यवहारः गर्भाधानसंस्कारादारभ्य अंत्यसमयं यावदनेन व्यवहारेण व्यवह्रियते तदीक्षितं स्यादितिकथनात् । तस्य सिद्ध्यै सम्यक् फललाभाय । अथवा जनानां घनः समुदायस्तस्य व्यवहारेण व्यवहारः । अथवा जनानां घनो दृढोऽवश्यंकर्त्तव्यएव इति सचासौ व्यवहारश्च । अथवा घनो बहुश्चासौ व्यवहारश्च घनव्यहारः जनानां घनव्यवहारस्तस्य सिद्धिस्तस्यै 'घनः सांद्रे दृढे दार्ढ्ये विस्तारे मुद्गरेंबुदे । संवे मुस्ते घनं मध्यं नृत्यवाद्यप्रकारयोः' इतिहैमोनेकार्थः । 'घनो बंधः पुरं पिंडो वपुः' इत्यभिधानचिंतामणिः । रैभ्यादिभिरितिनामभिर्ऋषीश्वरैरुदितं कथितं वचनगोचरीकृतं वचनगोचरतया प्रकटीकृतं वा एतद्विशेषणेन स्वाभिमानापनयनाय वज्रोत्कीर्णमणौ सूत्रगतिवदत्र मम मतिप्रवेशइति सूचितम् । एवंविधंतदेवइतिकर्म्मभूतम् । अत्रैवकारेण स्वमतिसंकल्पजन्यमपास्तम् । ज्योतिर्विदाभरणनाम्नि ग्रंथे ग्रथ्नामि गुंफयामीत्यन्वयः । ज्योतिर्ज्योतिषं विदु-

रितिज्योतिर्विदो दैवज्ञास्तेषामाभरणं भूषणमिव भूषणं तन्नाम यस्यासौ तस्मिन् । अथवा ज्योतिषः शास्त्रस्य या विद् विद्या ज्ञानं वा तस्याभरणं अत्र निमित्तार्थे सप्तमी एतादृशग्रंथप्रयोजनायेत्यर्थः । ग्रथ्नामीतिसमीपभविष्यति च वर्त्तमाने वेति । तत्किं यत्तदोर्नित्यसंबन्धः । यदार्क्यं अर्कसंबंधि यत्तेजः । च पुनः शैवं शिवसंबंधि तेजो भुवने विजयते । अत्र गिरं नत्वेति वाचिको नमस्कारः । तदार्क्यं शैवं च तेजइतिविषयः सूचितः १ व्यवहारसिद्ध्यै इतिप्रयोजनं सूचितं २ ज्योतिर्विदइत्यधिकारिणः सूचिताः ३ ज्योतिर्विदन्तीतिज्योतिर्विदस्तेषामाभरणमित्यादियदस्यानया व्युत्पत्त्या प्रतिपाद्यप्रतिपादकभावः संबंधः सूचितः । प्रतिपाद्याः पदार्थाः प्रतिपादको ग्रंथइतिदिक् । ननु ग्रंथादौ रैभ्येतिरेफग्रहणं विघ्नहेतुः 'हानिकारो हकारः स्यात्' इत्यादिवर्णपंक्तौ छंदश्शास्त्रेण रोगोत्पत्तिकृद्रेफस्योक्तत्वान्मैवं । ऋषिवाचिना मत्वाद्द्रव्यवाचित्वाच्च निर्विघ्नतैवहेतुरिति । अत्र सुखबोधिकायां यत्र संधिविभानं न दृश्यते तत्सुबोधहेतु । न संधिः विरामे संधिर्न स्यादितिहैमसूत्रेण सिद्धिश्च । अत्र ग्रंथे श्रीकालिदासकविना वराहमिहिरादिप्रोक्तमार्गानुगामिनाऽपि वराहमिहिरादिदैवज्ञमदगदौषधप्राया बहुशाब्दिकमतमिश्रिता विषमसंधयो विषमान्वयदुर्घटशब्दागुंफिताः । परंचास्य ग्रंथस्य वृत्त्याद्युपजीवनं न दृष्टं तथापि श्रीमतां सर्वस्वसमयपरसमयविदां श्रीमहिमाप्रभुसूरीश्वरगुरूणां प्रसादावनान्ममैष उपक्रमः । अत्र हि मयाऽभिधानचिंतामणिः । हैमोऽनेकार्थः । हैमशेषकोशः । महीपकोशः । अनेकार्थध्वनिमंजरी । नानाविधैकाक्षरकोक्षः । शब्दरत्नाकरनामशब्दप्रभेदः । हैमलिंगानुशासनम् । हैमबृहद्वृत्तिः । धातुरत्नाकरवृत्तिरित्यादिग्रंथा यथामति स्मृताः । अतो ह्यव्यक्तमतिना विभ्रमो न कार्यः । सुधिया तु खलतां विहाय शोध्यः । तत्र तावच्छब्दशुद्धिस्मृतये किंचिच्छब्दविवेको लिख्यते । अश्लेषा हस्ताश्रवणा तिथिः तारा स्वातिरेते शब्दाः पुंस्त्रीलिंगाः । तारकशब्दोत्रिलिंगः । उडुः स्त्रीक्लीबलिंगः । श्वयुक् स्त्रीलिंगाः । पुनर्वसू द्विवचनान्तः पुंलिंगः । मघाः बहुलाः कृत्तिकाः एते नित्यं बहुवचनांताः स्त्रीलिंगाः । अब्दं हायनं वर्षं मुहूर्तं दिनं दिवसं वासरं कुतपं अहोरात्रं मूलं एतेशब्दाः पुंक्लीबलिंगाः । भरणीस्त्रीलिंगः । ज्ञातिःपुंल्लिंगः । सप्ताः स्त्रीरिव गोविकल्पेन बहुवचनांतः शरद्स्त्रीलिंगः । ज्येष्ठाधनिष्ठाश्रविष्ठा एते तृतीयवर्गद्वितीयांताः । ज्योतिषशास्त्रेन्यथापि दृश्यते तदाह । पुनर्वसुः एकवचनांतः । मघाकृत्तिकाचैकवनांतइति । शुक्रे भृगुः भृगुजः कविः कविजः काव्यइति । आदिशब्दपर्यायाः । मिथुनराशौ जितुमःजित्मइतिशब्दप्रभेदः । बुधे वित् ज्ञः बोधनश्चेतिशब्दपर्यायाः । अथ द्वादशराशीनां विशेषसंज्ञामाह—क्रिय १ तावुरि २ जितुम ३ कुलीर ४ लेय ५ पार्थन ६ जूक ७ कौर्प्याख्याः ८ तौक्ष्यक ९ आकोकेरो १० हृद्रोगं ११ चांतभं १२ चेत्थंइति अथैषामध्ये संज्ञांतरमाह—मिथुनसिंहकन्यातुलवृश्चिककुंभानां शीर्षोदयसंज्ञाइति । अथ भावकुराऽलीगतसंज्ञामाह—कोणः नव ९ पंचम ५ इति । केंद्रकंटक १।४।७।१० इति । अथ पणफरसंज्ञामाह--२।५।८।११ इति । अथापोक्लिमसंज्ञामाह—३।६।९।१२। इति । अथ द्वादशभावसंज्ञामाह—कं १ दृक् २।१२ । श्रोत्रं ३।११ ।

नासिका ४।१० । कपोलः ५।९ । हनुः ६ ।८ मुखं ७ इति । उपचयसंज्ञा ३।६।१०।११ इति । विशेषतो बृहज्जातकतः संज्ञा ज्ञेयाइतिदिक् ॥ १ ॥

**अन्यासदुक्तिविहितोद्गमपक्षराशीन्व्यर्थानहं विरचयामि वरोतियुक्तैः ॥ मत्वा वराहमिहिरादिमतैरनेकैर्ज्योतिर्विदाभरणमप्यनसन्मतार्हम् ॥ २ ॥**

अथ विशेषतोऽभिधेयशुद्धतयाऽस्य मतं परिहरन् ग्रंथनामोत्कीर्तनमाह—अन्यासदिति । अपिरिति युक्तं 'प्रश्ने युक्तपदार्थेषु' इतिहैमोनेकार्थः । अहं ज्योतिर्विदाभरणं विरचयामि करोमीत्यन्वयः । किंकृत्वा । अनेकैर्वरोक्तियुक्तैः सत्यवचनाश्रितैर्वराहमिहिरादिमतैरन्याऽसदुक्तिविहितोद्गमपक्षराशीन् व्यर्थान् सत्यज्ञानरहितान् मत्वा ज्ञात्वा असत्योऽक्तिकाश्च ता उक्तयोन्येषामसदुक्तयोऽन्यासदुक्तयस्ताभिर्विहितो निर्मायितोऽतएव उद्गमः प्रादुर्भूत एवंविधो यः पक्षः कुहेवाकस्तस्य राशयो गणास्तान् । कथंभूतं ज्योति । अनसन्मतार्हम् न सन्मतं असन्मतं, असन्मतं न भवतीति अनसन्मतं शुद्धमतं तस्मै अर्हं योग्यम् । अथवा असंतो दुर्ज्जना न असंतोऽनसंतः सज्जनास्तेषांमतं सन्मतं तेन योग्यमित्यर्थः ॥ २ ॥

**सौरं च सावनकमैंदवमार्क्षमानं पैत्र्यं गुरोरथमनोर्मरुतामनेन ॥ मानं विधेरिति न वाखिलकर्म्मसिद्धेर्मानानि माननवकेन सुनिश्चयःस्यात्**

अथ प्रथमं नवधा मानमाह—सौरमिति । सौरं सूर्यसंबंधिमानं १ चकारः समुच्चयार्थः सावनकं तदेव सूर्यसंबंधि अयनांशसहितमानं २ ऐंदवं चंद्रसंबधिमानं ३ आर्क्षं भसंबंधि मानं ४ पैत्र्यं पूर्वजसंबंधिमानं ५ गुरोर्गिरांपतेर्मानम् ६ मनोर्मानम् ७ मरुतां देवानां मानं ८ विधेर्ब्रह्मणोमानम् ९ इति नव मानानि संति अनेन माननवकेन अखिलकर्म्मसिद्धेः सुनिश्चयः स्यात् । अत्र संबंधे षष्ठी । 'मानं प्रमाणे प्रस्थादौ मनश्चित्तोन्नतौ ग्रहे' इत्यनेकार्थः । 'मानशब्दो महाकारे विषभेदे क्रियामितौ ॥ आढके कोलभेदे च प्रतिष्ठायां जगुर्बुधाः' इति महीपः ॥ ३ ॥

**गुर्व्वक्षराणामुदितं च षष्ट्या पलं पलानां घटिका किलैका ॥ षष्ट्या घटीनां भदिनं तथार्यैस्तिथ्यैकया चंद्रमसो दिनं स्यात् ॥ ४ ॥**

अथोपजातिछंदसैतेषु लघुमानत्वात्प्रथमं भमानमाह—गुर्वेति । आर्यैः पंडितैः 'आर्यो ज्ञे बुधपूज्ययोः' इतिमहीपः । गुर्वक्षराणां दीर्घवर्णानां षष्ट्याकृत्वा पलमुदितं कथितं । पलानां षष्ट्या कृत्वैका घटिका कथिता । तथा घटीनां षष्ट्या भं दिनं नक्षत्रदिनं कथितं । एकया तिथ्या चंद्रमसोर्विधोर्दिनं स्यात् ॥ ४ ॥

**खरमरीच्युदयद्वयजांतरं यदिह सावनसंज्ञदिनं स्फुटम् ॥ प्रतिदिनं स्फुटभुक्तिमितिः सदा खरगभस्तिदिनं विबुधैः स्मृतम् ॥५॥**

अथ द्रुतविलंबितेन पूर्वार्द्धेन सावनमुत्तरार्द्धेन सौरमानमाह—**खरेति** । इह सावनाधिकारे खरमरीचेः सूर्यस्योदयद्वयं तस्माज्जायते इति जातमेवंविधमंतरं विचालं यत् स्यात् विबुधैः स्फुटं प्रकटं तत् सावनसंज्ञादिनं स्मृतं । सदा सर्वस्मिन्काले प्रतिदिनेदिने स्फुटभुक्तिमितिर्या भवति । कोर्थः । सूर्यः प्रतिदिनं स्पष्टां यां गतिं गच्छेत् इत्यर्थः । सैव खरगभस्तिदिनं सूर्यदिनं स्मृतं खरास्तीक्ष्णाः गभस्तयः किरणा यस्य सस्तस्य दिनमित्यर्थः ॥ ५ ॥

**स्वमितिमाः स्वखवह्नि३०मितैर्दिनैर्भवति माभिरिनैः १२ स्वसमास्तथा ॥**
**द्युनिशमैंदवमासमितं सदा पितृषु चासितपक्षदलादितः ॥ ६ ॥**

अथ पूर्वार्द्धेन स्वस्वमासवर्षमानमाह—**स्वमिति** । स्वखवन्हिमितैर्निजशून्यरामप्रमितैर्दिनैः ३० कृत्वा स्वमितिमाः स्वकीयमासो भवति माशब्दोकारांतो हसांतश्च । 'मास्तु मासे निशाकरे' इतिहैमः । तथाइनैर्मासैर्द्वादशभिः स्वकीयःसमाः स्वकीयं वर्षं भवति समाशब्दोऽत्र बहुवचनांतः । अत्र सर्वत्र स्वशब्दग्रहणाद्यथा त्रिंशद्दिनैः सूर्यस्य मासः स्यात् तथा तेन षण्मासैः देवानां दिनं तैस्त्रिंशन्मितैर्दिनैर्मासइत्यादि । एवं सर्वेषामपि स्वकीयमानेन ज्ञेयमिति । अथोत्तरार्द्धेन पैत्र्यमानमाह । च पुनः पितृपूर्वजेषु असितपक्षदलादितः कृष्णपक्षदलप्रतिपत्तः सदा ऐंदवमासमितं चांद्रमासप्रमितं द्युनिशं अहोरात्रं भवति पितॄणां कृष्णपक्षो दिनं शुक्लपक्षो रात्रिरित्यर्थः । यतः 'उदेति सूर्यः खलु कृष्णखंडे दिनोदयः स्यात्पितॄणां दिनार्द्धम् ॥ दर्शेस्तमेत्यर्कइतीह शौक्ले दले च संध्या पितॄणां निशैवम् ॥' इतिशिद्धांतशिरोमणौ ॥ ६ ॥

**माने गुरोरगभिदः परिवत्सराणां षष्टिः ६० स्मृता**
**मुनिवरैः प्रभवादिकानाम् ॥ स्यादेकवत्सरमितिर्गुरुम-**
**ध्यमैकराशेस्तु भोगमितिरेव सदा तथाहि ॥ ७ ॥**

अथ वसंततिलकया गुरुमानमाह—**मानइति** । अगान्पर्वतान् भिनत्ति छिनत्तिइत्यग-भित्तस्यागभिदो वज्रिणोगुरोर्बृहस्पतेः माने मुनिवरैः प्रभवादिकानां परिवत्सराणां षष्टिः स्मृता 'संपर्यनूद्वच्योऽग्रे वत्सरे'इति अभिधानचिंतामणिः । तु पुनर्गुरुमध्यमैकराशेर्भोगमिति-र्मार्गप्रमाणमेकवत्सरमेकं वर्षप्रमाणं सदैव स्यात् ॥ ७ ॥

**प्रभवो विभवः शुक्लः प्रमोदाख्यः प्रजापतिः ॥**
**अंगिराः श्रीमुखो भावो युवा धात्रीश्वराह्वयौ ॥ ८ ॥**
**बहुधान्यः प्रमाथी च विक्रमो वृषसंज्ञकः ॥**
**चित्रभानुसुभान्वब्दौ तारणः पार्थिवो व्ययः ॥ ९ ॥**
**सर्वजित्सर्वधारी च विरोधी विकृतस्ततः ॥**
**खरनंदनसंज्ञौ तु विज्ञेयौ जयमन्मथौ ॥ १० ॥**

दुर्मुखस्तदनु प्रोक्तो हेमलंबकसंज्ञकः ॥
विलंबाख्यो विकारी स्याच्छर्वरीप्लवसंज्ञकौ ॥ ११ ॥
उक्तः शुभकृतस्तस्मादब्दः शोभनकृत्स्मृतः ॥
क्रोधी विश्वावसुर्ज्ञेयो वत्सरो हि पराभवः ॥ १२ ॥
प्लवंगः कीलकाख्योथ सौम्यः साधारणाह्वयः ॥
ततो विरोधकृन्नामा परिधाविप्रमाथिनौ ॥ १३ ॥
आनंदो राक्षसः प्रोक्तो नलः पिंगलसंज्ञकः ॥
कालयुक्ताख्यसिद्धार्थौ रौद्रो दुर्मतिदुंदुभी ॥ १४ ॥
रुधिरोद्गारिरक्ताक्षौ क्रोधनः क्षयकृत्स्मृतः ॥
वत्सराणां गुरोर्माने षष्टिसंख्येयमीरिता ॥ १५ ॥

तथाहि अथानुष्टभामष्टकेन षष्टिसंवत्सराणां नामान्याह—प्रभवइत्याद्यारभ्याष्टश्लोकी सुगमा स्पष्टम् ॥८॥९॥१०॥११॥१२॥१३॥१४॥१५॥ ॥

नगै७र्नखैः २० संनिहतो द्विधा शकः सखत्रिशक्रोऽ
१४३० क्षयमांगभाजितः ६२५ ॥ गताः सतल्लब्धशकोऽ
भ्रषड् ६० हृतोवशेषके स्युः प्रभवादिवत्सराः ॥ १६ ॥

अथ वंशस्थेन गतवत्सरानाह—नगैरिति । शको द्विधा स्थाप्यते तयोर्मध्ये य उपरिस्थ शकः सप्तभि ७ र्गण्यतेऽधस्तनवर्ती यः शकः सनखैर्विंशत्या सन्निहतो गुणितः ततो विंशतिगुणितशकं षष्ट्या विभजेदुपरिसप्तघ्नशाके संयोजयेत् इतिश्लोके अस्पष्टमपि ज्ञेयं अन्यथा-ग्रंथविरोधोभवेत् पश्चात्सखत्रिशक्रः सह खत्रिशक्रेण वर्तते यः सत्रिंशदधिकचतुर्दशशतस-हितः क्रियते पुनः पश्चात्सोऽक्षयमांगभाजितः पंचविंशत्यधिकषट्शतेन हृतः पुनः पश्चात्स-तल्लब्धशकः तस्माल्लब्धं तल्लब्धेन सह वर्तते यः सतल्लब्धः सतल्लब्धश्चासौ शकश्च सतल्लब्धशकः । कोर्थः । सप्तघ्नशकाद्धरभक्ताद्यल्लब्धं तत्केवलशाके योज्यते इत्यर्थः । पश्चा-त्सतल्लब्धशकोऽभ्रषट्हृतः षष्ट्या ह्रियते विशेषके प्रभवादिवत्सरा गताः स्युरित्यर्थः । अत्रोदाहरणम् । यथा शको १६३३ द्विस्थाने स्थाप्यः उपरि सप्तभिर्गुणिते जातं ११४३१ पश्चादधः स्थापितशकः विंशत्या गुणितः ३२६६० तदाएवंजातः । एनंषष्ट्या ६० विभज्य लब्धं ५४४।२० सप्तघ्नशाके संयोज्य जातम् ११९७५।२० पश्चात्त्रिंशद-धिकचतुर्दशशतेन युक्तः क्रियते १३४०५।२० तदा एव जातं । पश्चात् पंचविंशत्य-धिकषट्शतेन भाजितस्ततोलब्धं फलं २१ शेषं २८०।२० लब्धे फलं २१ केवलशकमध्ये १६३३ योज्यते तदा १६५४ एवं जातोयं षष्ट्या हृतः शेषं ३४ तत्प्रमाणाश्चतुस्त्रिंशत

प्रमितावत्सरागतास्ततः प्लवनामसंवत्सरा पंचत्रिंशत्तमो वर्तमानो भवतीति रत्नमालाद्यानीतःस एव शेषतोपि रत्नमालाद्युक्त्या वर्तमानवत्सरस्याभुक्तमासादिकं च भवेदिति स्पष्टम् ॥ १६ ॥

**अथायने कीटमृगादिषट्के क्रमेण ते दक्षिणसौम्यसंज्ञे ॥**
**तमीदिने सायनभागभास्वदुत्थे स्फुटे नाकसदामुभे स्तः ॥१७॥**

अथोपजात्या दिवौकसां रात्रिदिनमानमाह—अथेति । क्रमेण दक्षिणसौम्यसंज्ञे कीटमृगादिषट्के अयने । कोर्थः । द्वंद्वेप्येकं संयोजनात् कीटादिषट्कं कर्कादिषट्कं दक्षिणायनं मृगादिषट्कं मकरादिषट्कं उत्तरायणं ते उभे कर्तृपदे नाकसदां दिवौकसां तमीदिने रात्रिदिवसे स्फुटे प्रकटे स्तः भवतः । किंलक्षणे ते सायनभागभास्वदुत्थे । अयनांशसहितो यो भास्वान् रविस्तस्मादुत्थे प्रादुर्भूते कर्कादि दक्षिणायनं देवानां रात्रिः । मकरादि उत्तरायणं दिनमिति । सोमः स्वाम्यस्याइति सौम्या उत्तरा तस्यां जातं सौम्यायनमिति ॥ १७ ॥

**शाकः शरांभोधियुगो ४४५ नितो हृतो मानं**
**खतर्कै ६० रयनांशकाः स्मृताः ॥ नोक्तं मया वाऽव्य-**
**वहारिकत्वतो मनो जगत्कर्तुरथेह मत्कृतौ ॥ १८ ॥**

अथोपजात्याऽयनांशकमानमाह—शाकइति । शरः पंच अंभोधिश्चत्वारो युगाश्चत्वारः एभिरूनीकृतो यः शाकः पुनः खतर्कैः षष्ट्याहृतो यल्लब्धं तेऽयनांशकाः स्मृताः यच्छेषं तत्कलाश्च स्मृताः । अथानंतरे मया इह मत्कृतौ ग्रंथयता नच पुनर्जगत्कर्तुर्ब्रह्मणो मानं नीतं । अव्यवहारिकत्वतस्तस्य व्यवहारो हि लोके नास्ति ॥ १८ ॥

**चौलोपयाममखमेखलबंधकूपभूपाभिषेकग्रहसंवसथा**
**दिकानाम् ॥ आरंभउष्णवपुषि ह्ययने हि सौम्ये**
**स्यादन्यथा कविगुरूदयगे न शस्तः ॥ १९ ॥**

अथ वसंततिलकेनायनफलमाह—चौलोपयामेति । हीतिनिश्चितं । सौम्ये उत्तरायणे उष्णवपुषि नामउष्णमरीचौ रवौसति वा चौलादिकानामारंभ उपक्रमः स्यादित्यर्थः । चौलं मुंडनकर्म्म । उपयामो विवाहः । मखो यज्ञः । मेखलाबंधो मौंजीबंधः । कूपभूपाभिषेकः कूपप्रतिष्ठा भूपाभिषेकः । द्वंद्वे प्रत्येकं संयोजनत्वात् । गृहं गेहं संवसथो ग्रामइत्यादयो येषांत एतेषां द्वंद्वइति 'अमस्तु वसथः सन्निप्रतिपर्युपतः पर' इतिअभिधानचिंतामणिः । अन्यथेति । पूर्वोक्तव्यतिरेके । कोर्थः । दक्षिणायनेऽर्के सचौलोपयामादिकानामारंभो न शस्तः न प्रशस्तः । किंभूते कविगुरूदयगे शुक्रबृहस्पत्युद्गमं प्राप्ते सत्यपि उष्णमरीचावत्ररकारमध्येऽह्स्वइकारोऽत्रशाब्दप्रभेदादृश्यते ॥ १९ ॥

**सौम्यायनात्स्याच्छिशिरो मधुस्ततो निदाघकोपागयनाननात्क्रमात् ॥**
**वर्षाशरत्स्युर्हिमसंघवानिति द्युरात्रके षड्ऋतवो दिवौकसाम् ॥ २० ॥**

अथोपजात्या षड्ऋतूनाह—**सौम्येति** । सौम्यायनादुत्तरायणाच्छिशिरस्ततोमधुर्वसंतस्ततोनिदाघोग्रीष्मःक्रमेण ऋतुः स्यात् ।अपागयनाननाद्दक्षिणायनमुखात् क्रमेण वर्षास्ततः शरत् ततोहिमसंभववान् हैमंतऋतुः स्यात् इत्येते पूर्वोक्ताः षड्ऋतवो दिवौकसां देवानां द्युरात्रकेऽहोरात्रके काले स्युः ॥ २० ॥

**मानेन कश्चिद्धिमरोचिषोमधोर्मध्वाननानेवमृतूनभाषत ॥**
**मासैस्तुसार्द्धैरदनै३२।१६र्यदाधिकोमितैस्तैदैतत्किमतोभवेदसत् ॥२१॥**

अथोपजात्याऽसन्मतमपाकरोति—**मानेनेति**। कश्चित्ज्ञोहिमरोचिषश्चंद्रस्य मानेन मधोश्चैत्रान्मध्वाननान् मधुर्वसंतआननं मुखं येषां ते तानृतूनेवमभाषत अकथयत । तुरित्यवधारणे । यदा रदनैर्मितैर्द्वात्रिंशैर्मितैर्मासै. सार्द्धैः पक्षसहितैः पंचषष्टिप्रमितपक्षैराधिकोमासोभवेत् । तदाकिं क्रियते अतएतन्मतमसत् ॥ ११ ॥

**तिथ्यर्धमुंडनकरग्रहपितृकर्मयात्राव्रतोपवसनाद्यखिलाक्रियासु ॥**
**ग्राह्यं बुधैरनिशमैंदवमानमेव नाड्यादिकं भवति चाखिलमार्क्षमानात्॥**

अथ वसंततिलकया केषु कर्मसु किं मानं ग्राह्यं तदाह—**तिथ्यर्धेति** । बुधैरनिशं निरंतरं तिथ्यर्द्धाद्यखिलक्रियास्वैंदवमानं चांद्रमानमेव ग्राह्यं तिथ्यर्द्धं बवादिकरणम् । मुंडनं चौलादि करग्रहो विवाहः पितृकर्म पूर्वजकर्म्म यात्रा प्रयाणं व्रतमुपनयनं उपवसनमुपवासइत्यादि येषां तानि तेषां द्वंद्वे एषामखिलक्रियासु च पुनराधानादिकं घट्यादिकमानमार्क्षमानान्नक्षत्रमानाद्भवति । पूर्वोक्ततिथ्यर्द्धादिक्रियासु इत्यर्थः ॥ २२ ॥

**वर्षायनर्तुयुगपूर्वकमेव देवमानादिमानमखिलं किल**
**सौरमानात् ॥ स्यात्कृच्छ्रसूतकचिकित्सितवासराद्यं**
**भुक्त्यादिकं दिविषदां खलु सावनाच्च ॥ २३ ॥**

अथ सौरसावनविवेकतामाह—**वर्षायनेति** । किलेतिसंभावनायाम् वर्षादिपूर्वकं देवमानादिमानं सकलसौरमानादेव स्यात् वर्षं वत्सरो अयनं प्रतीतं ऋतुः शिशिरादिः युगं सत्ययुगादिकं एतानि पूर्वे यस्मिंस्तत् । खलु निश्चितं । कृच्छ्रादिकं दिविषदां ग्रहाणां भुक्त्यादिकं च मानं सकलं सावनादेव भवेत् । भुक्तिः स्पष्टा गतिः । कृच्छ्रं चांद्रायणादि । यतः 'त्र्यहं प्रातः त्र्यहं सायं त्र्यहमद्यादयाचितम् । त्र्यहं परं च नाश्नीयात्कृच्छ्रं सांतपनं स्मृतं ॥' 'कृच्छ्रं सांतपनादिकम्' इत्यभिधानचिंतामणिः । सूतकं जन्ममरणादागतं । चिकित्सितं वैद्यकर्म्म । वासरं दिनं इत्याद्यं यस्मिंस्तत् दिविषदामित्यलुक्समासः ॥ २३ ॥

**वर्षैकमध्ये शशिनो दिनानि हिमांशुसप्तामि३७१मितानि तज्ज्ञः ॥**
**सार्द्धैः ३ द्विबाणांबु५२पलैर्युतेन घटीत्रयेणैव युतान्यथाहुः ॥ २४ ॥**

चांद्रनाक्षत्रसावनसौरचक्रम्.

| ३७१ | ३६६ | ३६५ | ३६० | दि. |
|---|---|---|---|---|
| ३ | १५ | १५ | ० | घटी |
| ५२ | ३० | ३० | ० | पल |
| ३० | २२ | २२ | ० | अ. |
| ० | ३० | ३० | ० | व. |

अथोपजातिकयैकवर्षमध्ये चंद्रदिनसंख्यामाह—**वर्षैकमध्ये** इति। तज्ज्ञाद्विज्ञा वर्षैकमध्ये शशिनश्चंद्रस्य सार्द्धैर्द्विबाणांबुपलैस्त्रिंशदक्षरान्विताद्विपंचाशत्पलै ५२।३० युतेनैवंविधेन घटीत्रयेण युतानि युक्तानि हिमांशुसप्ताग्निमितानि एकसप्तत्यधिकशतत्रयप्रमितान्येवंविधानि ३७१ दिनानि आहुःकथयन्ति २४

**भवासरास्तत्र रसांगरामा ३६६ सार्द्ध ३० द्विदस्रा२२**
**न्वितखाग्नि३०तुल्यैः ॥ पलैर्युताभिस्तिथिनाडिकाभि**
**१५ र्युक्ताविधू१ना रविसावनाः ३६५ स्युः ॥ २५ ॥**

अथोपजात्या भदिनसावनदिनसंख्यामाह— **भवासराति**। तत्र वर्षैकमध्ये सार्द्धद्विदस्रान्वितखाग्नि तुल्यैः पलैस्त्रिंशदक्षरान्वितद्वाविंशत्यक्षराधिकत्रिंशत्पलैर्युताभिर्युक्ताभिरेवंविधाभिस्तिथिनाडिकाभिस्तिथिघटीभिः पंचदशप्रमितघटिकाभिर्युक्ताः रसांगरामसंख्याः षट्षष्ट्यधिकशतत्रयप्रमिताः ३६६ भवासराः नक्षत्रदिनाः स्युः ततो नक्षत्रवासरा विधूनाः विधुश्चंद्रस्तेन ऊनाहीना रहीता एकेन न्यूनाः कृताः रविसावनवासराः स्युः ॥ २५ ॥

**सौरा नभोंगाग्निमिता हि वासराः३६०स्मृता बुधैः सर्वसु कर्मसु ध्रुवम्॥**
**यत्सौरचांद्रांतरमेकहायनेऽधिकं तदेवाऽव्यवहारिकं भवेत् ॥ २६ ॥**

**इतिश्रीकविकालिदासोदिते ज्योतिर्विदाभरणे मानाध्यायः प्रथमः ॥ १ ॥**

अथोपजात्या सौरदिनसंख्यामाह—**सौरेति**। ध्रुवं निश्चितं सर्वेषु कर्मसु समस्तशुभकार्येषु बुधैर्नभोंगाग्निमिताः षष्ट्यधिकशतत्रयप्रमिताः सौराः वासराः सौरदिनाः स्मृताः। एकहायने एकवर्षे सौरचांद्रांतरं यदधिकं स्यात् तदधिकमेवाऽव्यवहारिकं भवेत्क्षयादिककाले शुभकार्यं न स्यादित्यर्थः ॥ २६ ॥

इतिश्रीपौर्णमीयगच्छाधिराजभट्टारकपुरंदरश्रीमहिमाप्रभुसूरेश्वरणसरोरुहचकोरायमानभावरत्नविरचितायां कालिदासकृतज्योतिर्विदाभरणस्य सुखबोधिकायां मानाध्यायः प्रथमः ॥ १ ॥

---

नव्यः श्रीश्रितमहिमाप्रभाख्यसुरेः सर्वत्राऽस्खलतनयाप्रबोधपूषा।
पुष्णात्युग्रतरतया कुले कुवादिघूकानां तदपि न चित्रमत्र लोके ॥ १ ॥

## ॥ अथ योगोत्पत्तिप्रकरणम् ॥ २ ॥

तावत्सर्वेषामसौम्याखलानां पंचांगेभ्योऽनेककृत्यांगकालम् ॥
वक्ष्येऽथाहं चोपपत्तिः प्रवक्तुं लोकानामग्रे युजामेव संज्ञाम् ॥ १ ॥

श्रीगुरवे नमोनमः ॥ अथ द्वितीयाध्यायं प्रथमं शालिनीवृत्ताष्टकेनाह—तावदिति । अथानंतरं तावदादौ अहं पंचांगेभ्यस्तिथिवारादिभ्यः सकाशात् युजां योगानां ककिंयमघंटादीनां संज्ञामाह च पुनरुपपत्तिमुद्भवं सम्यक् ज्ञानं वा वक्ष्ये कथयिष्यामि । किंकर्तुम् । लोकानामग्रेऽनेककृत्यांगकालं बहुविधविवाहादिकार्याणामंगानि तदवयवभूतानि तेषां कालं समयं प्रवक्तुं कथनार्थं । कथंभूतानां युजां सर्वेषां समग्राणां । पुनःकथंभूतानां असौम्याखलानां । असौम्याः पापाश्च ते अखलाः सौम्याश्च ते तेषां । 'अंगमंतिकगात्रयोः॥ उपसर्ज्जनभूते स्यादभ्युपायप्रतीकयोः' इतिहैमः । इत्यर्थः ॥ १ ॥

नंदा भद्राख्या जया चेति रिक्ता पूर्णाः सर्वाः
पक्षतेः स्यात्क्रमेण ॥ शुक्लेऽथान्या नेष्टमध्योत्तमाः
स्युर्व्यस्ताकृष्णेऽपास्य रिक्ता हि सौम्याः ॥ २ ॥

अथ प्रथमं तिथिसंज्ञामाह—नंदेति । पक्षतेः प्रतिपत्सकाशात् क्रमेण सर्वास्तिथयो नंदादिपंच संज्ञाः स्युश्चकारः समुच्चयार्थः । कोर्थः । प्रतिपत्षष्ठचेकादश्यो नंदाः । द्वितीयासप्तमीद्वादश्यो भद्राः । तृतीयाष्टमीत्रयोदश्यो जयाः । चतुर्थीनवमीचतुर्दश्यो रिक्ताः । पंचमीदशमीपंचदश्यः पूर्णाइति नामसदृक्फलाः। अथ शुक्लपक्षे नंदादितिथयो नेष्टमध्योत्तमाः स्युः । कृष्णपक्षे व्यस्ता विपरिताः स्युः । अयं भावार्थः । शुक्लपक्षे नंदादिपंचसु आद्या प्रतिपत्द्वितीयातृतीयाचतुर्थीपंचमीरूपाः पंचतिथयः नेष्टाः । एवंद्वितीयाः पंच तिथयः मध्याः । तृतियाः पंच तिथयः उत्तमाः। कृष्णपक्षे आद्याः पंच तिथयः उत्तमाः ।द्वितीयाः पंच तिथयःमध्याः । तृतीयाः पंच तिथयः नेष्टाइति । हिइतियुक्तार्थे । रिक्तामपास्य हित्वाऽन्याः सर्वास्तिथयः सौम्याः शुभाः स्युः यतः सामान्येन रिक्तादिवर्ज्जं प्रायआशु शुभकृत्यं कुर्यादित्यर्थः ॥ २ ॥

वारे नंदा पूर्वदेवार्चितांघ्रेर्भद्रा विद्यारे जया सैनिरिक्ता ॥
पूर्णागीर्वाणेशवंद्येऽखिलेषु कर्मस्वेवं दोषवत्यास्ति सिद्धा ॥ ३ ॥

अथैता एवं वारसिद्धाआह—वारइति । पूर्वदेवा दैत्याः 'पूर्वदेवाः शुक्रशिष्याः' इत्यभिधानचिंतामणौ । तैरर्चितावंघ्री पादौ यस्य शुक्रस्य तस्य वारे नंदा दोषवती दोषयुक्ताऽपि सिद्धा सिद्धिकृदस्ति केषु अखिलेषु समस्तेषु कर्मसु कार्येषु एवममुना प्रकारेण विदि बुधवारे भद्रा आरे भौमे जया । इनस्य सूर्यस्याऽपत्यं ऐनिः शनिः सह ऐनिना वर्त्तते या सा सैनिः सैनिश्चासौ रिक्ता च सैनिरिक्ता शनिवारे रिक्ता । गीर्वाणानां देवानामीशइंद्रस्तस्य वंद्यो गुरुस्तस्य वारे पूर्णा 'इनः स्वामिसूर्ययोः' इतिकोशः ॥ ३ ॥

**सर्वारंभे भूमिदायादभान्वोर्नंदागुर्विंदोश्च भद्रा जया ज्ञे ॥**
**रिक्ता धिष्ण्ये हेलिसूनौ च पूर्णे ज्ञेया याम्यागारदा कालविद्भिः ॥४॥**

अथैता एव भौमादिवारैर्नेष्टाआह—सर्वेति। कालविद्भिर्दैवज्ञैः सर्वारंभेषु सर्वकार्यप्रारंभेषु भूमिदायादभान्वोर्भूमेर्दायादः पुत्रो भौमः स च भानुश्च तयोर्मंगले रवौ च नंदा तिथिर्याम्यागारदा यमस्येदं याम्यं तच्चागारं गृहं च तद्ददातीति मृत्युदा ज्ञेया। चः समुच्चयार्थः। एवं सर्वत्रापि योज्यं। गुर्विंदोर्गुरौ चंद्रे च भद्रा। ज्ञे बुधे जया। धिष्ण्ये शुक्रे रिक्ता। हेलिसूनौ सूर्यसुते पूर्णाइति। 'दायादौ सुतसपिंडौ' इति हैमोनेकार्थः। 'धिष्ण्योग्नौ शुक्रे च' इति तत्रैव॥४॥

**व्द्याशा २।१० तुल्ये पक्षरंध्रे तिथी स्याद्युग्मा ऽपास्या**
**या तिथिश्चाप्ययुग्मा ॥ तासां सौम्या १५ गोमितं ९**
**प्रोह्य सर्वाः शस्ताः सर्वासु क्रियास्वेव घस्रम् ॥ ५ ॥**

अथ पक्षरंध्रातिथीनाह—द्व्याशाइति। युग्मा समसंख्या तिथिः पक्षरंध्रमितिनाम स्यात्। किंकृत्वा तासां समतिथीनां मध्ये द्व्याशातुल्ये द्विः द्वौ आशा दिक् ताभ्यां तुल्ये द्वितीयादशम्यौ तिथी अपास्य त्यक्त्वा च पुनरेव अयुग्मापि विषमसंख्यापि अमाऽमावास्या पक्षरंध्रं स्यात् अत्र पक्षरंध्रे गोमितं घस्रं नवमी च प्रोह्य विहाय सर्वाः सौम्यास्तिथयः सर्वासु क्रियास्वेव सर्वकार्येषु शस्ताः स्युः। अत्र यद्यपि पक्षरंध्रमध्ये नवमी नोक्ता न कार्ये निषिद्धा तथापि ग्रंथांतरे प्रोक्ता। पक्षछिद्राणि यदाहुः 'षष्ठ्यऽष्टमी चतुर्थी चतुर्दशी द्वादशी कुहू नवमी॥ पक्षछिद्राण्याहुर्लभते नैतेषु संसिद्धिः' इति ॥ ५ ॥

**योगः कर्कीसंज्ञकोऽथो तिथेस्तद्वारस्यैते मानयोगेनिशं स्यात् ॥**
**विश्वा१३भिन्ने सूरिभिर्गर्हितोयं यानोद्वाहाद्येषु कार्येषु नूनम्॥६॥**

अथ कर्कियोगमाह—योगइति। अथो अनंतरमनिशं सदा कर्कीसंज्ञको योगः स्यात् कस्मिन् सति। विश्वाभिन्ने त्रयोदशसंख्याविछिन्ने तिथेस्तद्वारस्य तस्य तिथ्यावारस्तद्वारस्तस्य च मानयोगे इतिप्राप्ते सति। अयमभिप्रायो यत्संख्या तिथिर्यावत्संख्याकोवारस्तयोः संख्यामेलने त्रयोदश्यायाति तदायं। यथाच। द्वादश्यां रविस्तदा कर्किः स्यात्। एवमेकादश्यां चंद्रः दशम्यां मंगलः नवम्यां बुधः अष्टम्यां गुरुः सप्तम्यां शुक्रः षष्ठ्यां शनिरिति। अयं योगो नूनं सूरिभिः प्राज्ञैर्यानोद्वाहाद्येषु प्रयाणविवाहादिषु कार्येषु गर्हितस्तिरस्कृतः॥ ६ ॥

**संवर्तःस्यादत्रिदृक्जातसूनुस्तिथ्यां चारं पक्षमूला १ श्रितायाम् ॥**
**सप्तम्यामंशुर्यदायं क्रियासु प्राज्ञैर्योगो वर्जनीयोऽखिलासु ॥ ७ ॥**

अथ संवर्त्ताख्ययोगमाह—संवर्त्तइति। यदा पक्षमूलाश्रितायां पक्षमूलं पक्षतिः तामाश्रितायां तिथ्यां प्रतिपद्युक्तद्वितीयायां तिथौ अत्रिदृग्जातसूनुरत्रेर्दृग्भ्यां जातो विधुस्तस्य सूनुर्बुधः

स्यात् । च पुनर्यदांऽशुः सूर्यः सप्तम्यां स्यात् तदा सः संवर्ताख्ययोगः स्यात् । प्राज्ञैररं शीघ्रमखिलासु क्रियास्वयं योगो वर्जनीयो हेयः ॥ ७ ॥

**देया मेषात्पक्षतेराशिचक्रे पूर्णामुक्त्वा चाखिला या क्रमेण ॥**
**स्यात्सा तद्वत्पूर्णतिथ्यंघ्रयोत्र क्रूराक्रांता सर्वकर्मस्वनिष्टा ॥ ८ ॥**

अथ क्रूराक्रांततिथीराह—देयाइति । अत्र राशिचक्रे सुधीर्मेषाच्च पुनः पक्षतेः प्रतिपत्तः सकाशात्क्रमेणाखिलास्तिथयो देयाः स्थापनीयाः । किंकृत्वा । पूर्णां मुक्त्वा या तिथिः क्रूराक्रांता क्रूरग्रहैराक्रमिता स्यात् सा सर्वकर्मस्वनिष्टदा दोषदा स्यात् । च पुनस्तद्वत् तिथिवत् पूर्णतिथ्यंघ्रयः पंचमीदशमीपौर्णमासीनां चरणाः स्थाप्याः क्रूरग्रहैर्योंघ्रिराक्रमितः सोप्यनिष्टः स्यादित्यर्थः ॥ ८ ॥

क्रूराक्रांततिथिचक्रम्.

| मे. | वृ. | मि. | क. | सि. | क. | तु. | वृ. | ध. | म. | कु. | मीरा |
|---|---|---|---|---|---|---|---|---|---|---|---|
| १--२ | ३ | ४ | ६ | ७ | ८ | ९ | ११ | १२ | १३ | १४ | तिथिय |
| पंच घटी १५ | पंच घटी १५ | पंच घटी १५ | दश घटी १५ | दश घटी १५ | दश घटी १५ | दश घटी १५ | पूर्णा घटी १५ | पूर्णा घटी १५ | पूर्णा घटी १५ | पूर्णा घटी १५ | तिथि चर णा |
| १ | २ | ३ | ४ | १ | २ | ३ | ४ | २ | ३ | ४ | श्री |

**ध्वांतध्वंसविधिर्बलाहकरसागारं १२ गृहं चैति वा कोदंडं हरमौलिसंस्थितकला दग्धा द्वितीया तदा ॥ ज्ञेयैकांतरराशिगेंबरमणावेकांतरैवं तिथिर्दग्धातो भवति क्रमेण सकलारंभेषु नेष्टप्रदा ॥ ९ ॥**

अथ शार्दूलविक्रीडितेन दग्धतिथीराह—ध्वांतेति । ध्वांतध्वंसविधिः ध्वांतध्वंसमंधकार विनाशं विधाति सृजति इति विधिः विधत् विधाने धातो रूपं । अथवांधकारविनाशो विधीयतेऽनेनेतिविधिरंधकारभ्रंशविधानो रविः । बलाहकेति । बलाहको मेघस्तस्य रसेषु जलेषु अगारं गेहं यस्य स मीनस्तस्य गृहमालयोराशिस्तं बलाहकरसागारर्क्षमित्यपिपाठे बलाहकरसेषु अगारं यस्य स मीनश्चाऽसौ वृश्चिकराशिश्चेत्यर्थः । तमेति प्राप्नोति 'घनरसो यादोनिवासोऽमृतम्' इतिहमः । च पुनर्वाऽथवा रविः कोदंडधनुराशिमेति तदा हरमौलिसंस्थितकला द्वितीया तिथिर्दग्धा स्यात् । हरमौलौ स्थीता कलाइव कला यस्यां सा द्वितीया तिथिर्दग्धेति अनेन विशेषणेन शंभुमूर्द्धस्थितकलाप्रमितचंद्रेणोपलक्षितेति विशिष्टवाचकानां पदानां पृथक्विशेषणे समवधाने विशेष्यमात्रपरता । द्वितीयेति । 'सकीचकैर्मारुतपूर्णरंध्रैः' इत्यादिवत् । मीनार्के धनुरर्के च द्वितीया दग्धेतिस्पष्टार्थः । एवममुना प्रकारेण मीनराशितो धनूराशित एकांतरराशिगेंबरमणौ सूर्ये सति द्वितीयातः एकांतरा तिथिर्दग्धा ज्ञेया। स्पष्टमाह।

वृषकुंभार्के चतुर्थी मेषकर्के षष्ठी मिथुनकन्यार्केऽष्टमी सिंहवृश्चिकार्के दशमी तुलामकरार्के द्वादशीति यदुक्तमारंभसिद्धौ दग्धार्केति। 'द्वंद्वकन्ये ३।६ मृगेंद्रालौ १०।८ तुलैणे ७।१०।१।२ झादियुक् तिथिः' इति अतःकारणाद्दग्धा तिथिः सकलारंभेषु नेष्टप्रदा वांछितदायिनी न भवति ॥ ९ ॥

**वृद्धिर्मंगलदा बलात्वथ खला लक्ष्मीवती स्याद्यशा-**
**मित्राख्या निजनाम प्रख्यफलदा तद्वंद्वतोग्राह्वया ॥**
**सौम्यानंदपदा यशोगुणवती तस्माज्जयोग्राह्वया सौ-**
**म्याख्या तिथितास्त्विमा निगदिताः संज्ञा बुधैः पक्षतेः॥१०॥**

अथ शार्दूलविक्रीडितेन प्रतिपदादितिथीनां संज्ञामाह—वृद्धिरिति। बुधैःपक्षतेः प्रतिपत्तिथितो निजनामाख्यतुल्यफलदा इमाः संज्ञा ज्ञेया निगदिताः कथिताः। प्रतिपदः वृद्धिरितिसंज्ञा। क्रमादेवं द्वितीयादितिथीनां मंगलदादिसंज्ञा ज्ञेयाइति स्पष्टम्। 'स्युरुत्तरपदैः प्रख्यः प्रकारं प्रतिमो निभ'इतिहैमः। अत्र प्रसंयोगोवर्णत्वेपि प्राक् पूर्वमक्षरो न दीर्घो लघुप्रयत्नत्वात्। छन्दोनुशासनोक्तं तेन छंरोमंगोनेति ॥ १० ॥

**अथोच्यते दस्रभतो भनायका दस्रौ यमो वह्निकसोमशंभवः ॥**
**मयादितीज्योरगपूर्वजा भगोर्यमोष्णकृत्त्वष्टसमीरणाह्वयाः ॥ ११ ॥**
**वृत्रासुरप्राणहरकूपीटजौ मित्रो मरुत्वानथ यातु पुष्करम् ॥**
**विश्वेविधिर्विष्णुवसू प्रचेतसश्चाजांघ्र्यहिर्बुध्नविदन्तखेचराः ॥ १२ ॥**

अथ वसंततिलकेनेंद्रवंशाभ्यामष्टाविंशतिनक्षत्राणामीशानाह—अथोच्येति। अथानंतरं मया दस्रभतोऽश्विनीनक्षत्रतो भनायका नक्षत्रस्वामिनः एतेइतिउच्यते। अश्विनौ देववैद्यौ द्विवचनांतोयंशब्दः१ भ० यमः२ कृ० वन्हिः३ रो० को० ब्रह्मा४ मृ० सोमः ५ आ० शंभूरुद्रः ६ पु०अदितिर्देवमाता७ पु०इज्योगुरुः८ 'इज्या स्यात्संगमे दाने यागेर्च्चायां गुरौ गवि। इतिकोशः श्ले० उरगः ९ म० पूर्वजाः पितरः १० पू० भगोयोनिः ११ उ० फा० अर्यमा सूर्यभेदः१२ ह०उष्णकृत् सूर्यः१३ चि०त्वष्टा विश्वकर्मा १४ स्वा० समीरणाह्वयो वायुनामा १५ ॥११॥ वृत्रेति। वि० वृत्राऽसुरप्राणहरो वृत्रदैत्यारिरिन्द्रः कूपीटजोऽग्निः कूपीटं जलं तस्माज्जातः इति विग्रहः 'कूपीटयोनिर्दहनः' इत्यभिधानचिंतामणिः 'कूपीटं जलं' हेमशेषे कोशे। इमौ द्वावीशौ शक्राग्नीइत्यर्थः। विशाखायाआद्यर्द्धे इंद्रापरेऽग्निर्देवता अतएवास्याद्विदैवतसंज्ञा मिश्रसंज्ञा च। अतएवोक्तं दैवज्ञवल्लभे 'पूर्वार्द्धे मृदु कर्म चास्य सकलं तीक्ष्णं द्वितीये दले' इति १६ अ० मित्रः सूर्यभेदः १७ ज्ये०मरुत्वानिंद्रः१८ मू० यातु राक्षसः यातुशब्दोनपुंसकः१९ पू०पुष्करं जलं 'पुष्करं द्वीपतीर्थाहि खगरागौषधांतरे। तूर्यास्ये सफले कांडे शुंडाग्रे खे जलेंबुदे' इतिहैमः २० उ० विश्वेइति विश्वेतिस्तोत्रदेवताः सर्वादित्वाज्जसः शीभावः। नन्वत्र

संज्ञावाचिनो विश्वशब्दस्य कथं सर्वादित्वम्। असंज्ञायां सर्वादिरितिवचनात्। उच्यते छांदसोयं प्रयोगस्तेन संज्ञायामपि सर्वादित्वम् २१ अभि० विधिर्ब्रह्मा २२ श्र० विष्णुः केशव. २३ध० वसवो- ऽष्टौ।यदुक्तम्। 'धरा ध्रुवश्च सोमश्च आपश्चैवानलोनिलः॥ प्रत्यूषश्च प्रदोषश्च वसवोष्टौ प्रकीर्तिताः' इति २४ श० प्रचेता वरुणः २५ पू० अजांघ्रिः वास्तुशास्त्रप्रसिद्धो हृदयकोष्ठस्थो देवो रुद्राणामन्यतमोजपादः २६ उ० भा० अहिर्बुध्नोरुद्रभेदः। यदाहुः। अजपादोऽह्यहिर्बुध्नः पिनाकीहररैवताः॥ शंभुः शर्वो मृगव्याधः कपाली त्र्यंबको भवः' इत्येकादशरुद्रनामानि २७ रे० विदंतखेचरइति विगता नष्टा दंता रदा यस्य सचासौ खेचरश्च पूषेत्यर्थः। २८अयं च 'यज्ञे नष्टदन्तोऽभवत्' इतिश्रुतिः यतोदक्षाध्वरध्वंसने हि पूष्णो दंता महेश्वरेण पातिताः यद्वा- युपुराणे। 'ततः क्रोधाभिभूतेन पूष्णो वेगेन शंभुना। मुष्टिनाहत्य दशनाः पातिता धरणीतले' इतिपूषा रविभेदः यदाहुः। धातृ १ अर्यम २ मित्र ३ वरुण ४ अंशु ५ भग ६ इंद्र ७ विवस्वन् ८ पूषन् ९ पर्जन्य १० विष्णुः ११ त्वष्टा १२ संज्ञा द्वादश सूर्याइति। प्रयोजनं चैतेषां तु देवतानाम्ना नक्षत्रव्यवहारइति। अत्र वन्हिश्च कश्च सोमश्च शंभुश्चैतेषां द्वंद्वः अदितिश्च इज्यश्च उरगश्च पूर्वजाश्चैषां द्वंद्वः। उष्णकुच्च त्वष्टा च समीरणाह्वयश्चैतेषां द्वंद्वः। विष्णुश्च वसवश्च प्रचेताश्चैतेषां द्वंद्वः। अजांघ्रिश्च अहिर्बुध्नश्च विदंतखेचरश्चैषां द्वंद्वः। चकारः समुच्चयार्थइति। समासादिकं स्वयमप्युह्यमित्यर्थः॥ १२॥

**सनिर्जरज्येष्ठभमुत्तरात्रयं स्थिरं जगुश्चानिशमाद्यसूरयः॥**
**समारुतं सादिति भं गदाग्रजज्योतिः श्रविष्ठांबुपभान्वितं चरम्॥ १३॥**

अथोपजात्या स्थिरचरसंज्ञभान्याह—**सनिर्जरेति**। अनिशं निरंतरमाद्यसूरयः पूर्वाचार्याः सनिर्जरज्येष्ठभं निर्जरज्येष्ठोब्रह्मा। 'सुरज्येष्ठे विरिंचने' इतिहैमः। तस्य भं रोहिणी तेन सह वर्तमानमुत्तरात्रिकं स्थिरं स्थिरसंज्ञं जगुरूचुः। रोहिणीउत्तराफल्गुनीउत्तराषाढा उत्तरा- भाद्रपदा इति भचतुष्कं स्थिरं। च पुनराद्यसूरयः समारुतं स्वातिसहितं सादितिभं पुनर्व- सुसहितं श्रविष्ठा धनिष्ठा अंबुपो वरुणस्तस्य भं शतभिषक् आभ्यामान्वितं सहितं गदाग्रजो वि- ष्णुस्तस्य ज्योतिर्भं श्रवणं विशेष्यकर्मपदं चरं चरसंज्ञं जगुरिति भपंचकं चरं। 'ज्योतिर्दिं- नाधिपे वह्नौ नक्षत्रेऽक्षिप्रकाशयोः' इतिमहीपः। इत्यर्थः॥ १३॥

**मनीषिणो निर्जरवर्द्धकींदुभे समैत्रपौष्णेमृदुसंज्ञके विदुः।**
**दास्राभिजिद्धंससुरेज्यदैवतान्यथो लघूनीह पुराणविग्रहाः॥ १४॥**

अथोपजात्यामृदुलघुनक्षत्राण्याह—**मनीषीणइति**। मनीषिणः पंडिताः समैत्रपौष्णेऽनुराधारे वतीयुक्ते निर्जरवर्द्धकींदुभे निर्जराणां देवानां सूत्रधारो विश्वकर्मा तस्य भं चित्रा इंदुभं मृग- शिरः द्वंद्वे कृते तेभ्यः कर्मपदे मृदुसंज्ञके विदुः अवधारयन्ति। इतिभचतुष्कं मृदुसंज्ञं। अथो अनंतरं पुराणविग्रहाः पुरातनशरीरा वृद्धाइहाधिकारे दस्रोश्विनी अभिजित् हंसोरविस्तस्य

भं हस्तः सुरेज्यो गुरुर्दैवतं यस्य तद्भं पुष्यः एषां द्वंद्वः । तानि भानि लघूनि विदुर्जानंति इदं भचतुष्कं लघु 'पुराणः प्रत्नशास्त्रयोः' इति हैमः 'वेधोहंस' इतिहेमः ॥ १४ ॥

**सरिद्वराकार्द्रकपर्दिभोगिनोर्भाभ्यां युते गोपतिनैकषेयभे ॥**
**तीक्ष्णाह्वयेऽथांतकपित्र्यभान्वितं पूर्वात्रयं चोग्रमुशंति कृष्टयः॥१५॥**

अथोपजात्या तीक्ष्णोग्रभान्याह—सरिद्वरेति । कृष्टयः पंडिताः सरितां नदीनां मध्ये वरा गंगा तस्याः कानि जलानि तैरार्द्रः क्लिन्नः कपर्दो जटाजूटो यस्य स रुद्रश्च भोगी सर्पश्च तयोर्भाभ्यामार्द्राश्लेषाभ्यां युते युक्ते एवंविधे गोः स्वर्गस्य पतिरिंद्रः निकषाया अपत्यं नैकषेयो राक्षसस्तयोर्भे ज्येष्ठामूले इतिकर्मपदं तीक्ष्णाव्हये उशन्ति इच्छंति । इदं भचतुष्कं तीक्ष्णम् । अथ च पुनः कृष्टयोंतको यमः पितरः पूर्वजा एतयोर्भान्वितं भरणीमघायुक्तं पूर्वात्रयं पूर्वाफल्गुनीपूर्वाषाढापूर्वाभाद्रपदेति त्रिकमुग्रसंज्ञमुशंति । इदं भपंचकमुग्रम् 'कृतिकृष्टयभिरूपधीराः' इति हैमः ॥ १५ ॥

**तनूनपादंगनया युतं बुधैर्द्विदैवतं मिश्रमथ प्रकीर्तितम् ॥**
**निजाभिधानप्रतिमोक्तकर्मणां स्मृतानि सर्वाण्यपि साधने सदा ॥१६॥**

अथ वंशस्थेन मिश्रभं तेषां फलं चाह—तनूनपादिति । बुधैः तनूनपादग्निः अंगना चंद्रस्त्रीनक्षत्रं कृत्तिका । 'अष्टाविंशतिरश्विन्यादयः सर्वाः शशिप्रिया'इतिहेमवचनात् । एवं यत्र चंद्रवाचकशब्दाग्रेंगनाशब्दपर्यायोदृश्यते तत्र नक्षत्रमितिज्ञातव्यम् । वक्ष्यमाणाऽधिकारेसर्वत्र तया युतं । द्विदैवतं विशाखामिश्रं मिश्रसंज्ञं प्रकीर्तितम् । इदं भयुग्मं मिश्रम् । अथैषां फलमाह सदा एतानि सर्वाणि स्थिरादीनि निजस्वकीयनामतुल्योक्तकर्मणां साधने स्मृतानीत्यर्थः ॥ १६ ॥

**ध्रुवं स्थिरं धीरमलोलमुक्तं चरं चलं लोलमधीरसंज्ञम् ॥**
**मैत्रं बुधैर्यन्मृदुहारि सौम्यं भीष्मं स्मृतं क्रूरतरं तथोग्रम् ॥ १७ ॥**

अथोपजात्या स्थिरादीनां संज्ञांतरमाह—ध्रुवमिति । बुधैः स्थिरं ध्रुवं धीरं चोक्तम् । एवं चरं चलं लोलमधीरं धीरं चोक्तम् । मृदुहारि सौम्यं चोक्तम् तथा एतत् उग्रं भीष्मं क्रूरतरं च स्मृतम् ॥ १७ ॥

**तीक्ष्णं खरं दारुणभं भवेल्लघु क्षिप्रं च साधारणमेव मिश्रम् ॥**
**भपंचकं दारुणपाशगे सदाऽनिष्टं श्रविष्ठोत्तरखण्डपूर्वकम् ॥ १८ ॥**

तीक्ष्णे तीक्ष्णं खरं दारुणं च भवेत् लघु क्षिप्रं च भवेत् साधारण एव मिश्रभं भवेत् इत्यर्थः । अथ धनिष्ठादिपंचकमाह—श्रविष्ठोत्तरखण्डपूर्वकं धनिष्ठोत्तरखंडादारभ्य रेवत्यंतं भपचकं पंचकयोग इति सदाऽनिष्टं भवति । किंलक्षणं भपंचकं । वारुणपाशगं वरुणसंबंधिपाशप्राप्तम् ॥ १८॥

**प्रेतं नयेत्पितृवनं न चौकसो न गोपनं दारुतृणौघसंग्रहः ॥**
**यानं यमाशां ग्रथनं न रज्जुभिर्भपंचकेस्मिन्विदधीत शायनम्॥१९॥**

अथ पंचके हेयमाह—प्रेतमिति । जनइतिशेषः । अस्मिन् भपंचके प्रेतं शवं पितृवनं श्मशानम् न नयेन्न प्रापयेत् श्मशानमित्याधारे गौणकर्म्म । अस्य धातोर्द्विकर्मकत्वात् । चपुनरस्मिन्नोकसो गृहस्य गोपनमाच्छादनं न स्यात् । एवं दारुतृणौघसंग्रहो न स्यात् । एवं यममश्नुते प्राप्नोति यमाशी दक्षिणदिगन्तातं यानं प्रयाणं न स्यात् । पुनरत्र जनोरज्जुभिः कृत्वा शायनस्य मंचकस्येदं शायनं ग्रथनं न विदधीत न कुर्वीत । अत्र दैवान्मृतस्याग्निसंस्कारविधानं स्मृत्यंतरादवज्ञेयम् । 'प्रेतो मृते भूतविशेषे च' इतिहैमः ॥ १९ ॥

**द्विपालकव्यालधनंजयोग्रभं क्रव्यादभानां नवकं जगुर्बुधाः ॥**
**कासारकूपाननकर्म्मसाधने हितं तथाधोमुखमुद्धृतौ क्षितेः ॥ २० ॥**

अथाधोमुखसंज्ञनक्षत्राण्याह—द्विपेति । बुधाः द्विपालकं द्विस्वामिकं विशाखा व्यालस्य सर्पस्य भमाश्लेषा धनंजयोग्निस्तस्य भं कृत्तिका उग्रभानि पूर्वात्रयमघाभरण्यः क्रव्यादो राक्षसस्तस्य भं मूलं एषां द्वंद्वः । एषां भानां नवकमधोमुखसंज्ञं कासारादिकर्मसाधने हितकारि जगुरूचुः । कासारस्तडागः कूप आननं मुखं एषां कर्मणां तेषां साधने विधानेऽत्राननशब्दस्याऽदिशब्दार्थत्वात् वापीभूमिगुहादीनां ग्रहणं । तथा क्षितेः पृथिव्याउद्धृतौ खनने हितमिति 'व्यालो दुष्टगजे सर्प्पे शवे श्वापदसिंहयोः' इति । 'धनंजयोनामभेदे ककुब्भेदे च मारुते ॥ पार्थेग्नौ' इतिहैमः ॥ २० ॥

**सकाश्यपींद्राऽमरवैद्यमारुतब्रध्नेन्दुदाराणि विदुर्मृदून्यपि ॥**
**तिर्यङ्मुखान्येषुतरीक्रियामनोक्षवीभगोश्वाननकर्मकोविदाः॥ २१॥**

अथ तिर्यङ्मुखभान्याह—सकाश्यपीति । कोविदाः बुधाः सकाश्यपी कश्यपस्य स्त्री काश्यपी अधिकारादत्रादितिः इंद्रः अमरवैद्यः मारुतः ब्रध्नः रविः एषां द्वंद्वः । एषामिंदुदारा नक्षत्राणि पुनर्वसुज्येष्ठाश्विनीस्वातिहस्ताभिधानितैः सह विद्यंते इतिसकाश्यप्यादींदुदाराणि मृदूनि चित्रामृगरेवत्यनुराधाभानि तिर्यङ्मुखसंज्ञानि विदुर्जानन्ति । अपिरितियुक्तार्थे च पुनर्बुधा एषु नवसु तरीक्रिया नौकृत्यं अनोक्षादिकर्म च विदुः । अनःशकटः अक्षः पाशकः विः शुकसारिकादिपक्षी इभो हस्ती गौः प्रतीतः अश्वआननं मुखं येषां ते तेषां कर्म कार्यमिति । 'पाशकः प्रासकाऽक्षश्च देवन' इतिहैमः । काश्यपस्य कलत्राणि त्रयोदश यदुक्तं भूगोले । दितिः १ अदितिः२ कद्रुः३ सेनब्राह्मणी४ भानुयोगेश्वरी५विनता६सविका७ सुप्रभा८ खड्गनेत्रा९मियुना १० दिवी ११ कालिंजरी१२कनका१३इति ॥ २१ ॥

**रमाधवोमाधवजीवधीरभग्राचेतसैणांकवशाः सवासवाः ॥**
**उदाननावारणधामचामरध्वजातपत्राधृतये हिताः स्मृताः ॥ २२ ॥**

अथ वंशस्थेनोर्ध्वमुखनक्षत्राण्याह—रमेति । साङ्घिः सवासवाः धनिष्ठयायुताः रमाधवो विष्णुःश्रवणः उमाधवः शंभुःआर्द्रा जीवः गुरुः पुष्यः । धीरभानि रोहिण्युत्तरात्रये । प्रचेता वरुणस्तस्यैणांकवशा चंद्रस्त्री शतभिषक् आसां द्वंद्वः एतास्ताराउदानना उर्द्ध्वमुखसंज्ञाः स्मृताः प्रोक्ताः । किंभूता एता हिताः हितकारिण्यः । कस्मै वारणधाम हस्तिधाम अंबाडोइतिभाषा । चामरं ध्वजा पताका आतपत्रं छत्रं एषांद्वंद्वः । एषामाधृतये धारणाय । हितादियोगे चतुर्थी । क्वचित्प्रचेतसेणांकइतिपाठोऽपपाठः प्रचेतःशब्दो हसांतत्वाद्विसर्गलोप एव । इतिनवकमूर्द्ध्वमुखसंज्ञम् ॥ २२ ॥

**द्विदैवतादित्यभसंयुतानि ध्रुवाणि भान्यत्र जगुर्बृहन्ति ॥**
**जघन्यसंज्ञान्यहिशांतकेंद्रप्रभंजनांभःपतिभानि चार्याः ॥ २३ ॥**

अथोपेंद्रवज्रया बृहद्भान्याह—द्विदैवतेति।आर्याःद्विदैवतं विशाखा आदित्यभं पुनर्वसुः'पुनर्वसुप्रयामुकौआदित्यौच' इतिहैमः । आभ्यां संयुतानि ध्रुवाणि भानि रोहिण्युत्तरात्रयभानि बृहत्संज्ञानि जगुः। च पुनरार्याः । अहिराश्लेषा शोरुद्रआर्द्रा अंतको भरणी इंद्रो ज्येष्ठा प्रभंजनो वायुः स्वातिः अंभपतिर्वरुणस्तद्भं शतभिषक् । एतानि भानि पंच जघन्यसंज्ञानि जगुः । 'षः प्रागुक्तोऽथ शः शंभुः शा गौरी कमलालया' इत्येकाक्षरकोशे ॥ २३ ॥

**शेषाणि भान्यक्षधरामितानि समानसंज्ञानि वदंति संतः ॥**
**लघुध्रुवाधोक्षजभानि शश्वत्सौम्याह्वयान्यंत्यभसंयुतानि ॥ २४ ॥**

अथोपजात्या समानभान्याह—शेषाणीति । संतःशेषाण्यक्षधरामितानि पंचदशप्रमितानि भानि समानसंज्ञानि वदंति । अश्विनीकृत्तिकामृगशिरपुष्या पूर्वात्रयं मघाहस्तश्चित्राअनुराधामूलः श्रवणंधनिष्ठारेवतीइतिपंचदश । पुनःशश्वन्निरंतरं संतः अंत्यभसंयुतानि रेवत्यायुक्तानि लघूनि अश्विन्यभिजिद्धस्तपुष्यभानि ध्रुवाणि रोहिण्युत्तरात्रयभानि अधोक्षजोविष्णुस्तद्भं श्रवणं एषां द्वंद्वः । एतानि भानि सौम्यसंज्ञानि वदंति ॥ २४ ॥

**मिश्रौषधीशाग्रजविश्वकर्मणामुडून्युशंतीज्यवसूतराश्विनी ॥**
**भाभ्यां युतानां भगरक्षसोस्तथा कुलोदयाख्यानि विचक्षणेश्वराः॥२५॥**

अथोपजात्या कुलोदयभान्याह—मिश्रेति । विचक्षणेश्वराः पंडितवराः मिश्रे कृत्तिका विशाखे ओषधीशश्चन्द्रोमृगशिरः अग्रजाः पूर्वजा मघा विश्वकर्मा चित्रा एषां द्वंद्वः ।एतानि भानि। किंभूतानां मिश्रौषधीशाग्रजविश्वकर्मणां भगरक्षसोर्योनिराक्षसयोर्भाभ्यां पूर्वाफाल्गुनीमूलाभ्यां युतानां तथा ईज्यः पुष्यः वसवोधनिष्ठा उत्तरात्रयं अश्विनी एषां द्वंद्वः । एषामुडूनि उशंति वांछन्ति । इतित्रयोदश कुलोदयाख्यानि ॥ २५ ॥

**ककांतकादित्यकमूरपूष्णामाहुर्बुधाथोपकुलानिभानि ॥**
**भवाविपद्यालवनेशमित्रज्योतींषि सेंद्राणि कुलाकुलानि ॥ २६ ॥**

अथोपजात्योपकुलकुलाकुलभान्याह—ककेति। बुधाः ककादीनां भानि उपकुलसंज्ञान्याहुः कथयंति। को ब्रह्मा रोहिणी को वायुः स्वातिः अंतको भरणी आदित्यःपुनर्वसुः कं जलं पूर्वाषाढा सूरः सूर्योहस्तः पूषा रेवति एषां द्वंद्वः एषां च पुनर्बुधाः सेंद्राणि ज्येष्ठासहितानि भवो रुद्रः आर्द्रा अविपदितिच्छेदस्तथाच 'अकारो वासुदेवे स्यात्' इतितद्दैवतं श्रवणः अविपद्ः अजपादः पूर्वाभाद्रपदा व्यालोश्लेषा वनेशो जलपातिर्वरुणः शतभिषक् मित्रोऽनुराधा एषां द्वंद्वः एषां ज्योतींषि भानि कुलाकुलानि तन्नामानि आहुः। 'को ब्रह्मण्यात्मनि रवौ मयूरेग्नौ यमेऽनिले। कं शीर्षेऽम्बुसुखे'इतिकोशः॥ २६॥

**निरंबकं भं विकनीनिकं भवेदपांगपीडं च कलांबकं ततः॥**
**पुष्यादिहेयान्नु नष्टवस्तुनः सुलोचने नाप्तिमिति क्रमेण तु॥२७॥**

अथांधकादिभान्याह—निरंबकमिति। पुष्याच्चतुष्कं चतुष्कं प्रतिभं क्रमेण निरंबकं निर्गते अंबके यस्मात्तद्भं गताक्षं भवेत्। ततोविकनीनिकं विगता कनीनिका तारा यस्मात्तद्भं काणाख्यं भवेत्। ततोऽपांगपीडं अपांगे नेत्रप्रांते पीडा यस्य तद्भं चिपिटाख्यं भवेत्। ततः कलांबकं कले मनोज्ञे अंबके नेत्रे यस्य तद्भं दिव्यनेत्रं भवेत्। चः समुच्चयार्थः। तुरितिविशेषार्थे ननु वितर्के। क्रमेण इमानीह सुलोचने दिव्यनेत्रनक्षत्रे नष्टवस्तुनो गतवस्तुन आप्तिं लाभमिति न ईयात्तं न लभेत्। इतोतिकिं इतिशब्दोत्र विवक्षायां तद्यमर्थः। गताक्षे भे नष्टवस्तुनः प्राप्तिः स्यात्। विकनीनिके यत्नतः प्राप्तिः। चिपिटभे प्राप्तेर्वार्त्ता। दिव्यनेत्रे प्राप्तिर्नेति 'इति स्वरूपे सान्निध्ये विवक्षा नियमे मता' इतिहैमोनेकार्थः॥ २७॥

**सदा विदुः क्रूरभदारुणानि क्रूरेषु पातंगिदिनं तथार्याः॥**
**शुभेषु कार्येषु पराणि पुष्यं गुरोरहश्चाखिलकर्मराशौ॥ २८॥**

अथ योग्यतामाह—सदाइति। आर्या क्रूरेषु कार्येषु क्रूरभदारुणानि उग्रतीक्ष्णे संज्ञभानि। तथा पातंगिदिनं पतगंस्य सूर्यस्याऽपत्यं पातंगिः शनिस्तद्दिनं विदुः लक्षयंति। च पुनरार्या अपराणि उक्तव्यतिरिक्तानि भानि शुभेषु कार्येषु विदुः। च पुनरखिलकर्मराशौ समस्तकार्यसमूहे पुष्यं गुरोरहः गुरुदिनं विदुः॥ २८॥

**पुष्यस्तनोत्यंगभृतामनेकैरथान्वितोदूषणसंनिपातैः॥**
**न्यस्तेज्यभारंभसुकृत्यजातानर्थानुदन्वानिव रत्नधामा॥ २९॥**

अथ पुष्यमहत्त्वं वर्णयति—पुष्यइति। रत्नं प्रधानं धाम तेजो यस्य सोऽथवा रत्नवत् सुरमणिवद्धाम प्रभावो यस्य सोथवा रत्नानां श्रेष्ठवस्तुनां धाम जन्म यस्मात्स रत्नधामा पुष्योंगभृतां देहिनामर्थान् पदार्थान् तनोति विस्तारयति। किंलक्षणः पुष्योनकैर्दूषणसन्निपातैर्दोषसमवायैराचितः व्याप्तः। किंविधानर्थान्। न्यस्तेज्यप्रारंभसुकृत्यजातान् न्यस्तः

समारोपित इत्यमे पुष्ये आरंभः उद्यमो येषां तानि एवंविधानि सुकृत्यानि सुकर्माणि तेभ्यो जातास्तान्। कइव उदन्वान् समुद्रइव। सोप्येवंविधइति समुद्रपक्षे रत्नानां धाम स्थानं यस्मिन्सइति अर्थांतरन्यासोप्यत्र यथा पुष्यः कलिः प्राणिनामर्थान्तनोति । किंभूतानर्थान् । न्यस्तेतिपूर्ववत् । किंभूतःपुष्यः कलिरनेकदूषणयुक्तोपीत्याशये सर्वं स्पष्टं स्वभावात्कलिरनर्थं करोति सोऽपि पुष्यनक्षत्रयोगे शुभं करोति तर्हि कृतादियुगे किं वक्तव्यमितिपुष्यनक्षत्रस्यातिशयोक्त्यलंकारः ' तिष्यः पुष्यवत् कलौ भे'इतिहैमोनेकार्थः । ' धाम रश्मौ गृहे देहे स्थाने जन्मप्रभावयोः ' इति तत्रैवेत्यर्थः ॥ २९ ॥

प्रभूतदोषोदितमप्यभद्रं निहंत्यरं पुष्यकृतेषु तिष्यः ॥
कृतेंद्रवंद्योडुकरग्रहाणामत्रोंगिनां कर्मसु सोनिशं स्यात् ॥ ३० ॥

प्रभूतेति। तिष्यः पुष्यः पुष्यकृतेषु पुष्यनक्षत्रे कृतानि कार्याणि तेषु प्रभूतदोषोदितमपि भूरिदूषणोपपन्नमप्यभद्रममङ्गलमरं शीघ्रं हन्ति नाशयति। पुनः सपुष्यः कृतः इंद्रेण वन्द्यो गुरुस्तस्योडुनि पुष्ये करग्रहो विवाहो यैस्तेषामंगिनां देहिनां कर्म्मसु कार्येषु अनिशं निरन्तरमत्रे भक्षणाय अर्थसामर्थ्यान्नाशाय स्यात् । अत्तृशब्दोऋकारांतोति तृचि अत्ता तस्मै-अत्रे कर्तृवत् ॥ ३० ॥

यदा चेत्सासितौ स्यातां भद्रायामारमंत्रिणौ ॥
सायुग्मचरणर्क्षायां भवेद्योगस्त्रिपुष्करः ॥ ३१ ॥

अथानुष्टुभा त्रिपुष्करयोगमाह—यदेति। यदा चेद्यदि सायुग्मचरणर्क्षायां सहाऽयुग्मचरणर्क्षैर्वर्तते या सा तस्यां विषमांघ्रिभयुक्तायां भद्रायां २।७।१२ तिथ्यां साऽसितौ शनिसहितावारमन्त्रिणौ भौमजीवौ स्यातां तदा त्रिपुष्करयोगो वृद्धौ विषयोगिनां त्रिनिघ्नफलः शुभाऽशुभत्रिगुणफलदायक उक्तः ॥ ३१ ॥

अर्थजीवधनादीनां लाभे नष्टे हृतेत्यये ॥
त्रैगुण्यफलदो योगो वृद्धावुक्तोंगिनामयम् ॥ ३२ ॥

कस्मिन्सति अर्थो द्रव्यं जीवधनादिकं गोमहिष्यादिकं यतः ' अकूप्यं रूप्यहेमाख्यं कूप्यमन्यधनं भवेत् ॥ गोमहिष्यादिकं सर्वं बुधैर्जीवधनं स्मृतम्' इति । एषां लाभे नष्टे पलायिते चोरादिना हृतेऽत्यये नाशं प्राप्ते सति ॥ ३२ ॥

आनंदो यमदंडाख्यो धूम्रभृच्च प्रजापतिः ॥
सौम्यध्वांक्षाह्वयौ तस्माद्ध्वजः श्रीवत्ससंज्ञकः ॥ ३३ ॥
कुलिशो मुद्गरश्छत्रं मित्रं मानुषसंज्ञकः ॥
सरोजं छुंक्कोत्पातौ कालकाणाख्यसिद्धयः ॥ ३४ ॥

शुभाख्याऽमृतनामानौ क्रमेण मुशलाह्वयम् ॥
गदमातंगरक्षांसि चराचरप्रवृद्धकाः ॥ ३५ ॥
अष्टाविंशत्यभिन्नाः स्युरमी योगाः प्रकीर्तिताः ॥
स्वनामप्रख्यफलदाः प्राप्तावारर्क्षसंभवाः ॥ ३६ ॥

अथानुष्टुप्चतुष्केनाष्टाविंशत्यानंदादियोगानाह—आनंदेति । आनंदेत्यादिकं लापकं सुगमम् । नवरं प्राप्तेति आश्रितवारनक्षत्रेभ्यो जाताइति ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥

रवावादिभादिंदुभादोषधीशेहिभादसृजीनेक्षतो विद्यपीति ॥
गुरौ मैत्रतो वैश्वदेवाच्च काव्येऽसिते शंबरेशोडुतोमी क्रमात्स्युः॥३७॥

अथभुजंगप्रयातेनैषामुत्पत्तिमाह—रवाविति । सुधीः आदिभादश्विनीतो वर्तमानभपर्यंतं गणयेत् । यावत्संख्याकं वर्तमानभं तावत्संख्याक आनंदादियोगो भवेत् एवमोषधीशे चंद्रे इंदुभान्मृगशीर्षात् । असृजि मंगलेहिभादश्लेषात् ।विदि बुधे इनर्क्षतो हस्तात् ।गुरौ मैत्रतोऽनुराधतः । काव्ये शुक्रे वैश्वेदेवादुत्तराषाढतः । असिते शनौ शंबरं जलं तस्येशोवरुणस्तस्योडुतः शतभिषक्तः वै निश्चितं क्रमेणेत्यवमेते स्युः । चः समुच्चयार्थः । 'असृग् वक्रे मृगे रक्ते' इतिव्याडिः । 'अर्णस्यंबुवाःशंबरम्' इतिहैमः । अहिभादसृजीत्यत्र छंदोभंगो दृश्यते ततः पुस्तकांतरं विलोकनीयमिति ॥ ३७ ॥

हरावब्जईज्ये निजर्क्षं निजर्क्षं क्रमाद्दास्रमारे ज्ञमैत्रं भवेत् ॥
भदैत्यधिष्ण्यं च धिष्ण्ये कधिष्ण्यं शनौ चैतदेवं सुधासंज्ञयोगः॥३८

अथामृतसिद्धियोगमाह—हराविति । हरौ सूरवारे निजर्क्षं स्वकीयभं हस्तः । अब्जे चंद्रे निजर्क्षं मृगशिरः । ईज्ये गुरौ निजर्क्षं पुष्यः । आरे भौमे दास्रमश्विनी । ज्ञे बुधे मैत्रमनुराधा । धिष्ण्ये शुक्रेत्यधिष्ण्यं रेवती । शनौ को ब्रह्मा तस्य धिष्ण्यं रोहिणी क्रमाच्च यदा एवं भवेत्तदा सुधासंज्ञयोगोऽमृतसिद्धियोगो भवेत् । चकारः समुच्चयार्थः ॥ ३८ ॥

द्विदैवादिभानां चतुष्केषु योगाः क्रमात्सप्त ऊष्मांशुपूर्वग्रहाणाम् ॥
सदोत्पातकालाख्यकाणाख्यसौम्या दिनेषु स्वनामप्रकाशेष्टदाःस्युः॥३९

अथोत्पातादियोगचतुष्कमाह—द्विदैवेति । ऊष्मांशुपूर्वग्रहाणां र्यादिसप्तग्रहाणां सप्तसु दिनेषु द्विदैवादिभानां विशाखादिनक्षत्राणां चतुष्केषु सदा क्रमेण र १ काल २ काण ३ सौम्याख्याः ४ योगाः निजनामतुल्यफलदाः स्युः । कोऽर्थः । रवि[illegible]गाखा तदा उत्पातयोगः अनुराधा तदा कालः ज्येष्ठा तदा काणः मूलं तदा सौम्यः एवं नक्षत्रचतुष्के एको वारश्चत्वारो योगाः चंद्रादिषु पूर्वाषाढादिष्वप्यूह्याः ॥ ३९ ॥

पितृभं खरगौ द्विदैवतं हिमरश्मा(ऽ)वसृजीशतारकम् ॥
विदि मूलमजाग्रजार्चिते हुतभुग्ज्योतिरजो डुभार्गवे॥ ४० ॥
भवतीनभमंशुजे तदा यमघंटाख्ययुगाह्वयोप्यसौ ॥
जनियानशयांबुजग्रहेष्वमरस्थापनकेऽत्ययाय च ॥ ४१ ॥

अथाष्टसंख्यापर्यन्तं वैतालीयवृत्तं तत्र तावद्यमघंटयोगमाह—पितृभमिति भवतीतियुग्मं। यदा खरगौ सूर्ये पितृभं मघा। हिमगौ चंद्रे द्विदैवतं विशाखा । असृजि भौमे ईशतारकमार्द्रा। विदि बुधे मूलं। अजोविष्णुस्तदग्रजो मघवान् तेनार्चितो गुरुस्तस्मिन् दिने हुतभुक् वह्निस्तस्य ज्योतिः कृत्तिका । भार्गवे शुक्रेऽजो ब्रह्मा तदुडु रोहिणी । अंशुजे शनौ इनभं हस्तो भवति तदा बुधैर्यमघंटादियोगे ईरितः । कस्मै जनिर्जन्म यानं प्रयाणं शयः पाणिः सएवांबुजं तद्ग्रहः शयांबुजग्रहः पाणिग्रहणं एषां द्वंद्वः एषु च पुनरमरस्थापनके देवप्रतिष्ठायानत्ययाय नाशाय 'अजश्चछागे हरे विष्णौ रघुजे वेधसि स्मरे' इतिहैमः । इत्यर्थः ॥ ४० ॥ ४१ ॥

सपतंगभतोऽचलै७र्मिते नवभि९र्भे च नृपालकै१६र्भवेत् ॥
मनुभिः१४कुयमै२१रिभाश्वि२८भिस्त्रियमै२३र्दस्र२मिते सदाऽऽडलः ४२

अथाडलयोगमाह—पतंगेति । सहपतंगेन सूर्येण वर्तते तत्सपतंगं भं तस्माद्दिनक्षत्रादचलैः सप्तभिर्मिते भे सति नृपालकैराजभिः षोडशभिश्च मनुभिश्चतुर्दशभिश्च कुयमैरेकविंशतिभिश्च इभाश्विभिरष्टाविंशतिभिश्च त्रियमैस्त्रयोविंशतिभिश्च दस्रमिते द्वाभ्यां च मिते भेइति ॥४२॥

बलकर्षककोपलक्रियाविबुधैराडलके च गर्हिता ॥
भवतीह न दोषभाक् क्रिया शयजंबालजसंग्रहादिका ॥ ४३ ॥

अस्यैवफलमाह—बलेति । विबुधैर्बलं सैन्यं कर्षकः हली कं जलमुपलक्षणत्वात्कासारकूपा-रामादिः उपलः पाषाणः एषां द्वंद्वे प्रत्येकसंयोजनात् । एषां क्रिया समरहलप्रवाहबंधनविधि दुर्गप्रमुखा गर्हिता तिरस्कृता। च पुनरिह योगे शयजंबालजसंग्रहादिकाबालात्पंकाज्जायते तज्जंबालजं कमलं शयः पाणिरेव जंबालजं करकमलमित्यर्थस्तस्य संग्रहः उद्वाहस्स आदिर्यस्यां सा शयजंबालजसंग्रहादिका क्रिया दोषभाग्न भवति। 'जंबाले च कलौ पंके' इतिहैमः ॥ ४३॥

विडलोंशुमदंशुसंकुलादुडुतो भौमनगा७प्तशेषके ॥
त्रिमितं यदि षण्मितं भवेद्विधुवज्ज्योतिषि चेत्स्फुटत्तदा ॥ ४४ ॥

अथ विडलमाह—विडलेति। यदिचेत् अंशुमतो रवेरंशुभिः किरणैः संकुलं लुप्तं तस्मादु-डुतः सूर्यनक्षत्रात् विधुर्विद्यतेऽस्मिन्निति विधुवत् तच्च ज्योतिश्च तस्मिन् वर्तमानचंद्रनक्षत्रे आ-धारे सप्तमी । भौमोद्यौमौर्यमस्तस्य नगाप्तशेषकं सप्तभाजितशेषकं नक्षत्रं त्रिमितं वाथ षण्मितं

भवेत्तदा विडलो भवेत् । किंविशिष्टो विडलः । इष्टनुत् इष्टमीशितं नुदति विनाशयतीति इष्टनुत् ॥ ४४ ॥

तिमिरारिकरावृतर्क्षतोऽक्षमितेविद्युदगैः कुकंपनम् ॥
भवतीभमिते च शूलकोऽशनिरेव प्रतिमेंबरेन्दुभिः ॥ ४५ ॥

अथ विद्युत्कंपनादियोगानाह—तिमिरेति । तिमिरारेरवेः करैरावृतक्षर्तः सूर्यकिरणलुप्तनक्षत्रात् वर्तमानचंद्रनक्षत्रेक्षमिते पंचप्रमिते सति विद्युच्छाभयोगो भवेत् । एवमगैः सप्तमितैःकुकंपनं भूकंपनयोगो भवेत् । इभमितेऽष्टमिते शूलकः । अंबरेंदुभिर्दशभिः प्रतिमे समानेऽशनियोगएव स्यात् ॥ ४५ ॥

अनु केतुरहीन्दुभिः समे तिथिभिर्दण्डक उल्मुकं च भे ॥
खचरेंदुभिरब्धिलोचनैः परिवेषः कुलिशोऽनलांबकैः ॥ ४६ ॥

अनुपश्चात् । अहीन्दुभिरष्टादशभिः समे केतुः तिथिभिः समे दंडकः । खचरेन्दुभिरेकोनविंशतिभिः समे उल्मुकं । अब्धिलोचनैश्चतुर्विंशतिभिः समे परिवेषः । अनलांबकैः त्रयोविंशतिभिः समे कुलिशो भवति । इति सर्वत्र योज्यं चः पुनरर्थः । युग्मम् ॥ ४६ ॥

द्वियमैरुडुभिर्मितैर्भतोऽर्कयुतात् घातनपातकौ लभेत् ॥
न सदैषु फलं सुकर्मणामलमारंभविधानतो जनः ॥ ४७ ॥

द्वियमैरिति । अर्कयुताद्भतो रविनक्षत्रात् द्वियमैर्द्वाविंशतिभिरुडुभिः सप्तविंशतिभिश्च क्रमेण घातनपातकौ योगौ स्यातां। सदा जन एषु योगेषु सुकर्मणां शुभकार्याणामारंभो विधानतो विहितोद्यमादलं निश्चयेन फलं न लभेत् न प्राप्नुयात् ॥ ४७ ॥

चंडांशूनविभोडुतोऽहिभमघाचित्रानुराधाश्रवः
पौष्णेष्वश्विभतः क्रमाद्गणनयेलादेवतेशान्विते ॥
स्याद्यावत्यगराजजारमणदोश्चंडायुधस्येतिभे
पातोनारतमेव कर्म रुचिरं नास्मिन्विधेयं बुधैः ॥ ४८ ॥

अथचंडायुधपातमाह—चंडांश्विति । चंडांशुना सूर्येण ऊना हीना विभा कांतिर्यस्य तत् तच्चोडु च तस्मात्सूर्यनक्षत्रात् अहिभादिसप्तसु अश्विभतोऽश्विनीतः क्रमेण गणनया कृत्वा । इलेति । इला देवता भूदेवो विप्रस्तस्येशश्चन्द्रस्तेनान्विते युक्ते यावति भे अत्राधारे सप्तमी । अगेति । अगानां महींद्राणां राजा हिमाचलस्तज्जा गौरी तद्रमणईश्वरस्तस्य दोर्भुजा तस्य चंडायुधमस्त्रं तस्य पातो हरायुधपातः स्यादित्यन्वयः स्पष्टार्थस्त्वयं । सर्पभात्सर्वभानि स्थाप्यंतेऽधःपंक्तिषु यद्वर्तमानचंद्रनक्षत्रमुपरिकृतचिह्ननक्षत्रेण विद्धं यत् तदा तस्मिन्भे हरायुधपातः स्यादित्यर्थः । बुधैरस्मिन्नक्षत्रेऽनारतं सदैव रुचिरं शुभं कर्म न विधेयं न कार्यमित्यर्थः॥४८॥

हेलींद्वोरचरे युतावथ विभावर्यार्यधारासुवो-
रुग्रे भेऽब्जविदोश्च मिश्रभइह क्षिप्रे मृगांकेज्ययोः ॥
मैत्रे धिष्ण्यतमीशयोर्निशिथिनीशैन्योर्विधौ दारुणे
लोले मंगलभंगवान्निखिलभे स्यात्कालचक्रभ्रमः ॥ ४९ ॥

अथ शार्दूलविक्रीडितेन कालचक्रभ्रममाह—हेलीन्द्वोरिति । अथेह लोके हेलीन्द्वोः सूर्यचंद्रयोरचरे भे स्थिरनक्षत्रे युतौ मिश्रीभावे सति मंगलभंगवान् विवाहादिकार्यविनाशकृत् कालचक्रभ्रमः स्यात्। एवं विभावर्या रात्रेरर्यः स्वामी चंद्रः धराभूर्मंगलस्तयो रुग्रे भे युतौ । पुनरब्जविदोश्चंद्रबुधयोर्मिश्रभे युतौ । पुनर्मृगांकेज्ययोश्चंद्रगुर्वोः क्षिप्रे मे युतौ । पुनर्धिष्ण्यतमीशयोः शुक्रचंद्रयोर्मैत्रे भे युतौ। पुनर्निशिथिनीशश्चंद्रः ऐनिः शनिस्तयोर्दारुणे भे युतौ । पुनर्निखिला भा कांतिर्यस्मिन्स एवंविधे विधौ पूर्णेन्दौ लोले भे सति एषः स्यात् । 'अब्जो धन्वंतरौ चंद्रे शंखे पद्मे च संख्यके' इति 'अर्यः स्वामिवैश्ययोः'इति च हैमः । निशीथिनीइत्यत्र शकारमध्ये दीर्घईकारोऽस्ति अत्र तुऱ्हस्वइकारः शब्दप्रभेदाद्दृश्यते ॥ ४९ ॥

तिथिवारभवा भवारजाः किल योगाश्च शुभाशुभाह्वयाः॥
विषयेष्वखिलक्रियाविधावखिलेष्वत्र विलोकनोचिताः ॥ ५० ॥

अथ वैतालीयेन केपुकेष्वेते विलोकनीयास्तदाह—तिथीति । तिथिवारेभ्यो भवाजाताः भवारेभ्यो नक्षत्रवारेभ्यो जायन्ते तज्जाः शुभाशुभाह्वयाः सौम्यक्रूरनामयोगाः अखिलेषु विषयेषु देशेषु अत्राखिलक्रियाविधौ समस्तकार्यविधाने विलोकनोचिता दर्शनाय योग्याः स्युः 'विषयो यस्य योज्ञातस्तत्र गोचरदेशयोः' इतिहैमः ॥ ५० ॥

हेल्यधिष्ठितभमेशभजाः स्युर्हूणहोरखशवंगाकिणेषु ॥
येखिलेषु च हिताय कुयोगास्तेऽहिताय विषयेष्वखिलेषु ॥ ५१ ॥

अथ स्वागतावृत्तेनाह—हेल्येति । हेल्याधिष्ठितभं सूर्याश्रितनक्षत्रं च भेशभं भानां नक्षत्राणामीशश्चंद्रस्तद्भं चंद्रनक्षत्रं च ताभ्यां जायंते तज्जा ये कुयोगाः अखिलेषु हूणादिषु देशेषु हिताय शुभाय स्युः । च पुनस्ते कुयोगाः अपरेषु विषयेषु देशेषु अहितायाऽशुभाय स्युः ॥५१॥

विष्कंभप्रीत्यायुष्मंतः सौभाग्यशोभनावतिगण्डश्च ॥
सुकर्मा धृतिशूलाह्वयगण्डावृद्ध्यभिधामी योगाः क्रमशः ॥ ५२ ॥
ध्रुवाख्यव्याघातौ हर्षणवज्रासिद्धयो व्यतीपातः ॥
वरीयानथ परिघशिवौ सिद्धिसाध्यशुभाह्वयशुक्लाख्याः ॥ ५३ ॥

**अहैन्द्रांत्यौवैधृतिर्योगाः स्युरित्यसौम्यसौम्याहि ॥**
**स्वसंज्ञा संनिभफलमश्रांतं कर्मसु तन्वंत्येव ॥ ५४ ॥**

अथार्यागद्येन विष्कंभादिसप्तविंशतियोगानाह—विष्कंभेत्यादित्रिभिः विशेषकं। सुगमं। अश्रांतं निरंतरमसौम्यसौम्याः क्रूरशुभा अमी योगाः कर्मसु कार्येषु स्वसंज्ञसंनिभफलं निजनामसदृशफलं तन्वंति विस्तारयन्ति ॥ ५२ ॥ ५३ ॥ ॥ ५४ ॥

**शश्वदमीषामेतेऽशुभफलभाजोपि भवंति वै योगाः ॥**
**विश्वांकभतिथ्यंगैकोनविंशतिदशधरात्यष्टिमिता ॥ ५५ ॥**

अथैतेषामशुभानाह—शश्वदिति। शश्वन्निरंतरममीषां सप्तविंशतेर्योगानां मध्ये एते अमीप्रत्यक्षा योगाः विश्वा विश्वे त्रयोदश अंका नव भानि सप्तविंशतिः तिथयः पंचदश अंगानि षट् एकोनविंशतिः दश धरा एकः अत्यष्टिः सप्तदश एषां द्वंद्वः। एभिर्मिताः व्याघात १३ शूल ९ वैधृति २७ वज्र १५ परिघ १९ गंड १० विष्कंभ १ व्यतिपाताः १७ ॥ ५५ ॥

**वैधृतिव्यतिपातावखिलौ स्यातां चानिष्टदौ योगौ ॥**
**एतद्विहितवृषोनेहपरलोकेऽखिलभोगभाग्भवति ॥ ५६ ॥**

वैधृतीति। अखिलौ समस्तौ वैधृतिव्यतिपातौ योगौ अनिष्टदौ दोषकरौ स्यातां। इहाऽस्मिन् भवे एतयोर्वैधृतव्यतिपातयोर्विहितः कृतो वृषो धर्मो येन स पुमान्परे लोके स्वर्गलोकेखिलभोगभाक् समस्तभोगफलयुक्तो भवति। व्यतिपातो व्यतीपातइतिशब्दप्रभेदो घञिपरे अदेरुपसर्गस्य वा दीर्घत्वात्। वैधृतो वैधृतिशब्दप्रभेदोपलक्षणत्वात्। 'धर्म्यः पुण्यं वृषः' इतिहैमः ॥ ५६ ॥

**परिघार्धमनिष्टमनिष्टा नाड्यः कुलिशस्यादियुतेः ॥**
**शुभकर्म्मस्वाद्याः स्युस्तिस्रोतिगंडे षडेव गंडे च ॥ ५७ ॥**

परिघेति। परिघस्यार्द्धं दलमनिष्टं स्यात्। कुलिशस्य वज्रस्य किंभूतस्यआदियुतेरादिना विष्कम्भेण युतिः संयोगो यस्य स तस्य विष्कंभस्य आद्यास्तिस्रो नाड्यो घटिका नेष्टाः च पुनरतिगंडे षट् गंडे षडेव नेष्टाः स्युः। केषु शुभकर्म्मसु ॥ ५७ ॥

**व्याघाते न वरा नव पंचाद्याः शूले स्तो द्वौ ॥**
**अंशे निंद्यौ च मुहूर्त्तावैन्द्रे ध्रुवयोगे च ते शेषे ॥ ५८ ॥**

व्याघातेति। एवं व्याघाते नव घटिकाः वराः श्रेष्ठान शूले पंच। आद्याइति सर्वत्र योज्यं। अथैंद्रे ध्रुवयोगे च अंशे त्रिभागे इने गते सति द्वौ मुहूर्तौ निंद्यौ स्तःभवतः ॥ ५८ ॥

**मितं सदा मानदलेन कक्षमसौम्ययोगस्य सरूपकस्य ॥**
**योगो यदि स्याद्विषमस्तदैवमथोन्यथा पिंडयुतस्य भं तत् ॥५९॥**

अथोपजातिभ्यां विष्कंभादिदुर्योगेष्वेकार्गलचक्रस्योपपत्तिमाह—मितमिति । असौम्ययोगस्य विष्कंभव्याघातव्यतीपातशूलपरिघगंडातिगंडवज्रवैधृत्याख्यस्य सरूपकस्यैकेन सहितस्य अस्य मानदलेन प्रमाणस्यार्द्धेन मितं प्रमितं यद्धं नक्षत्रं तद्धं कर्क्षं कस्य मस्तकस्य ऋक्षं नक्षत्रं स्यात् । यदि चेद्विषमो योगः स्यात् तदा एवं स्यात् । अथान्यथा पूर्वोक्तविषमाभावे सति तदा पिंडयुतस्याऽष्टाविंशतिनक्षत्रयुक्तस्य समकुयोगस्य प्रमाणार्द्धेन मितं यद्धं तद्धं मस्तकनक्षत्रं स्यादित्यन्वयः ॥ ५९ ॥

**रेखाभिरेवोर्द्ध्वगतैकरेखा खार्जूरिकं विश्वमिताभिरस्मिन् ॥**
**विद्धा सती मौलिभवस्तदंघ्रौ भपेटकं स्याद्वलयं विदध्यात् ॥ ६० ॥**

रेखेति । विश्वमिताभिस्त्रयोदशमिताभी रेखाभिर्विद्धा सती एवं विधा उर्द्ध्वगता एकरेखा इत्येवं स्वरूपकं खार्जूरीकं चक्रं स्यात् । सुधीभिरस्मिन् वलये मौलिभतोमस्तकनक्षत्रात् तदंघ्रौ चक्रचरणे भपेटकं नक्षत्रमालां विदध्यात् स्थापयेत् ॥ ६० ॥

| खार्जूरिकं चक्रमिदं | आ | पु | पु | श्ले | म | पू | उ | ह | चि | स्वा | वि | अ | ज्ये |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| | मृ | | | | | | | | | | | | मू |
| | रो | कृ | भ | अ | रे | उ | पू | श | ध | श्र | अ | उ | पू |

**तत्रैकरेखाश्रितयोरिनेंद्वोरेकार्गलाख्योंबकदीप्तिपातः ॥**
**कार्त्तान्तिकैरेव पुराणगात्रैरुक्तोमिथोदीप्तकृशानुकीलः ॥ ६१ ॥**

अथेंद्रवज्रयाऽस्य नामान्याह—तत्रैकेति। एवं निश्चयेन पुराणगात्रैर्वृद्धैः कार्तांतिकैर्दैवज्ञैः। 'दैवज्ञगणकादेशिज्ञानिकार्तांतिकाअपि'इतिहैमः। तत्र चक्रे एकरेखास्थितयोरेखायां गतयोरिनेंद्वोः सूर्यचंद्रयोरंबकदीप्तिपातो नेत्रतेजःपातएकार्गलाख्यउक्तः । कीदृशएकार्गलाख्यः । मिथः परस्परं दीप्तकृशानोः स्फुरदग्नेः कीलाइव कीला ज्वाला यस्मिन्सः। 'हेतिः कीलाशिखावला' इतिहैमः ॥ ६१ ॥

**यदैकरेखास्थितपुष्पवंतयोर्दृगंशुसंपातभुवोतिभीष्मभाः ॥**
**काले पतंत्यर्णवचीवरातलं नराः सदा मंगलभंगहेतवः ॥ ६२ ॥**

अथोपजात्याऽस्यैव दुष्टपुरुषस्वरूपतां ब्रूते—यदैकेति । कदा काले एकरेखास्थितपुष्पवन्तयोरेकरेखाधिष्ठितरविचंद्रयोर्दृशौ तयोरंशुसंपातस्तेजःसंपातस्तस्माद्भवंतीति तद्भुवो जाता अतिभीष्मभा अतिक्रूरकांतयः सदा निरंतरं मंगलभंगस्य पाणिग्रहणनाशस्य हेतवः कारणभूता एवं विधा नरा नरस्वरूपा अर्णवचीवरा भूमिस्तस्यास्तलं पतंति गच्छंति । 'सागरादग्रे स्युर्नेमिमेखलांबराः' इति हैमः ॥ ६२ ॥

**सत्याः पुरादोर्ग्रहमंगलं शो बभूव तन्मंगलमाचचार ॥**
**कपालिनोमंगलमप्यहो स्राक् चैकार्गलोत्पन्ननृपातदोषात् ॥ ६३ ॥**

अथास्यैव दुष्टतां दर्शयन्नाह—सत्येति । 'वः प्रागुक्तोथ शः शंभुः शा गौरी कमला-लया' इतिसौभरिवचनात् । शः शंभुः पुरा पूर्वं सत्याः पार्वत्या दोर्ग्रहमंगलं पाणिग्रहण-मंगलमाचचार चकार । च इत्यवधारणे । अहोइत्याश्चर्ये । तन्मंगलं पार्वत्याःपाणिग्रहणमंगलं कर्तृपदं । स्राक् शीघ्रं कपालिनोपि मंगलं बभूव स्यात् । एकार्गलेषूत्पन्ना ये नरस्तेषां पातदो-षात् अत्रशब्दच्छलेन कपालमस्त्यस्येतिकपालिनोभिक्षोरपि कुयोगान्मंगलं तर्ह्यन्यस्य श्रीमतः कथं न । अत्र कुयोगान्मंगलमितिविरोधालंकारः । परिहारस्तु कपालिन ईश्वरस्य भिक्षोश्च मंगलमेव एतयोर्नैश्वरत्वत्वभावात् नतु श्रीमत्पुरुषस्येति । अथवा तन्मंगलमिति कपालिनोमंगल-मिति संबंधे षष्ठी बभूव । सती मंगलमपि भिक्षाटनं चकारेत्यर्थः । यतो भिक्षूणां मंगलं भिक्षेति 'सती शिवा महादेवी' इतिहैमः ॥ ६३ ॥

**ऐशं यतेद्धर्षणशूलसाध्यगंडे व्यतीपातकवैधृतीनाम् ॥**
**यद्यावसाने स्थितमृक्षमृक्षे चंडायुधं तत्र हि कालभं स्यात् ॥ ६४ ॥**

अथ चंडायुधमाह—ऐशमिति । पततां गच्छतां हर्षणादियोगानां यदवसानेऽन्ते स्थित-मृक्षं नक्षत्रं तत्र तस्मिन्नक्षत्रे हि निश्चयेन ऐशमीशस्येदं चंडायुधं स्यात् । कीदृशं चंडायुधं काला भा कांतिर्यस्य तत्कालभम् ॥ ६४ ॥

**मरुस्थलीकच्छकलिंगवंगदेशान्नगेलां च शिवास्त्रपातः ॥**
**एकार्गलां दुष्यति नापरेषु देशेषु मौतावहितौ भवेताम् ॥ ६५ ॥**

अत्रैतयोर्हेयस्थानमाह—मरुस्थलीति । शिवास्त्रपातश्चंडायुधपातः एकार्गलश्च मरुस्थ-ल्यादीन् नगेलां पर्वतभूमिं च दुष्यति । अपरेषु देशेषु इमौ तौ चंडायुधैकार्गलावहितावऽ-शुभकरौ न भवेतामित्यर्थः ॥ ६९ ॥

**निहंति काश्मीरवरेंद्रयोरसौ समागधाख्यद्रविडारिमाणयोः ॥**
**एकार्गलोन्येषु न मंगलव्रजान्नित्याहतुर्गालवदेवलावपि ॥ ६६ ॥**

इतिज्योतिर्विदाभरणे योगोत्पत्त्यध्यायो द्वितीयः ॥ २ ॥

**निहंतीति** । इतिगालवदेवलावपि ऋषी आहतुः कथयतः । इति किं । असावेकार्गलः

काश्मीरवरेंद्रयोः काश्मीरवराडदेशयोर्मागधद्रविडानां सहितयोर्मंगलव्रजान्निहंति विनाशयंति । अन्येषु देशेषु नेति ॥ ६६ ॥

इति श्रीपौर्णिमीयगच्छाधिराजभट्टारकपुरंदरश्रीमहिमाप्रभसूरीश्वरचरणसरोरुहचंचरीकायमान शिष्यभावरत्नविरचितायां श्रीकविकालिदासकृतज्योतिर्विदाभरणस्य सुखबोधिकायां द्वितीयोऽध्यायः समाप्तः ॥ २ ॥

---

सदा श्रीमहिम्नां प्रभूणां सुनाम्नां शुभज्ञानरत्नाकरः सूरिराज्ञाम् ॥
महीमंडले स्याच्छ्रियैकस्य नूनं श्रितस्यास्तमैत्यर्याज्ञ संतापराशेः ॥ १ ॥

## ॥ अथ भद्राप्रकरणम् ॥ ३ ॥

---

बवाह्वबालवकौलवतैतिलगरवणिजविष्टयः सप्त ॥
जगदुरथोतिचराणि तिथिखंडात्मकानि करणानि ॥ १ ॥

अथ तृतीयाध्याये प्रथममार्याभ्यां सप्तकरणान्याह—बवेति । अथानंतरं ज्ञातव्यं बवाह्वेत्येतेषां द्वंद्वः । इतिसप्तचराणि चलस्वरूपाणि तिथिखंडात्मकानि तिथ्यर्द्धस्वरूपकाणि जगदुः कथयामासुः ॥ १ ॥

अचरायुतरंशकलाद्यामासन्ना चतुर्दशी तस्याः ॥
शकुनिचतुष्पदनागकिंस्तुघ्नानि भवंति करणानि ॥ २ ॥

अथ स्थिरकरणचतुष्कमाह—अचरेति । अमाया आसन्नं समीपममासन्नं उत्तरखंडे आद्यममासन्नं यस्याः साद्यामासन्ना चतुर्दशी एतेन कृष्णपक्षउत्तरखंडश्च सूचितः । तस्याश्चतुर्दश्याः सकाशात् अचराणि शकुन्यादीनि करणानि भवंति ॥ २ ॥

सितादेः करणं व्येको याततिथ्यर्धसंचयः ॥
सप्तभक्तोवशेषेण मितं स्याद्बवतो गतम् ॥ ३ ॥

अथानुष्टुभा करणानयनमाह—सितादेरिति । सितादेः सितपक्षप्रतिपत्तः । यातेतिगतकरणसंचय इति । कोऽर्थः । द्विगुणीकृतयाततिथौ अर्धसंचयः स गतकरणसंचयः । व्येकः एकेन रहितः । पुनःकिंविशिष्टः । सप्तभक्तस्सप्तभिर्हृतोवशेषस्तेनमितं प्रमितं करणं बवतो गतं स्यादित्यर्थः ॥ ३ ॥

चराणि विष्टिं करणान्यृते च सा भवंति सौम्याखिलकर्म्मसिद्धये ॥
तथैव धीराणि च पित्र्यकर्मणे विष्टिर्विघातादिविधौ वरा भवेत् ॥ ४ ॥

अथोपजात्यैषां फलमाह—चराणीति । विष्टिमृते विना चराणि करणानि सौम्याखिलकर्मसिद्धये शुभसमस्तकार्यसिद्धये भवंति । तथैव च पुनर्धीराणि स्थिराणि शकुन्यादीनि करणानि पित्र्यकर्म्मणे पूर्वजसंबन्धिकृत्याय भवन्ति पुनः सा विष्टिर्विघातादिविधौ वरा श्रेष्ठा भवेत् ॥ ४ ॥

**भद्रा पुरा संयुग ईशविग्रहाद्बभूव वामीवदनामरासुरे ॥**
**लांगूलिनी सप्तशया त्रिपद्वती वराटिकादृग् घनघोषकस्वना॥ ५॥**

अथ सा क॰ विष्टिस्तदुत्पत्तिमाह—भद्रेति । पुरा पूर्वममरासुरे नाम्नि संयुगे संग्रामे भद्रा ईशविग्रहाच्छंभुशरीराद्बभूव संजाता। किंलक्षणा। वामीवदना वामी रासभी तद्वद्वदनं मुखं यस्याः सा। यतः। 'वामी शृगाल्यां करभीरासभीवडवासु च' इति हैमः । पुनः किंभूता । लांगूलिनी पुच्छयुक्ता । पुनः किंलक्षणा । सप्त शयाः कराः यस्यास्सा सप्तशया। 'पंचशाखः शयः समः इति हैमः । त्रयः पादाश्चरणा विद्यंते यस्याइतित्रिपद्वती । वराटिकादृक् कपर्दिकावत् दृशौ यस्यास्सा वराटिकादृक्। पुनः घनो निबिडः कुत्सितो घोषो घोषकः कुत्सितकांस्यं तद्वत्स्वनः शब्दो यस्याः सा । 'घनः कांस्ये विद्युतीयघोषे' इति हैमः । कुत्सितार्थे कप्रत्ययः ॥ ५ ॥

**जाले प्रविष्टा कुणपांशुकांबरामरद्विषामग्रजकानने तदा ॥**
**परेतगा धूमनिभा बलोद्धता वात्येव साभूदतिदीर्घविग्रहा ॥ ६ ॥**

जालइति । तदा सा भद्रा वात्या इव वातानां समूहो वात्या तद्वदतिदीर्घविग्रहाऽत्यायतशरिराऽभूत् । किंभूता । अमरद्विषां दैत्यानां जाले समूहे प्रविष्टा । पुनःकिंभूता । कुणपांशुकानि शववस्त्राण्येवांबराणि यस्याः सा कुणपांशुकांबरा ' अजीवे कुणपं शव ' इतिहैमः। अथवा कुणपांशुकांबरा शववस्त्रा। अंबरे गगनेऽमरान् द्विषंतीतितेषामंबरामरद्विषामित्यत्र योज्यम् । पुनः किंभूता । अग्रजाः पितरस्तेषां काननं वनं श्मशानं तस्मिन्परेतेन गच्छतीतिपरेतगा शववाहना । पुनर्धूमनिभा धूमसदृशी । पुनर्बलोद्धता शौर्योत्कटा । 'श्मशानं करवीरं स्यात् पितृप्रेतगृहं वनम् ' इतिहैमः । प्रेतः परेतश्चामृते भूतविशेषे इति ॥ ६ ॥

**तस्यास्तदा चानशिरेमरारयः कलिंदजासोदरधामपद्धतिम् ॥**
**अवाप सा कर्णपदं कपर्दिनो वह्न्यायुधानंदवतोमरुद्रया ॥७॥**

तस्याइति।तदाऽमरारयो दैत्यास्तस्याविष्टेः सकाशात् कलिंदजासोदरधामपद्धतिमानशिरे जग्मुः । कलिंदजा यमुना तस्याः सोदरो यमस्तस्य धाम्नां गृहाणां पद्धतिः पंक्तिस्तां । 'पद्धतिः पथि पंक्तौ च' इतिहैमः। अथ सा भद्रा कपर्दिन ईशस्य कर्णपदमवाप प्राप । किंभूतस्य कपर्दिनः आनंदवतः परमसुखयुक्तस्य । किंलक्षणा सा। वह्न्यायुधा अग्निशस्त्रा। पुनः किंभूतासा । मरुतां वायूनां रयोवेगस्तद्वद्रयो यस्याः सा मरुद्रया ॥ ७ ॥

**विधेयमेवाग्निशिखाग्रतालुका फलं न साशेतवरात्ति मंगलम् ॥**
**नरैरतः स्वात्महितोपलब्धिभिस्तदाश्रितं स्वाश्रितकर्मसिद्धिजम् ॥**

अथास्यां सुकृत्यनिषेधमाह—विधेयेति । शात् ईशात् इतः प्राप्तो वरो यया शेतवरा साविष्टिः फलमत्ति भक्षयति । किंभूता सा अग्निशिखा अग्नेर्वह्नेः शिखा ज्वाला तस्याअग्रं तद्वत् तालुकं यस्यास्सा । किंभूतं फलं स्वाश्रितकर्मसिद्धिजं स्वयाविष्टयाश्रितं विहितं कर्म्म तस्य सिद्धिस्तस्या जातं भद्रायां कृतकार्यनिष्पत्तिजातं अतोहेतोर्नरैस्तदाश्रितं विष्टिवेलाप्राप्तं मंगलमुद्वाहादिकं न विधेयं न कर्त्तव्यं । किंभूतैर्नरैः । स्वात्महितोपलब्धिभिः स्वात्मने जीवाय हिता हितकारिणी उपलब्धिर्बुद्धिः प्राप्तिर्ज्ञानं वा येषां तैरिति । 'उपलब्धिर्भवेज्ज्ञाने तथा प्राप्तिमनीषयोः' इतिमहीपः ॥ ८ ॥

**पक्षे वलक्षे शभवैवमुत्तरे तिथेर्मिताया निगमैर्भवैर्दले ॥**
**स्यात्पंचदश्या विषभृन्मिता तिथेर्धरोनितायाःशितिभे च साधके ॥ ९ ॥**

अथविष्टिभोग्यकालमाह—पक्षेइति । वलक्षे शुक्लपक्षे निगमैर्वेदैश्चतुर्भिश्च पुनर्भवैरुद्रैरेकादशभिर्मितायास्तिथेश्चतुर्थ्या एकादश्या उत्तरे दले शात् शिवाद्भवतीति शभवा भद्रा स्यात् चपुनरेव चतुर्दश्याः पूर्णिमायाश्च पूर्नविषभृता सर्पेण मिता चासौ आसमस्ता तिथिश्च विषभृन्मिता तिथिस्तस्या अष्टम्याः आद्यके प्रथमे दले शभवा स्यात् । च पुनः शितिः कृष्णा भा कांतिर्यस्मिन् स तस्मिन् शितिभे कृष्णपक्षे धरोनितायाः एकेन रहितायाः पूर्वोक्तचतुर्थ्यादितिथेस्तृतीयायां दशम्यां उत्तरे दले पुनश्चतुर्दश्याः सप्तम्याः प्रथमे दले सा भद्रा स्यादित्यर्थः॥९॥

**नेष्टाः सदाऽशेषविनाडिका वरं चैके बुधाः पुच्छघटीत्रयं जगुः ॥**
**तस्या वरामह्न्यपरार्द्धगा तिथेर्या तामसंतो निशि चादिगापरे ॥१०**

नेष्टाइति । सदा बुधाः क्रियाविधौ तस्याभद्राया अशेषाः समस्ताघटीरिष्टाः श्रेष्ठा न जगुर्नोचुः बुधा अस्याः पुच्छं घटीत्रयं चरं जगुः अथ केषांचिन्मतमाह अपरेऽसंतोऽमेधसो या भद्रा तिथेरपरार्द्धगा उत्तरदलस्थिताऽस्ति तामह्नि दिने वरां श्रेष्ठां जगुः पुनर्या भद्रा तिथेरादिगा पूर्वदलस्थिताऽस्ति तां निशि रात्रौ वरां जगुः ॥१०॥

**भैः पंचभिर्दस्त्रकुभिर्नखैः स्यादस्या घटीभ्यः क्रमतो मिताभ्यः ॥**
**घटीत्रयं लूनलता परं च सितेऽसिते चोत्क्रमतोपि भैम्याः ॥११॥**

अथास्याः पुच्छाविवेकतामाह—भैरिति । सिते शुक्लपक्षे चतुर्थ्यां भैः सप्तविंशतिभिर्मिताभ्यो घटीभ्यःसकाशादस्याभैम्या विष्टेरपरं घटीत्रयं लूनलता स्यात् । क्रमत एवमष्टम्यां पंचभिर्मिताभ्यो घटीभ्यः एकादश्यां दस्त्रकुभिर्द्वादशभिर्मिताभ्यः पूर्णिमायां नखैर्विंशतिभिर्मिताभ्यः च पुनरसिते कृष्णपक्षे उत्क्रमतो वैपरीत्यचलनेनाऽपि तृतीयायां विंशतिभिर्मिताभ्यः सप्तम्यां-

द्वादशभिर्मिताभ्यः दशम्यां पंचभिर्मिताभ्यश्चतुर्दश्यां सप्त विंशतिभिर्मितभ्योऽपरं घटात्रय लूनलता स्यात् । भीमात् ईशात् भवा भैमी 'भीमभर्गौ' इति हैमः । लूनलताशब्दोऽस्मिन्ग्रंथे बहुषु स्थानेषु पुच्छवाचको दृश्यते महाकविप्रोक्तत्वात्प्रमाणम् ॥ ११ ॥

**निजः षडंशो लपनं गलः स्यात्त्रिंशलवस्त्र्यंशउरोंगभागः ॥**
**नाभिः कटिर्मार्गणभागकोस्याः शेषं च लां गूललतेशजायाः ॥१२॥**

अथास्यादेहविभागमाह—निजेति । अस्याईशाज्जायतेइति ईशजा तस्या भद्राया निजः स्वकीयः शरीरापेक्षया षडंशः षष्ठोभागः पंच घट्यो लपनं वदनं स्यात् । एवं त्रिंशल्लवस्त्रिंशत्तमो भाग एका घटी गलः कंठः । त्र्यंशस्तृतीयो भागो दश घट्यउरो हृदयं । अंगभागः षष्ठो भागः पंच घट्यो नाभिः । मार्गणभागकः पंचमोभागः षट्घट्यः कटिः । शेषं त्रिमितघट्यो लांगूललता पुच्छलतेति ॥ १२ ॥

**मयोदितो वर्ष्मविभाग एष त्रिंशद्घटीप्रख्यमितौ हि सत्याम् ॥**
**सयोपरैर्युक्तियुतोनसाद्भिर्मान्यो निरुक्तोपमतः सदास्याः ॥ १३ ॥**

अथ न्यूनाधिकभद्रायां भागविवेकतामाह—मयेति । हीतियुक्तार्थे त्रिंशद्घटीतुल्यमितैः भद्रायां सत्यां सदा मयाऽस्या भद्राया एष वर्ष्मविभागः शरीरविभाग उदितः कथितः । अतःकारणादपरैरनसाद्भिर्विबुधैरस्याः सोयं विभागो मान्यो ग्राह्यः । स कः । योयुक्तियुतो निरुक्तः कथितः । कोऽर्थः । यदा भद्रा न्यूनाधिका भवति तदा भागोपि तत्प्रमाणो भवेत् ॥१३॥

**विलीयतेऽर्थो लपने लयो गले तस्मादुरस्यर्थनिमीलनं कलिः ॥**
**नाभौ धियोरं विलयः कटिस्थले लूने च विष्टेर्विजयोऽनिशं भवेत् ॥१४**

अथ भद्राङ्गविभागफलमाह—विलीयतइति । अनिशं निरंतरं विष्टेर्लपने मुखेऽर्थः कार्यं विलीयते विनाशमुपैति । तस्मात्तदनंतरं गले कंठे लयो मृत्युर्भवेत् । उरसि त्हदि अर्थस्य पदार्थस्य निमीलनं हानिर्भवेत् । नाभौ कलिः क्लेशः । अरं शीघ्रं कटिस्थले धियो बुद्धेर्विलयो नाशः । लूने पुच्छे विजयो भवेत् । चः पुनरर्थः । विलीयंतकर्तरिप्रयोगः । लयश्चातिक्षयवाचकः । उक्तं च लघुस्तवे । 'लीयंते खलु यत्र कल्पविरमे ब्रह्मादयस्तेप्यमी' इति ॥ १४ ॥

**रसातलस्था तिमिकार्मुकांगनाघटस्थिते राजनि भूमिगा भवेत् ॥**
**द्विरेफगोद्वंद्वनखायुधानुगे विष्टिर्दिविस्था ननु शेषराशिगे ॥ १५ ॥**

अथ विष्टेः स्थितिवर्तनमाह—रसेति । ननु निश्चितं तिमिर्मीनराशिः कार्मुको धनुः अंगना कन्या घटस्तुला एषां द्वंद्वः एषु स्थिते राजनि चंद्रे सति विष्टीरसातलस्था पातालस्थिता भवेत् । द्विरेफोऽलिः वृश्चिकः गौर्वृषः द्वंद्वं मिथुनं नखायुधः सिंहः एषां द्वंद्वः

एतान् राशीननुगः प्राप्तस्तस्मिन् राजनि एतद्राशिगतचंद्रे विष्टिर्भूमिगा भवेत् शेषराशिगे मेषकर्कमकरकुंभगते राजनि विष्टिर्दिविस्था स्वर्गस्थिता भवेदित्यर्थः ॥ १५ ॥

**सा याति मन्वह्यगतिथ्युदन्वदिग्गीश्वरोषर्बुधसंमितादिषु ॥**
**तिथिष्वनिष्टाभिमुखी यथेयमैंद्र्यानलाशाम्यइतिक्रमःस्यात् ॥१६॥**

अथ विष्टिगत्यभिमुखमाह—सायातीति । मनुश्चतुर्दश अहिरष्ट अगः सप्त तिथिः पंचदश उदन्वान् समुद्राश्चत्वारः दिक् दश ईश्वर एकादश उषर्बुधोग्निस्त्रयः एषां द्वंद्वः एभिः संमितासु प्रमितासु तिथिषु सा विष्टिरैंद्र्यानलाशाम्यः पूर्वप्रमुखकाष्ठाभ्यइति यथाक्रमं याति गच्छति । यथा चतुर्दश्यां पूर्वाभिमुखी । अष्टम्यामग्निदिङ्मुखी । सप्तम्यां दक्षिणाभिमुखी । पूर्णिमायां नैर्ऋत्यभिमुखी । चतुर्थ्यां पश्चिमाभिमुखी । दशम्यां वायव्याभिमुखी । एकादश्यामुत्तराभिमुखी । तृतीयायामीशानाभिमुखीइति । इयं विष्टिरभिमुखी अनिष्टा स्यात् ॥ १६ ॥

**वार्वीतिहोत्रस्वपयातुधानकृत्त्यंबरप्रेतपकेन्द्रदिक्षु ॥**
**भद्राननं भीतिवहं निरुक्तं कृत्योद्यमानामृषिभिः क्रमेण ॥ १७ ॥**

अथविशेषतआह—वारिति । ऋषिभिः क्रमेण कृत्येषु कार्येषूद्यमो येषां ते तेषां पुंसां भीतिवहं भयकारि भद्राननं विष्टिमुखं निरुक्तं प्रोक्तम् । कासु वारादिदिक्षु । वार्जलं वीतिहोत्रोऽग्निः स्वंधनं एषां द्वंद्वः एतान् पांतीतिपाः द्वंद्वे प्रत्येकस्यसंयोजनात् जलपोवरुणः अग्निपोऽग्निदेवः स्वपोधनपतिः यातुधानो राक्षसः कृत्तिश्चर्मैवाम्बरं यस्य सकृत्त्यम्बरो रुद्रः प्रेतपो यमः को वायुः इंद्रः सुरपतिः एषां द्वंद्वः एषां दिक्षु । स्पष्टार्थस्तु । चतुर्थ्यां पश्चिमायां भद्राननं । एवमष्टम्यामाग्नेय्यां । एकादश्यामुत्तरस्यां । पूर्णिमायां नैर्ऋत्यां । तृतीयायामैशान्यां । सप्तम्यां दक्षिणस्यां । दशम्यां वायव्यां । चतुर्दश्यां पूर्वस्यां । ग्रंथान्तरे तु यावत्संख्यादिगा तावत्संख्यामिते प्रहरे भद्रामुखम् । यथा चतुर्थ्यां पश्चिमायां चतुर्थे प्रहरे एवं सर्वमपीतिदृश्यते॥१७॥

**क्ष्मया च दोर्भ्यामिषुभिः शिवैरिनैर्मितं रवौ यामदलं वरं विदुः ॥**
**विधौ भुवांकैरहिभिर्दिनैरिनैर्द्राभ्यां सभद्रं स्वरशास्त्रदर्शिनः ॥१८॥**

अथयामार्द्धमाह—क्ष्मयेति । स्वरशास्त्रदर्शिनः स्वरशास्त्रज्ञाः रवौ रविवारे क्ष्मयैकेन दोर्भ्यां द्वाभ्यां इषुभिः पंचभिः शिवैरेकादशभिरिनैर्द्वादशभिर्मितं यामदलं प्रहरार्द्धं वरं विदुः अवधारयंति । एवंविधौ चंद्रे भुवैकेनांकेनांकैर्नवभिराहिभिरष्टाभिर्दिनैः पंचदशभिरिनैर्द्वादशभिर्द्वाभ्यां मितं सभद्रं कल्याणसहितं यामदलं विदुः ॥ १८ ॥

**अंकैरगैरग्निभिरंशुभिर्युगैर्दिग्भिर्नृपैः स्याच्च समं शुभं कुजे ॥**
**षष्ठं द्वितीयं दशमं बुधे गुरौ तदक्षदोरंकदशाहिसंख्यया ॥ १९ ॥**

अंकैरिति । कुजे भौमदिने अंकैर्नवभिरगैः सप्तभिरग्निभिस्त्रिभिरंशुभिर्द्वादशभिर्युगैश्चतुर्भिर्दिग्भिर्दशभिर्नृपैः षोडशभिः समं सदृशं यामार्द्धं शुभं स्यात् । बुधे षष्ठं द्वितीयं दशमं यामार्द्धं शुभं स्यात । गुरौ अक्षाणि पंचदोषौ भुजौ द्वौ अंका नव दश अहयोष्टौ एषां द्वंद्वः एषां संख्ययासमं मितं तद्यामार्द्धं शुभं स्यात् ॥ १९ ॥

**शरांगदिग्विश्वदिनेंद्रनागैर्भृगावभिन्नानि शुभान्यशंसन् ॥**
**शशांकविश्वेंद्रनृपेंद्रियैश्च यामार्द्धकानीह शनौ स्वरज्ञाः ॥ २० ॥**

शरेति । इह स्वरज्ञाः भृगौ शुक्रदिने शरादिभिरेषां द्वंद्वः । एभिः पंचषट्दशत्रयोदशपंचदशचतुर्दशाष्टभिरभिन्नान्यविच्छिन्नानि प्रमितानि यानि यामार्द्धकानि शुभानि अशंसन् कथयन् । शंसुकथने । चपुनरेव स्वरज्ञाः शनौ शशांकादिभिरेषां द्वंद्वः एभिरेकत्रयोदशचतुर्दशषोडशपंचभिः प्रमितानि यामार्द्धानि शुभानीत्यर्थः ॥ २० ॥

**विष्टिः स्याद्धरितालिकार्चनविधावुत्सर्गजातक्रिया-**
**वैमेयेषु शिवार्ययोः फलवती होमे सदैवार्चने ॥**
**सोपाकर्म्महुताशनीजलधरार्चापाकयज्ञक्रिया-**
**स्वारब्धेऽध्वरकर्म्मणीष्टयजने भूपप्रदाने तथा ॥ २१ ॥**

अथ शार्दूलविक्रीडितेन पूजाविशेषादौ विष्टिं शुभामाह—विष्टिरिति । विष्टिर्हरितालिकार्चनविधौ भाद्रपदशुक्लतृतीयाहरितालिकाभिधा तस्या व्रतपूजाविधाने सदैव फलदायिनी स्यात् । एवमुत्सर्गजातक्रियावैमेयेपु उत्सर्गोनीलोद्वाहः जातक्रिया शिशूनां घृतप्राश्यसंस्कारक्रिया वैमेयो विनिमयः एषां द्वंद्वः एपु च पुनः शिवार्ययोः शंभुगौर्योरर्चने पुनर्होमे पुनउपाकर्महुताशनीजलधरार्चापाकयज्ञक्रियासु उपाकर्म प्रथममारभ्यमाणं श्रावणीकर्म्म हुताशनी होलिका जलधराजलाशयाः कूपादयस्तेषामर्चा प्रतिष्ठा पाकः पचने यज्ञः एषां द्वंद्वः एषां क्रियासु पुनः आरब्धे प्रारंभितेऽध्वरकर्माणि यज्ञकृत्ये तथा इष्टयजने तथा भूपप्रदाने राज्ञा दत्तवस्तुनि फलवती स्यात् । 'दक्षजाया कुमारी' इति हैमः ॥ २१ ॥

**भद्राविहितकार्याणां नृपभूदेवताज्ञया ॥**
**नृणां सफलयत्यर्थं सा वा भर्गसपर्यया ॥ २२ ॥**

इति श्रीकविकालिदासोदिते ज्योतिर्विदाभरणे भद्राध्यायस्तृतीयः ॥ ३ ॥

अथानुष्टुभा पूजादिहेतुना विष्टिं शुभामाह—भद्रेति । साविष्टिः भद्रा भद्रायां विहितं निर्मितं

कार्थं यैस्ते तेषां नृणां पुंसामर्थं पदार्थं सफलयति सफलं करोति । त्रिर्डित्करणे इतित्रिः । कया नृपो राजा भूदेवता विप्रः एतयोराज्ञयादेशेन भर्गसपर्यया शंभुपूजया वेत्यर्थः ॥ २२ ॥

इति श्रीपौर्णिमीयगच्छाधीराजभट्टारकपुरंदरश्रीमहिमाप्रभसूरीश्वरचरणसरोरुहचंचरीकायमान शिष्यभावरत्नविरचितायां श्रीकविकालिदासकृतज्योतिर्विदाभरणस्य सुखबोधिकायां अब्दाध्यायस्तृतीयः ॥ ३ ॥

गच्छेश्रीमहिमाप्रभाख्यसुगुरोः श्रीपौर्णिमीयाभिधे ।
शिष्यः सूरिवरस्य माण्डणसुतो यो भावरत्नाह्वयः ॥
बाल्हांकुक्षिसमुद्भवः सुकृतवान् श्रीपत्तने पत्तने ।
छंदोव्याकरणाभिधास्मरणतोलंकारयुक्तामिमाम् ॥ १ ॥

## ॥ पर्वप्रकरणम् ॥ ४ ॥

**सुयोगवत्याश्रितपर्वकाला तिथिर्भवेन्मंगलकार्यहंत्री ॥**
**पर्वाण्यथो मंगलसिद्धयेऽहं तच्छुद्धये वच्मि विपर्वदोषात् ॥ १ ॥**

अथ चतुर्थोऽध्यायः । तत्र प्रथममुपजातिभ्यामाह—**सुयोगेति** । सुयोगवती शुभयोगयुक्तापि तिथिर्मंगलकार्यहंत्री उद्वाहादिकार्यनिष्पत्तिविनाशिनी भवेत् । किंविशिष्टा तिथिराश्रितपर्वकाला कुह्वादिपर्ववेलायुक्ता अतःकारणादहं पर्वाणि वच्मि ब्रवीमि किमर्थं विपर्वदोषात् विगतपर्वदोषात् मंगलसिद्धये विवाहादिकार्यनिष्पत्त्यै किंभूतायै तस्यास्तिथेः शुद्धिर्यस्यां सा तच्छुद्धिस्तस्यै ॥ १ ॥

**कुहू सिनीवाल्यपि रोहिणीविभावादर्शिते दर्शितमंडले क्रमात् ॥**
**स्तोमेनुमत्यह्नि च पूर्णिमास्यथो राकारजन्यामुदिते विधाविह॥२॥**

अथ पर्वाण्याह—**कुहूरिति** । क्रमादनुक्रमेण आदर्शितेऽदृष्टमंडले दर्शितमंडले च रोहिणीविभौ चंद्रे सति कुहूःसिनीवाली द्वे अपि अमावास्ये स्तः भवतः । यदुक्तं हेमचंद्रपादैः । 'सा नष्टेंदुः कुहूः दृष्टेंदुः सिनीवाली' इति । अथो चपुनरिह विधौ चंद्रेऽह्नि दिवसे उदिते रजन्यामुदिते च सति अनुमती राका द्वे अपि पूर्णिमे स्तः । यदुक्तं 'कलाहीने त्वनुमती राका पूर्णे निशाकरे'इति ॥ २ ॥

**गृहस्थयोरत्ररिसंज्ञयोर्मिथः स्वरिष्फयो राहुतुषाररोचिषोः ॥**
**किलैकराश्योः समसप्तमस्थयोर्भवेत्सदैवं ग्रहपर्वसंभवः ॥ ३ ॥**

अथ वंशस्थेन ग्रहणमाह—ग्रहेति । किलेति संभावनायां । अत्ररिसंज्ञयोः अत्ता च अरिश्च अत्ररी तयोः संज्ञा ययोस्तौ तयोर्मृत्युरिपुसंज्ञयोः पुनः स्वरिष्फयोर्धनव्ययये।र्मिथः परस्पर-गृहस्थयो राशिस्थितयो राहुतुषाररोचिषोः राहुचंद्रयोः सतोः सदैवं ग्रहपर्वसंभवो ग्रहणपर्व-संभवो भवेत् । पुनः किंविशिष्टयो राहुचंद्रयोरेकराश्योरेकराशिर्ययोस्तौ तयोः सतोस्तदापि अयं स्यात् । पुनः किंभूतयो राहुचंद्रयोः समसप्तमस्थयोरुभयतः सप्तमराशिस्थितयोः सतो-स्तदाप्ययं स्यात् ॥ ३ ॥

**अमावसानं दिवसे रजन्यामन्तो यदि स्यात्सितपंचदश्याः॥**
**तदोपरागो गणितादरम्यः स्पष्टः शुभे कर्मणि चापि साध्यम् ॥४॥**

अथोपजात्या ग्रहणकालमाह—अमेति । यदि चेद्दिवसेऽमावसानं अमावास्याया अंतः-स्यात् एवं रजन्यां सितपंचदश्याः शुक्लपौर्णिमाया अंतः स्यात्तदा गणितात् गणितमार्गादुपरागो ग्रहणं स्पष्टः । किंलक्षण उपरागः शुभे कर्मण्यरम्यो निंद्यः । अतएव च पुनः शुभे कर्म्माणि दैवाज्जाते साध्यं शांतिककर्म्म कर्तव्यं । अथवाऽत्र निमित्तार्थे सप्तमी शुभनिमित्तं तदवसरे साध्यं दानं देयमित्यर्थः ॥ ४ ॥

**यदंशुदोषेश्वरपर्वसंस्थं भमेव यावन्नहि तावदर्हम् ॥**
**दिवौकसां यामचतुष्टयं स्याच्छयाग्रहाद्याखिलमंगलेषु ॥ ५ ॥**

अथोपेंद्रवज्रया हुतं भं कियत्पर्यंतं हेयं तदाह—यदिति । यावद्दिवौकसां देवानां यामचतुष्टयं मासषट्कं अंशुः सूर्यो दोषाया रात्रेरीश्वरश्चंद्रस्तयोः पर्वसंस्थं ग्रहणवेलागतं यद्भं नक्षत्रं स्यात्तावत्कालपर्यन्तमेव तन्नक्षत्रमर्हं योग्यं नहि स्यात् । केषु शयाग्रहाद्याखि-लमंगलेषु शयो हस्तस्तस्य ग्रहः पाणिग्रहणं तदाद्यानि अखिलानि मंगलानि तेष्वित्यर्थः ॥५॥

**कृत्स्ने विपादे शकलेंघ्रितुल्ये क्रमाद्रवींद्वोर्ग्रहणे सुकार्यम् ॥**
**कार्यं नगैः ७ पंचभि५रर्णवैश्च ४ रामै३रपास्यैव मितान्यहानि ॥६॥**

अथोपजात्या न्यूनाधिकग्रहणे हेयदिनविवेकतामाह—कृत्स्न इति । रवीन्द्वोः कृत्स्ने संपूर्णे ग्रहणे विबुधैर्नगैः सप्तभिर्मितान्यहानि दिनान्यपास्य विहाय सुकार्यं शुभकृत्यं कर्तव्यम् । एवं क्रमात् विपादे विगतः पादश्चतुर्थांशस्तस्मिन् पादत्रये ग्रहणे पंचदिनानि । शकलेऽर्द्धे-ग्रहणे चतुर्दिनानि । अंघ्रितुल्ये एकपादमिते ग्रहणे त्रिदिनानीति स्पष्टम् ॥ ६ ॥

**भुक्तं युतं भोग्यमसाधुना भं दिवौकसा विद्धमथाऽऽहवस्थम् ॥**
**खपांथयोर्भेदितमंडलं वा ज्ञेयं तदुत्पातहतं ग्रहज्ञैः ॥ ७ ॥**

तदोचितं मंगलके तदृक्षं यदेंदुराक्रम्य पुनर्भुनक्ति ॥
आमासषट्कं ग्रहयोगगं तत्सदूषणं केचिदुशन्त्यथर्क्षम् ॥ ८ ॥

अथ क्रूराक्रांतभमाह—भुक्तमिति तदेति युग्मम् । ग्रहज्ञैर्मंगलके विवाहादौ तदा उचितं भं ज्ञेयं। किंविशिष्टं भं असाधुना क्रूरेण दिवौकसा ग्रहेण भुक्तं गतकाले अथवा युतं वर्त्तमानकाले अथवा भोग्यं समीपागामिकाले अथवा विद्धं पंचसप्तशलाकायंत्रे । अथवाऽऽहवस्थं संग्रामस्थितम् । अथवा खपांथयोर्ग्रहभेदितमंडले । अथवा तदुत्पातहतं तेषां प्रसिद्धानां दिव्यभौमान्तरिक्षाणामुत्पातस्तदुत्पातस्तेन हतं । यदुक्तं । 'क्रूरैर्युक्तं क्रूरगन्तव्यमृक्षं क्राराक्रान्तं क्रूरविद्धं च नेष्टम् । यच्चोत्पातैर्दिव्यभौमांतरिक्षैः पुष्टं तद्वत्क्रूरलत्ताहतं च" तदा कदा यदा इंदुराक्रम्य तन्नक्षत्रं पुनर्भुनक्ति । अथ केचिदाचार्या आमासषट्कं ग्रहयोगगं ग्रहणसंयोगप्राप्तं तत्‌ऋक्षमेव आर्क्षं सदूषणं दोषसहितमुशंति वांछन्ति ॥ ८ ॥

हुताशनाग्न्यांगशराग्निभूमयो युगाग्निबाणाक्षयमाग्नमेषवः ।
धरेन्दुवेदार्णवरामशंभवो वार्यग्निरामाब्धिशता१००क्षिदृग्रदाः३२॥९
मयोदितास्तारकतारका इमे क्रमेण नासत्यभतः स्वकर्मगाः ॥
भाश्चर्यनिध्यानकहेतवे तथा वक्ष्ये भरूपध्रुवसायकानहम् ॥ १०॥

अथ तारकाणां तारकसंख्यामाह—हुतेति मयोदितेति युग्मम् । मयानासत्यभतोऽश्विनीनक्षत्रात्क्रमेण हुताशनादिसंख्याका इमे तारकतारका उदिताः कथिताः । तारकाणां नक्षत्राणां तारकाः ताराः तारकतारकाः किंविशिष्टाः तारकतारकाः स्वकर्म्मगाः निजकार्यानुगताः । स्पष्टमाह—अ. ३ भ. ३ कृ. ६ रो. ५ मृ. ३ आ. १ पु. ४ पु. ३ आ. ५ म. ५ पू. २ उ. २ ह. ५ चि. १ स्वा. १ वि. ४ अ. ४ ज्ये. ३ मू. ११ पू. ४ उ. ३ श्र. ३ ध. ४ श. १०० पू. २ उ. २ रे. ३२ इति । अथ भरूप १ ध्रुव २ सायकाना ३ । अहं तथा तेन प्रकारेण भरूपादीन् वक्ष्ये कथयिष्ये । भानां नक्षत्राणां रूपाण्याकाराः ध्रुवा राश्यद्याश्च-सायका बाणाश्चेति द्वंद्वे प्रत्येकं संयोजनत्वात्तान् । कस्मै भाश्चर्यनिध्यानकहेतवे भासां दीप्तानां चर्यं स्वरूपं भाश्चर्यस्य निध्यानकं तस्य हेतुस्तस्मै ॥ ९ ॥ १० ॥

हयाननाभं च वरांगरूपं क्षुरोपमं ज्योतिरनःप्रकामम् ॥
कुरंगकाभं मणिना सदृक्षं निकेतनाकारमथेषुरूपम् ॥ ११ ॥

अथ प्रथमं काव्यचतुष्केन भरूपमाह—हयेति रथेति सकोपेति ज्योतिरिति । इहास्मिन् शास्त्रे इति तारापटलस्वरूपं नक्षत्रमंडलरूपमुक्तं । इतीति किं तदाह ज्योतिर्नक्षत्रमश्विन्यादि । अश्विनीभं हरेरश्वस्याननस्य मुखस्याऽऽभा इवाभा यस्य तत् तुरंगमुखाकारम् ॥ भ०

वरांगरूपं योन्याकाम् । कृ० क्षुरोपमं मुण्डनोपकरणाकारं । रो०अनः प्रकामं शकटोन्यया-नम् । मृ०कुरंगस्य कं मस्तकं मृगस्य मस्तकं तद्वदाभा यस्य तत् मृगमूर्द्धाकारम् । आ०मणि-ना रत्नेन सदृक्षं समानं । पु०निकेतनाकारं गृहाकारं पु०इषुरूपं बाणाकारम् ॥ ११ ॥

रथांगशालाशयनोपमानि शय्यासमं दोःप्रतिमं भमुक्तम् ॥
मुक्तात्मकं विद्रुमतोरणाभे मणिश्रवोवेष्टनतुल्यरूपे ॥ १२ ॥

सकोपकंठीरवविक्रमप्रभं तल्पाकृतीभस्य विलासवत्स्थितम् ॥
शृंगाटकव्यक्ति च तार्क्ष्यकेतुभं त्रिविक्रमाभं च मृदंगसन्निभम्॥१३॥

आ० रथांगं चक्रं तद्वदुपमम् । म. शालोपमम् । पू.शयनोपमं मंचकोपमम् । अत्रैषां द्वंद्वे प्रत्येकं संयोजनात् ।उ.शय्यासमम् । ह.दोःप्रतिमं हस्तसदृशम् । चि.मुक्तात्मकं मौक्तिकसदृ-शम् । स्वा.द्रुमाभं प्रवालाकारं । वि.तोरणाभं अनयोर्द्वन्द्वे द्विवचनं । अ.मणितुल्यरूपं । ज्ये.श्रवसः कर्णस्य वेष्टनं कुंडलं तत्तुल्यम् । अनयोर्द्वन्द्वे द्विवचनं प्रत्येकं योजनीयम् । मू.कोपेन सह वर्त-मानः सकोपः एवंविधो यः कंठीरवः सिंहस्तस्य विक्रमप्रभं उत्पतनोद्यमतुल्यम् । पू०तल्पा-कृति मंचकाभम् । उ०इभस्य गजस्य विलासवत्स्थितम् । अ०शृंगाटकव्यक्ति जलकंदाकारम् । तार्क्ष्यकेतुर्विष्णुस्तद्भं श्रवणः त्रिविक्रमाभं विष्णुचरणाकारम् । ध०मृदंगसन्निभम्॥१२।१३॥

ज्योतिःशतांगांगसमानरूपं ततोन्यदृक्षं यमलद्वयाभम् ॥
शय्यासवर्णं मुरजप्रकाममितीह तारापटलस्वरूपम् ॥ १४ ॥

ज्योतिः शतभिषक् शतांगो रथस्तस्यांगं चक्रं तेन समानरूपं चक्रसदृशं ॥ 'शतांगः स्यं-दनो रथः' इतिहैमः ॥ ततोऽन्यदृक्षं पू०यमलद्वयाभं यमलोद्गततरुद्वयसदृशम् । उ०शय्यासवर्णं तल्पसमानम् । रे०मुरजप्रकामं मृदंगसमानामिति । चकाराःपुनरर्थाः ॥ १४ ॥

ज्ञेयाः सदैवोत्तरपार्श्वसंस्था विश्वार्यमांभोजपादिंदुभानाम् ॥
द्विदैवतस्यापि च योगतारा बुधैरहिर्बुध्न्यभगादिभानाम् ॥ १५ ॥

अथ तारकतारकाणां स्थानकमाह—ज्ञेया इति । बुधैरहिर्बुध्न्यभगादिभानामुत्तराभाद्रप-दापूर्वाफाल्गुन्यश्विनीनां च पुनः विश्वे उत्तराषाढा अर्यमा उत्तराफाल्गुनी अंभो जलं पूर्वा-षाढा अजपाद् पूर्वाभाद्रपदा इन्दुभं मृगशीर्षं एषां द्वंद्वः । एषां पुनर्द्विदैवतस्य विशाखायाः योगता-राः ताराणां योगः स योगो योगताराः सदैव उत्तरपार्श्वसंस्थाः उत्तरदि-क्समीपस्था ज्ञेया इत्यर्थः ॥ १५ ॥

प्राचीनबर्हिःश्वसनाशनाशनध्वजेज्यमित्राग्रजराजयोषिताम् ॥
विलोकनीया ननु मध्यमास्तथा वसूडुनः पश्चिमभागसंस्थिताः॥१६

प्राचीति । ननु निश्चितं बुधैः प्राचीनबर्हिरिंद्रो ज्येष्ठा । श्वसनो वायुः सवाऽशनं यस्य स श्वसनाशनः सर्पः सएवाऽशनं यस्य स श्वसनाशनाशनो गरुडः ध्वजश्चिन्हं यस्य स श्वसनाशनाशनध्वजो विष्णुः श्रवणः । इज्यः पुष्यः । मित्रोऽनुराधा । अग्रजा विप्रास्तेषां राजा चंद्रस्तस्य योषितः स्त्रियो नक्षत्राणि । आसां द्वंद्वः तासां ।अत्र प्राचीनबर्ह्यादीनामग्रजराजयोषितो नक्षत्राण्येवं समासो घटते तथापि स्वाम्यग्रे नक्षत्रनामस्थापनासुबोधत्वादेव वक्ष्यमाणाधिकारेऽपि ज्ञातव्यम् । तथा वसूडुनो धनिष्ठाया मध्यगास्तारा: पश्चिमभागसंस्थिता विलोकनीयाः 'ह्यग्राम्यां जातिजन्मजाः' इति हैमः ॥ १६ ॥

पित्र्यंतकोषर्बुधपूषभानामाशागता हंसभुवोऽथ तारा ॥
नक्तंचरादित्यहितारकाणामैंद्र्याश्रिता धातुरथोडुनः स्यात् ॥ १७ ॥
द्वितीया योगतारा स्यात्प्रतीच्युत्तरतारयोः ॥
पश्चिमार्कोडुनो या सावशेषाणां यथाप्रति ॥ १८ ॥

पित्र्यामिति । पितरो मघा अंतको भरणी उषर्बुधोऽग्निःकृत्तिका पूषभं रेवती एषां द्वंद्वः तेषां ताराः हंसात्सूर्योद्भवतीति हंसभूर्यमस्तस्याशा दक्षिणा ततो ज्ञेयाः । अथ नक्तंचरो राक्षसो मूलं अदितिः पुनर्वसू अहितारका आश्लेषा आसां द्वंद्वः तासां ताराणां तारा ऐंद्र्याश्रिताः पूर्वादिग्गता ज्ञेयाः। अथ धातुर्ब्रह्मण उडुनो रोहिण्या या द्वितीया तारा पुनरर्कोडुनो हस्तस्य या पश्चिमा चरमा ताराऽस्ति सा प्रतीच्युत्तरतारयोः पश्चिमदिगुत्तरदिग्गततारयोर्योगतारा संयोगतारा स्यात् । प्रतीच्युत्तरयोरत्र संबंधे षष्ठी । अथाऽवशेषाणां नक्षत्राणां तारा यथाप्रति यथा योग्यं स्थानं ज्ञातव्याः ।या एकतारा द्वयोर्नक्षत्रयोस्तारकाणां मध्ये गणनां प्राप्नोति सा योग तारा कथ्यतेऽत्र विस्तरेण ग्रंथान्तराच्चिंत्यमित्यर्थः ॥ १७ ॥ १८ ॥

कुंभीनसा भूमियमा गजाग्नयस्ताना द्वितर्का रसषड्युगग्रहाः ॥
षडंबरोर्व्योगदिशोंकहेलयो भुजंगमेंद्राः शरमार्गणेंदवः ॥ १९ ॥

अथ काव्यत्रयेण भध्रुवकांशानाह—कुंभीति । आदिमादश्विनीतो ध्रुवकांशका ध्रुवलवाः क्रमेण स्युः । कतिसंख्याकास्तानाह । अ० कुंभीनसाः सर्पाः अष्टौ । 'कुंभीनसाशीविषदीर्घपृष्ठाः' इति हैमः । भ० भूमियमाः एकविंशतिः । कृ० गजाग्नयः अष्टत्रिंशत् । रो० तानाः संगीतशास्त्रप्रसिद्धाः एकोनपंचाशत् । मृ० द्वितर्काः द्विषष्टिः । आ० रसषट् षट्षष्टिः । पु० युगग्रहाः चतुर्नवतिः । पु० षट् च अंबरं च उर्वी च षडंबरोर्व्यः षडधिकशतम् । अ० अगदिशः सप्ताधिकशतम् । म० अंकहेलयः एकोनत्रिंशदधिकशतं । पू० भुजंगमेन्द्राः अष्टाचत्वारिंशदधिकशतम् । उ० शरमार्गणेंदवः पंचपंचाशदधिकशतमित्यर्थः ॥ १९ ॥

खात्यष्टयो रामभुजंगमेंदवोऽह्यंकेन्दवो लोचनभूमिबाहवः ॥
जिनाश्विनो व्योमहुताशनाश्विनो ह्यब्ध्याश्विनो मार्गणमार्गणाश्विनः२०

ह० खात्यष्टयः सप्तत्यधिकशतं । चि० रामभुजंगमेन्दवः त्र्यशीत्यधिकशतं । स्वा० अष्टांकेंदवः अष्टनवत्यधिकशतं । वि० लोचनभूमिबाहवः द्वादशाधिकद्विशतं । अ. जिनाश्विनः चतुर्विंशत्यधिकद्विशतं । ज्ये० व्योमहुताशनाश्विनः त्रिंशदधिकशतद्वयम् । मू० अब्ध्यब्ध्याश्विनः द्विचत्वारिंशदधिकशतद्वयम् । पू० मार्गणमार्गणाश्विनः पंचपंचाशदधिकशतद्वयम् ॥ २० ॥

**धरांगदस्राश्च युगांगलोचनाः शराद्रिदोषांबरसिंधुराश्विनः ॥**
**नभोरदा तत्वगुणा नगामराः खमादिभाद्ध्रुवकांशकाः क्रमात् ॥२१**

उ०भरांगदस्राः एकषष्ठ्यधिकशतद्वयम्। अभि०युगांगलोचनाः चतुःषष्ठ्यधिकशतद्वयम्। श्र०शराद्रिदोषःपंचसप्तत्यधिकशतद्वयम्। ध०अंबरसिंधुराश्विनः अशीत्यधिकशतद्वयम्। श० नभोरदाः विंशत्यधिकशतत्रयम् ॥पू०तत्त्वगुणाः पंचविंशत्यधिकशतत्रयम् ॥ उ०नगामराः सप्तत्रिंशदधिकशतत्रयम् । रे०खं शून्यमिति ध्रुवांशकाः ॥ २१ ॥

**सौम्या दिशोर्का विशिखाश्च दक्षिणाः शिलीमुखा व्योमधराः कपालिनः॥**
**उदग्रसाः पत्ररथायनं ततो हरेर्दिशं वारिधिचीवराधराः ॥ २२ ॥**

अथ भसायकलवानाह काव्यत्रयेण—सौम्येति । सदा उडुनोश्विन्यादेर्नक्षत्रस्य अमी स्फुटाः बाणलवाः स्वाऽपमयोगतारयोः निजक्रांतियोगतारयोरंतरे विचाले स्युरित्यन्वयः । अग्रे ते कथ्यंते । सौम्या उत्तरा दिग् । अ० दिशो दश बाणलवाः एवं भ० अर्काः द्वादश । कृ० विशिखाः बाणाः पंच रो० दक्षिणा दक्षिणदिग्गाः शिलीमुखाः पंच । मृ० व्योमधराः दश । आ० कपालिनः एकादश । पु० उदग् उत्तरदिग्गा रसाः षट् । पु० पत्ररथानां पक्षिणामयनं मार्गो व्योम शून्यं । आ० हरेर्यमस्य दिशं दक्षिणं यथा स्यात्तथा वारिधिचीवरा धराः वारीणि धीयंतेऽस्मिन्निति वारिधिः समुद्रः स एव चीवरं वस्त्रं यस्याः सा वारिधिचीवरा भूः तां धरंतीति वारिधिचीवराधराः पर्वता भूधराः सप्त ॥ २२ ॥

**सौम्याः खमर्काश्च धनंजयेंदवोऽपागीश्वरा द्वावुदगद्रिवह्नयः ॥**
**याम्या धरा द्वौ दहना भुजंगमाः शिलीमुखाः पंचलवाः क्रमादतः ॥२४**

म० सौम्या उत्तरदिग्गाः खं शून्यं । पू० अर्काः द्वादश उ० धनंजयेंदवोऽग्निचंद्रास्त्रयोदश । ह० अपाग् दक्षिणादिग्गाः ईश्वरा एकादश । चि० द्वौ । स्वा० उदग् उत्तरदिग्गा अद्रिवन्हयः सप्तत्रिंशत् । वि० याम्या दक्षिणगा धरा एकः । अ० द्वौ । ज्ये० दहनास्त्रयः । मू० भुजंगमा अष्टौ । पू० शिलीमुखाः पंच । उ० पंचलवाः क्रमादतः ॥ २३ ॥

**सौम्या द्वितर्काः खगुणा रसाग्नयः खमागमाक्षीणि नगाश्विनो नभः**
**स्युरंतरे स्वापमयोगतारयोरमी स्फुटा बाणलवाः सदोडुनः ॥ २४ ॥**

अ० सौम्या उत्तरगा द्वितर्काः द्विषष्ठिः। श्र० खगुणास्त्रिंशत्। ध० रसाग्नयः षट्त्रिंशत्। श०खंशून्यं। पू० आगमाक्षीणि चतुर्विंशतिः॥ उ० नगाश्विनः सप्तविंशतिः। रे० नभः शून्यं इति बाणलवाः॥ २४॥

| अ० | भ० | कृ० | रो० | मृ० | आ० | पु० | पु० | श्ले० | म० | पु० | उ० | ह० | चि० | स्वा० |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ०<br>८<br>०<br>०<br>० | ०<br>२१<br>०<br>० | १<br>८<br>०<br>० | १<br>१९<br>०<br>० | २<br>२<br>०<br>० | २<br>६<br>०<br>० | ३<br>४<br>०<br>० | ३<br>१६<br>०<br>० | ३<br>१७<br>०<br>० | ४<br>९<br>०<br>० | ४<br>२८<br>०<br>० | ५<br>५<br>०<br>० | ५<br>२०<br>०<br>० | ६<br>३<br>०<br>० | ६<br>१८<br>०<br>० |
| १० | १२ | ५ | ५ | १० | ११ | ६ | ० | ७ | ० | १२ | १३ | ११ | २ | ३७ |
| उत्तर | उत्तर | उत्तर | दक्षिण | द० | दक्षिण | उत्तर | उत्तर | दक्षिण | उ० | उत्तर | उत्तर | द० | दक्षिण | उत्तर |

| वि० | अ० | ज्ये० | मू० | पु० | उ० | अ० | श्र० | ध० | श० | पू० | उ० | रे० | अ० |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ७<br>२<br>०<br>० | ७<br>१४<br>०<br>० | ७<br>२०<br>०<br>० | ८<br>२<br>०<br>० | ८<br>१५<br>०<br>० | ८<br>२१<br>०<br>० | ८<br>१८<br>०<br>० | ९<br>५<br>०<br>० | ९<br>१०<br>०<br>० | १०<br>२०<br>०<br>० | १०<br>२५<br>०<br>० | ११<br>७<br>०<br>० | ०<br>० | ध्रु० |
| १ | २ | ३ | ८ | ५ | ५ | ६२ | ३० | ३६ | ० | २४ | २७ | ०० | |
| दक्षिण | दक्षिण | दक्षिण | दक्षिण | दक्षिण | दक्षिण | उत्तर | उत्तर | उत्तर | उत्तर | उत्तर | उत्तर | | |

**स्फुटो यदा राशिमुखो नभश्चरः सेषुस्तदा भध्रुवकेन सेषुणा॥**
**तज्ज्योतिषः स्याद्विभिनत्ति मंडलं समः सभोत्पातमुशंति कोविदाः॥२५**

अथ भिन्नमंडले नक्षत्रोत्पातमाह—स्फुट इति। यदा राशिमुखः राशिप्रमुखः स्फुटः स्पष्टः सेषुः सह इषुणा शरेण वर्तमानो यः स एवंविधो नभश्चरो ग्रहः सेषुणा शरसहितेन भध्रुवकेण समः सदृशः स्यात्तदा स ग्रहः तज्ज्योतिषस्तदेव ज्योतिस्तज्ज्योतिस्तस्य नक्षत्रस्य मंडलं भिनत्ति कोविदाः पंडितास्तद्भोत्पातं नक्षत्रोत्पातमुशंति कथयंतीत्यर्थः॥ २५॥

**समागमोंशांतरसंस्थयोर्भवेन्मिथोंशुयोगे च परस्परं तयोः॥**
**तद्गोविमर्दे मृधमर्कसंयुता उलेखनं भेदयुतिर्विभेदः॥ २६॥**

अथ ग्रहनक्षत्रसंगमाधिकारमाह—समेति। अंशांतरसंस्थयोर्ध्रुवकांतरस्थितयोस्तयोर्ग्रहनक्षत्रयोर्मिथः परस्परमंशुयोगे किरणयोगे सति समागमः संगमो भवेत्। च पुनः परस्परं तद्गोविमर्दे तयोर्ग्रहनक्षत्रयोर्गोवः किरणास्तेषां विमर्दो व्यालोडनं तस्मिन्सति मृधं

युद्धं भवेत् । पुनरर्कसंयुतौ नक्षत्रसूर्ययोर्युतौ संयोगे उल्लेखनं भवेत् । तयोर्विभेदतो भेदयुतिर्भवेत् ॥ २६ ॥

**खगोडुनोर्वा खगयोर्द्वयोर्यद्विभेदयोगश्रितमृक्षमर्हम् ॥**
**नामासषट्कं शुभमंगले स्यादुल्लेखनाभ्यागमगं समांघ्रिम् ॥२७॥**

अथ तद्गतं भं दूषयति—**खगेति** । खगोडुनोर्ग्रहनक्षत्रयोर्वाथ खगयोर्ग्रहयोर्द्वयोर्विभेदयोगाश्रितं यदृक्षं तदृक्षं शुभमंगले आमासषट्कं षण्मासपर्यंतमर्हं योग्यं न स्यात् । पुनस्तदृक्षमुल्लेखनाभ्यागमगं उल्लेखनगतं युद्धगतं च समांघ्रि समायाः वर्षस्यांघ्रिश्चतुर्थांशस्तत्पर्यंतं मासत्रयं शुभकार्येर्हं न स्यात् । अभ्यागमः समरेंतिके "पाति रेधिभ्युपागमे" इतिहैमः । समांघ्रिमिति कालाध्वनोर्नैरंतर्यं द्वितीया ॥ २७ ॥

**परस्परस्थं च तयोरनादृतं मासद्वयं यावदुडुद्वयं तथा ॥**
**मासोरशेषासुसमागमस्थितं क्रियासु मासं यदसाध्वधिष्ठितम् ॥२८॥**

**परस्परस्थमिति** । तयोर्ग्रहनक्षत्रयोः परस्परस्थं यदुडु बुधैस्तदुडु मासद्वयं यावदादृतं न अंगीकृतं न कासु अशेषासु क्रियासु । एवं तथा समागमस्थितं नक्षत्रं मासोर्मासयोर्द्वयम् । तथासाध्वधिष्ठितं क्रूरग्रहाश्रितं नक्षत्रं मासमिति शेषं योज्यम् ॥ २८ ॥

**स्यातां समावर्कविभावरीशयोर्भसोमयोर्वार्कभयोरपक्रमौ ॥**
**स्फुटौ तदायं क्रमसाम्यसंज्ञकं पर्वोदितं यद्यथ पुण्यसिद्धिदम् ॥२९॥**

अथ क्रांतिसाम्यमाह—**स्यातामिति** । यदिचेत् अर्कविभावरीशयोः सूर्यचंद्रयोरथवा भसोमयोर्वाऽर्कभयोर्वा स्फुटौ समावपक्रमौ स्यातां तदा बुधैरपक्रमसाम्यसंज्ञिकं क्रांतिसाम्यनामकं पर्व उदितं कथितं । किंविशिष्टं । पुण्येन दानधर्म्मेण सिद्धिदं पुण्यसिद्धिदम् ॥ २९ ॥

**ऐंद्रे त्रिभागे च गते भवेत्तयोः शेषे ध्रुवेपक्रमसाम्यसंभवः ॥**
**यद्येकरेखास्थितभेशचंडगू स्यातां तदापक्रमचक्रवालके ॥ ३० ॥**

अथेंद्रवंशया क्रांतिचक्रमाह—**ऐंद्र इति** । **यद्येकरेखेति** । एकरेखायां स्थितौ च तौ भेशचंडगू च तौ चंद्रसूर्यौ स्यातां तदाऽपक्रमचक्रवालके क्रांतिचक्रे तयोश्चंद्रार्कयोरपक्रमसाम्यसंभवः क्रांतिसाम्यसंभवः स्यात् । कस्मिन्सति ऐंद्रे योगे त्रिभागे गते विंशतिघटीत इत्यर्थः । च पुनर्ध्रुवे योगे शेषे त्रिभागे गते चत्वारिंशद्घटीत उपरि इत्यर्थः ॥ ३० ॥

**याम्योत्तराःप्रागपराश्च तिस्रो रेखा लिखेदिंद्रदिशोपमाख्यम् ॥**
**मध्यात्पयोनीडमुखं भचक्रं चक्रं त्विदं ज्योतिषिकैरिहोक्तम् ॥३१॥**

पू
१ १२ ११
२—|—|—|—१०
उ३—|—|—|—९ द
४—|—|—|—८
५ ६ ७
प

अथेंद्रवज्रया तच्चक्रमाह—याम्यइति । सुधी याम्योत्तरा प्रागपराश्च तिस्रो रेखा लिखेत् । पुनरिंद्रदिशः पूर्वदिग्मध्यात् भचक्रं राशिमंडलं लिखेत् । किंभूतं भचक्रम् । पयसि जले नीडं स्थानं यस्य स पयोनीडो मीनराशिः स मुखंआदिर्यस्य तदिति । ज्योतिर्षिकैरिहेदं चक्रमपमाख्यं क्रांतिसाम्यनामकमुक्तं । 'भं नक्षत्रे मेषादौ' इतिमहीपः । 'नीडं स्थाने खगालये' इति हैमः ॥ ३१ ॥

**निस्त्रिंशकुंताहतमस्ति रक्षितुं नरं च धातानलदग्धविग्रहम् ॥**
**तथा निमग्नं न सरस्वति क्षमः कृतेनसोमापमसाम्यमंगलम् ॥ ३२ ॥**

अथोपजात्यास्य दुष्टफलमाह—निस्त्रिंशेति । धाता ब्रह्मा निस्त्रिंशकुंताहतं तीक्ष्णभल्लताडितं तथाऽनलदग्धविग्रहं वन्हिज्वालितदेहं तथा सरस्वति समुद्रे निमग्नं तं एवंविधं नरं रक्षितुं रक्षणाय क्षमःसमर्थोस्ति न पुनः कृतेनसोमापमसाम्यमंगलं इनसोमयोः सूर्यचंद्रयोरपमसाम्यं क्रांतिसाम्यं इनसोमापमसाम्यं कृतं विहितं इनसोमामसाम्ये मंगलं येन सः तं नरमित्यर्थः ॥ ३२ ॥

**पतेदसौ चापमसाम्यजन्मा श्रेयोजनान्यातशकुंतिरुर्वीम् ॥**
**विशालचक्रप्रतिमो यथैवं नेतुं नवाभ्राल्यचिरांशुपातः ॥ ३३ ॥**

अथास्यैव पक्षिरूपतामाह—पतेदिति । वेतिपूर्वार्थात्पक्षांतरेऽसौ अपमसाम्यजन्मा क्रांतिसाम्यसंजातः पातशकुंतिःपातलक्षणपक्षी उर्वीं भूमिं पतेत् । किंकर्तुं श्रेयोजनान् मंगलाश्रितनरान् नेतुं गृहीतुमेव । निश्चयेन किंविशिष्टोऽसौ विशालं विस्तीर्णं चक्रमायुधविशेषस्तत्सदृशः । दृष्टांतेन दृढयति । यथा नवाभ्राल्यचिरांशुपातः नवानामभ्राणां मेघानामालिः श्रेणिस्तस्यामचिरांशुरचिरप्रभा तडित् तस्याः पात इव सोप्येवंविधः । 'चलाशंपाऽचिरप्रभा' इतिहैमः ॥ ३३ ॥

**तत्संभवेपक्रमसाम्यमेवयोरितेथ साध्यं गणितेन तद्विदा ॥**
**तदंतरे मानदलैक्यतोधिके तद्दूषणं कर्मसु भूषणायते ॥ ३४ ॥**

अथ क्रांतिगणितमाह—तत्संभवेति । तद्विदा दैवज्ञेन गणितेन गणितमार्गेणापक्रमसाम्यं साध्यं साधनीयं कस्मिन् एतयोः सूर्यचंद्रयोस्तत्संभवे क्रांतिसंभवे इते प्राप्ते सति । अथ मानं दृढ०प्रमाणार्द्धे कीभूतेऽतोऽधिके तदंतरे यद्दूषणं तद्दूषणं कर्मसु कार्येषु भूषणायते भूषणमिवाचरति भूषणवदग्रवर्तिं भवति॥ ३४ ॥

**ज्ञेयं झषाऽव्योश्च घटीचतुष्टयं षडंघ्रिबाणासनयोर्यदंतरे ॥**
**जंबालनीडेभजिघांसुसंज्ञयोर्गंडांतमार्यैरपि मंगलाहितम् ॥ ३५ ॥**

अथ गंडान्तयोगमाह—ज्ञेयमिति । झषाव्योर्मीनमेषयोरंतरे विचाले यत् घटीचतुष्टयं एवं षडंघ्रिबाणासनयोः षडंघ्रयश्चरणा यस्य स षडंघ्रिर्भ्रमरो बाणस्य शरस्य असनं बाणासनं धनुस्तयोर्वृश्चिकधनुषोश्च पुनर्जबाले पंके नीडं स्थानं यस्य स कीटः । इभजिवांसुर्गजरिपुः एतत्संज्ञयोः कर्कसिंहयोरार्यैराचार्यैस्तद्घटीचतुष्टयं गंडांतंनाम ज्ञेयम् । किंविशिष्टं गंडांतं मंगलाहितं शुभकार्येऽनिष्टमपि निश्चितम् । 'वैर्यहितो जिघांसुः' इतिहैमः ॥ ३५ ॥

**दिवौकसोः संयुतिरिंदुहंसयोः क्रांत्योर्यदि स्यात्खलु वा समानता ॥**
**गंडांतके मंगलमिंद्रयामयोर्युगं न यावद्विबुधैस्तदादृतम् ॥ ३६ ॥**

दिवौकेति । खलु निश्चितं यदि दिवौकसोर्ग्रहयोः संयुतिः वाथवा इंदुहंसयोश्चंद्रसूर्ययोः क्रांत्योः समानता स्यात्तदा विबुधैर्गणकैः इंद्रयामयोः सुरपतेः प्रहरयोर्युगं मासत्रयामितं यावन्मंगलं नादृतं नांगीकृतमित्यर्थः ॥ ३६ ॥

**समायनर्तुमासानां संधयोर्वासराः क्रमात् ॥**
**गजाब्धिद्विधरातुल्याः पुण्या मंगलगर्हिताः ॥ ३७ ॥**

अथ संधिगतदिनान्याह—समेति । समा वर्षं अयनं ऋतुः मासः एषां द्वंद्वः एषां संधयोः संधानयोर्गजाब्धिद्विधरतुल्याः क्रमाद्वासराः स्युः ॥ कोऽर्थः । वर्षसंधयो फाल्गुनकृष्णद्वादशीमारभ्य चैत्रशुक्लचतुर्थ्यन्तमष्टौ वासराः । एवमयनसंधयश्चत्वारः । ऋतुंसन्धिरेकः । माससंधिरेकः । किंविशिष्टाः पुण्याः दानधर्मयोग्याः । पुनःकिंविशिष्टाः मंगलगर्हिताः स्पष्टम् ॥ ३७ ॥

**सहस्यतपसोर्मासोरमान्ह्यंशुमतो यदा ॥**
**सपातमार्यभा पर्वज्ञेयमर्द्धोदयाव्हयम् ॥ ३८ ॥**

अथाऽर्द्धोदयाभिधं पर्वाह—सहस्येति । यदा अंशुमतः सूर्यस्याह्नि दिने सहस्यतपसोः पौषमाघयोर्मासोरमावासी स्यात् । किंविशिष्टा अमा सपातमार्यभा पातो व्यतीपातः भामा सत्यभामावत् मालक्ष्मीस्तस्या अर्यः स्वामी विष्णुस्तस्य भं श्रवणः ताभ्यां सहवर्तमाना सपातमार्यभा तदा बुधैरर्द्धोदयाव्हयं पर्व ज्ञेयमित्यर्थः ॥ ३८ ॥

**पद्मकं पूर्णमासी स्यात्सपातेनेज्यवासरा ॥**
**मधुमाधवयोःपर्व यदा सेन्द्राग्निभा तदा ॥ ३९ ॥**

अथ पद्मकं पर्वाह—पद्मेति ॥ यदा मधुमाधवयोश्चैत्रवैशाखयोःपूर्णिमासी स्यात् । किंलक्षणा पूर्णमासी सेंद्राग्निभा विशाखानक्षत्रयुक्ता । पुनः किंभूता । सपातेनेज्यवासरा पातो व्यतीपातः इनः सूर्यः ईज्यो गुरुः एषां वासरैः सहवर्तमाना सपातेनेज्यवासरा तदा पद्मकंनाम पर्व स्यात् ॥ ३९ ॥

**नभस्यापरपक्षस्य षष्ठि सारा शयस्थिते ॥**
**व्यतीपातयुता चेने सकर्क्षा कपिलाव्हया ॥ ४० ॥**

अथ कपिलाषष्ठीमाह—**नभस्येति** । नभस्यस्य भाद्रपदस्याऽपरपक्षस्था कृष्णपक्षस्था षष्ठी तिथिः कपिलाह्वया स्यात् । किंलक्षणा षष्ठी सहआरेण भौमेन वर्तते सारा । पुनः किंभूता । व्यतीपातयुता । च पुनः किंभूता को ब्रह्मा तस्य ऋक्षेण रोहिणीनक्षत्रेण सह वर्तते या सा सकर्क्षा । कस्मिन् सति । इने सूर्ये शयस्थिते हस्तनक्षत्राश्रिते ॥ ४० ॥

**अष्टम्यश्चाष्टका ज्ञेया मंगलेऽनिष्टदा बुधैः ॥**
**सहस्तपःसहस्यानां नभस्यस्यासितप्रभाः ॥ ४१ ॥**

अष्टकाष्टमीमाह—अष्टेति । बुधैः सहः मार्गशीर्षः तपः माघः सहस्यः पौषः एषां द्वंद्वः एषां नभस्यस्य भाद्रपदस्य चाऽसितप्रभाः कृष्णपक्षान्विता अष्टम्योऽष्टकाभिधा मंगले विवाहादौ नेष्टदा ज्ञेयाः ॥ ४१ ॥

**अमायुगादिमन्वादिपक्षसक्रांत्यनंतिकाः ॥**
**क्षयाहर्तनवान्नानि चेयं श्राद्धाद्विसप्ततिः ॥ ४२ ॥**

अथ द्विसप्ततिश्राद्धान्याह—अमेति । इयं श्राद्धानां द्विसप्ततिर्भवति सा कथ्यते । अमाः अमावास्याः द्वादशश्राद्धानि । एवं युगादयस्तिथयश्चत्वारि । मन्वादयस्तिथयश्चतुर्दश । पक्षः श्राद्धपक्षः क्षये तिथौ तदा प्रतिपदासह षोडश श्राद्धानि । संक्रांतयो द्वादश । अनंतिकास्तिथयश्चत्वारि । क्षयाहः मातरपितरयोर्मृत्युदिनं द्वे ऋतवः षट् नवान्ने द्वे ॥ ४२ ॥

**नवम्यूर्जे तृतीयाद्या माधवेऽमी युगादयः ।**
**पंचदश्यसिता माघे नभस्ये स्युस्त्रयोदशी ॥ ४३ ॥**

अथ युगादितिथीनाह—नवेति । ऊर्जे कार्तिके आद्या शुक्ला नवमी । माधवे वैशाखेऽक्षय्यतृतीया । माघेऽसिता कृष्णा पंचदशी अमावासी । नभस्ये भाद्रपदे त्रयोदशी कृष्णा युगादयोऽमी चत्वारस्तिथयः स्युः ॥ ४३ ॥

**शुक्लेषे नवमी चोर्जे द्वादशी तृतीया मधौ ॥**
**नभस्ये तृतीया प्रोक्तामावास्या नभसि स्मृता ॥ ४४ ॥**

अथ मन्वादीनाह । शुक्लइति—इषे आश्विनमासे शुक्ला नवमी १ च ऊर्जे कार्तिके द्वादशी २ मधौ चैत्रे तृतीया ३ नभस्ये भाद्रपदे तृतीया प्रोक्ता ४ नभसि श्रावणेऽमावास्या ५ स्मृता इत्यर्थः ॥ ४४ ॥

**पौष एकादशी कृष्णा दशम्यर्जुनभा शुचौ ॥**
**माघे च सप्तमी प्रोक्ता नभस्ये बहुलाष्टमी ॥ ४५ ॥**

**पौषेति**—पौषे एकादशी कृष्णा ६ शुचौ आषाढेऽर्जुनभा शुक्ला दशमी ७ 'वलक्षोधवलोऽर्जुनः' इतिहैमः । माघे सप्तमी कृष्णा ८ नभस्ये भाद्रपदे बहुलाष्टमीत्यर्थः ९ ॥ ४५ ॥

आषाढी कार्तिकी शुक्ला पंचदश्यथ फाल्गुने ॥
चैत्री चतुर्दशेति स्युर्ज्यैष्ठी मन्वंतरादयः ॥ ४६ ॥

आषाढीति—आषाढी पूर्णिमा १० कार्तिकी पूर्णिमा ११ फाल्गुने शुक्ला पंचदशी पूर्णिमा १२ चैत्री पूर्णिमा १३ ज्येष्ठी पूर्णिमा १४ मन्वंतरादयोऽमी चतुर्दश तिथयः स्युः ॥ ४६ ॥

राकायाः पंचमे पक्षे शुचेः श्राद्धानि षोडश ।
स्यादेष्वध्वरतुल्यानि पितॄणां दत्तमक्षयम् ॥ ४७ ॥

अथ पक्षश्राद्धान्याह—राकेति । शुचेराषाढस्य राकायाः पूर्णिमायाः सकाशात् पंचमे पक्षे कोर्थो भाद्रपदस्य पूर्णिमात आरम्य षोडशश्राद्धानि अध्वरतुल्यानि यज्ञतुल्यानि स्युः । एषु श्राद्धेषु पितॄणां पूर्वजानां दत्तमक्षयं स्यात् ॥ ४७ ॥

माघोर्जमाधवेषाणां पूर्णिमाः स्युस्त्वनंतिकाः ॥
वसंते शरदि श्राद्धशुभेऽहनि नवान्नके ॥ ४८ ॥

अथानंतिकास्तिथीराह—माघेति । माघकार्तिकवैशाखाश्विनमासानां पूर्णिमा अनंतिकाः स्युः । तु पुनर्वसन्ते शरदि ऋतौ शुभेऽन्हि दिवसे नवान्नके नूतनधान्यनिर्मिते श्राद्धे स्तः ॥ ४८ ॥

मध्वादिमासेषु भवंति भानोः संक्रांतयो मेषमुखाः क्रमात्स्यात् ॥
मासो विसंक्रांतिरथाधिमासो मासो द्विसंक्रांतिरसौ क्षयाख्यः॥४९॥

अथेन्द्रवज्रया संक्रांतिन्यूनाधिकमासानाह—मध्वेति । चैत्रादिद्वादशमासेषु भानोर्मेष-मुखाः संक्रांतयः स्युः । क्रमात् यो मासो विसंक्रांतिः संक्रांतिरहितः । अथवा द्विसंक्रांतिः संक्रांतिद्वयसहितः स्यात्सोऽसौ मासोऽधिमासः क्षयाख्यश्च स्यात् । कोर्थोऽसंक्रांतिको-मासोऽधिकः । द्विसंक्रांतिकः क्षय इत्यर्थः ॥ ४९ ॥

यदैंदवो मानेनु सौरमासाद्भवेद्विसंक्रांतिरसौ लघीयान् ॥
स योऽधिमासो रदनैर्दलाब्धैर्ज्ञेयो विधोर्मास इहांशुमासैः ॥५०॥

अथोपजात्या कतिमासैरधिको मास आयाति तदाह—यदेति । ननु निश्चितं यो मासो विसंक्रांतिरैंदवो मासश्चांद्रो मासः सौरमासाल्लघीयानातिशयेन लघुर्भवेत् । इह सोऽसौ विधो र्मासोंशुमासैः सौरमासैरधिमासो ज्ञेयो बुधैरितिशेषः । किंलक्षणैरंशुमासैः रदनैर्दन्तैर्दला-ढ्यैरर्द्धयुक्तैः सार्द्धद्वात्रिंशन्मितैरित्यर्थः ॥ ५० ॥

सौराद्यदा चांद्रमसो गरीयान्मासो द्विसंक्रांतिरसौ क्षयाख्यः ॥
स यस्तदा स्यात्क्षितिवेदरूपैरब्दैर्मितैर्वा क्वचिदंकचंद्रैः ॥ ५१ ॥

अथ कतिवर्षैःक्षयमास आयाति तदाह—सौरेति । यदा यश्चांद्रमासः सौरमासाद्गरीयान-तिशयेन गुरुर्द्विसंक्रांतिर्भवेत्तदा सोऽसौ मासः क्षयाख्यः स्यात् । कैः कृत्वा क्षितिवेदरूपैरेकचत्वारिंशदधिकशतेन मितैरब्दैर्वर्षैर्वा क्वचित्कालेऽकचंद्रैरेकोनविंशत्यामितैर्वा ॥ ५१ ॥

**चैत्रादिमासादधिमासकालवानूर्जादिमासत्रयऊनमासकः ॥**
**मासोऽन्यथातोक्तिरियं भवेदतो नेत्याह कश्चिन्नियमं न बालिशः ॥५२॥**

अथेन्द्रवंशयाऽधिकक्षयमासनियममाह—चैत्रेति । चैत्रादिमासादधिमासकालवानधिकमासोऽष्ट एतएवाऽधिका भवंतीत्यर्थः ॥ ऊर्जादिमासत्रयऊनमासकः क्षयाख्यः स्यात् एतएव क्षयतां यांतीत्यर्थः ॥ कश्चिदिति । नियमेन नाह नब्रूते । इतीति किं । मासो मासस्ये यमुक्तिरन्यथा न भवेन्न । द्वौ नकारौ मकृत्यर्थं सूचयतः। अन्यथा भवेदित्यर्थः । अतःकारणात्स बालिशो मूढः । अथवेयमुक्तिरन्यथा न भवेत् । कश्चिदिति पूर्वोक्तं नियमेनाह । अतः स बालिशो न अपि तु भवेदेवेत्यपिशब्दार्थः ॥ ५२ ॥

**त्रिखेंदुभिर्विक्रमभूपतेर्मिते शाकेन्वितीह क्षयमासको भवेत् ॥**
**अन्यः स्वकालाब्दगणेन हायनेऽधिमासयुग्मं क्षयमासवत्यतः॥५३**

अथोपजात्या क्षयमासेऽधिकमासद्वयमाह—त्रिखेति । यथा विक्रमभूपतेस्त्रिखेन्दुभिस्त्र्यधिकशतेन मिते शाके गते सति अत्रैकचत्वारिंशदधिकशतवर्षपरिपूर्णजातत्वात्क्षयमासको जातोऽस्ति । अयं विद्यमानकालिदासापेक्षया दर्शितदृष्टांतः प्रोक्तः । तथाऽत उक्तक्षयमासात्तु पुनरग्रे इतिप्रकारेण स्वकालाब्दगणेन निजकालगणनया । कोर्थः चत्वारिंशदधिकशतेन मिते हायने वर्षेऽन्यः क्षयमासको भवेत् भविष्यतीत्यर्थः । इहाऽस्मिन् क्षयमासवति वर्षेऽधिमासद्वयं स्यात् । यस्मिन्वर्षे क्षयमासः स्यात्तस्मिन्वर्षेऽधिकमासद्वयं निश्चयेन स्यादित्यर्थः । 'गणः प्रथमसंख्ययोः समूहे सैन्यभेदे' इति महीपः ॥ ५३ ॥

**श्रीसूर्यसिद्धांतमतोद्भवार्कात्साध्यौ तदा तावधिकक्षयाख्यौ ॥**
**मासौ ग्रहज्ञैर्गणितं तथान्यत्साध्यं सदा यद्यपि तद्ग्रहाद्यम् ॥ ५४ ॥**

अथेंद्रवज्रयानयोः साध्यस्थानं दर्शयति—श्रीसूर्येति । यद्यपि ग्रहाद्यं गणितमन्यत्साध्यं तथापि ग्रहज्ञैस्तदा तौ अधिकक्षयाख्यौ मासौ साध्यौ कस्मात् श्रीसूर्यसिद्धांतमतोद्भवार्कात् । श्रीवराहमिहिरकृतसिद्धांतगणितसूर्यात् ॥ ५४ ॥

**स्थूलं सदा ब्राम्हमतं निरुक्तमादित्यसिद्धांतमतं च सूक्ष्मम् ॥**
**भाद्यादिकं सूक्ष्मतरादसूक्ष्मं सूक्ष्मं मतं स्थूलत एव सिद्धम् ॥ ५५ ॥**

अथ ब्राह्मसूर्यसिद्धांतयोर्मतभेदमाह—स्थूलमिति । बुधैः सदा ब्राह्ममतं स्थूलं निरुक्तम् । च पुनरादित्येति । सूर्यसिद्धांतमतं सूक्ष्मं निरुक्तम् । पुनर्भाद्यादिकं भगणादिकं सूक्ष्मतरात् असूक्ष्ममतिशयेन सूक्ष्मं न भवतीत्यर्थः । अतः कारणात् स्थूलतएव सूक्ष्मं मतं सिद्धम् ॥५५॥

यानि षोडशाहानि कथितानि यत् षडशीतिमुखाश्रितमहर्दिनं च कथितं तान्यहानि क्रतुसमानि तदहश्च क्रतुसमं यज्ञतुल्यानि स्युरित्यर्थः ॥ ६४ ॥

**अवितुलास्यमथैत्ययनांशकान्वितरविः स यदा विषुवद्दिनम् ॥**
**मकरकीटमुखं च यदा तदायनदिनं तदहो यदहःस्मृतः ॥ ६५ ॥**

अथ विषुवदादि स्पष्टयति—अवीति । अहो इति वितर्के यदा विषुवत्स्याच्च पुनर्यदायनांशयुक्तः सूर्यो यदहर्मकरकीटमुखमेति तदा तदयनदिनं स्मृतमित्यर्थः ॥ ६५ ॥

**पितृभशौच्यवसुद्यमरोडुजाःकुयमवन्हियुगांघ्रिमुखोदयाः ॥**
**इह तदर्कसमाः स्युरहो यदा यदजपादवदुक्तमहस्तदा ॥ ६६ ॥**

अथ हरिपदं स्पष्टयति—पितृभेति । अहो इति वितर्के यदा पितृभं मघा शौच्यं वह्निभं कृत्तिका वसवो धनिष्ठा द्व्यमरौ द्विदेवौ विशाखा एषां द्वंद्वः एभ्यो जायन्ते इति जाः कुयमवन्हियुगाङ्घ्रिमुखोदयाः एकद्वित्रिचतुःपादमुखोदया अर्कसमाः स्युः । कोऽर्थः । मघानक्षत्रस्य प्रथमचरणमुखे उदयः स्थिरराश्युदयः । कृत्तिकायां द्वितीयपादे स्थिरराश्युदयः । धनिष्ठाया स्तृतीयपादे स्थिरराश्युदयः । विशाखायाश्चतुर्थपादे स्थिरराश्युदयः । सिंव्हवृषकुंभवृश्चिकाः स्थिरराश्युदयाः अर्कसमा द्वादशसंख्यामिता इह यदहस्तदा तदहरजपादवत् विष्णुपदेन तुल्यं हरिपदसंज्ञमुक्तमित्यर्थः । अर्थात् स्थिरसंक्रांत्यादेर्द्वादशं यदहस्तदहर्हरिपदसंज्ञं भवति अजपादवत् । अत्र वत्प्रत्यय आश्रितपदार्थमेव ब्रूते । यथोक्तं हेमसूरिमिश्च ‘ पौषस्तैषां सहस्यवत् ’ इति ॥ ६६ ॥

**सुकृतकालमपागयनादिगं हरिपदादिगतं च तुलाजयोः ॥**
**तदनु मध्य इते विदुरुत्तरे मुनिवराः षडशीतिमुखेऽयने ॥६७॥**

अथायनादिविशेषगतं सुकृतकालमाह—सुकृतेति । मुनिवराः अपागयनादिगं दक्षिणायनादिगतं कर्कसंक्रांतावादिगतमाद्याः षोडशघटिकाः समयं सुकृतकालं पुण्यकालं विदुः अवधारयंति । चपुनरेवं हरिपदादिगतं वृषसिंहवृश्चिककुंभसंक्रांतिष्वाद्याः षोडशघटिकाः सुकृतकालं विदुः । पुनस्तदनु पश्चात्तुलाजयोस्तुलामेषयोर्मध्ये सुकृतिकालं विदुः । कोऽर्थः । तुलामेषसंक्रांतिकालात्प्रागष्टौ घटिकाः परतश्चाष्टौ एवं षोडश घटिकाः मध्यसमयमिति । पुनरुत्तरेऽयने मकरसंक्रांतौ इते प्राप्ते सति सुकृतकालं विदुः । कोऽर्थः । मकरसंक्रांतिकालादग्रिमाः षोडशघटिकाः पुण्यकालं प्रथमास्तु नेति । पुनः षडशीतिमुखे द्विस्वभावराशौ इते प्राप्ते सति । कोर्थः । मिथुनकन्याधनुर्मीनसंक्रांतिषु अग्रिमाः षोडशघटिकाः पुण्यकालं विदुः ॥ ६७ ॥

**अयनयोरिषुराममिताः क्रमाद्वृषतमा जगुरुत्तरयाम्ययोः ॥**
**निजभया च युता वियुता घटीरनगतागतसंक्रमकालयोः ॥ ६८ ॥**

अथोत्तरदक्षिणायनयोर्विशेषसुकृतकालमाह—अयनेति ॥ मुनिवराः नअगता अनगताः वर्त्तमाना इत्यर्थः । अगता एष्या अनगतागतानां संक्रमकालयोरुत्तराख्ययोरयनयो संक्रमात् क्रमेण इषुराममिताः पंचत्रिंशन्मिता घटीर्वृषतमा अतिशयेन धर्मवत्यो जगुः । कथंभूताः घटीः । निजभया निजराशिसंक्रांतिछायया युताः उत्तरायणे च पुनर्वियुता-दक्षिणायने ॥ ६८ ॥

**घोरोष्णगोर्ध्वांक्ष्यमृतांशुवासरे संक्रांतिरारे च महोदरी विदि ॥**
**मंदाकिनी मंदतमामरार्चिते मिश्रोशनस्यर्कसुते च राक्षसी ॥६९॥**

अथेंद्रवंशया द्वादशसंक्रांत्यधिकारमाह—घोरेति । उष्णगौ रविवारे संक्रांतिर्घोरानाम भवेत् । एवममृतांशुवारे चंद्रवारे ध्वांक्षी । च पुनरारे मंगलवासरे महोदरी । पुनर्विदि बुध-वारे मंदाकिनी । अमरार्चिते गुरुवारे मंदतमा । उशनसि शुक्रवारे मिश्रा । अर्कसुते शनि-वारे राक्षसी ॥ ६९ ॥

**घोरोग्रभे ध्वांक्ष्यनिशं लघूड्डुजा मंदाऽचरे चंचलभे महोदरी ॥**
**मंदाकिनी मैत्रभजा च मिश्रभे मिश्रा भवेद्दारुणभे च राक्षसी ॥७०**

अथ नक्षत्राश्रितसंक्रांतिसंज्ञामाह—घोरोग्रेति । उग्रभे क्रूरनक्षत्रे घोरा भवेत् । एवं लघू-डुजा क्षिप्रनक्षत्रे जाता ध्वांक्षी । अचरे स्थिरभे मंदा । चंचलभे चरनक्षत्रे महोदरी । मैत्रभजा मृदुनक्षत्रे जाता मंदाकिनी । मिश्रभे साधारणनक्षत्रे मिश्रा । दारुणभे तीक्ष्णनक्षत्रे राक्षसी अनिशं सदेति ॥ ७० ॥

**मंदाधरादेवगणानवत्यतो मंदाकिनी भूमिभुजो महोदरी ॥**
**मलिम्लुचानंत्यभुवोऽपि राक्षसी मिश्रा पशूनेव पतत्रिणः कुजान् ७१**

अथोपजात्या मंदादिसंज्ञायाः फलमाह—मंदेति । मंदासंक्रांतिर्धरादेवगणान् विप्रसमूहान वाति रक्षति । अतो मंदाकिनी भूमिभुजो भूपानवति । महोदरी मलिम्लुचान् चौरानवति । राक्षसी अत्यंभुवश्चंडालानवति । मिश्रा पशून् गवादींश्च पुनः पतत्रिणो विहंगान् कुजान् वृक्षानवति ॥ ७१ ॥

**विशोऽनिशं ध्वांक्ष्यतिभद्रभाजःकरोति घोरांघ्रिभुवोऽथ संज्ञा ॥**
**भवारतो यस्य रवेरिता या सा संक्रमस्योक्तफलप्रदा स्यात् ॥ ७२ ॥**

विशोइति । अनिशं सदा ध्वांक्षी विशो वैश्यानवति भद्रभाजोऽतिसुखान्वितान् करोति । घोरा अंघ्रिभुवः शूद्रानवति भद्रभाजः करोति । अथ यस्य रवेः संक्रमस्य भवारतो नक्षत्रात् वारात् या संज्ञा इता प्राप्ता । कोऽर्थः । या संज्ञा वारे सैव नक्षत्रेऽपि । यथा रविवारे योग उग्रनक्षत्रे घोरा एकीभूता स्यात्तदा शूद्रानवति । एवं सर्वापीति सा उक्तफलप्रदा स्यात् ।

"विट् प्रवेशे नृवैश्ययोः" इतिहैमः । भद्रशब्दःसुखवाची । 'शांतं तालव्यादित्याद्यं' । भद्रंभद्रमितिशब्दप्रभेदे प्रोक्तोस्ति ॥ ७२ ॥

**यामे निहंत्यर्णवमेखलाभुजं संक्रांतिराद्येऽबुधिचीवरामरान् ॥**
**अहर्दले चापि विशोऽपराण्हके शूद्रव्रजानस्तमितेंऽशुमालिनि ॥७३**

अथ प्रथमादिप्रहरे संक्रांतिफलमाह—यामइति । आद्ये यामे प्रहरे संक्रांतिः अर्णव एव मेखला यस्याःसा भूमिस्तां भुनक्तीति अर्णवमेखलाभुग्राजलोकस्तं हंति ॥ च पुनरहर्दले दिनार्द्धेऽबुधिचीवरामरान् भूदेवान् विप्रान् हन्ति । पुनरपराण्हके दिनतृतीयभागे विशो वैश्यान् हन्ति । अस्तमितेऽस्तंगतेंऽशुमालिनि सूर्ये सति शूद्रव्रजान् हंतीत्यर्थः ॥ ७३ ॥

**निहंति रात्रेः शिविजालिकादिकानर्द्धे महारात्रविभातकांतरे ॥**
**संक्रांतिरंशोर्नरतांगमर्दिनः काले नरान् बल्लवकाननूषसः ॥ ७४ ॥**

निहंतीति । रात्रेरर्द्धेंशोः सूर्यस्य संक्रांतिः शिविजालिकादीन् भिल्ललुब्धकादिकान् निहंति ॥ पुनर्महारात्रवीभातकांतरेऽर्द्धरात्रप्रभातयोरंतरे विचाले भरतांगमर्द्दिनः शैलूषनापितान् हंति । उषसः प्रभातस्य काले बल्लवकान् गोपालान् नरान् हंति ननु निश्चितम् ॥७४॥

**स्यात्तैतिले नागचतुष्पदाख्ययोः सुप्तस्य रात्र्यंतकरस्य संक्रमः ॥**
**विष्टौ निविष्टस्य बवे गरे तथा सबालवाख्ये वणिजे बुधैः स्मृतः ॥ ७५**

अथ तैतिलादिकरणे सुप्तादिरविसंक्रांतिमाह—स्यात्तैतिले इति । तैतिले नागचतुष्पदाख्ययोरेतत्करणत्रये सुप्तस्य रात्र्यंतकरस्य सूर्यस्य संक्रमः संक्रांतिः स्यात् । एवं विष्टौ भद्रायां तथा बवे गरे सबालवाख्ये वणिजेऽस्मिन् करणपंचके निविष्टस्य आसीनस्य रवेः संक्रमो बुधैः स्मृतः ॥ ७५ ॥

**ऊर्ध्वस्थितस्यांशुमतोऽथ कौलवे किंस्तुघ्नके स्याच्छकुनौ क्रमादयम् ॥**
**धान्यार्थवृष्टिष्वपि संक्रमो बुधैरनिष्टमध्यातिशुभः प्रकीर्तितः ॥ ७६॥**

ऊर्ध्वस्थितस्येति । अथ कौलवे किंस्तुघ्नके शकुनौ एतत्करणत्रये ऊर्ध्वस्थितस्यांशुमतो रवेरयं संक्रमः स्यात् । बुधैरयं संक्रमो धान्यार्घवृष्टिषु सस्यमूल्यवर्षणेषु क्रमादनिष्टमध्यातिशुभः प्रकीर्तितः । कोऽर्थः । सुप्तरविसंक्रमोऽर्घवर्षणधान्येष्वनिष्टः महर्घ्यधान्यवृष्ट्यभावकारकः । एवं निविष्टः समः । तथोर्ध्वः श्रेष्ठ इति । 'अर्घः पूजाविधौ मूल्ये' इतिहैमः ॥७६॥

**जघन्यभेऽहस्करसंक्रमो बुधैः सदेवलैः पंचदशक्षणः स्मृतः ॥**
**बृहत्सु पंचागमतुल्यदैवतः समानभे त्रिंशदभिन्नतत्क्षणः ॥ ७७ ॥**

अथ वंशस्थेन संक्रांतिर्मुहूर्तनियममाह—जघन्येति । सदेवलैर्देवलनामर्षिसहितैर्बुधैर्जघन्यसंज्ञनक्षत्रेऽहस्करसंक्रमः पंचदशक्षणः पंचदशमुहूर्तमितः स्मृतः । पुनर्बृहत्संज्ञनक्षत्रेषु पंचागम-

तुल्यदैवतः पंचचत्वारिंशन्मुहूर्तमितदैवतः स्मृतः । पुनः समानभे समसंज्ञनक्षत्रे त्रिंशदभिन्नतत्क्षणस्त्रिंशताऽभिन्नस्तुल्यस्तत्क्षणः स एव क्षणस्त्रिंशन्मुहूर्तमितः । 'क्षणो मुहूर्त उत्सवः "पर्वव्यापारवैकल्यं ' चेति लिंगानुशासने । इत्यर्थः ॥ ७७ ॥

**जघन्यभे धान्यमनूष्णगूदयो महर्घमामासमपीनसंक्रमः ॥**
**समं समर्क्षे च समर्घमन्यभे विशेषतो वा कुरुतेऽथ तद्युतिः ॥७८॥**

अथास्मिन् धान्यमूल्यविवेकमाह—जघन्यभ इति । जघन्यभे जघन्यसंज्ञनक्षत्रेऽनूष्णगूदयो द्वितीयोपलक्षितचन्द्रोद्गमोऽपि पुनरिनसंक्रमः सूर्यसंक्रम आमासं मासपर्यन्तं धान्यं महर्घं महानर्घो मूल्यं यस्य तत् बहुमूल्यं कुरुते । च पुनः समर्क्षे समसंज्ञनक्षत्रे चंद्रोदय इनसंक्रमश्च सममूल्यं धान्यं कुरुते । एवं पुनरन्यभे बृहत्संज्ञनक्षत्रे समर्घमल्पमूल्यं कुरुते । युतयोश्चंद्ररव्योर्युतिः संयोगो दर्शतिथिरित्यर्थः विशेषतः पूर्वोक्तं कुरुते । जघन्यभे विशेषतो महर्घमित्यादि कुरुते ' महार्घो लावकांडके महामूल्ये ' इति हैमः ॥ ७८ ॥

**यदैकवारे युतिरिंदुहंसयोर्मिथो नरा यांति च हेलिसंक्रमः ॥**
**क्षयं नृपाश्चेति सतीनपर्व चेत्तदा शराग्रैः करवालधारया ॥ ७९ ॥**

अथ दर्शरविसंक्रांत्योरेकवारे फलमाह—यदैकवार इति । यदा एकवारे इंदुहंसयोश्चंद्रसूर्ययोर्युतिर्दर्शतिथिरित्यर्थः हेलिसंक्रमः सूर्यसंक्रांतिश्च स्यात् । कोऽर्थः । यस्मिन् वारे रवेः सक्रमणं तस्मिन्नेव वारेऽमावासी स्यात्तदा मिथः परस्परं नराः क्षयं नाशं यांति । च पुनश्चेद्यदि इति पूर्वोक्ते सति तस्मिन्नेवैकवारे इनपर्व सूर्यग्रहणं स्यात्तदा नृपाःशराग्रैः करवालधारया तरवारिधारया मिथः क्षयं यांति । यतः ' जिणंइंद्रवारइंरविसंक्रमइतिणिं अमावसि होइ । खप्परले जोगिन फिरइ जीवइवरलोकोइ १ इतिकांकटं । इंदुहंसयोर्युतिशब्देन दर्शतिथिः कथ्यते । यदाहुर्हेमसूरयः ' दर्शः सूर्येन्दुसंगमः ' इति । यतो दर्शतिथावेव चंद्ररविसंयोग इत्यर्थः ॥ ७९ ॥

**दिनं सपत्र्यायनयानसंक्रमं न पर्वदग्धं हि च मंगलोचितम् ॥**
**तदेव यत्सोभयपार्श्ववासरं नभश्चराभ्यागमकालवद्भवेत् ॥ ८० ॥**

अथ विवाहादौ ग्रहसंक्रमादि दिनं निषेधयति—दिनमिति । हीतिनिश्चितं । अयनमेव आयनं मार्गः पत्रिणां विहंगमानामायनं पत्र्यायनं व्योम तस्मिन् यानानि विमानानि येषां ते ग्रहास्तेषां संक्रमाः संक्रमणानि तैः सह वर्तते तत् सपत्र्यायनयानसक्रमं यत् दिनं च पुनः पर्वदग्धं दिनं यत् पुनः सोभयपार्श्ववस्रं ग्रहसंक्रमत उभयतः पार्श्वे दिनं तेन युक्तं दिनं यत् पुनर्नभश्चराभ्यागमकालवत् खेटयुद्धादिनं यत्तदेव दिनं मंगलोचितं न भवेदित्यर्थः ॥ ८० ॥

**पर्वाणि चान्यानि बहून्यथादराद्विचक्षणैरागमधर्म्मशास्त्रतः ॥**
**ज्ञेयान्यशेषोत्सवकर्मदानान्यवं विवर्ज्यानि सदैव मंगले ॥ ८१ ॥**

अथोपजात्योपसंहारमाह—पर्वाणीति। अथैवं विचक्षणैर्बुधैरादरादागमधर्मशास्त्रतोऽन्यानि बहूनि पर्वाणि ज्ञेयानि। किंभूतानि। अशेषोत्सवसमस्तकार्यक्रीडादानि। पुनर्मंगले सदैव वर्ज्यानि ८१

**दिने दिने पर्वकुयोगसंचयो भवेच्च शुद्धिर्घटतेऽपि मंगलम् ॥**
**पदे पदे वारभघस्रयोगजा तदिष्टयोगोदयतः शिवाय यत् ॥ ८२ ॥**

अथ वंशस्थेनाह—दिने इति। दिनेदिने पर्वकुयोगसंचयो भवेच्च पुनः पदे पदे वारभघस्रयोगजा वारनक्षत्रदिनयोगजाता शुद्धिर्निर्दोषतापि घटते यद्धेतोस्तन्मंगलं इष्टयोगोदयत ईप्सितयोगोदयतः शिवाय कल्याणाय सुखाय भवेदित्यर्थः ॥ ८२ ॥

**अनेकदोषैरपि सौम्ययोगो न हन्यतेऽनेकगुणैः कुयोगः ॥**
**ग्राह्याः सदा ये च गुणा बुधैर्यक्रियास्वसौम्याः खलु वर्जनीयाः॥८३॥**

अथोपजात्या सुयोगकुयोगयोर्बलमाह—अनेकेति। अनेकदोषैः सौम्ययोगो न हन्यते अपि तु पुनरनेकगुणैः कुयोगो न हन्यते सदा बुधैर्यत्क्रियासु ये गुणास्ते ग्राह्या अंगीकर्त्तव्याः। च पुनर्येऽसौम्यास्ते खलु निश्चितं वर्जनीया इत्यर्थः ॥ ८३ ॥

**तद्यैः कुयोगैरिति सौम्ययोगो न हन्यतेऽसत्कथितं यदेकः ॥**
**कादंबरीबिंदुगणः करीषलेशं यथा दुष्यति नेति कश्चित् ॥ ८४ ॥**

अथात्र कस्यचिन्मतं दूषयति—तद्यैरिति। कश्चिदेक इत्याह तदसत् कथितं व्यर्थोदितं। इतीति किं तदाह। यैः कुयोगैः सौम्ययोगो न हन्यते यथा कादंबरीबिंदुगणो मदिराबिंदुसमूहः करीषलेशं शुष्कगोमयलवं न दुष्यति सदूषणं न करोतीत्यर्थः ॥ ८४ ॥

**एको गुणो दोषगणं समेत्य स्वाहाप्रियं स्वामतिहेतिवंतम् ॥**
**निगूहतीवामलगव्यबिंदुर्मूर्तिं तदिष्टा बहवो गुणाः स्युः ॥ ८५ ॥**

अथ बहुदोषोऽल्पगुणं परिहरन्नाह—एक इति। एको गुणो दोषगणमेत्य प्राप्य स्वां मूर्तिं निजगुणरूपां निगूहति गुहसंवरणे गुहेरुपधायाऊद्गुणहेतौ स्वरे इति दीर्घः नाशं प्राप्नोतीत्यर्थः। कइवामलगव्यबिंदुरिव यथा निर्मलघृतादिबिंदुः स्वाहाप्रियं वन्हिमतिहेतिवन्तमतिशयज्वालायुक्तं प्राप्य स्वां मूर्तिं गूहति पूर्ववत् वन्हिसाद्भवतीत्यर्थः। तस्मात्कारणाद्बहवो गुणा इष्टाःस्युः। दोषप्रवाहेत्यत्र प्रवाहशब्दः समूहवाची यथास्मिन्नेव ग्रंथे वक्ष्यते नवप्रवाहः समुद्रो जलराशित्वात्। 'स्वाहाग्नायी प्रियास्य च' इति हैमः ॥ ८५ ॥

**दोषैकदेशो गुणसंनिपातमतो दहत्यत्र न संशयोऽस्ति ॥**
**धनंजयांशो वनराज्यगौघमिवागुणांशोऽपि विवर्जनीयः ॥ ८६ ॥**

अथबहुगुणेऽप्येकदोषांशस्यापि त्याज्यतामाह—दोषैकेति। दोषैकदेशो गुणसन्निपातं गुणौघं दहति भस्मीकरोति धनंजयांशइव। यथा वन्हिलवो वनराज्यगौघं वनश्रेणिं वृक्षसमूहं दहति। अत्र संशयो नास्ति। अतःकारणादगुणांशोऽपि वर्ज्जनीयो बुधैरिति शेषः ॥८६॥

**गुणागुणव्रातसमानताश्रयाद्यथाऽशिवार्थं किल मंगलाज्जनः ।।**
**आघारकक्षौद्रसमानताश्रयादतोऽदनादित्यधिका गुणा वरम् ।। ८७ ।।**

अविघ्नमस्तु । अथ गुणदोषयोः समानतामपि निषेधयति—गुणेति । किलेति संभावनायां । जनोऽशिवार्थं दुःखहेतुमेति प्राप्नोति कस्मात् गुणाश्चागुणाश्च तेषां व्रातः समूहस्तस्य समानता तुल्यता तस्या आश्रयः स्थानं सेवनं वा यस्मिन् तत् तस्मादेवंविधान्मंगलात् । निदर्शनमाह यथा जन उपद्रवं प्राप्नोति कस्मात् आघारं घृतं कं जलं क्षौद्रं मधु एषां समानताश्रयात् अदनात् समभागभक्षणात् । अतःकारणादधिका गुणाः वरं शुभं गुणाः वरमित्यत्र बहुवचनमेकवचनं युक्तम् । यतो वचनभेदो भवेत् । पुनर्विभक्तिभेदो न यथा वेदाः प्रमाणमित्यर्थः ।। ८७ ।।

**आयुः पुरा भीमसुताधवादयोऽगुणव्रजोपासितमंगलामराः ।।**
**एकोऽशुभान्येव कुयोगभावतो नृपातदोषोऽपि वरः क्रियास्वतः ।।८८**

अथैतदेव दृष्टांतेन दृढयति—आयुरिति । पुरा पूर्वं भीमसुता दमयंती तस्या धवो भर्ता नलराजः स एव आदौ येषां ते भीमसुताधवादयो नृपा अशुभान्यमंगलान्येवाऽऽयुः प्रापुः । लुङि या प्रापणेऽत उसि रूपं । कथंभूता भीमसुताधवादयः । अगुणव्रजे दोषसमूहे उपासिता आश्रिताः मंगलामरा उद्वाहदेवा यैस्ते अतो हेतोः कुयोगभावत एको दोषोऽपि खर्जूरिकाचक्रादुत्पन्नदोषः क्रियासु वरः श्रेष्ठ इत्यर्थः ।। ८८ ।।

**पर्वाण्यमानीह सदापवर्ज्जनैःश्रीविक्रमार्केण विनाडिकं प्रति ।**
**तद्दोषबोधाय तथापि सत्कृता विदुः सदा सत्कृतिना ह्यमूनि च ।।८९।।**

इतिश्रीज्योतिर्विदाभरणे कविकालिदासोदिते पर्वाध्यायश्चतुर्थः ।। ४ ।।

अथोपसंहारद्वारेण श्रीविक्रमार्कं वर्णयति—पर्वाण्येति । सदा श्रीविक्रमार्केण विनाडिकं प्रति घट्याः षष्ठितमभागं प्रति पर्व अमानि ज्ञातं कैरपवर्जनैर्दानैः । कथंभूतेन विक्रमार्केण । सत्कृतिना पंडितेन च पुनस्तथापि सदा सत्कृताः पंडिता इहास्मिन् पर्वाधिकारेऽमूनि पर्वाणि विदुः अवधारयंति । कस्मै तद्दोषबोधाय । तेषां पर्वणां दोषास्तेषां बोधाय ज्ञानाय हीति निश्चितम् ।। ८९ ।।

इति श्रीपौर्णिमीयगच्छाधीराजभट्टारकपुरंदरश्रीमहिमाप्रभसूरीश्वरचरणसरोरुहभ्रमरायमान शिष्यभावरत्नविरचितायां श्रीकविकालिदासकृतज्योतिर्विदाभरणस्य सुखबोधिकायां पर्वाध्यायश्चतुर्थः समाप्तः ।। ४ ।।

---

श्रीमहिमाप्रभाह्वानां सूरीशानां सरस्वती ।
पुनातु प्राणिनां शश्वदक्षयामृतवाहिनी ।। १ ।।

## ॥ ग्रहगोचरप्रकरणम् ॥ ५ ॥

वदामि फलमंगिनामहं तदंबरगगोचरोदितम् ।
असाधुशुभकर्म्मणामथो न येन फलविभ्रमो भवेत् ॥ १ ॥

अथ पंचमाध्याये आसप्तकं दुरध्वगाछंदस्तत्र प्रथमं ग्रहगोचरफलसंधानमाह—**वदामीति** । अथो अनंतरमहं तत् अंबरगानां ग्रहाणां गोचरात् राशिविशेषात् उदितं प्रादुर्भूतम् । अथवा ग्रहगोचरे कथितं फलं वदामि कथयामि येन कारणेनांगिनां प्राणिनां फलविभ्रमः फलसंशयो न भवेत् । किंभूतानां प्राणिनाम् । असाधूनि च शुभानि च कर्म्माणि येषां ते तेषामित्यर्थः ॥ १ ॥

यमेज्यकुजहेलिभार्गवज्ञतारकधवाः खतः क्रमात् ॥
नता भगणभाज ईरिता भ्रमंति विधिना स्ववर्त्मगाः ॥ २ ॥

अथ शन्यादीनां भ्रमणविधिमाह—**यमेज्येति** । खतः आकाशात् क्रमेण नताः नम्राः अधोधःस्थानस्थिताः भगणा द्वादशराशयस्तान् भजंतीति भगणभाजः स्ववर्त्मगाः निजमार्गगामिनो विधिना कालेन ईरिताः संतः यमः शनिः इज्यो गुरुः कुजो भौमः हेलिः सूर्यः भार्गवः शुक्रः ज्ञो बुधः तारकाधवश्चंद्रः एषां द्वंद्वः एते भ्रमंति । 'विधिवाक्ये च दैवेच प्रकारे कालकल्पयोः' इतिहैमः । 'शनौ ब्रह्मण्यश्च यमः स्थिरः' इतिहैमशेषकोशे । इत्यर्थः ॥ २ ॥

तनुभ्रमणमंबराय नः स भुंजति च यस्य सत्वरम् ॥
महद्भ्रमणमुर्विपीठतो भवेदनणुकालके नभम् ॥ ३ ॥

अथ ग्रहाणां लघुमहद्भ्रमणभेदमाह—**तन्विति** । यस्य ग्रहस्य उर्वीपीठतो भूमिपीठतस्तनुभ्रमणं लघुभ्रमणं भवेत्सोऽम्बराय नो ग्रहोऽनणुकालेन महत्कालेन भं राशिं भुंजति च पुनर्यस्य ग्रहस्य महद्भ्रमणं भवेत्स ग्रहः सत्वरं स्तोककालेन भं राशिं भुंजति भुनक्ति । भुज्यते इति भुंजः भुंजइवाचरतीति भुंजति इति प्रयोगसिद्धिः । अन्यथा भुंजातिप्रयोगो विबुधगम्यः ॥ ३ ॥

विधोर्भवति सांघ्रयहोद्वयं सदैकभजमध्यभोगकम् ॥
विदोऽक्षयमतुल्यवासरा सवित्र्युशनसोस्तथैकमाः ॥ ४ ॥

अथ ग्रहाणां राशिभोगकालप्रमाणमाह—**विधोरिति** । विधोश्चंद्रस्य सांघ्र्यहोद्वयं सपादेन युग्मं भजमध्यभोगकमिति भाद्राशेः सकाशाज्जायत इति तज्जं मध्यमभोगकं भवेत् । सपाददिनयुगलं सामान्यतो विधुर्भुंक्ते इत्यर्थः । भजेत्यत्र अर्थवशाद्विभक्तिपरिणामः । एवं विदो बुधस्याक्षयमतुल्यवासराः भजमध्यभोगकाः स्युः । तथा सवित्र्युशनसोः रविशुक्रयोरेकमाः

ुकमासो भजमध्यभोगको भवेत् । अहोद्वयमित्यत्राशाब्दिकमनत्वादहर्द्वयमहोद्वयमित्यपि स्यादेवमग्रेऽपि कविना रत्वं रुत्वं च प्रोक्तमस्ति ॥ ४ ॥

**युगं क्षितिभुवोऽथ मासयोरुषर्बुधक्कुभिर्मिता गुरोः ॥**
**अगोर्धृतिमिताश्च मासकाः खवन्हिभिरशुभ्ररोचिषः ॥ ५ ॥**

युगमिति । क्षितिभुवो मंगलस्य मासयोर्द्वयं भजमध्यभोगकम् । अथ गुरोर्गीष्पतेरुषर्बुधा अग्नयश्च कुभूश्च ताभिस्त्रयोदशाभिर्मिता मासकाः भजमध्यभोगकम् । पुनरगो राहोर्धृतिमिता मासकाः भजमध्यभोगकम् । पुनरशुभ्ररोचिषः कृष्णकांतेः शनेः खवन्हिभिस्त्रिंशतामिता मासकाः भजमध्यभोगकम् । स्युरितियुग्मम् ॥ ५ ॥

**निजद्युनिशवृत्तगो ग्रहोऽनिशं प्रवहवायुनेरितः ॥**
**प्रयात्यपि गतिं पृथग्विधामचंचलचलोच्चहेतुना ॥ ६ ॥**

अथैषां गतिहेतुमाह—निजेति । निजद्युनिशवृत्तगो निजाहोरात्रमंडलगतो ग्रहोऽनिशं निरंतरं प्रवहनामवायुना ईरितः प्रेरितः सन् पृथग्विधां भिन्नविधामपि गतिं प्रयाति । किंभूतेन प्रवहवायुना अचंचलचलोच्चहेतुना मन्दोच्चबलोच्चकारणेनेत्यर्थः ॥ ६ ॥

**समा व्रजिनगातिवेलिता चरा चरतरा दिवौकसः ॥**
**गतिर्भवति मंदसंज्ञिका सदेति च कृशैव सप्तधा ॥ ७ ॥**

अथ ग्रहाणां सप्तधागतिमाह—समेति । समा तुल्या गतिः १ व्रजिनगा वक्रगतिः २ अतिवेलिता अतिवक्रा गतिः ३ चरा गतिः ४ चरतरा गतिः ५ मंदसंज्ञिका मंदा गतिः ६ कृशा गतिः ७ दिवौकसो ग्रहस्येत्यमुना प्रकारेण सप्तधा गतिर्भवतीत्यर्थः ॥ ७ ॥

**गत्या समं पत्ररथायनायनः स्वमध्यगत्या स्फुटया चरत्यथ ॥**
**द्युरात्रवृत्ते विबुधैः समा गतिर्ज्ञेया यदा तस्य हि यो दिवौकसः॥८॥**

अथोपजात्या गतीनां लक्षणमाह—गत्येति । अथ यदा पत्ररथानां पक्षिणामयनं मार्गो व्योम तस्मिन्नयनं मार्गो यस्य स ग्रहो द्युरात्रवृत्तेऽहोरात्रमंडले स्वमध्यगत्या निजमध्यमगमनेन समं सदृशं स्फुटया स्पष्टया गत्या चरति गच्छति हि युक्तं तदा बुधैस्तस्य दिवौकसो ग्रहस्य समा गतिर्ज्ञेया ॥ ८ ॥

**अत्यल्पगत्यांबरपांथ एति गतिर्यदाधिष्ठितभे विलोमाम् ॥**
**वक्रा गतिः स्यात्तमपास्य राशिं राशौ गते वक्रतरातिगत्या ॥ ९ ॥**

अत्यल्पेति । यदाधिष्ठितभे आक्रांतराशौ अंबरपांथो ग्रहोऽत्यल्पगत्याऽतिसूक्ष्मगत्या विलोमां पश्चाद्गामिनीं गतिमेति प्राप्नोति तदा ग्रहस्य वक्रा गतिः स्यात् । अथातिगत्या तं राशिमपास्याश्रितराशिं त्यक्त्वा राशौ गते पाश्चात्यराशिं प्राप्ते ग्रहे सति वक्रतराऽतिशयेन वक्रा गतिः स्यादित्यर्थः ॥ ९ ॥

**ग्रहोऽतिवेगेन यदा स्वमार्गमाक्रांतभे गच्छति यश्चरोक्ता ॥**
**तदा गतिस्तस्य विहाय राशिं तमैष्यभे चातिचरा गतिज्ञैः ॥१०॥**

**ग्रह इति** । यदा यो ग्रहोऽतिवेगेनाक्रांतभे संश्रितराशौ स्वमार्गे निजमार्गे गच्छति तदा गतिज्ञैस्तज्ज्ञैस्तस्य ग्रहस्य गतिश्चरा उक्ता । च पुनर्ग्रहस्तं राशिमाश्रितराशिं विहायैष्यभे आगामिकराशौ गच्छति तदा गतिज्ञैस्तस्यातिचरा गतिरुक्ता ॥ १० ॥

**वक्री पुनस्तत्र स चेन्नभोगस्तदातिचारी चरतीह मार्गी ॥**
**स्वमध्यगत्यूनजवेन मंदो ज्ञेयः कृशो यः स गतिक्षयत्वात् ॥ ११ ॥**

**वक्रीति** । चेद्यदि स नभोगो ग्रहस्तत्र राशौ वक्री इह मार्गी संश्चरति गच्छति तदाऽतिचारी कथ्यते । अथ ग्रहः स्वमध्यगत्यूनजवेन निजमध्यमगतिहीनवेगेन मंदो ज्ञेय इति लक्षणया मंदा गतिरुक्ता । अथ यो ग्रहो गतिक्षयत्वात्कृशः स कृशो ज्ञेय इति लक्षणया कृशा गतिरुक्ता ॥ ११ ॥

**वक्रातिचारैंबरगाश्चरंतो ददत्यलं लल्लपराशराद्याः ॥**
**आक्रांतराशेरमनंत हीति फलं न लब्धद्रकवेधसत्याः ॥ १२**

अथ ग्रहाणां वक्रातिचारे फलं निषेधयति—**वक्रेति** । अलमित्यवधारणे हीतिविशेषार्थे । अंबरगा ग्रहा वक्रातिचारे चरंतो गच्छन्त आक्रांतराशेः फलं न ददति न समर्पयंति । इति लल्लपराशराद्या ऋषयोऽमनंत जगुः । किंभूता लल्लपराशराद्याः द्रं गमनं तस्य कः प्रकाशस्तस्य वेधः द्रकवेधः अर्थात् ग्रहाणां गतिप्रकाशवेधः लब्धः प्राप्तश्चासौ द्रकवेधश्च लब्धद्रकवेधस्तस्मिन् सत्याः सत्यभाषिणः ' द्रभयंगमनंक्षुद्रम् ' इत्यादिद्व्यक्षरकोषे सौभरिकः । सूर्यमित्रवाद्यग्निब्रह्मात्मयमकेकिषु प्रकाशवक्त्रयोश्चापि ' इतिराजशेखरः । अमनंतेत्यत्रात्मनेपदं द्रकेतिपदं बुधैश्चिंत्यं । वक्रातिचारे संहितायां यथा ' विलोमगत्या यदि वातिगत्या प्रयाति यो राशिमतीतमैष्यम् । हित्वा तदीयं गगनेचरोऽसौ दद्यात्फलं पूर्वगृहे यदुक्तम् ॥१॥

वक्रातिचारेण गृहांतरेऽपि स्थितो ग्रहः पूर्वफलप्रदः स्यात् । देशांतरं कार्यवशाद्गतो हि स्वदेशधर्म्मं न जहाति मर्त्यः ॥ २ ॥

यदा ग्रहोऽयं समुपैति राशिं तदा तदीयं स फलं ददाति । पीतादिवर्णेन समागमे हि वर्णः सितस्तन्मयतामुपैति ॥ ३ ॥

यावंति यो वक्रगतेर्दिनानि भवेत्स वक्रो यदि वातिचारः ॥ दशांशतुल्यानि दिनानि तेषां दद्यात्फलं पूर्वगृहे यदुक्तम् ॥ ४ ॥

त्रयोदशार्किः क्षितिजश्च सप्त ह्यहं बुधः पंच दिनानि शुक्रः । वक्री गुरुः पूर्वफलप्रदः स्यादेकादशौवेति जगौ वराहः ॥ ५ ॥

मासं शनीज्यौ कुजभार्गवौ तु पक्षं दशाहानि च सोमसूनुः । ददाति वक्री फलमाद्यराशेः केषांचिदेवं न मतं बहूनाम् ॥ ६ ॥ इत्यर्थः ॥ १२ ॥

**एवं शरांगाश्च जिना गुणार्का वियच्छराः खाब्धिधरा ग्रहज्ञैः ॥**
**क्रमेण धाराजमुखग्रहाणां घस्राः सदा वक्रगतेर्निरुक्ताः ॥ १३ ॥**

अथ भौमादिग्रहपंचकस्य वक्रगतिदिननियममाह—एवमिति । सदा ग्रहज्ञैरेवं क्रमेण धराजमुखग्रहाणां भौमादिग्रहाणां वक्रगतेः शरादिमिता घस्रा वासरा निरुक्ताः प्रोक्ताः । कोऽर्थः । भौमस्य वक्रगतेः शरांगाः पंचसप्ततिर्वासराः । बुधस्य वक्रगतेर्जिनाश्चतुर्विंशतिर्वासराः । गुरोर्वक्रगतेर्गुणार्कास्त्रयोविंशत्यधिकशतं वासराः । शुक्रस्य वक्रगतेर्वियच्छरा गगनबाणाः पंचाशत्वासराः । शनेर्वक्रगतेः खाब्धिधराश्चत्वारिंशदधिकशतं वासरा इत्यर्थः ॥१३॥

**शरांबरागा द्विनवाहितारका सुरेषवो ह्यग्नियमाश्च वासराः ॥**
**तेषां स्वभुक्त्याननमार्गकाश्रिताः स्मृता बुधैरूर्ध्वमतोऽथ वक्रगाः १४**

अथैषां मार्गदिननियममाह—शरेति । बुधैस्तेषां भौमादीनां पंचानां स्वभुक्तिर्निजसंक्रमितभोगराशिस्तस्या आननं मुखं संक्रमणप्रारंभो यस्यासौ मार्गकश्च तमाश्रिताः प्राप्ताः स्वभुक्त्याननमार्गकाश्रिताःशरादिमिताः वासराः स्मृताः । कोऽर्थः । भौमस्य निजराशिसंक्रमणमुखादारभ्य मार्गे भवा मार्गकाः वासराः शरांबरागाः पंचाधिकसप्तशतानि भवंति । एवं बुधस्य द्विनव द्वानवतिर्वासरा मार्गकाः । गुरोरहितारकाः अष्टसप्तत्यधिकशतद्वयं वासरा मार्गकाः । शुक्रस्य सुरेषवस्त्रयस्त्रिंशदधिकपंचशतानि वासरा मार्गकाः । शनेरह्यग्नियमाः अष्टात्रिंशदधिकशतद्वयं वासरा मार्गका इति । अथ चेद्यदि अतएव तस्मान्मानादूर्ध्वमग्रे वक्रगाः स्युरित्यर्थः ॥ १४ ॥

**स्वकालभागांतरकाधिकश्चेन्मंदो व्रजेदंशुमतो ग्रहोऽस्तम् ॥**
**ऊनो निजैः काललवैरमंदस्तदान्यथा चाभ्युदयं प्रयाति ॥ १५ ॥**

अथैषामस्तोदयमाह— स्वकालेति । मंदो ग्रहो गुरुः शनिश्च मंदौ गुरुशनी इति ज्योतिषः संज्ञात्वात् । अंशुमतः सूर्यात् स्वकालभागांतरकाधिको निजकालांशांतराधिकस्तदा गुरुः शनिश्चास्तं व्रजेत् । यदा अमंदश्चंद्रो बुधः शुक्रो भौमश्च ये तेऽमंदाः निजैः काललवैः सकालांशैरूनो हीनस्तदाऽमंदो विधुर्बुधः शुक्रो भौमश्चास्तं व्रजेत् । च पुनरन्यथा पूर्वोक्तविपर्यये कोऽर्थो यदा सूर्यःस्वकालांशांतरहीनश्चेत्तदा गुरुः शनिश्चोदयं प्रयाति । सूर्यो निजकालांशैरधिकश्चेत्तदा चंद्रो बुधः शुक्रो भौमश्चोदयं प्रयातीत्यर्थः ॥ १५ ॥

**दिवाकराः सप्तधरा गुणोर्व्यो हरा ग्रहा बाणधरा ग्रहाणाम् ॥**
**कालांशका मार्गवतामिलोना अमी क्रमाद्वक्रवतामथाब्जात् ॥१६॥**

अथ ग्रहाणां कालांशकानाह—दिवेति । अब्जात् चंद्रात् मार्गवतां मार्गिणां ग्रहाणां क्रमेण दिवाकरादयः कालाः स्युः । कोऽर्थः । मार्गिणश्चंद्रस्य दिवाकरा द्वादशकालांशकाः । मार्गिमंगलस्य सप्तधराः सप्तदश मार्गिबुधस्य गुणोर्व्यस्त्रयोदश मार्गिगुरोर्हरा एकादश मार्गिशुक्रस्य

ग्रहाः नव। मार्गिशनेर्वीणाधराः पंचद[illegible]कलाः स्यात्सपाद[illegible]नां मानं यतः स्थू[illegible] इलोना इला भूमिस्तया ऊना एकोना अमी निज[illegible]शपादः सदैक[illegible]ऽनेनानुवेलं न [illegible] षोडशका-लांशकाः । एवं वक्रिबुधस्य द्वादश । [illegible] —एकेति । ग्रहा[illegible] [illegible]क्रस्य[illegible]केति । हीति निशीति ॥ १६ ॥

**महीभुवोप्यंऽबरहेलयो नृपा [illegible] व्योमचराः षडग्नयः ।**
**दिवौकसां पाशभृतोऽस्तवासरा दिगाश्रिता ज्ञानिभिरत्र कीर्तिताः ॥ १७ ॥**

अथ वंशस्थेन भौमादीनामस्तदिननियममाह—महीति । ज्ञानिभिरत्र महीभुवो भौमादि दिवौकसां ग्रहाणामस्तवासराः अंबरहेल्यादयः पाशभृतो वरुणस्य दिगाश्रिताः पश्चिमदिगाश्रिताः कीर्तिताः । स्पष्टं तु भौमस्य अंबरहेलयो विंशत्यधिकशतं पश्चिमदिगाश्रिता अस्तवासराः । एवं बुधस्य नृपाः षोडश । गुरोर्वियद्गुणास्त्रिंशत् । शुक्रस्य व्योमचरा नव । शनेः षडग्नयः षट्त्रिंशत् ॥ १७ ॥

**क्रमेण तेऽष्टेषुरसैरगाग्निभिर्दृगद्रिरामैर्विधुसायकाक्षिभिः ॥**
**प्राच्यां दिनैरंकसुरैरथोदिताः पश्चाद्व्रजंत्यस्तमयं पुनर्ग्रहाः ॥ १८ ॥**

अथोपजात्या भौमादीनामुदितदिननियममाह—क्रमेणेति । क्रमेण ते भौमादयः पंच ग्रहाः अष्टेषुरसादिभिर्दिनैः प्राच्यां पूर्वस्यामुदिताः संतोऽथ पश्चात् पुनर्ग्रहा अस्तं व्रजंति । कोऽर्थः । भौमः पूर्वस्यामष्टेषुरसैरष्टपंचाशदधिकषट्शतैर्दिनैरुदितः पश्चादस्तं याति । एवं बुधोऽगाग्निभिः सप्तत्रिंशद्दिनैः पश्चा० । गुरुर्दृगद्रिरामैर्द्वासप्तत्यधिकशतत्रयेण दिनैः प० । शुक्रो विधुसायकाक्षिभिरेकपंचाशदधिकशतद्वयेन दिनैः प० । शनिः पूर्वस्यामुदितः पश्चादंकसुरैरेकोनचत्वारिंशदधिकशतत्रयेण दिनैरस्तं याति ॥ १८ ॥

**वक्रोदितावष्टजिनाश्च देवा घस्रास्ततस्तिष्ठत एवमैंद्र्याम् ॥**
**अस्तं यमाश्वा रदना व्रजेतां तावुद्गमं काव्यविदौ प्रतीच्याम् ॥ १९ ॥**

अथेन्द्रवज्रया वक्रोदितशुक्रबुधयोरस्तोदयदिननियममाह—वक्रइति । काव्यविदौ शुक्रबुधौ वक्रोदितौ वक्रवंतौ उदयं प्राप्तौ अष्टजिना अष्टचत्वारिंशदधिकशतद्वयं देवास्त्रयस्त्रिंशत् घस्राश्च गताः संतस्ततस्तस्यां दिशि पूर्वस्यां तिष्ठतो वसतः पश्चादैन्द्र्यां पूर्वस्यामेवास्तं व्रजेतां । च पुनः शुक्रबुधौ अस्तानंतरं यमाश्वाः द्वासप्ततिर्वासराः रदना द्वात्रिंशद्वासरा गताः सन्तः प्रतीच्यां पश्चिमायामुद्गममुदयं व्रजेतां । कोर्थः । शुक्रः पूर्वस्यां वक्रोदितादारभ्य अष्टाचत्वारिंशदधिकशतद्वयमितेषु गतेषु पुनः पूर्वस्यामेवास्तं याति । अस्तदिनादारम्य द्वासप्ततिदिनेषु गतेषु शुक्रः पुनः पश्चिमायामुदयं याति । एवं बुधोऽपि स्वमानेनेति । अयं विशेषः । भौमादयः सर्वे ग्रहाः पूर्वस्यामुदयं यांति पश्चिमायामस्तं यांति पुनः शुक्रबुधौ पूर्वस्यामुदयमस्तं पश्चिमायां चोदयमस्तं यात इति ॥ १९ ॥

---

१ क्रमेण भूतर्करसैरिति क्वचित्पाठो दृश्यते । अयं ग्रहलाघवानुसारी ।

अवक्रवक्रास्तमयोदयानां मानं यतः स्थूलतयैतदुक्तम् ॥
प्रत्यक्षमश्रांतमृतेऽवबोधेऽनेनानुवेलं न हि गोचरस्य ॥ २० ॥

अथोपजात्यैतन्मतं दृढयति—अवक्रेति । हीति निश्चितं । अवक्रवक्रास्तमयोदयानां समवक्रास्तमयोदयानां ग्रहाणामेतन्मानं स्थूलतया उक्तं । यतः कारणादवबोधे ज्ञाने गोचरस्यानेन मानेन कृते विनाश्रांतं निरंतरमनुवेलं समयं प्रति प्रत्यक्षं नास्ति ॥ २० ॥

वक्री दिवौका निजवक्रघस्रैर्यस्तस्य पूर्वोदितमध्यराशेः ॥
भोगादनल्पो ननु राशिभोगो ज्ञेयोऽयमुत्पातहतो ग्रहज्ञैः ॥२१॥

अथेन्द्रवज्रयोत्पातलक्षणग्रहमाह—वक्रीति । यो वक्री वक्रवान् दिवौकाः ग्रहो निजवक्रघस्रैः पूर्वोदितमध्यराशेर्भोगादनल्पो महान् तदा ननु निश्चितं ग्रहज्ञैस्तस्य ग्रहस्यायं राशिभोग उत्पातहतो ज्ञेयः । दिवि गगने ओको गेहं यस्य स दिवौकाः । दिवौकाः पृषोदरादित्वाच्छन्दप्रभेदोऽपि ॥ २१ ॥

निजास्ततोऽहानि पुरातनोर्वागूर्ध्वं शिशुः स्यादुदयाद्दिवौकाः ॥
स्वास्तद्युवेदांशमितानि सद्भिरुक्तस्तदुक्त्याश्रितगोमनोभिः॥२२॥

अथोपजात्या ग्रहाणां वयोवस्थामाह—निजेति । निजास्ततः स्वास्तमयादर्वाक् पूर्वं दिवौका ग्रहः पुरातनः वृद्धः स्यात् । पुनरुदयादूर्ध्वमुपरि शिशुः स्यात् । कियत्कालं स्वास्तद्युवेदांशमितानि निजास्तमयदिनानां चतुर्थभागप्रमितान्यहानि दिनानि एतावत्कालमिति कालाध्वनोरिति द्वितीया इति सद्भिरुक्तः । किंभूतैस्तदुक्त्याश्रितगोमनोभिस्तेषां ग्रहाणामुक्तिस्तयाश्रितं गौः वाग् मनश्चित्तं येषां ते तैरित्यर्थः ॥ २२ ॥

सदौषधीशोऽस्तमयाद्दिनैकमेकं स्मृतो बालपुराणकायः ।
अगोरहो दर्शनमिंदुहेल्योर्ग्रहेऽथ केतोर्दिनविंशतिः स्यात् ॥ २३ ॥

अथ विशेषमाह—सदौषधीशइति । सदा ओषधीशश्चंद्रोऽस्तमयाद्दिनैकमेकं बालपुराणकायः स्मृतः उददेकं दिनं बालः अस्तात्प्राग् दिनं वृद्धः। अथ पुनरगो राहोरिंदुहेल्योश्चंद्रसूर्ययोर्ग्रहे ग्रहणेऽहः एकं दिनं पूर्वापरत्वेनार्द्धमर्द्धवृद्धो बालः । केतोर्दर्शने दिनविंशतिर्बालपुराणकायः ॥ २३ ॥

केचिज्जरत्वं किल दारकत्वं मितानि वा काललवैर्निजैः स्यात् ।
अहान्यथो वासनयेतिघस्रैर्विश्वैर्जगुः कालगतेर्ग्रहस्य ॥ २४ ॥

अथ प्रकारांतरमाह—केचिदिति । किलेति संभावनायाम् । कालगतेरस्तंगतस्य ग्रहस्य निजैः काललवैर्मितान्यहानि यावत् जरत्वं वृद्धत्वं दारकत्वं बालत्वं स्यात् । अथो वा घस्रैः पंचदशभिर्विश्वैस्त्रयोदशभिर्मितान्यहानि जरत्वं बालत्वं स्यादिति वासनया भावनया केचित् बुधा जगुः ॥ २४ ॥

**एकर्क्षभोगोऽष्टशती कलाः स्यात्सपादधिष्ण्यद्वयमेकराशेः ॥**
**भोगो ग्रहाणां भयुगांशपादः सदैकभोगे च नवांशकाः स्युः॥२५॥**

अथ ग्रहाणां राशिभोगमाह—**एकेति** । ग्रहाणामेकर्क्षभोग एकनक्षत्रभोगोऽष्टशती अष्टानां शतानां समाहारोऽष्टशती कलाः त्रयोदशांशा विंशतिः कलाः स्युः । सपादधिष्ण्यद्वयमेकचरणसहितनक्षत्रद्वयमेकराशिभोगःस्यात् । च पुनः सदैकभोगे एकभोगे राशिभोगे भयुगांशपादः सपादनक्षत्रद्वयं नवांशकाः स्युरित्यर्थः ॥ २५ ॥

**भुक्तौषधीशप्रमदांघ्रिराशेरिता नवाप्ता ननु राशयः स्युः ॥**
**अथादिभाच्छेषमिता नवांशा ज्ञेया ग्रहाणामिति राशिभोगाः॥२६॥**

अथ विशेषत आह—**भुक्तइति** । ननु निश्चितं । अथ आदिभादश्विनीतो भुक्ता ओषधीशप्रमदानां नक्षत्राणामहश्चरणा येन स चासौ राशिश्च तस्माद्राशेरिताः प्राप्ताः नवभिराप्ताः लब्धा ग्रहाणां राशयः स्युः । अथ पुनः शेषमिताः शेषनक्षत्रचरणमिता ग्रहाणां नवांशा ज्ञेया इति राशिभोगाः ॥ २६ ॥

**शरीरिणश्चंडघृणीतरांशुर्यत्रस्थितो जन्मनिभे स राशिः ॥**
**अज्ञातजन्मद्युभकालजंतोः प्रसिद्धनामाक्षरतो जनेर्वा ॥ २७ ॥**

अथ मनुजानां राशिमाह—**शरीरिणइति** । शरीरिणो मानवस्य स राशिर्भवेत् । स कः जन्मानि भे यत्र भे यस्मिन् राशौ चंडघृणिः सूर्यस्तस्मात् इतरांशुः शीतांशुश्चंद्रः स्थितो भवेत् । वा इति पक्षांतरेऽज्ञातजन्मद्युभकालजंतोरविदितजन्मदिननक्षत्रसमयो यस्य स चासौ जंतुर्मनुष्यस्तस्य जनेर्जन्मसमयादारभ्य प्रसिद्धनामाक्षरतः ख्यातनाम्न आदिव्यंजनतो राशिः स्यात् ॥ २७ ॥

**क्षीणौषधीशारयमांशुमालिनः पापाः सदान्ये खचराश्च साधवः ॥**
**नभश्चराणामिह येऽपि राशयःस्मृताःखलानां विबुधैरसाधवः ॥२८॥**

अथ खलसौम्यग्रहानाह—**क्षीणौषधीशेति** । सदा क्षीणौषधीशः क्षीणश्चंद्रः आरो भौमः यमः शनिः अंशुमाली सूर्यश्चैते पापाः क्रूराः अन्ये बली चंद्रः बुधः शुक्रः गुरुश्च खेचराःसाधवः सौम्याः। इह खलानां ग्रहाणां येऽपि राशयः विबुधैस्ते राशयोऽसाधवोऽसौम्याःस्मृताः॥२८॥

**पंचाननाख्यो हि यथेभचक्रे पंचाननाख्योऽस्ति तथा भचक्रे ॥**
**एनं हरिः पालयितुं क्षमोऽस्य कृतं तदित्येतदगारमार्यैः ॥ २९ ॥**

अथ वर्णनद्वारेण सूर्यस्य सिंहगृहं स्थापयति । अथ सिंहराशिं तत्स्वामिनं च वर्णयति—**पंचाननाख्यइति** । हीति विशेषार्थे यथा इभचक्रे गजयूथे पंचाननाख्यः सिंहोऽस्ति तथा भचक्रे राशिसमूहे पंचाननाख्यः सिंहराशिरस्ति अतो हरिः सूर्य एनं सिंहराशिं पालयितुं

क्षमोऽस्ति । अत्र शब्दबलात् हरिरेव हरिं पालयितुं क्षमो नान्यः इति हेलोराद्यैर्विबुधैरस्य सूर्यस्यैतदगारं सिंहः कृतम् ॥ २९ ॥

**सिंहादिचक्रार्द्धपती रविः स्याद्विलोमकीटादिभखंडपोऽब्जः ॥**
**पतंगधामासविधं तमीशः स्थातुं कुलीरे त्वकरोदगारम् ॥ ३० ॥**

अथ रविचंद्रयोः षण्णां षण्णां राशीनां स्वामित्वमाह—सिंहेति । रविः सिंहादिचक्रार्द्धपतिः स्यात् । कोऽर्थः । सिंहः कन्या तुला वृश्चिकः धनुः मकरः एषां पतिः सूर्यः । अथाब्जश्चंद्रो विलोमकीटादिभखंडपः विलोमगणनया कर्कादिराशिस्वामी स्यात् । कोऽर्थः । कर्कः मिथुनं वृषः मेषः मीनः कुंभ इति । अथ वर्णनद्वारेण चंद्रस्य कर्कगृहं स्थापयति । तुरित्यवधारणे तमीशश्चंद्रः कुलीरे कर्कराशौ अगारं गेहमकरोत् कृतवान् । किं कर्तुं पतंगस्य रवेर्धाम्नो गृहस्य आसविधं सामस्त्येन समीपं स्थातुं । अत्र यः पाठः एकः प्रोक्तः द्वितीयः ह्यकरोरगारं । अत्र हे तमीश इति वाच्यं । तृतीयस्तु चकरो रजं चेति । अत्राहं तमीश उरजं गृहं चकर करोमि स्मेति शेषं तथैव ॥ ३० ॥

**उच्चोच्चमार्गे चरतां ग्रहाणां बुधाननानामवनेरिनेंद्वोः ॥**
**प्रतिष्ठितान्यालयतः पुराणैर्द्विजैरथौकांसि यथाक्रमेण ॥ ३१ ॥**
**षडंघ्रयविभयो रसाभवो भृगुर्धटभशांकराव्हयोः ॥**
**वशाजितुमयोर्विदीश्वरोऽनुगो भवति कर्किणो भपः ॥ ३२ ॥**
**भगो नखरहेतिनायकः शरासनवनालयाख्यपः ॥**
**गुरुस्तिमिरवैरिजो बुधैः स्मृतः कलशनक्रभेश्वरः ॥ ३३ ॥**

अथ शेषग्रहाणां राशिगृहाण्याह—उच्चइति । पुराणैर्वृद्धैर्द्विजैर्यथाक्रमेणेनेंद्वोः सूर्यचंद्रयोरालयतो गृहाभ्यामोकांसि गृहाणि प्रतिष्ठितानि कथितानि । केषां बुधाननानां बुधप्रमुखानां ग्रहाणां । अवनेः क्षितेः सकाशात् उच्चोच्चमार्गे चरतां गच्छतां । कोऽर्थः । बुधादीनां बुधशुक्रभौमगुरुशनीनां सूर्यात्सिंहादिषड्गृहाणि प्रोक्तानि । अथ विलोमेन चंद्रात्कर्कादि षड्गृहाणि । यथा सूर्यस्य सिंहः बुधस्य कन्यामिथुने शुक्रस्य तुलावृषौ मंगलस्य मेषवृश्चिकौ । हरणं शस्त्रमिति हैमः ॥ ३३ ॥

**क्रमादजभगोमृगाबलाकुलीरतिमितौलिराशयः ॥**
**हरेः स्युरथ तुंगसंज्ञितास्तदद्रिमितराशयो नताः ॥ ३४ ॥**

अथ सूर्यादीनामुच्चनीचराशीनाह—क्रमेति । अथ हरेः सूर्यात् क्रमेणाजादिराशयस्तुंगसंज्ञिता उच्चाः स्युः पुनस्तस्मादद्रिमितराशयो नता नीचाः स्युः । कोऽर्थः । सूर्यस्याजभं मेषराशिस्तस्मात्सप्तमी तुला उच्चनीचौ । एवं सोमस्य गौर्वृषो वृश्चिकश्चोच्चनीचौ । मंगलस्य

---

१ चांद्याननानामिति क्वचित्पाठः ।

मृगो मकरः कर्कश्च बुधस्याबला कन्या मीनश्च गुरोः कुलीरः कर्कों मकरश्च शुक्रस्य तिमिर्मीनः कन्या च शनेस्तौलिराशिस्तुला मेषश्च उच्चनीचौ ॥ ३४ ॥

**न कल्पितमगोश्च मंदिरं महर्षिभिरनुच्चमुच्चकम् ॥**
**तथा शिखिन आकृतेस्तयोर्गतेरनियमादभावतः ॥ ३५ ॥**

अथ राहुकेत्वोरुच्चनीचाभावमाह—नकल्पितमिति। महर्षिभिरगो राहोस्तस्था शिखिनः केतोश्चोच्चकमनुच्चकं मंदिरं च न कल्पितं न कथितं कस्मादनियमादनिश्चयेन राहुकेत्वोराकृतेः शरीरस्य गतेर्गमनस्याभावत इति ॥ ३९ ॥

**तथाप्युदितमास्पदं वशा त्वगोर्मिथुनमुच्चमस्तभम् ॥**
**अनुच्चमपरैरतोऽस्तभं कुलादिकमिदं शिखावतः ॥ ३६ ॥**

अथ मतांतरमाह—तथेति। तु पुनस्तथाप्यपरैर्बुधैरगो राहोर्वशा कन्या आस्पदं गृहमुदितं प्रोक्तं पुनरस्य मिथुनगृहमुच्चं अस्तभं धनूराशिभवनमनुच्चं। शिखावतः केतोरतः कन्यातो मिथुनतो धनुतोऽस्तभं सप्तमं कुलादिकं गृहादिकं प्रोक्तं। कोऽर्थः। निजं मीनभवनं आदिशब्दात् धनुरुच्चं मिथुनं नीचं प्रोक्तमिति ॥ ३६ ॥

**कमासुरमगुं पुराणगा विदुः स्वरविदोऽहिविग्रहम् ॥**
**तमोमयमिह स्वकर्म्मणा सदेति च कभेदवानयम् ॥ ३७ ॥**

अथ राहुकेत्वोर्भेदमाह—कमेति। स्वरविदः पुराणगा आसुरं श्मश्रूपलक्षितं कं मस्तकमगुं राहुं विदुः। च पुनरहिविग्रहं सर्प्पशरीरं तमोमयं तमःस्वरूपं केतुं विदुः। इतीह लोकेऽयं ग्रहः स्वकर्म्मणाऽमृतपानापराधेन सदा कभेदवान् कस्य शरीरस्य भेदयुक्तः। पृथक् मस्तकं पृथगन्यत् 'मूर्ध्नि चित्ते जले काये' इत्यादिकशब्दार्थः ॥ ३७ ॥

**सदागमपुराणसंहितास्वयं किल खगो विधुंतुदः ॥**
**शिखीगणितभुक्तिदर्शनात् प्रसिद्ध इति तथ्यमस्त्यपि ॥ ३८ ॥**

अथास्यप्रमाणतामाह—सदेति। किलेति भावनायां। अयं विधुंतुदो राहुः शिखी केतुः खग आगमा वेदाः पुराणं संहिता एतासु गणितं राश्यादिभुक्तिर्गतिः कलादिरेषां दर्शनात्सदा प्रसिद्ध इति तथ्यं सत्यमस्त्यपि। उक्तंच। प्रायः सदा दानफलानि पुंसां भवंति तत्वाद्युचरं निमित्तम्। सप्तैव तान् केचिदुदाहरंति नवग्रहानप्यपरे मुनींद्राः॥१॥ हिरण्यगर्भो भुवनं सिसृक्षुः सप्तैव वारानसृजद्युगादौ। उत्पातरूपाच्छिखिनोगुभिन्द्रोः पातं च सप्तैव मनोग्रहाःस्युः॥२॥ न गोचरे नापि विलग्ननाथौ भूयो निरुक्तं ग्रहशास्त्रतज्ज्ञैः। स्वर्भानुकेत्वोः सदसत्फलत्वमस्तीति जल्पंति च केचिदेवम्॥३॥ नाब्दाधिपत्यं न दिनाधिपत्यं न गोचरस्थानबलाबलेषु। होरादशायां च तथाष्टवर्गे तथापि मूढाः प्रवदंति राहुम् ॥४॥ न दृष्टमन्यत्र फलान्वितं तमस्तथापि वाच्यं क्वचिदीरितं यतः। अनुक्तमात्रं नहि तद्विरोधकं विभिन्नवाक्येऽपि समानदोषतः ॥ ५ ॥ ए-

कत्र दर्शनान्मूढैर्नान्यत्राप्युक्तमिष्यते॥ जलात्मत्वेन सर्वत्र न ह्यसत्वं विभावसोः॥६॥ राहुःपीडां ग्रहः कुर्याच्चंद्रभास्करयोरपि । मनुष्याणामुदासीनः स मूढैः कथ्यते कथम् ॥७॥ तावद्दृषांको भुवनत्रयस्य सर्गस्थितिध्वंसविधौ विधाता । तं शंभुमूर्धा धृतमिंदुमद्यात्तथापि मूढा न वदंति राहुम् ॥८॥ आदौ हि सृष्टेः शतपत्रजन्मा ससर्ज मंदग्रहशीघ्रपातात् । अकल्पयच्चैषु नवग्रहांश्च तेषां च मध्ये कृतसप्तवारान् ॥९॥ कालत्रयं रुद्रविलिप्तिकाढ्यं तमोऽन्वहं व्यस्तगतं भुनक्ति । गजाश्विलिप्तासहितेन वार्कमन्वेति भागात्रितयेन केतुः॥१०॥ अत्रानुमानेऽपि च भुक्तिमन्वहेत्रि- तोरनैकांतिकता हि दृष्टा । अतो न तेषां ग्रहता परेषां तदन्यथा संभवतो तदूह्यम् ॥११॥ मंदोच्चपातेष्वपि भुक्तिमत्वे न विश्वजन्मा विदधे ग्रहत्वं । तेषां पृथक्कर्मतपःप्रभावो हेतु- ग्रहत्वे न तु भुक्तिमत्वम् ॥ १२ ॥ प्रासादकूपादिजलाशयानामुद्यापने दैवतशाखिनां च । गृहार्चने शांतिकपौष्टिकेषु नवग्रहाणां जगति प्रसिद्धिः ॥१३॥ राहुःपुराणेष्वसुरोत्तमांगे भुजं- गरूपं स्वरशास्त्रकाराः। तमिस्वरूपं जगदुर्ग्रहज्ञाः स्वरूपभेदोऽस्य तु कार्यभेदात्॥१४॥अष्टाधिकं केतुसहस्रमाहुर्वराहलल्लप्रमुखग्रहज्ञाः । ते चाग्निकालद्रुहिणांतककग्रहोद्भवास्तामसकीलकाद्याः ॥ १५ ॥ वृत्तिं विधास्यञ्छिखिनां गणानां चकार सत्कर्मविभागमाद्यः । येषां तु यस्मिन्नु- पहारभागः प्रकल्पितः कर्म्मणि तत्र ते स्युः॥१६॥ व्यासोंगिराःशौनकवामदेवपराशराश्चात्रिमरी- चिमुख्याः । अस्त्येव राहुः प्रवदंत्यतस्तैर्लैभेंदुवेधादिषु चात्र चिंत्यः ॥१७॥ भिन्नं शिरः किल सुधां पिबतो सुरस्य प्राणान्न चात्यजद्यथामरवृंदमतुष्ट । दृष्ट्वोद्यतं विधिरदादमरत्वमस्य पूजासु पुष्कर सदा भविताष्टमस्त्वम् ॥१८॥ जितेषु देवेषु पुरा सुरैद्रैर्जघ्नुः सुरारीञ्छिखिनोऽथ वेधाः । देवैःसहाजः परितोषमेत्य प्रांते ग्रहाणां नियुजोऽत्र केतुम् ॥१९॥ यथा गोचरेणार्कपुत्रो विधत्ते तथा राहुकेतू फलं साध्वसाधु । विधत्तो मिथो वेधकौ नार्कमंदौ बुधेंदू न यद्वत्तथा राहुकेतू ॥२०॥ विवाहादिसत्कर्मकार्येषु लग्ने विचिंत्यं बलं मंदवद्राहुकेत्वोः । स लत्तानिपातो भवेद्यत्तु- केतोर्विचिंत्यार्कवच्चापि नक्षत्रशुद्धिः ॥२१॥ इतिसंहितादीपके ॥ ३८ ॥

**सर्वंसहात्मजहरीज्यतुषारभासो मित्राणि हंसजसितावहितौ समोऽन्यः॥**
**भानोर्विधो रविविदौ सुहृदावथान्ये मध्याः समावसितभोशनसावरिर्ज्ञः३९**

**अन्येऽसृजः सुहृद इंदुभुवोऽभिघातिः सोमोऽसृगैनि-**
**धिषणाश्च समाः सखायौ । अन्यौ च वासवगुरोरहितौ**
**कविज्ञौ मध्यो यमोंऽशुकुजचंद्रमसोऽप्यतीष्टाः ॥ ४० ॥**

**सौम्यासितावथ भृगोःसुहृदौ रवींदू प्रत्यर्थिनौ त्रिदशवंद्यकुजौ समौ स्तः॥**
**मध्यो गुरुर्भृगुजचंद्रसुतौ यमस्य मित्रेऽपरेऽस्य इतीह मयोच्यतेऽतः ॥४१**

अथ वसंततिलकावृत्तत्रयेण ग्रहाणां मैत्रीचक्रमाह—सर्वेति । अन्येति । सौ- म्याइति । इतीह शास्त्रेऽतो हेतोर्मयोच्यते इति किं तदाह । सर्वंसहाभूमिस्तस्या आत्मजो

भौमः हरीज्यःइंद्रपूज्यो गुरुः तुषारभाश्चंद्र एते भानोर्मित्राणि स्युः । हंसजः सूर्यात्मजः शनिः सितः शुक्र एतौ अहितौ अरी अन्यो बुधः समः । अथ विधोश्चंद्रस्य रविविदौ सूर्यबुधौ सुहृदौ मित्रे अन्ये समाः । चंद्रस्य वैरी नास्ति । अथासृजो मंगलस्य असितभः कृष्णप्रभः शनिरुशना शुक्रः एतौ समौ बुधोऽरिः अन्ये सुहृदो मित्राणि । अथेंदुसुतो बुधस्य सोमोऽभिघातिर्वैरी असृग् भौमः ऐनिः शनिः धिषणो गुरुरेते समाः अन्यौ सखायौ मित्रे । अथ च वासवगुरोरिंद्रगुरोर्बृहस्पतेः कविज्ञौ शुक्रबुधौ अहितौ यमः शनिर्मध्यः समः अंशुः सूर्यः कुजो मंगलश्चंद्रमा एतेऽतीष्टा अतिमित्राणि । अथ भृगोः शुक्रस्य सौम्यो बुधः असितः शनिः एतौ सुहृदौ रवींदू प्रत्यर्थिनौ शत्रू त्रिदशवंद्यो गुरुः कुज एतौ समौ स्तः । अथ यमस्य शनेः गुरुर्मध्यः समः भृगुजः शुक्रः चंद्रसुतो बुध एतो मित्रे अपरेऽरयः शत्रव इति ॥ ३९ ॥ ४० ॥ ४१ ॥

**मूर्तेरथो सविधकेंद्रयुगानुगाश्च तात्कालिका इति सभाजनवंत उक्ताः ॥**
**तज्ज्ञैर्मिथोऽन्यगृहगा अभिघातयोऽतः सर्वत्र राशिवलये द्विजवर्त्ममार्गाः**

अथ तात्कालिकग्रहाणां मैत्रीचक्रमाह—मूर्तेरिति । अथ तज्ज्ञैर्द्विजवर्त्म पक्षिमार्गो नभस्तस्मिन् मार्गो येषां ते द्विजवर्त्ममार्गा ग्रहास्तात्कालिकाः जन्मादिसमयभवाः मूर्तेर्लग्नात् सविधकेंद्रयुगानुगाः पूर्वानुपश्चात् समीपकेंद्रयुग्मगताः । कोऽर्थः । धन २ सहज ३ सुहृ ४ भुवनगताः व्यय १२ ११ कर्म १० भवनगताः मिथः परस्परं सभाजनवंतो मित्राणि उक्ताः । कस्मिन्सर्वत्र राशिवलये अतः परमन्यगृहगा अभिगातयः शत्रवः उक्ताः । आलिंग्य कुशलादिपृच्छा सभाजनं कथ्यते । यतः "आनंदनत्वाप्रच्छनं स्यात्सभाजनमित्यपि" इति हैमः । अभिमानिरभिघातिश्चेति शद्वप्रभेदे साधुसुंदरगणयः ॥ ४२ ॥

**शक्त्यत्रिदेवलवराहविरोचनाद्या मित्रादिकं त्रिगुणभावभृतां ग्रहाणाम्॥**
**युक्त्यन्वितं बभणुरप्यपरैरदो यदुक्तं निसर्गजनितं तदयुक्तिमत्स्यात्॥४३**

अथ सदुक्त्या मतांतरं निषेधयति—शक्त्येति । शक्त्यत्रिदेवलादयः त्रिगुणभावभृतां ग्रहाणां मित्रादिकं मित्रसमशत्रुरूपं तदन्वितं युक्त्यान्वितं बभणुर्जगुः । अपि पुनरपरैर्यत् मित्रादिकं निसर्गजनितं स्वभावजातं न पुनस्तात्कालिकमित्युक्तं तदयुक्तिमत् न युक्तिमत्स्यात् ॥ ४३ ॥

**ज्ञेयः स्वकीयनिलयोच्चसुहृद्गृहस्थोऽवक्री शचीरमणबु-**
**द्धिसहाययुक्तः ॥ धिष्ण्यान्वितो च्चजयी स बली**
**ग्रहेंद्रो यो गोचरादिभवपूर्णफलप्रदः स्यात् ॥ ४४ ॥**

अथ फलदायिग्रहमाह—ज्ञेयइति । यो ग्रहेंद्रो गोचरादिभवपूर्णफलप्रदः स्यात् । स ग्रह एवंविधो ज्ञेयः । स्वकीयेति । स्वकीयनिलयोच्चसुहृद्गृहस्थः निजभवनस्थः उच्चभवनस्थः मित्र-

भवनस्थः अवक्रो मार्गस्थः शचीरमणः पौलोमीपतिरिंद्रस्तस्य बुद्धिसहायः प्रधानो गुरुस्तेन युक्तः धिष्ण्यान्वितः शुक्रयुक्तः मृधजयी संग्रामे जयं प्राप्तः बली ग्रहयुद्धे उत्तरचारी ग्रहो बली इति ॥ ४४ ॥

योऽनुच्चगोऽरिकुलगोऽर्कविलुप्तदीप्तिः पातंग्यसृक्तिमिरदीप्तियुतो विवेगः ॥ सुस्थानगोऽपि खचरो विफलो भचक्रे स्यात्साहितोऽहितखलग्रहवर्गवान्सः ॥ ४५ ॥

अथ विफलग्रहमाह—यइति । यः सुस्थानगः शुभस्थानकगतोऽपि खचरो ग्रहो भचक्रे नक्षत्रमंडले एवंविधः स्यात् । योऽनुच्चगो नीचभवनगतः अरिकुलगः शत्रुगृहगतः "सभोदवसितं कलम्" इतिहैमः । अर्कविलुप्तदीप्तिरस्तंगतः पातंगिः सूर्यस्यापत्यं शनिः । असृग् भौमः तिमिराणामंधकाराणां दीप्तिर्ज्वलनमर्थशक्त्या विनाशो यस्मात् स तिमिरदीप्तिः सूर्य एभिर्युक्तः विगतो वेगो यस्यस मंदः साहितः शत्रुग्रहसहितः अहितः शत्रुः खलग्रहः पापग्रहः एषां द्वंद्वः एषां वर्गः षड्वर्गोऽस्यास्तीत्यहितखलग्रहवर्गवान् । स ग्रहो विफलो निष्फलः स्यात् ॥ ४५ ॥

ककसहोत्थकसून्वहिताबलालयवृषाव्हयकर्म्मफलागमाः ॥ व्यय इतीनमिताः किल भावता निगदिता विबुधैरुदयात्क्रमात् ॥४६॥

अथ द्रुतविलंबितेन द्वादशभवनान्याह—ककेति । किलेति सत्ये विबुधैरुदयाल्लग्नात् क्रमेण इनमिता द्वादशभिर्मिता भावानां भावो भावता निगदिता प्रोक्ता । इतीति किं तदाह । ककेति । कःकायस्तनुभवनं १ कःधनं तद्भवनं २ सहोत्थःसहजभवनं ३ कं सुखभवनं ४ सूनुः सुतभवनं ५ अहितो रिपुभवनं ६ अबला जायाभवनं ७ लयो मृत्युभवनं ८ वृषो धर्मभवनं ९ कर्मभवनं १० फलागमः आयभवनं ११ एषां द्वंद्वः एते व्ययभवनं १२ 'मूर्ध्नि चित्ते जले काये मुखे ब्रह्मणि मारुते । कामे लाभे सुवर्णे च कशब्दो द्रविणेऽध्वनि' १ इत्यनेकार्थध्वनिमंजरी ॥ ४६ ॥

सहजलाभविपक्षनभःस्थितो जनिभतो निखिलार्थसुखप्रदः ॥ भवति विध्यत एव न चेद्रविर्वृषसुतांत्यशगैर्वियमैर्ग्रहैः ॥ ४७ ॥

अथ ग्रहाणां फलमाह तत्र प्रथमं रविफलं—सहेति । चेद्यदि वियमैः शनिरहितैः वृषसुतांत्यशगैः वृषो धर्मः नवमं भवनं ९ एवं सुतः पंचमं अंत्यं द्वादशं ११ शं सुखं चतुर्बंधु ४ एषु गतैर्ग्रहैःरविर्न विध्यते एव तदा रविर्जनिभतो जन्मराशितः सहजलाभविपक्षनभःस्थितः तृतीये ३ कादश ११ षष्ठ ६ दशम १० भवनस्थितो निखिलार्थसुखप्रदो भवति ॥ ४७ ॥

असमहत्येरिखांगबलायगो हिमगभास्तिरनिष्टहरो ग्रहैः ॥ द्रविणरिष्फकगोवृषनाशगैर्यदि न विध्यत इंदुजवर्जितैः ॥ ४८॥

अथ चंद्रफलमाह—असमेति । यदि चेत् इंदुमेन बुधेन वर्जितैर्बुधरहितैः द्रविणं धनं द्वितीयभवनं २ एवं रिष्फं द्वादशं १२ कं सुखं चतुर्थं ४ गौर्बुद्धिः पंचमं ५ वृषो धर्मः नवमं ९ नाशो मृत्युरष्टमं ८ एषां द्वंद्वः एषु गतैर्ग्रहैर्हिमगभस्तिश्चंद्रो न विध्यते तदा चंद्रोऽनिष्ट-हरः सुखदायी स्यात् । किंभूतश्चंद्रः असमा विषमा हेतयः अस्त्राणि यस्य सोऽसमहेतिः कामः जायाभवनं ७ अरिः षष्ठं ६ खं दशमं १० अंगं प्रथमं १ बलं पराक्रमस्तृतीयं ३ आय एकादशं ११ एषां द्वंद्वः एषु गतः ॥ ४८ ॥

**सहजशत्रुफलागमगो भतः सहजमित्रफलागमदो ग्रहैः ।**
**भवति विद्धघनो न हि जन्मनो यदि कुजोंऽत्यतपःप्रतिभास्थितैः ॥४९॥**

अथ भौमफलमाह—सहजेति । यदि अंत्यं द्वादशं १२ तपः नवमं ९ प्रतिमा बुद्धिः पंचमं ५ एषु स्थितैर्ग्रहैर्विद्धो घनः शरीरं यस्य स विद्धघनः कुजो भौमो न भवति तदा कुजः सहजाः सहोदराः मित्राणि चैषां फलागमदो लाभदायी भवति । किंभूतः कुजः जन्मनो जन्मसंबंधिनो भतो राशितः सहजस्तृतीयभवनं ३ शत्रुः षष्ठं ६ फलागम आय एका-दशं ११ एषु गतः ॥ ४९ ॥

**धनसवित्र्यरिकालखलाभगो विधुसुतः शुभकृद्वितभीश्वरैः ।**
**मतिपराक्रमधर्मघनात्ययव्ययगतैर्न खगैर्यदि विध्यते ॥ ५० ॥**

अथ बुधफलमाह—धनेति । यदि वितमीश्वरैश्चंद्ररहितैर्मतिः पंचमं ५ पराक्रमस्तृतीयं ३ धर्म्मो नवमं ९ घनः शरीरं प्रथमं १ अत्ययो मृत्युरष्टमं ८ एषु भवनेषु गतैर्ग्रहैर्विधुसुतो बुधो न विध्यते तदा बुधः शुभकृत् स्यात् । कथंभूतो बुधः धनं द्वितीयभवनं २ सवित्री माता चतुर्थं ४ अरिः षष्ठं ६ कालो मृत्युरष्टमं ८ खं दशमं १० लाभ एकादशं ११ एषु भवनेषु गतः ॥ ५० ॥

**द्रविणलाभवृषस्मरधीस्थितो द्रविणलाभवृषस्मरधीप्रदः ।**
**यदि न विद्ध इहेंद्रगुरुर्ग्रहैर्व्ययविनाशखविक्रमनीरगैः ॥ ५१ ॥**

अथ गुरुफलमाह—द्रविणेति । इह व्ययो द्वादशं १२ विनाशोऽष्टमं ८ खं दशमं १० विक्रमस्तृतीयं ३ नीरं चतुर्थं ४ एषु भवनेषु गतैर्ग्रहैर्न विद्धस्तदेंद्रगुरुः द्रविणं धनं तथा लाभः वृषो धर्मः स्मरः कंदर्पः धीर्बुद्धिरेषां द्वंद्वः एतान् प्रददातीति द्रविणलाभवृष-स्मरधीप्रदो भवति । किंभूत इंद्रगुरुः द्रविणं धनभवनं २ लाभ एकादशं ११ वृषो धर्मो नवमं ९ स्मरः कामो जायाभवनं ७ धीः बुद्धिः पंचमं ५ एषु भवनेषु स्थितः ॥ ५१ ॥

**व्ययलयातनयायतपःस्थितो यदि न विद्धतनुर्द्युचरैः स्वदः ॥**
**अहितबुद्धिलयास्तपुराम्बरक्रतुबलायगतैरसुरार्चितः ॥ ५२ ॥**

अथ शुक्रफलमाह—व्ययेति । यदि अहितः षष्ठं ६ बुद्धिः पंचमं ५ लयोऽष्टमं ८ अस्तं सप्तमं ७ पुरं शरीरं प्रथमं १ अंबरं दशमं १० क्रतुर्यज्ञः उपलक्षणया धर्मो नवमं ९ बलं तृतीयं ३ आय एकादशं ११ एषु गतैर्द्युचरैः खेटैर्विद्धा तनुः शरीरं यस्य सोऽसुरार्चितो शुक्रो न तदा शुक्रः स्वदो धनदायको भवति । किंलक्षणः शुक्रः व्ययो द्वादशं १२ लयोऽष्टमं ८ आतनयं सुतभवनं मर्यादिकृत्य 'आङ्मर्यादायां' कोऽर्थः। प्रथमं१ द्वितीयं२ तृतीयं ३ चतुर्थं ४ पंचमं ५आय एकादशं११ तपो नवमं ९ एषु स्थितः। तपः शब्दोऽकारांतोऽप्यस्ति। अथवा खरि परे शरि विसर्गलोपो वा एवं नभःशब्दादिष्वग्रे ऊह्यम् ॥ ५२ ॥

**शनिरथायबलासहजस्थितो यदि नभादभियातिगणापहः ॥**
**भवति विद्धपुरो जनुषः खगैर्विरविभिर्धिषणांत्यतपःस्थितैः॥५३**

अथ शनिफलमाह—शनिरिति । यदि विरविभिः सूर्यरहितैर्धिषणा बुद्धिः पंचमं ५ अंत्यं द्वादशं १२ तपो नवमं ९ एषु स्थितैः खगैर्विद्ध पुर शरीरं यस्य स विद्धपुरः शनिः तदा शनिः अभियातिगणापहः शत्रुसमूहघातको भवति । किंविशिष्टः शनिर्जनुषो जन्मतो भवनात् राशेः सकाशात् आय एकादशं ११ बलं तृतीयं ३ असहजः शत्रुः षष्ठं ६ एषु स्थितः ॥ ५३ ॥

**अनुगलाभजिघांसुनभःस्थितो निखिलसौख्यकरो हि विधुंतुदः।**
**व्ययसुताध्वरभावनिशांतगैर्यदि न विध्यत एव नभश्चरैः ॥५४॥**

अथ राहुफलमाह—अनुगेति । यदि व्ययो द्वादशं १२ सुतं पंचमं ५ अध्वरो यज्ञो नवमं ९ एषां भावानां निशांतगैर्गृहगतैर्नभश्चरैर्ग्रहैर्विधुंतुदो राहुर्न विध्यते तदा राहुर्हि निश्चितं निखिलसौख्यकरो भवति । किंलक्षणो राहुः अनुगः सेवकस्तृतीयं ३ लाभ एकादशं ११ अभिजिघांसुर्वैरी षष्ठं ६ नभो दशमं १० एषु भवनेषु स्थितः । 'धामागारं निशांतं च' इतिहैमः ॥ ५४ ॥

**शिखिनं प्राहुरगोरपरेऽगुवद्धनमवाह शरैः प्रमिते बुधाः ।**
**नवलवेऽपि चरंतमनारतं जगति सर्वजनार्तिहितोदयम् ॥५५॥**

अथ केतुफलमाह—शिखिनमिति । बुधाः शिखिनं केतुमगुवद्राहुतुल्यमाहुः । अपि पुनरपरे आचार्या अगोराहोर्वनमवाहाः समुद्राः शराः चतुःपंचाशत् ५४ एभिः प्रमिते नवलवे नवांशके चरंतं गच्छंतं शिखिनं केतुं जगति भुवनेऽनारतं निरंतरं सर्वजनार्तिहितोदयं सर्वलोकपीडाकरमाहुः । कोऽर्थोऽश्विनीभाच्चतुर्दशं नक्षत्रं चित्रा तस्या द्वितीयपादे यदागू राहुरायाति तदा रोहिणीशकटवेधोत्पातो भवति विलोममार्गेण अष्टनक्षत्रं पुनर्वसुयावत् ॥५५

**परकुले गमनं निशि साहसं हृतिगमः क्रियते न तरीस्थितिः ।**
**जनपदांतरयानमनिष्टदैर्नरखरेण शकुंत्ययनायनैः ॥ ५६ ॥**

अथानिष्टग्रहे करणीयं निषेधयति—परेति । शकुंतीनां पक्षिणामयनं मार्गो यस्मिंस्तद्व्योम तस्मिन्नयनं येषां ते तैर्ग्रहैरनिष्टैः कृत्वा नरवरेण निशि रात्रौ परकुले परगृहे गमनं न क्रियते । पुनः साहसं हठात् हृतिगमो हृत्यै हरणाय गमनं न क्रियते । एवं तरीषु नौषु स्थितिरुपविष्टता न पुनर्जनपदांतरयानं देशांतरप्रयाणमिति ॥ ५६ ॥

**खगवरे नरदेवनिभालनं वरतरं रुधिरे प्रविदारणम् ।**
**अखिलशास्त्रविबोधनमिंदुजे बलिनि मंत्रिणि दोर्ग्रहणव्रतम् ५७**

अथ यस्मिन्वारे यत्करणीयं तदाह—खगेति । खगवरे रविवारे नरदेवनिभालनं भूपदर्शनं वरतरं श्रेष्ठतरं स्यात् । रुधिरे भौमे प्रविदारणं छिन्नकर्म्म वरतरं । इंदुजे बुधेऽखिलशास्त्रविबोधनं समस्तशास्त्रज्ञानं वरतरं । बलिनि बलयुक्ते मंत्रिणि गुरौ वारे दोर्ग्रहणव्रतं पाणिग्रहणव्रतं वरतरं स्यात् । 'रुधिरं घुसृणे रक्ते रुधिरो धरणीसुते' इतिहैमः ॥ ५७ ॥

**दितिजमंत्रिणि यानमलं भवेदसितगुर्बलवानथ दीक्षणे ॥**
**कृतिभिरप्युदिता निखिलाः क्रिया हरिणलक्ष्मणि वीर्यवतीष्टदाः॥५८**

दितिजेति । दितिजमंत्रिणि दैत्यप्रधाने शुक्रे यानं भवेत् । अथ दीक्षिणे[1] दीक्षितनराय दीक्षणे दीक्षायां वा असितगुः शनिर्बलवान् स्यात् । अथ कृतिभिः पंडितैर्वीर्यवति बलयुक्ते हरिणलक्ष्मणि चंद्रे निखिलाः क्रिया इष्टदा उदिताः प्रोक्ताः । अलमित्यवधारणे ॥ ५८ ॥

**उचितमैन्दवमंगभृतां बलं बलिनि चैव विलोकयितुं पदं ॥**
**पदमशेषसुकर्मगणे सदा स्युरुडुपे बलिनोऽखलखेचराः[2] ॥५८॥**

अथ चंद्रबलं विशिनष्टि—उचितमिति । अंगभृतां देहिनां बलं विलोकयितुं पदं पदं पदेपदे ऐंदवं चंद्रसंबंधि बलं उचितं योग्यं । च पुनस्तदेवाह बलिनि बलयुक्ते उडुपे चंद्रे सति अखलखेचराः सौम्यग्रहाः अशेषसुकर्मगणे समस्तशुभकार्यसमूहे सदा बलिनः स्युः । अखिलखेचरा इत्यपि[3]पाठः ॥ ५९ ॥

**विषमखेटनिकायफलार्णवं तरितुमिंदुबलोत्कटबेडया ॥**
**अनुदिनं धवलांशुबलं नरः क्षम उपास्यमतोऽस्ति विशेषतः॥६०**

विषमेति । नरः इंदुबलमेव उत्कटा उत्कृष्टा बेडा तरी तया इंदुबलोत्कटबेडया कृत्वा विषमाः खलाः क्रूरा ये खेटास्तेषां निकाया गृहशब्दपर्यायत्वात् भावास्तेषां फलमेव अर्णवः समुद्रस्तं तरितुं क्षमोऽस्ति । अतः कारणात् अनुदिनं दिने दिने विशेषतो धवलांशुबलं चंद्रबलं उपास्यं सेवनीयं 'निकायः पक्षसंवयोः' इति हैमः ॥ ६० ॥

**सदोदितं चंद्रमसः प्रधानं बलं बुधैः कर्म्मसु वाखिलेषु ॥**
**अमोदरेहर्नवकेन चांद्रं तत्रैव ताराबलमप्यतीष्टम्[4] ॥ ६१ ॥**

---

१ दीक्षणे । २ बलिनः किलखेचराः इत्यपिपाठः क्वचिदस्ति तत्र किलेति निश्चयेनेति वाच्यम् । ३ अयमेव पाठः सुष्ठुतरो भाति । ४ मप्यभीष्टम् ।

अथोपजात्या क्षीणचंद्रे ताराबलमाह—सदोदितमिति । सदा बुधैरखिलेषु कर्मसु चंद्रमसो बलं प्रधानं उचितं कथितं वेति पक्षांतरे । अमोदरेऽमावास्याया उदरे मध्येऽह्नर्नवके कोऽर्थः । अमावास्यातिथेः प्राक्दिनचतुष्कं पश्चाद्दिनचतुष्कं । अमातिथिना सह नवदिनानि एषु चांद्रं बलं न कथितं । अपि पुनस्तत्राह्नर्नवके ताराबलमेवातीष्टमतिशयेन शुभम्॥६१॥

तारा भवेयुर्जनिभादतोभान्नवेति शश्वद्दशमाच्च सौम्याः ॥
त्रिपंचसप्त प्रविहाय सर्वाः शरीरिणां मध्यफला तथाद्या ॥६२॥

अथ शुभाशुभतारामाह—तारेति । शश्वत् सदा ताराः जनिभाज्जन्मनक्षत्रात् । पुनर्दशमाद्भात् नक्षत्रात् । अत्रानुक्तादपि एकोनापि एकोनविंशतितमनक्षत्राच्च नवसंख्याका भवेयुः । त्रिर्नव सप्तविंशतिरित्यर्थः । तासु त्रिपंचसप्ततृतीयापंचमीसप्तमीताराः विहाय सर्वास्ताराः शरीरिणां सौम्याः शुभाः तथा आद्या प्रथमा तारा मध्यफला स्यात् ॥ ६२ ॥

राजा हि तारेयबलेन राज्ञो बलादशीतद्युतिरुष्णभासः ॥
सर्वे नभोगा बलिनो बली स्याद्भवंत्यगुः स्वाद्बलतो बलीयान् ॥ ६३ ॥

अथ ग्रहबलेन बलिग्रहमाह—राजेति । हीति विशेषार्थे तारेयबलेन तारासंबंधिबलेन राजा चंद्रो बली स्यात् । राज्ञश्चंद्रस्य बलात् अशीतद्युतिः सूर्यो बली स्यात् । उष्णभासः सूर्यस्य बलात् सर्वेण बलेन नभोगा ग्रहा बलिनो भवंति । अगुः राहुः स्वाद्बलतो निजबलात् बलीयान् बलिष्ठः स्यात् ॥ ६३ ॥

ददाति पीयूषघनो नराणामसौ फलं धीधनधर्मगो भात् ॥
असाधु वा साधु फलेन तुल्यं स्वरर्चितांघ्रेरपि वर्द्धमानः ॥६४॥

अथोपेंद्रवज्रया चंद्रस्य शुभाशुभफलमाह—ददातीति । भात् जन्मराशितो धीर्बुद्धिः पंचमं ५ धनं द्वितीयं २ धर्मो नवमं ९ एषु राशिषु गतः पीयूषघनोऽमृतमयदेहश्चंद्रो वर्द्धमानः शुक्लपक्षभवो नराणां साधुफलं ददाति । किंभूतं फलं स्वरार्चितांघ्रेः स्वःशब्देन स्वर्गिण आधारे आधेयोपचारात् तैरर्चितौ अंघ्री पादौ यस्य स तस्य गुरोः फलेन तुल्यं । यथा पंचमद्वितीयनवगराशिगो गुरुः शुभ इति वेति पक्षांतरे यदासौ क्षीणश्चंद्रस्तदा पंचमो द्वितीयो नवमश्चंद्रो असाधुफलं ददाति ॥ ६४ ॥

शक्तिस्तुषारांशुफलं परेषां दिवौकसां वस्तुफलं प्रकल्प्यम् ॥
शक्त्या हि वस्तुत्वमथैति मात्रा यथोष्णशक्त्यैव तनूनपात्स्यात् ॥६५

अथोपजात्या सर्वग्रहेषु शक्तिरूपेण चंद्रफलमाह—शक्तिरिति । तुषारांशुफलं चंद्रफलं शक्तिराधेयः कथ्यते परेषामन्येषां दिवौकसां ग्रहाणां फलमाधारपदार्थः प्रकल्प्यं प्रकल्पनीयं । अथ हि यतो मात्रा किंचित्पदार्थरूपः शक्त्या वस्तुत्वं वस्तुभावमेति प्राप्नोति । अत्र वस्तु आधारः वस्तुत्वमाधेयः यत्राधेयसद्भावस्तत्राधारस्यापि सद्भावोऽप्युतसिद्धसंबंधत्वात् ।

नहि घटत्वं विना घटोत्पत्तिः । दृष्टांतमाह यथेति । उष्णशक्त्यैव तनूनपात् अग्निः स्यात् । यत्रोष्णत्वं तत्र वन्हिरिति मात्रापरिच्छेदे । 'अक्षरावयवे द्रव्ये मानेऽल्पे कर्णभूषणे । कालवृत्ते ' इति हैमः ॥ ६५ ॥

**अतो विलग्नेऽखिलकर्मराशावहस्करांश्वीरितदीप्तिवीर्यम् ॥**
**प्राप्ताखिलाग्रायनपौरुषेऽपि विलोकनीयं सततं सुधीभिः ॥ ६६ ॥**

अथातोऽवश्यं वर्द्धमानचंद्रबलादानतामाह—अतइति । अतः पूर्वोक्तिशक्तिहेतुत्वात् सततं सदा सुधीभिर्विलग्ने राशिचक्रेऽहस्करस्य सूर्यस्यांशुभिः किरणैरीरिता प्रेरिता दीप्तिर्यस्य स वर्द्धमानचंद्रस्तस्य बलं वीर्यं विलोकनीयं कस्मिन् अखिलकर्मराशौ समस्तकार्यसमूहे । कथंभूते विलग्ने प्राप्ता अखिलाः समस्ता अग्रयाना ग्रहास्तेषां पौरुषं बलं येन तत्तस्मिन्नपीति॥६६

**अनंतरं दोर्ग्रहतो नराणामालोकयेत्तारकराजवीर्यम् ॥**
**अपास्य सीमंतनिषेककृत्यमर्वागतस्तच्च नितंबिनीनाम् ॥ ६७ ॥**

अथ चंद्रबलग्रहणे विवेकतामाह—अनंतमिति । सुधीर्नराणां दोर्ग्रहतो विवाहादनंतरं तारकराजस्य चंद्रस्य वीर्यं बलमालोकयेत् । चपुनरतः पाणिग्रहणादर्वाक् नितंबिनीनां स्त्रीणां तच्चंद्रबलमालोकयेत् । किंकृत्वा सीमंतकर्म्मे 'अग्रहणी' इति भाषायां । निषेककर्म्मे गर्भाधानकर्म्मे द्वंद्वे प्रत्येकयोजनात् । अपास्य विहाय सीमंतगर्भाधानकर्मणी भर्तुर्न स्त्रियास्तु चंद्रबलं विलोकनीयमित्यर्थः । कर्म्मशब्दोऽकारांतोऽप्यस्ति ॥ ६७ ॥

**पतिंवरोल्लंघ्य वराय दद्यात्स्वकर्म्मवत्सप्तपदाचलं च ॥**
**सौभाग्यमष्टांगमतस्ततस्तद्योज्यं खगाद्युत्थफलं तदर्ये ॥ ६८ ॥**

अथ कन्यावरयोः पूर्वापरचंद्रबलग्रहणे हेतुमाह—पतिंवरेति । पतिंवरा कन्या सप्तपदाचलं चतुर्मंगलवर्तनानंतरं । अथातोश्मानमारोहयत्युत्तरतोऽग्नेर्दक्षिणपदेन स्वांगुष्ठं गृण्हामीत्यादिगृह्योक्तं धान्यनिर्मितसप्तपुंजरूपं उल्लंघ्य अतिक्रम्य वराय भर्त्रेऽष्टांगं सौभाग्यं दद्यात् । यतः "पादौ कर्णौ शिरो बाहू कंबो नासाक्षिणी तथा । ललाटं सुभगस्त्रीणामेवमष्टांगमुच्यते" । कीदृशसौभाग्यं स्वकर्म्मवत् निजकर्मतुल्यं । चपुनः । ततः कारणादतोऽस्मिंस्तदर्ये तस्याः कन्याया अर्यो भर्त्ता तस्मिन् भर्त्तरि यत् खगाद्युत्थफलं योज्यमिति॥६८

**पाणिग्रहांगादिविधौ नृनार्योः पित्रोरदश्चंद्रमसो विचिंत्यम् ॥**
**राशौ बलं नेतुरगारकाणां तथानुगानां च युधि ध्वजिन्याः ॥६९॥**

अथ चंद्रबलविलोकनीयस्थानमाह—पाणिग्रहेति । पाणिग्रहांगादिविधौ विवाहप्रारंभकार्यविधाने नृनार्योः वरवध्वोः पित्रो राशौ अदश्चंद्रमसो बलं विचिंत्यम् । च पुनरगा-

रकाणां नेतुः स्वामिनो राशौ चंद्रबलं विचिंत्यं । तथा युधि संग्रामे ध्वजिन्याः सेनाया अनुगानां स्वामिनां राशौ चंद्रबलं विचिन्त्यम् । अनुगः स्वामीसेवकयोरित्यनेकार्थः ॥६९॥

न दोहदस्यामृतपिंडसारं भिक्षोरुपात्ताध्वरदैवतस्य ॥
सहस्रचंद्रव्रतकर्तुराद्यैरसाधु वा साधु न चिंतनीयम् ॥ ७० ॥

अथ चंद्रबलस्यानवलोकनीयस्थानमाह—नदोहदस्येति । अमृतस्य पिंडोऽगं यस्य-सोऽमृतपिंडश्चंद्रस्तस्य सारं बलं दोहदस्य दौर्हृदस्य साधु वाऽसाधु न चिंतीनय । एवं भिक्षोर्योगिनश्चंद्रबलं न चिंतनीयं । एवं उपात्ताध्वरदैवतस्य गृहीतयज्ञदेवस्य प्रारब्धयज्ञक-र्तुश्चंद्रबलं न विचिन्तनीयम् । पुनः सहस्रचंद्रव्रतकर्तुः चतुरशीति ८४ तमे वर्षे सहस्रचंद्रव्रतमुक्त-तत्कारकस्य चंद्रबलं न चिन्तनीयं आद्यैः पंडितैरिति ॥ ७० ॥

नरेषुभूपंचनवद्वितर्कदिगग्न्यगाब्धीभहरेनतुल्याः ॥
क्रमेण भानामविपूर्वकाणामनूष्मभासः किल कालसंज्ञाः ॥ ७१ ॥

अथोपेंद्रवज्रया कालचंद्रमाह—नरेष्विति । किलेति सत्ये नरेषु पुरुषेषु क्रमेणाविपू-र्वकाणां मेषादीनां भानां राशीनां भूपंचादिभिस्तुल्या मिता अनूष्मभासश्चंद्राः कालसंज्ञाः स्युः । कोऽर्थः । मेषराशेर्नरस्य भूरेको जन्मचंद्रो घातकः । एवं वृषस्य पंचमश्चंद्रः । मिथुनस्य नवमः । कर्कस्य द्वौ द्वितीयः । सिंहस्य तर्काः षष्ठः । कन्याया दिक् दशमः । तुलाया अग्नयस्तृतीयः । वृश्चिकस्य अगाः पर्वताः सप्तमः । धनुषोऽब्धिःसमुद्रश्चतुर्थः । मकरस्य इभा अष्टमः । कुंभस्य हरः शिव एकादशः । मीनस्य इनाः सूर्याः द्वादशः एषां द्वंद्वः एभिस्तुल्याः ॥ ७१ ॥

रूपाह्यगांकांगगुणागमाश्विदिगीश्वरेषूष्मकरैरभिन्नाः ॥
मेषादिकानां विधवो वशासु ज्ञेयाः सदा कालकलार्तिदा वा ॥७२॥

अथोपजात्या स्त्रीणां कालचंद्रमाह—रूपेति । वेति स्त्रीपक्षे वशासु स्त्रीषु मेषादिकानां राशीनां रूपादिभिरभिन्नास्तुल्याः विधवश्चंद्राः सदा कालो यमस्तस्य कला निधानं संहर-णादिरूपं तद्वत् आर्तिदाः पीडाकरा ज्ञेयाः बुधैरितिशेषः । रूपेति । मेषस्य रूपं एकः १ वृषस्य अहिरष्टमः ८ मिथुनस्यागाः सप्तमः ७ कर्कस्य अंको नवमः ९ सिंहस्य अंगं षष्ठः ६ कन्याया गुणास्तृतीयः ३ तुलाया आगमाश्चतुर्थः ४ वृश्चिकस्य अश्विनौ द्वितीयः २ धनुषो दिग् दशमः १० मकरस्य ईश्वर एकादशः ११ कुंभस्य इषुः पंचमः ५ मीनस्य ऊष्मकरो द्वादशः एषां द्वंद्वः एभिस्तुल्याः ॥ ७२ ॥

वधूप्रवेशे युधि यानगेहक्रियाविवाहेषु हलप्रवाहे ॥
नृपाभिषेकाभरणास्त्रधृत्योरनिष्टदः स्यात्किल कालचंद्रः ॥७३॥

अथोपेंद्रवज्रया यत्र स्थाने कालचंद्रो हेयस्तदाह—वध्विति । किलेति भावनायां वधूप्रवेशे पुनर्युधि संग्रामे पुनर्यानमेहक्रियाविवाहेषु पुनर्हलप्रवाहे पुनर्नृपाभिषेकः आभरणस्य अस्त्रस्य च धृतिर्धारणं तयोर्नृपाभिषेकाभरणास्त्रधृत्योः एषु कालचंद्रोऽनिष्टदः स्यात् ॥ ७३ ॥

**राज्ञोऽजपूर्वेष्वथ कालगेहादेकैकवृद्ध्या गदिताः क्रमेण ॥**
**विद्धिष्ण्यहेल्यारसुरेज्यमंदाः शरीरिणां राशिषु कालसंज्ञाः ॥७४॥**

अथोपजात्या शेषषड्ग्रहाणां कालसंज्ञामाह—राज्ञइति । अथ अजपूर्वेषु मेषादिराशिषु राज्ञश्चंद्रस्य कालं गेहात् क्रमेणैकैकवृद्ध्या विद् बुधः धिष्ण्यः शुक्रः हेलिः सूर्यः आरो भौमः सुरेज्यो गुरुः मंदः शनिश्चैते शरीरिणां कालसंज्ञाः गदिताः । कोऽर्थः । यस्य यस्य नरस्य यावत्संख्याकः कालचंद्रराशिस्तस्मादेकैकवृद्धिः कर्त्तव्या । यथा मेषराशौ जन्मचंद्रो घातस्तस्य द्वितीयो बुधो घातः । एवं तृतीयः शुक्रश्चतुर्थो रविः । पंचमो भौमः । षष्ठो गुरुः । सप्तमः शनिरेते कालसंज्ञाः । एवं यथा धनुराशेः पुरुषस्य चतुर्थः कालचंद्रस्तस्य पंचमो बुधः कालसंज्ञ इत्येवमेकैकवृद्ध्या सर्वेऽपि ज्ञातव्याः ॥ ७४ ॥

**नभश्चरः संक्रमतः स्वतोऽर्वाक् स्वभोगराश्यंशभितैरहोभिः ॥**
**अधिष्ठितर्क्षादपि चैष्यराशेरलं फलं यच्छति मूर्तिमत्सु ॥७५॥**

अथोपेंद्रवज्रया ग्रहस्यागामिकराशिफलमाह—नभेति । नभश्चरो ग्रहः स्वतः संक्रमतो वर्त्तमानराशिस्थादर्वाक् पूर्वं स्वभोगराश्यंशमितैर्निजभोगराशेस्त्रिंशन्मितैरहोभिर्दिनैरधिष्ठितर्क्षात् आक्रांतराशेः सकाशाच्चैष्यराशेरागामिकराशेः फलं शुभमशुभं मूर्तिमत्सु नरेषु यच्छति ददाति । विशेषार्थस्त्वयं सूर्यो गंतव्यराशेः प्राक् पंच दिनानि फलदः स्यादेवं भौमोऽष्टदिवसान् । बुधः सप्त दिनानि शुक्रः सप्त दिनानि चंद्रो घटीत्रयं राहुर्गंतव्यराशेः पूर्वं त्रिमासान् शनिः षण्मासान् गुरुर्मासद्वयं फलदः स्यादिति ॥ ७५ ॥

**यद्राशिगा स्याद्युतिरभ्रमार्गयोर्जनस्य तद्राशिवतोऽशिवं भवेत् ॥**
**यस्याणु बिंबं ग्रहणं तयोरिह ग्रहस्य तस्यैव तमोवृतस्य च ॥७६॥**

अथोपजात्या युतिग्रहणाधिकारे विवेकमाह—यद्राशीति । अभ्रमार्गयोर्ग्रहयोर्युतिः संयोगः । यद्राशिगा यश्चासौ राशिश्च तं गच्छतीति यद्राशिगा स्यात् । सचासौ राशिश्च तद्राशिस्तद्राशिवतो जनस्याशिवमशुभं भवेत् । च पुनस्तयोर्ग्रहयोरिह संयोगे यस्य ग्रहस्याऽणु बिंबं सूक्ष्मं मंडलं भवति तस्य तमोवृतस्य तमसाच्छादितस्य ग्रहणं भवति ॥ ७६ ॥

**बलाय वैयं वरगोऽशुभेतरो राशिर्धनाद्यात्मजधर्मगः समः ॥**
**ग्रात्यो मदांत्यात्ययवारिगोऽधमो राशेर्भवेन्नामवतश्च जन्मनः ॥७७॥**

अथ ग्रहणसमये वर्तमानचंद्रराशिशुभाशुभमाह—बलेति । ग्रहणसमये नामवतः पुरुषस्य जन्मनो राशेः सकाशात् बलं तृतीयं ३ आय एकादशं ११ वैरी षष्ठं ६ अंबरं दशमं १० एषु गतो राशिरशुभेतरः शुभो ग्राह्यः । पुनर्द्धनं द्वितीयं २ आद्यः प्रथमः १ आत्मजः सुतः पंचमं ५ धर्म्मो नवमं ९ एषु गतो राशिः समो ग्राह्यः । पुनर्मदः सप्तमं ७ अंत्यो द्वादशं १२ अत्ययोऽष्टमं ८ वारि चतुर्थं ४ एषु गतो राशिरधमो भवेदिति ॥ ७७ ॥

**शुभः शुभाय ग्रहणाच्छरीरिणां समश्च साधारणकामसिद्धये ॥**
**इहाधमोऽनिष्टफलाय पार्वणो राशिर्भवेदाग्रहणं युतेरिति ॥ ७८ ॥**

अथैतादृग्राशीनां फलमाह—शुभेति । इह लोके शरीरिणां पर्वणि भवः पार्वणो ग्रहणगतराशिर्ग्रहणाच्छुभः शुभाय स्यात् । च पुनरेवं समः साधारणकामसिद्धये भवेत् । पुनरधमोऽनिष्टफलाय भवेत् । इत्यनेन प्रकारेण भौमादीनां युतेः सकाशात् आग्रहणमयमर्थो ग्राह्यः । युतेरारभ्य आग्रहणं ग्रहणपर्यंतं तेन युद्धादिग्राह्यमित्यर्थः ॥ ७८ ॥

**खगेरितासाधुफलं जनेन तदर्चयायत्तदितं वरेण्यम् ।**
**सदौषधिस्नानविधानहोमापवर्जनेभ्योऽभ्युदयाय वा स्यात ॥ ७९ ॥**

अथोपेंद्रवज्रया ग्रहाणामनिष्टफले शांतिस्नानद्वारमाह—खगेति । यदा जनेन कर्तृपदेन यत् खगेनेरितं प्रेरितमसाधुफलमनिष्टफलमितं प्राप्तं तदा तदयया श्रद्धया तदर्चया तद्ग्रहपूजनेन तदशुभं वरेण्यं श्रेष्ठं स्यात् । केभ्यः सदौषधीभिर्भव्यौषधीभिः स्नानविधानं १ होमः २ अपवर्जनं दानं ३ एभ्य इति ग्रहकृपयाभ्युदयाय वा स्यादिति पाठांतरम् ॥ ७९ ॥

**काश्मीरयष्टीमधुपद्मकैलामनःशिलोशीरवसंतदूतिभिः ॥**
**सदारुभिःस्यादहिते खरांशौ निमज्जनं नुःकिल कर्मसिद्ध्यै ॥ ८० ॥**

अथोपजात्यानिष्टसूर्ये शांतिस्नानमाह—काश्मीरेति । किलेति सत्ये । खरांशौ सूर्येऽहितेऽनिष्टे सति नुः पुरुषस्य कर्मसिद्ध्यै ईप्सितप्राप्तये मज्जनं स्नानं स्यात् । काभिः काश्मीरं केसरं घुसृणं यष्टी मधु प्रतीतं पद्मकस्तरुविशेषः । कमलफलं कमलकाकडी । एला एलची प्रतीता मनःशिला 'मनशिल' इतिभाषायां उशीरं वीरणीमूलं वसंतदूतिः पाटला एताभिः किंभूताभिः सदारुभिर्देवदारुसहिताभिः । कोऽर्थः । एता ओषधीजलभृतकुंभे निक्षिप्य स्नानं कर्तव्यमित्यर्थः । 'स्नेहवृक्षं महादारु भद्रा दार्व्यं च दारु च' इतिनिघंटुः 'पाटलायां तु स्थली वसंतदूती स्यात् ' इतिनिघंटुः ॥ ८० ॥

**सपंचगव्यैः स्फटिकेभदानात्रिपत्रमुक्तांबुजमुक्तिशंखैः ॥**
**तुषारभास्याप्लवनं नृपाणामुक्तं हि तुष्टै विषमे ग्रहज्ञैः ॥ ८१ ॥**

अथानिष्टचंद्रे शांतिस्नानमाह—सपंचेति । तुषारभासि चंद्रे विषमेऽनिष्टे सति निश्चितं ग्रहज्ञैः तुष्टये तोषाय नृपाणां राज्ञामाप्लवनं स्नानमुक्तं कथितं । पंचगव्यादिसहितैर्जलैः पंच-

गव्यं गोदुग्धं १ दधि २ घृतं ३ विट् ४ मूत्रं ५ स्फटिको दपच्छेदः इभदानं गजमदः त्रिपत्रको बिल्वः मुक्ताफलं अंबुजं कमलं शुक्तिशंखौ प्रतीतौ एभिः ॥ ८१ ॥

**स्याच्चंदनश्रीफलहिंगुलीकश्यामाबलामांस्यरुणप्रसूनैः ॥**
**ह्रीबेरचांपेयजयांकुराढ्यैः स्नानं कुदायादकृताशिवघ्नम् ॥ ८२ ॥**

अथेंद्रवज्रयानिष्टे भौमे शांतिस्नानमाह—स्याच्चन्दनेति । चंदनादिभिः स्नानं कोर्भूमेर्दायादः पुत्रो भौमस्तेन कृतमाशिवं हंतीति कुदायादकृताशिवघ्नं भौमकृतोपद्रवहरं स्यात् । चदनं मलयजं श्रीफलो बिल्वः हिंगुलीकः ओषधीविशेषः श्यामाः प्रियंगवः बला बलबीजः मांसिः मरुमांसिः अरुणप्रसूनानि रक्तपुष्पाणि एषां द्वंद्वः एभिः । किंभूतैः ऱ्हीबेरं बालकं चांपेयं नागकेशरं जपांकुरा ओंड्रपुष्पकिसलयाः एभिराढ्यैर्युक्तैः 'नागपुष्पं मतं नागं केसरं नागकेसरं । चांपेयं नागकिंजल्कं कनकं हेम कांचनं' १ इतिनिघंटुः 'ओंड्रपुष्पंतुजपा' इतिहैमः ॥ ८२ ॥

**सहेममूलाक्षतमौक्तिकेयैर्गोरोचनक्षौद्रफलैः सगव्यैः ॥**
**हिताय साद्भिर्विषमे नराणां निमज्जनं चांद्रमसायने स्यात् ॥८३॥**

अथोपजात्या बुधे शांतिस्नानमाह—सहेमेति । चांद्रमसायने बुधे विषमेऽनिष्टे सति नराणामेभिः सह मज्जनं हिताय स्यात्तदाह गोरोचनं गोपित्तं क्षौद्रं मधु फलं मदममीढल १ फलं एभिः किंभूतैरेभिः सगव्यैः पंचगव्ययुक्तैः । पुनः किंभूतैः । सहेममूलाक्षतमौक्तिकेयैः हेम नागकेसरं मूलं पुष्करमूलं अक्षता लाजाः मंगलतंदुलाः 'लाजाःस्युःपुनरक्षता' इतिहैमः। मौक्तिकेयं मुक्ताफलं एभिः सह वर्तमानैः पुनः किंभूतैः साद्भिः जलैः सह वर्तमानैः ॥ ८३ ॥

**सिद्धार्थयष्टीमधुनीरमालतीप्रसूनयूथीप्रसवैः सपल्लवैः ॥**
**रिष्टं यदीज्याद्विषमस्थितादितं शिवाय यैस्तेष्वरुहं निमज्जनम् ॥८४॥**

अथानिष्टगुरौ शांतिस्नानमाह—सिद्धार्थेति । यदि चेत् यैर्नरैर्विषमस्थितात् क्रूरस्थितात् इज्याद्गुरोः सकाशात् रिष्टं कष्टं इतं प्राप्तं तेषु नरेषु शिवाय निमज्जनं प्रोक्तं किंभूतं निमज्जनं अरुहं न विद्यते रुट् जन्म कष्टोत्पत्तिर्यस्मात्तत् । अथवारुहं दूर्वारहितं 'हरितालिरुहा पोट' इति हैमः । सिद्धार्थः श्वेतसर्षपः यष्टीमधु प्रतीतं नीरं बालकं मालतिप्रसूनानि जातिपुष्पाणि यूथीप्रसवाः मागधीपुष्पाणि एभिः किंविशिष्टैः सपल्लवैः पल्लवयुक्तैः ॥ ८४ ॥

**ना शंबरैलाफलमूलकुंकुमैः सपुंडरीकैः शिलया समन्वितैः ॥**
**कवीरितानिष्टविघातहेतवे स्नायादनब्जैरिति कश्चिदाह वा ॥८५॥**

अथानिष्टे शुक्रे शांतिस्नानमाह—नाशमिति । ना पुरुषः कविना शुक्रेण ईरितं प्रेरितमनिष्टमशुभं तस्य विघातहेतवे स्नायात् । कैः सपुंडरीकैः श्वेतकमलसहितैः शिलया मनःशिलया समन्वितैः । शंबरं जलपर्यायत्वाद्बालकं एलाफलं प्रतीतं मूलं पुष्करमूलं कुंकुमं काश्मीरं एषां द्वंद्वे एभिः वा इति पक्षांतरे कश्चिदनब्जैरित्याह कमलानि विहाय स्नायादिति कथयति॥८५॥

**बलांजनश्यामतिलैः सलाजैः सरोद्रजीमूतशतप्रसूनैः ॥**
**यमानुजादासमनिष्टमुग्रं विलीयते मज्जनतोऽप्यशेषम् ॥ ८६ ॥**

अथेंद्रवज्रयानिष्टे शनौ शांतिस्नानमाह—बलेति । यमस्यानुजो लघुभ्राता शनिस्तस्मादाप्तं प्राप्तमुग्रं दारुणमशेषं समस्तं विलीयते नाशं प्राप्नोति कर्त्तुःक्तिः। कस्मात् मज्जनतः स्नानात् कैः बला बलबीजः अंजनं कृष्णसौवीरं श्यामतिलः कृष्णतिलः एषां द्वंद्वे एभिः किंविशिष्टैः सलाजैः व्रीहिसहितैः पुनः किंभूतैः रोद्रः 'रोहीडो इतिभाषा' जीमूतः मुस्ता शतप्रसूनाः 'सूर्या इतिभाषा' एषां द्वंद्वे एभिः सहवर्त्तमानैस्तैः 'शतपुष्पामिशिवोषा' इति निघंटुः ॥ ८६ ॥

**सलोध्रगर्भेण मदेभदानैरर्णोंबुदश्रीफलपर्णवर्णैः ॥**
**हरेदभद्रं विषमागुजातं शरीरिणामाप्लवनं सदूर्वैः ॥ ८७ ॥**

अथोपजात्यानिष्टे राहौ शांतिस्नानमाह—सलोध्रगर्भेणेति । आप्लवनं स्नानं शरीरिणां विषमागुजातं दुष्टराहुजातमभद्रं कष्टं हरेत् । कैः अर्णःजलपर्यायत्वाद्बालकं अंबुदो मुस्ता श्रीफलपर्णानि बिल्वपत्राणि वर्णं घुसृणं 'वर्णं लोहितचंदनं' इति हैमः । एषां द्वंद्वः एतैः किंभूतैः लोध्रः प्रतीतः लोध्रो गर्भे मध्ये यस्य स लोध्रगर्भः अथवा गर्भः पनसः कंटक इत्यपि एणमदः कस्तूरी इभदानं गजमदः एभिः सहवर्त्तमानैः पुनः किंभूतैः सदूर्वैः दूर्वासहितैः ॥ ८७ ॥

**शिखामृदार्तितिलपत्रिकाब्दसारंगनाभीभमदांबुरौद्रैः ॥**
**निषेधतीहाविकमूत्रमिश्रैः स्नानं नुराब्यैः करकामृताभ्याम् ॥८८॥**

अथानिष्टे केतौ शांतिस्नानमाह—शिखेति । इह लोके स्नातुर्नरस्य शिखामृदार्त्तिः केतुपीडा निषेधति निराकरोति कैः तिलपत्रिका रक्तचंदनं 'रतांजणी इति भाषा' 'रजनं तिलपर्णिका' इति हैमः । अब्दो मुस्ता सारंगनाभिः कस्तूरी इभमदो गजमदः अंबु बालकं रौद्र एषां द्वंद्वः एभिः किंविशिष्टैः आविकमूत्रमिश्रैः मेषमूत्रसंयुक्तैः पुनः किंभूतैः करकः 'घनोपलस्तुकरकः' इति हैमः । अमृता गुडूची आभ्यामाढ्यैर्युक्तैः ॥ ८८ ॥

**तिलांबुजोशीरकपूतिकाष्ठैः ससर्षपक्षौद्रशमींद्रदूर्वैः ॥**
**सूर्योपरागे विषमे नराणां भाङ्या युतैर्मज्जनमिष्टदं स्यात ॥८९॥**

अथ सूर्यग्रहणे शांतिस्नानमाह—तिलांबुजेति । सूर्योपरागे सूर्यग्रहणे विषमेऽनिष्टे सति नराणां मज्जनमिष्टदं शुभकृत्स्यात् । कैः तिलः अंबुजं कमलं उशीरकं वीरणीमूलं कं बालकं पूतिकाष्ठं देवदारु एषां द्वंद्वः एभिः किंविशिष्टैः सर्षभऋषभनामौषधियुक्तं क्षौद्रं मधु शमी प्रसिद्धा इंद्रः इंद्रयवः दूर्वा शतपर्विका आभिः सह वर्त्तते तैः पुनः किंभूतैःभाङ्र्या युतैः प्रतीतम् ॥ ८९ ॥

पाथः शमीकोकनदैरनिष्टे विधूपरागे तिलदारुवर्णैः ॥
सिद्धार्थदूर्वामधुकालमेयैरनिष्टनाशाय तु मज्जनं स्यात् ॥ ९० ॥

अथानिष्टे चंद्रग्रहणे शांतिस्नानमाह—पाथइति। अनिष्टे विधूपरागे चंद्रग्रहणे मज्जनमनिष्टनाशाय स्यात्। कैः पाथोः जलं पर्यायत्वाद्वालकं शमी केशघ्नी कोकनदं रक्तकमलं तु पुनः तिलाः दारु देवदारु वर्णं काश्मीरं एषां द्वंद्वः एतैः पुनः सिद्धार्थः श्वेतसर्षपः दूर्वा मधुकालमेयं नागकेसरं एषां द्वंद्वः एभिः ॥ ९० ॥

मिथः कदूर्वांबुजसर्षपाख्यैर्द्वयोर्युजावारसुखग्रहाणाम् ॥
सपंचमृत्पल्लवपंचगव्यैरनिष्टदायां स्नपनं वरं स्यात् ॥ ९१ ॥

अथोपेंद्रवज्रयानिष्टदायां ग्रहयुतौ शांतिस्नानमाह—मिथइति। मिथः परस्परं आरसुखग्रहाणां भौमादिपंचकस्य मध्ये द्वयोर्ग्रहयोर्युतौ संयोगेऽनिष्टदायां सत्यां स्नपनं स्नानं वरं शुभकृत्स्यात्। कैः कं जलपर्यायत्वाद्वालकं दूर्वा अंबुजं कमलं सर्षपाः एषां द्वंद्वः एभिः किंभूतैः पंचवर्णमृत्तिका पंचवर्णपल्लवाः पंचगव्यं एषां द्वंद्वः एभिः सहवर्तमानैः ॥ ९१ ॥

दोषाशमीपद्मकशंखपुष्पीवत्सांकुराम्रांकुरहेमपुष्पैः ॥
सदा ससिद्धार्थकचंदनाब्जैर्निमज्जनादेति नरःसुशांतिम् ॥ ९२ ॥

अथोपजात्या सामान्यतः शांतिस्नानमाह—दोषेति। सदा नरो निमज्जनात् सुशांतिमेति प्राप्नोति कैः दोषा हरिद्रा शमी केशघ्नी पद्मकं कमलफलं तरुविशेषश्च शंखपुष्पी प्रतीतं वत्सांकुरा गुडूची आम्रांकुरा आम्रपल्लवाः हेमपुष्पं नागकेशरं एषां द्वंद्वः एभिः किंविशिष्टैः सिद्धार्थः श्वेतसर्षपः कं बालकं चंदनं मलयजं अब्जं पद्मं एभिः सह वर्तमानैः। इति नवग्रहशांतिस्नानाधिकारः ॥ ९२ ॥

अर्कत्रिवर्हद्रुमनेमिशालापामार्गबोध्यद्रिवनस्पतीभ्यः ॥
शम्यार्द्रदूर्वाकुथतः क्रमेण होमोचिताः स्युः समिधो ग्रहाणाम् ॥ ९३ ॥

अथेंद्रवज्रया नवग्रहाणां होमेंधनान्याह—अर्केति। क्रमेण ग्रहाणां सूर्यादीनां होमे उचिताः समिध एधांसि स्युः। सूर्यस्यार्कात् अर्कवृक्षात् समिध एवं चंद्रस्य त्रिवर्हद्रुमात् पलाशवृक्षात्। भौमस्य नेमिशालात् खदिरवृक्षात् बुधस्यापामार्गात् 'अघाड इतिभाषा'। गुरोर्बोधेः पिप्पलद्रुमात् शुक्रस्याद्रिवनस्पतेरुदुंबरवृक्षात् एषां द्वंद्वः एभ्यः। शनेः शमीतः राहोरार्द्रदूर्वातः केतोः कुथतः कुशात् एभ्यो वृक्षेभ्यः सरलानि सुस्निग्धानि पर्वोक्तमानमितानि इंधनानि ग्राह्याणि इति ॥ ९३ ॥

हुत्वा खगानां समिधस्तथाज्यं चरूंस्तिलानुक्तफलानि मंत्रैः ॥
निजागमोक्तैरपिपूजनं च दानं सुभद्राय ततो विदध्यात् ॥ ९४ ॥

अथोपजात्या ग्रहाणां पूजनदानाधिकारमाह—हुत्वेति । ततः स्नानानंतरं खगानां पूजनं दानं च सुभद्राय सुखाय विदध्यात् कुर्यात् । किंकृत्वा समिध एधांसि तथा आज्यं चरून् उक्तफलानि च हुत्वा हवनं विधाय कैर्निजागमोक्तैः स्वशाखावेदोक्तैर्मंत्रैरिति ॥ ९४ ॥

**नृणां सिताऽघ्न्या गलबद्धचीवरा लवेतरोधस्यवती सुलक्षणा ॥**
**दुष्टे विवस्वत्यपवर्जनोचिता सगोस्तनीतंदुलहर्म्यदक्षिणा ॥ ९५ ॥**

अथ प्रथमं सूर्यदानमाह—नृणामिति । नृणां दुष्टे विवस्वति सूर्ये सति सिताघ्न्या गौरपवर्जनोचिता दानाय हिता स्यात् । किंविशिष्टाऽघ्न्या गलबद्धचीवरा कंठबद्धवस्त्रा पुनः किंभूता लवेतरमल्पेतरं बहु ऊधस्यं क्षीरमस्यास्तीति बहुदुग्धवती । पुनः किंभूता सुलक्षणा दोषरहिता । पुनः किंभूता गोस्तनी द्राक्षा तंडुलाः प्रतीताः । हर्म्यं गृहं एषां दक्षिणासहिता । 'उस्राघ्न्या रोहिणी' इतिहैमः । 'गोरसः क्षीरमूधस्यम्' इति च ॥ ९५ ॥

**शंखं समुक्तं कलधौतजं द्विजे सरोहिणीस्तन्यमनन्यदक्षिणम् ॥**
**दद्यादनिष्टे किल रोहिणीविभौ सतंदुलाघारसितोपलं सदा ॥९६॥**

अथ चंद्रदानमाह—शंखमिति । किलेति सत्यनिष्टे रोहिणीविभौ चंद्रे सति सदा नरो द्विजे विप्रे शंखं दद्यात् । किंविशिष्टं शंखं समुक्तं मुक्ताफलसहितं पुनः किंभूतं शंखं कलधौतजं रजतमयं पुनः किंभूतं सरोहिणीस्तन्यं गोदुग्धसहितं । पुनः किंभूतं शंखं तंडुलाः प्रसिद्धाः आघारं घृतं सितोपला शर्करा एताभिः सहवर्तमानं । पुनः किंभूतं शंखं अनन्यदक्षिणं न विद्यतेऽन्या दक्षिणा यस्मिंस्तत् रजतदानमेव देयमित्यर्थः । 'स्तन्यं पुंसवनं पयः' इतिहैमः । ननु द्विजेऽत्राधिकरणं कथं तदाह । ननु यस्मै दित्सा रोचते धारयते वा तत्संप्रदानमिति । तदुक्तं विद्यानंदेन वाशब्देन वाशब्दस्य व्यवस्थावाचित्वात् । ब्राह्मणस्य ददाति । ब्राह्मणे ददात्यपि स्यादेव रुचेरप्रयोगे राज्ञो रोचते मृगया न मंत्रिण इत्यादौ षष्ठीप्रयोगदर्शनात् । विस्तरे च विसृतं राज्ञो रोचते घृतमित्याद्यद्योऽपि तदेतच्च निर्धारितं महाभाष्यकृच्चरणै रिति वक्ष्यमाणाधिकारेऽपि ज्ञातव्यम् ॥ ९६ ॥

**वृषोऽरुणो भूमिभुवाऽपवर्जनेऽहितस्य शुल्बाढ्यविषाणसंयुगः ॥**
**सभूरिचंद्रोऽरुणचीवरं तु वा शस्तो हि गोधूमगुडाज्यवन्नृणाम् ॥९७॥**

अथ भौमदानमाह—वृषइति । अहितस्यानिष्टस्य भूमिभुवो मंगलस्यापवर्जने दाने नृणामरुणो वृषो गौः शस्तः शुभः प्रोक्तः । किंविशिष्टो वृषः शुल्बेन ताम्रेणाढ्यं खचितं विषाणसंयुगं यस्य सः । पुनः किंभूतः सभूरिचंद्रः सुवर्णमयचंद्रसहितः वाऽथवा अरुणचीवरं रक्तवस्त्रं शस्तं कथितं । किंभूतं वस्त्रं गोधूमगुडाज्यवत् गोधूमादियुक्तम् ॥ ९७ ॥

**सगैरिका गौरनगौरविग्रहा शोणप्रभापीनकुचा हरिद्रुला ॥**
**देया विदश्चीरभचीरमाद्विजे ससार्षपं वेति सकंगु तुष्टये ॥ ९८ ॥**

अथ बुधस्य दानमाह—सगैरिकेति । नरेण विदो बुधस्य तुष्टये संतोषाय आदिजे विप्रे गौर्देया दातव्या । किंभूता गौः सगैरिका सुवर्णसहिता । पुनः किंभूता अनगौरविग्रहा श्वेतशरीरा । पुनः किंभूता शोणप्रभापीनकुचा रक्तप्रभपुष्टस्तनी । पुनः किंभूता हरिद्गला नीलकंठा वाऽथवा रुचिरं देयं चीरं चूडा सीसं च तद्वद्भा कांतिर्यस्य तच्चीरभं तच्च चीरं वस्त्रं च चीरभचीरं नीलवस्त्रं । यद्धेमोनेकार्थ्ये 'चीरं वाससि चूडायां गोस्तने सीसपत्रके' इति । किंविशिष्टं चीरभचीरं ससार्षपं सर्षपतैलसहितं । पुनः किंभूतं सकंगु कंगुसहितम् ॥ ९८ ॥

**सुपीतचीरं सुरवंदितेऽवरे ददाति योऽवन्यमराय वाऽवरे ॥**
**स नैति गांगेयवरं च पुस्तकं नीवारगव्यद्विदलान्नशर्करा ॥ ९९ ॥**

अथ गुरुदानमाह—सुपीतचीरमिति । अवरे अनिष्टे सुरवंदिते गुरौ सति यः पुरुषं एतानि ददाति कस्मै अवन्यमराय भूदेवाय द्विजाय तान्याह सुपीतचीरं शुभपीतवस्त्रं गांगेयवरं शुभस्वर्णं पुस्तकं नीवारा वनव्रीहयः गव्यं घृतादि द्विदलान्नं चणकादि शर्करा एताश्च वेति स पुरुषोऽवरमशुभं नैति न प्राप्नोति ॥ ९९ ॥

**कर्तुं कविं सौम्यतरं द्विजन्मने वलक्षभं वाहमकुप्यदक्षिणम् ॥**
**दद्यात्सितार्त्यार्तमना नरोऽथवा मत्स्यंडिकाज्यार्जुनचैलतंडुलान् ॥**

अथ कविदानमाह—कर्तुमिति । सितस्य शुक्रस्यार्त्तिः पीडा तयार्तं पीडितं मनो यस्य स सितार्त्यार्तमना नरो द्विजन्मने विप्राय वाहं घोटकं दद्यात् । किंकर्त्तुं कविं शुक्रं सौम्यतरं शुभतरं विदधातुं किंभूतं वाहं वलक्षभं श्वेतप्रभं । पुनः किंभूतं वाहं । अकुप्यं दक्षिणा यस्मिन् स तं । अथवा मत्स्यंडिका फाणितं रक्तखंडः आज्यं घृतं अर्जुनचैलं श्वेतवस्त्रं तंडुलाः एषां द्वंद्वे एतान् दद्यात् ॥ १०० ॥

**सजातरूपाद्विषमानुगो भवेच्छ्यामार्जुनीदानत ऐनिरार्तिहृत् ॥**
**कृष्णांशुकायस्तिलतैलदानतोऽप्यनिष्टहा वा जनिभाद्धि देहिनाम् १०१**

अथ शनिदानमाह—सजातरूपेति । हीति निश्चितं । देहिनां नृणां जनिभात् जन्मर्क्षात् विषमानुगो दुष्टराशिस्थित एवंविध ऐनिः श्यामार्जुनीदानतः कृष्णसुरभीदानतः आर्तिहृत् पीडाहरो भवेत् । किंभूतात् श्यामार्जुनीदानतः सजातरूपात् स्वर्णसहितात् वेतिपक्षांतरे शनिः कृष्णांशुकं कृष्णवस्त्रं अयो लोहं तिलतैलानि एषां द्वंद्वे एषां दानतोऽनिष्टहाऽनिष्टघातको भवेत् ॥ १०१ ॥

**ककायदौस्थ्योपशमाय देहिनां सुसप्तधान्योपलसारशीर्षकैः ॥**
**प्रपूरितस्यादिभुवि प्रदेशनं शूर्पस्य नीलांबरदक्षिणं भवेत् ॥ १०२ ॥**

अथ राहुदानमाह—ककायेति । देहिनां राहुःकं मस्तकमेव कायः शरीरं यस्य स ककायो राहुस्तस्य दौस्थ्योपशमनाय शूर्पस्य प्रस्फोटनस्य प्रदेशनं भवेत् । कस्मिन् । आदि-

भुवि अग्रजन्मनि विप्रे । किंभूतस्य सूर्यस्य सुसस्यधान्यानि उपलसारं लोह-शीर्षकं लांगलिफलं एषां द्वंद्वे एभिः प्रपूरितस्य किंभूतं प्रदेशनं नीलांबरस्य दक्षिणा यस्मिंस्तत् नीलांबरदक्षिणं 'प्रदेशनविसर्जने' इतिहैमः । 'लोहे गिरिसारं शिलासारं' इतिहैमः ॥ १०२ ॥

**दद्यादजं हाटकभूमिदक्षिणं केतूदये वा विषमानुगे भतः ॥**
**केतौ जनेर्जन्मवतो द्विजातये तमस्यपीत्याह स बादरायणः ॥ १०३ ॥**

अथ केतुदानमाह—दद्यादिति । जन्मवतो नरस्य जनेर्भतो जन्मराशितो विषमानुगे क्रूर-गते केतूदये सति स नरोऽजं नागं दद्यात् । कस्मै द्विजातये विप्राय किंभूतमजं हाटकभू-मिदक्षिणा यस्मिन् स तं स्वर्णभूदक्षिणं । वाऽथवा केतौ विषमानुगे सति एतद्दानं देयं । अपि पुनः तमसि राहौ विषमे सत्यपि एतद्दानं देयमिति बादरायणः कृष्णद्वैपायनऋषिराह 'कानीनो बादरायण' इतिहैमः ॥ १०३ ॥

**आरेनयोर्विद्रुममिंदुधिष्ण्ययोस्तारं विदः कर्बुरमिंद्रमंत्रिणः ॥**
**मुक्ताफलं धार्यमयश्च तुष्टये यमस्य लाजावलयं किलान्ययोः १०४**

अथ दुष्टे नवग्रहे धार्यमाह—आरइति । जनेन आरेनयोर्भौमसूर्ययोस्तुष्टये विद्रुमं धार्यं । एवं इंदुधिष्ण्ययोश्चंद्रशुक्रयोस्तारं रूप्यं विदो बुधस्य कर्बुरं स्वर्णं इंद्रमंत्रिणो गुरोर्मुक्ताफलं यमस्य शनेरयो लोहं अन्ययो राहुकेत्वोस्तुष्टये लाजावलयं लाजावर्तः रलयोरैक्यत्वात् । 'विराटजोराजपट्टोराजवर्त्त' इतिहैमः । रावटोमणिइति भाषा ॥ १०४ ॥

**तदर्चनादादिजदेववंदनाच्छ्रेयस्कथाकर्णनतो मखेक्षणात् ॥**
**होमाज्जपादागमपाठदानतो न पीडयंत्यंगभृतः खगामिनः ॥१०५**

अथ संहारमाह—तदेति । अंगभृतः प्राणिनः खगामिनो ग्रहा न पीडयंति कस्मिन् तदर्चनाद्ग्रहपूजातः पुनरादिजदेववंदनात् द्विजदेववंदनात् । पुनः श्रेयस्कथाकर्णनतः शुभकथा-श्रवणात् । पुनर्मखेक्षणात् यज्ञदर्शनात् । पुनर्होमात् पुनर्जपात् प्रणवपूर्वजपनात् पुनःआगम-पाठदानतः ॥ १०५ ॥

**समाष्टकापत्यभखेटवीर्यं प्रकीर्तितं तज्जनकस्य शश्वत् ॥**
**इतानुगस्त्रीभखपांथबीजमादेशिभिस्तत्कमितुस्तथैव ॥ १०६ ॥**

अथ ग्रहाणां फलधारकपुरुषमाह—समेति । शश्वन्निरंतरं आदेशिभिर्गणकैः समानं वर्षाणा-मष्टकं यस्य तत् अपत्यं नृस्त्रीलक्षणं अष्टवार्षिकं तोकं तस्य भं राशिस्तस्य खेटवीर्यं ग्रह-बलं तज्जनकस्यापत्यता तस्य प्रकीर्त्तितं कथितं । अष्टवर्षाणि यावत्फलधारकः पिता इत्यर्थः । इतः प्राप्तोऽनुगो भर्त्ता यया सा इतानुगा चासौ स्त्री च इतानुगस्त्री तस्या भस्य राशेः खपांथबीजं ग्रहबलं तत्कमितुः तस्याःप्रियस्य प्रकीर्तितं । उद्वाहानंतरं स्त्रीग्रहबलं भर्त्तरि । 'दैवज्ञगणकादेशिज्ञानिकार्त्तांतिकाअपि'इतिहैमः । कमितृशब्दस्तृंजतोयम् ॥ १०६ ॥

**स्वमंत्रजाप्यार्चनहोमदानकप्राप्तानुकूल्या हरिवर्त्मचारिणः ॥**
**अनेककर्मार्थकदा भवंत्यमी परावरेषामपि कर्म्मसाक्षिणः ॥ १०७ ॥**

इतिश्रीकालिदासोदिते ज्योतिर्विदाभरणे ग्रहगोचराध्यायः पंचमः ॥ ५ ॥

अथोपजात्या सर्वेषां ग्रहाणामरिष्टानिवर्तकं शांतिप्रकारमाह—**स्वमंत्रेति** । हरिवर्त्म आकाशं तच्चारिणः खेटाः किंभूताः परावरेषां उच्चनीचजातीनां प्राणिनां कर्म शुभाशुभं तत्साक्षिणः । पुनः किंभूताः स्वमंत्राः तत्तद्ग्रहमंत्रास्तेषां जाप्यं जपः तथार्चनं च होमश्च दानकं च तैः प्राप्तं आनुकूल्यं येषांते तथाभूताः संतः अनेकेषां कर्मणां अर्थ एव अर्थकः फलं तत्प्रदा भवंति । ग्रहाः सर्वेषां प्राणिनां सर्वेषु कर्मसु जपादिभिः पूजिताः सर्वारिष्टनाशका अनेकेषां सर्वसुखसमर्पकाश्च स्युरिति भावः ॥ १०७ ॥

इति श्रीपौर्णिमीयगच्छाधिराजभट्टारकपुरदरश्रीमहिमाप्रभसूरीश्वरचरणसरोरुहचंचरीकायमान
शिष्यभावरत्नविरचितायां श्रीकविकालिदासकृतज्योतिर्विदाभरणस्य
सुखबोधिकायां ग्रहगोचराध्यायः पंचमः समाप्तः ॥ ५ ॥

---

वक्रवालधिमारूढो बरडाव्हो महाबली ॥
क्षेत्रपालः सुखायास्तु राकापक्षभृतां सताम् ॥ १ ॥

## ॥ उत्पातप्रकरणम् ॥ ६ ॥



**लोकः खपांथविहिताशुभमेति तावदुत्पातमेष्यति यदाथ तदीरितं स्यात्॥**
**तच्छांतितोऽशुभफलाय न तद्ब्रुवेऽहमुत्पातरूपफलशांतिविधानतोऽतः**

अथ ग्रहगोचरकथनानंतरं तेभ्य उत्पाता जायंतेऽतो वसंततिलकेन उत्पाताध्यायसंधानमाह—लोकइति । अथानंतरं यदा लोकः खपांथविहिताशुभं ग्रहकृतकष्टमेति प्राप्नोति तावत्तत्कष्टात् प्रथमं लोकस्तदीरितं तेन ग्रहेण प्रेरितमुत्पातं प्रकृतेरन्यत्वमुत्पातस्त्रिधा ग्रहर्क्षवैकृतं दिव्यं उल्कानिर्घातपवनपरिवेषगंधर्वपुरेंद्रचापादि आंतरिक्षं भौमं स्थिरभवमेष्यति गमिष्यति तदुत्पतनं शांतिविधानात् अशुभफलाय न स्यादतः कारणादहं तदुत्पतनं ब्रुवे । कस्मात् हेतोरुत्पातस्य रूपं स्वरूपं तस्य फलं तस्य शांतिविधानतः शांतिकरणहेतोः । यतः 'दिव्यांतरिक्षादिक्षितिसंभवानि दृष्ट्वा निमित्तानि शुभाशुभानि ॥ वदन्नुदर्कस्य शुभाशुभत्वं महत्त्वमाप्नोति सभासु धीमान् ॥ १ ॥ अतोऽहमुत्पातगणानपीह यथा स्वबोधं कियतोऽपि वक्ष्ये। शिष्यप्रबोधाय विदग्धतुष्टयै जनस्य भूपस्य च विस्मयाय ॥ २ ॥ युद्धं ग्रहाणां परिवेषदंडकेतूदया वैकृतमिंदुभान्वोः ॥ ग्रहोपरागः प्रतिभास्करश्च दिव्या विकाराःकथिता मुनींद्रैः॥३॥ इति दिव्याः ॥ 'संध्याभ्रवैकृतककुब्ज्वलनानि तारापातस्तथाशनिरकालजगर्जितं च । निर्घातर-

क्षकरका रजसां निपातो नीहारशक्रधनुषीति नभःसमुत्थाः' ॥ ४ इतिआंतरिक्षाः ॥ 'भेदो भुवः प्रपतनं ध्वजतोरणानां गधर्वसंज्ञितपुरो धरणीप्रकंपः । अच्र्चासु भंगचलनादि हुताशकोपः शाखा तरोः पतति वायुरतिप्रचंडः ॥ ५ ॥ मधूकजालं निविशत्यकस्माद्विशांति गेहं च कपोतकाद्याः ॥ पिपीलिकाश्येनशिवाग्निपक्षिश्वगोमृगाणां च कुजा विकाराः ॥ ६ ॥ इतिभौमाः इत्यादि ॥१॥

**यस्यालयस्य सहसा पतनं यदा स्यादत्तारमेति शरणस्थवशा तदारम् ॥ धिष्ण्ये प्रवाणपतनं तनुते त्वपत्ये मांद्यं दरिद्रमनुवेलनिशांतशब्दः॥२॥**

अथ प्रथमं भौमोत्पातेंषुग्रहगतोत्पातमाह—यस्येति । यदा यस्य नरस्यालयस्य गेहस्य पतनं सहसा झटिति स्यात्तदाऽरं झटिति शरणस्थो गृहस्थस्तस्य वशा महिला अत्तारं मृत्युमेति । तु पुनर्यदा धिष्ण्ये गेहे प्रवाणपतनं बहिर्द्वारप्रकोष्ठपतनं स्यात् 'प्रघाणः प्रघणाऽलिंदा बहिर्द्वारप्रकोष्ठके' इतिहैमः । तदाऽपत्ये संताने मांद्यं रोगं तनुते विस्तारयति । पुनरनुवेलं समये निशांतशब्दो भणकाररूपो दरिद्रं तनुते ॥ २ ॥

**सीमंतिनी विकृतिमत्प्रसवा स्वभोक्तुर्दास्या? मयाय वडवा बहुला स्वगोप्तुः ॥ काली च कालभटभीतिविभुक्तये वा तच्छावदर्शनमथानु च तस्य वै स्यात् ॥ ३ ॥**

अप्रस्तुतिवैकृतमाह—सीमंतिनीति । विकृतिमान् विकलांगवान् प्रसवो बालो यस्याः सा विकृतिमत्प्रसवा सीमंतिनी स्त्री स्वभोक्तुर्निजपतेरामयाय रोगाय स्यात् ॥ एवं च वडवाऽर्वती बहुला धेनुः काली महिषी च विकृतिमत्प्रसूतिः सती स्वगोप्तुः निजस्वामिनः आमयाय स्यात् । अथ च वा इति पक्षांतरे प्रसूतेरनु पश्चात् तच्छावदर्शनं तेषां बालानां विलोकनं तस्य पुरुषस्य कालभटो यमस्तस्माद्भीतिस्तस्य विभुक्तये यमभयभोगाय वै निश्चितं स्यात् । 'बहुला तु सुरभ्यां नीलिकैलयोः' इतिहैमः । यतः 'प्रसवविकारे स्त्रीणां द्वित्रिचतुः प्रभृति संप्रसूतेर्वा । हीनातिरिक्तकाले स्वदेशकुलसंक्षयो भवति ॥१॥ वडवोष्ट्रे महिषीगोहस्तिनीषु यमलोद्भवे मरणमेषां षण्मासाच्युतिः फलं शांतौ श्लोकौ च गर्गोक्तौ॥२॥ नार्यः परस्य देशेषु त्यक्तव्यस्ता हितार्थिना । तर्पयेच्च द्विजान् कामैः शांतिं चैवात्र कारयेत् ॥ ३ ॥ चतुष्पदाः स्वयूथेभ्यस्त्यक्तव्याः परभूमिषु । नगरं स्वामिनं यूथमन्यथा नाशयंति ते ॥ ४ ॥ ' इत्यादिवराहमिहिरोक्तिः ॥ ३ ॥

**सार्कांशुकालसमये नभसः प्रसूता नन्वर्वती गृहपतिं गृहिणी सुतार्थान् ॥ यत्सुक्रमादिति चतुर्षु निहंति दोग्ध्री हर्युष्मभस्य तपसो ह्यवतश्च काली ॥ ४ ॥**

अथ वडवादीनां कालविशेषगतप्रसूतिस्वरूपमाह—सार्कांश्विति । ननु निश्चितं नभसः श्रवणस्य सह अर्कांशुना सूर्यकिरणेन वर्तमानः सार्कांशुः सचासौ कालः सूर्ययुक्तकालो

दिवस इत्यर्थस्तस्य समये श्रावणमासस्य दिनसमये चतुर्षु पत्सु प्रहरेषु क्रमेण प्रसूता प्रसूतिं गताऽर्व्वती वडवा क्रमेण प्रथमे द्वितीये तृतीये चतुर्थे गृहपतिं गृहिणीसुतार्थान् निहंति इति । च पुनर्हरौ सिंहराशौ उष्मभस्य सूर्यस्य समये सिंहराशिगतसूर्ये सति दोग्ध्री सुरभिः प्रसूता वडवावदनिष्टदा च पुनस्तपसो माघस्य समये पुनर्ज्ञवतो बुधवारस्य समये माघमासे बुधवारे च काली महिषी प्रसूता वडवावदनिष्टदा इति । 'अश्वायां पुनरर्व्वती' इति हेमशेषकोशे ॥ ४ ॥

भावी तदापि करभे कलभं करिण्या ज्ञेयं प्रसूयत
इति द्युविभौ नभस्य ॥ चक्रव्ययो नरपतेर्यदि
भूमिदेवे तद्दानमस्ति तदुपप्लवशांतयेऽतः ॥ ५ ॥

अथ भाद्रपदादौ हस्तिनीप्रसूतिस्वरूपमाह—भावी इति ॥ नभस्ये भाद्रपदे करभे हस्तनक्षत्रे द्युविभौ सूर्ये सति यदि चेत् करिण्या हस्तिन्या कलभं प्रसूयते । कलभशब्दस्य पुल्लिंगवल्लिंगत्वादत्र कर्मोक्तौ प्रथमैकवचनं तदापि निश्चितं नृपतेर्नृपस्य चक्रव्ययः सैन्यविनाशो भावी भवितास्ति अतःकारणात्तदुपप्लवशांतये कलभजन्मोपद्रवोपशमनाय भूमिदेवे द्विजे तद्दानं तस्य कलभस्य दानमस्ति इति ज्ञेयम् ॥ ५ ॥

गेहं यदा करटकौशिकगृध्रफेरुश्येनद्वितालुकक-
पोतपतत्रिणः स्यात् ॥ नाशं विशंति ससमग्रशि-
वैणनेत्रा नो चेत्तदुद्वसमगारपतेः प्रयाति ॥ ६ ॥

अथ कृतगृहप्रवेशकाद्युत्पातमाह—गेहमिति ॥ करटो द्विकः 'ध्रुकारिःकरटो द्विक' इति हैमः । कौशिकोलूकः गृध्रो दूरदृग् 'समली' इति भाषा ॥ फेरुर्जंबुकः श्येनः पत्री 'सींचाणो' इति भाषा । द्वितालुको द्विजिव्हः सर्पः कपोतः पारावतः एते पतत्रिणो गेहं विशंति तदागारपतेर्गृहस्वामिन एणनेत्रा मृगाक्षी स्यात्तदा सा नाशं मृत्युं याति कथंभूता स्त्री सा समग्रशिवा समस्तकल्याणेन सह वर्तमाना । चेत् यदि स्त्री नास्ति तदा तद्गृहमुद्वसं प्रयाति ॥ ६ ॥

संजायते कुलपतिः किल वामलूरः कोष्ठे कुलस्य मधुजालमसह्यपीडं ॥
स्तंभप्रवालजननं यदि वा तदा वा दारिद्र्यमेति कुररादिविहंगनीडम् ॥ ७

अथ गेहे मधुपिंडादिजननमाह—संजायत इति । कुलस्य गेहस्य कोष्ठे यदि वामलूरो वल्मीकं संजायते वाऽथवा मधुजालं मधुपिंडः 'स्तंभप्रवालजननं स्थूणायां जातपल्लवा' । अथवा कुररादिविहंगनीडं उत्क्रोशादिपक्षिकुलायः संजायते किलेति विभाव्यते तदा कुलपतिर्गेहस्वामी असह्या पीडा यस्मिंस्तदशक्यकष्टं दारिद्र्यमेति प्राप्नोति ॥ ७ ॥

शृंगाणि चेद्भुवि पतंति च शालमौलेः पुःशालशालवि-

शिखापतनं यदा स्यात् ॥ संजायते सुरसमान-
बले तदर्येऽकस्माद्धि तद्भुगपरोऽत्र न संशयोऽस्ति ॥ ८ ॥

अथ दुर्गशीर्षादिपतनदोषमाह—शृंगाणीति । चेद्यदि शालमौलेः प्राकारशीर्षात् शृंगाणि कपिशीर्षाणि भुवि भूमौ पतंति च पुनर्यदा पूःशालो नगरीवृक्षः पूःशालविशिखा नगरीप्राकारप्रतोलिस्तयोः पतनं स्यात्तदाऽकस्माद्धि निश्चितं तद्भुक् तस्या नगर्या भोक्ताऽपरो राजा संजायते । कस्मिन् सति सुरसमानबले तदर्ये तस्या नगर्या अर्यःस्वामी तदर्यस्तस्मिन्नत्र संशयो नास्ति । अकस्माच्छब्दः पूर्वान्वयेऽपि योज्यः । 'प्रतोलि विशिखा समा' इति हैमः। शाखाभंगेऽकस्माद्वृक्षाणां निर्दिशेद्रणोद्योगं । हसने देशभ्रंशं रुदिते च व्याधिबाहुल्यं ॥ १ ॥ राष्ट्रविभेदस्त्वनृतौ बालवधोऽतीवकुसुमिते बाले । वृक्षात्क्षीरस्रावे सर्वद्रव्यक्षयो भवति ॥ २ ॥ मद्ये वाहननाशः संग्रामः शोणिते मधुनि रोगाः । स्नेहे दुर्भिक्षभयं महद्भयं निःसृते सलिले ॥ ३ ॥ शुष्कविरोहे वीर्यान्नसंक्षयः शोषणे च विरुजानां । पतितानामुत्थाने स्वयं भयं दैवजनितं च ॥ ४ ॥ पूजितवृक्षे ह्यनृतौ कुसुमफलं नृपवधाय निर्दिष्टं । धूमस्तस्मिन्ज्वालाथवा भवेन्नृपवधायैव ॥ ५ ॥ सर्पत्सु तरुषु जल्पत्सु वापि जनसंक्षयो विनिर्दिष्टः । वृक्षाणां वैकृत्ये दशभिर्मासैः फलविपाकः ॥ ६ ॥ स्रग्गंधधूपांबरपूजितस्तच्छत्रं निधायोपरि पादपस्य । कृत्वा शिवं रुद्रजपोऽत्र कार्यो रुद्रेभ्य इत्यत्र षडगं होमः ॥ ७ ॥ इति वृक्षवैकृतं । वराहमिहिरोक्तम् ॥ ८ ॥

चेच्छासनासनमरिष्टनिशाटनाख्यकेकाकपोतपततां
सहसा भ्रमन्नुः । एकस्तदाविरिह शासनकामहा-
निस्तिष्ठत्यहिर्भवति यस्य च तस्य तद्वत् ॥ ९ ॥

अथ निजासनोपविष्टकाकादिदोषमाह—चेच्छासनेति । अरिष्टः काकः । निशाटनाख्योलूकः केका मयूरः कपोत एषां पततां पक्षिणां द्वंद्वे एषां मध्ये एको विहंगो यस्य नुः पुरुषस्य शासनासनमाज्ञाया आसनमुद्दिश्य सहसा भ्रमन् सन् इहासने तिष्ठति चपुनस्तद्वदहिस्तिष्ठति तदा तस्य पुरुषस्य शासनकामहानिः राज्ञां वांछितक्षयो भवति । नृपादिर्यदासनमारुह्य निजाज्ञामाविष्करोति तच्छासनासनं केकाशब्द आकारांतोऽपि मयूरवाची । उक्तंच । 'केका बर्हिणि तद्वाचि गुंद्रले जंभजित् स्त्रियां । गंत्रितंत्रीतरीताम्रपर्णीषु तडिदेतयो' इति हलायुधटिप्पनके 'केका केकानुकारकध्वनितमिह सदा श्रूयते किन्नरीणां' इति श्रृंगारशतकेऽपि। अन्यथात्र इन्नंतेन छंदोभंगो भवेत् ॥ ९ ॥

यस्यासनस्य शयनस्य च जातु भंगो यानस्य वा भवति
यस्य तदर्यभंगः॥ अश्रांतमात्महितबुद्धिभिरित्यकस्मात्
कार्यं द्विजे तदपवर्जनमात्मशाय ॥ १० ॥

अथासनादिभंगदोषमाह—यस्येति । जातु चेद्यस्य पुरुषस्य आसनस्य पादपीठस्य मंचकस्य च यानस्य वाहनस्य वा अकस्मात् भंगो विनाशो भवति तदा तदर्थभंगस्तेषामासनादीनामर्थः स्वामी तदर्थस्तस्य भंगो विनाशो भवति। इति हेतोरश्रांतं निरतरमात्महितबुद्धिभिर्नरैस्तदपवर्जनं आसनशय्यावाहनानां दानं द्विजे विप्रे कार्यं कर्तव्यं कस्मै आत्मशाय आत्मने शं सुखमात्मशं तस्मै ॥ १० ॥

**दृष्टे च पुष्करकुटे ज्वलिते कदाचिद्द्रष्टुर्भवेच्छमनपूः-**
**पदवीप्रयाणं ॥ स्यान्मातरिश्वपदवीज्वलिते तथा च**
**द्रष्टुर्न नेति भवितव्यवशादकस्मात् ॥ ११ ॥**

अथ जलाशयादौ संजातज्वालायां द्रष्टुर्दोषमाह । दृष्ट इति । कदाचिदकस्मात् भवितव्यवशात् पुष्करस्य जलस्य कुटं गेहं कोटश्च तस्मिन् कूपादिजलाशये इत्यर्थः। पुष्करपुटे इत्यपि पाठः। ज्वलिते दग्धे दृष्टे सति द्रष्टुः पुरुषस्य शमनपूःपदवीप्रयाणं यमनगरीमार्गस्थानं भवेत् । जलवैकृतं यथा । अपसर्पणं नदीनां नगरादचिरेण शून्यतां कुरुते। शोषश्चाशोष्याणामन्येषां वा ह्रदादीनां ॥ १ ॥ स्नेहासृङ्मांसवहाः संकुलकलुषाः प्रतीपगाश्चापि। परचक्रस्यागमनं नद्यः कथयंति षण्मासात् ॥ २ ॥ ज्वालाधूमक्काथा रुदितोत्कुष्टानि चैव कूपानां। गीतप्रजल्पितानि च जनमरकायोपदिष्टानि ॥ ३ ॥ सलिलोत्पत्तिरखाते गंधरसविपर्यये च तोयानां। सलिलाशयविकृतौ वा महद्भयं तत्र शांतिरियं ॥ ४ ॥ सलिलविकारे कुर्यात्पूजां वरुणस्य वारुणैर्मंत्रैः। तैरेव च जपहोमं शममेवं पापमुपयाति ॥ ५ ॥ इति वक्ष्यमाणजलवैकृतेऽपि ज्ञेयं ॥ तथाच पुनर्मातरिश्वा वायुस्तस्य पदवी मार्गो व्योम तस्मिन् ज्वलिते दग्धे दृष्टे सति द्रष्टुर्नरस्य यमनगरीप्रयाणं न स्यादिति न द्वौ नकारौ प्रकृत्यर्थं सूचयतः । ज्वलितौ दग्धभास्करौ इति। पुष्करं द्वीपतीर्थे हि। खगरागौ । ग्रंथांतरे । 'सूर्यास्ये सेफले कांडे शुंडाग्रे खे जलेंऽबुदे' इति हैमः ॥ ११ ॥

**गेहे गृही भवति यस्य यदोदकुंभीभंगः सवैति सहसा**
**नुरलिंजराल्याः। भंगो भयं त्रमरजातमपारकोपं जीव-**
**स्वहानिरथ मंथनभांडभंगः ॥ १२ ॥**

अथ जलकुंभादिभंगे दोषमाह—गेह इति। यस्य नुर्नरस्य गेहे यदा सहसा उदकस्य कुंभी उदकुंभी उदकस्य उदन्नादेशः कुंभी पुंस्त्रीलिंगः जलकलशस्तस्य भंगो भवति। वा पुनरलिंजराणां मणिकानामाली श्रेणिः ऊर्ध्वमेकैकोपरि न्यस्तमणिकश्रेणिः 'कुंतरवेड' इति भाषा तस्या भंगो भवति तदा स गृही त्रमरान्नृदेवाद्रूपाज्जातमपारकोपं भयमेति प्राप्नोति । अथवा मंथनभांडभंगो मंथन्या भंगो भवति तदा जीवस्वहानिर्जीवस्य द्रव्यस्य च हानिर्भवति ॥ १२ ॥

**भोगी कपोतबलिभुग्बकमैथुनं वा यः पश्यतीदुशर-**

**दर्द्धविमध्य एति । शार्दूलसंगमवराहकसंगमं स गोपत्यपत्यनगरीतनिवासमाशु ॥ १३ ॥**

अथ कपोतादिमैथुनदर्शने दोषमाह—भोगी इति । यो भोगी पुरुषोऽगीत्यपि पाठः । कपोतः बलिभुक् काकः प्रतीतः एषां मैथुनं पश्यति वा पुनः शार्दूलसंगमो व्याघ्रमैथुनं वराहकसंगमः सूकरमैथुनं एतयोः समाहारस्तत् पश्यति स पुरुष आशु शीघ्रं गवां किरणानां पतिः सूर्यस्तस्यापत्यं यमस्तस्य नगरी संयमनी तस्यां इतः प्राप्तो निवासो येन स यमनगरी-निवासिलोकस्तं अथवा इतः प्राप्तश्चासौ निवासो निलयस्तमेति मृत्युं प्राप्नोतीत्यर्थः । कियत्कालेनेंदुशरदर्द्धविमध्ये चांद्रवर्षार्द्धमध्ये षण्मासमध्ये । वराहको मयूरः । एतयोर्मैथुनमित्यप्यर्थो विभाव्यते ॥ १३ ॥

**स्यादेकदृङ्मुसलिकासरटोरगाणां पातस्तदूर्ध्वचरतां यदि यस्य मुंडे । तस्यामयाप्तिरतिदुष्कवती तदा-तत्स्पर्शोऽपि वा भवति देहभृतो रुजेंऽगे ॥ १४ ॥**

अथ मूर्ध्नि स्थितकाकादिदोषमाह—स्यादेकेति । यदि यस्य नरस्य मुंडे मस्तके एकदृग् काकः मुसलिका पल्ली सरटः कृकलासः उरगः सर्प एषां द्वंद्वे एषां पातः स्यात् । किंभूतानामेषां ऊर्ध्वं चरतामूर्ध्वं गच्छतां तदा तस्य नरस्य आमयाप्तिः रोगप्राप्तिर्भवति । किंभूता आमयाप्तिः । अतिदुष्कवती दुष्टं काकयति वतीति दुष्कं दुःखं तदस्यास्तीति गाढदुःखयुक्ता अतिदुःखवतीत्यपि पाठः । वा पुनरतत्स्पर्शोऽपि तेषां काकादीनां स्पर्शनमपि देहभृतो मनुष्यस्यांगे रुजे रोगाय भवति । रुट् तस्यै रुजे इति रुट् रुजा इति शब्दप्रभेदः । यतः । 'यन्मूर्द्धि काको निवसत्यकस्मात् स याति नाशं परमापदं वा । योषिच्छिरस्थोदक-पूर्णकुंभस्थिते द्विके स्याद्धतमर्थलाभः । भिंद्याद्घटं चेत्तनयस्य मृत्यु रत्नस्य लब्धिर्यदि हंति चंद्रं ' इति ॥ आरुह्य कायेन शिरःप्रदेशमुत्पत्य याति प्रतिसूर्यशायी । नरस्य नाशाय स वावरुह्य प्रयाति चेल्लाभकरस्तदानीं ॥ १ ॥ मूर्द्धन्यकस्माच्छरटो यदीये पतत्यसौ शीघ्रमुपैति पीडां । यस्याथवैवं वनिताशिरस्थं पतत्यसावप्यातिकृच्छ्रमेति ॥ २ ॥ इति संहितायां ॥ १४॥

**गर्जेद्यदांधुरमरायतनस्थली वा स्रोतोऽपि तापमतिवेदनमंधुकर्ता ॥ नाशं तदा सविधमेति च वासभंगं स्थानेयमप्याहितसंहतिकोपहेतुम् ॥ १५ ॥**

अथ कूपादिगर्जने दोषमाह—गर्जेदिति । यदांधुः कूपोऽमरायतनस्थली देवगृहभूमिर्वा स्रोतो नदी अपि गर्जेत्तदांधुकर्ता इत्यपि पाठः । कूपस्वामी अतिवेदनं तापमेति

प्राप्नोति च पुनर्नाशमेति सविधं समीपवर्तिनं वासभंगं चैति । स्थाने भवं स्थानेयं निवासस्थानमपि अहितसंहतिकोपहेतुं रिपुसमूहकोपकारणमेति । स्रोतो निर्झरिणी इति हैमः ॥१९॥

घनरसनिधिचीराकंपने देशभंगो भवति चपलमुल्कापातदिग्दाहयोश्च ॥ अमितकलहमब्दे कालगे गर्जिते वा वननिधिरसनार्यो याति शत्रूत्थदोषम् ॥ १६ ॥

अथ मालिनीवृत्तेन भुकंपनादिदोषमाह—**घनेति** । घनरसा जलानि तेषां निधिः समुद्रः स एव चीवरं वस्त्रं यस्याः सा भुमिस्तस्याः कंपने भूकंपने पुनरुल्कापातदिग्दाहयोरुल्कापाते दिग्दाहे च सति चपलं शीघ्रं देशभंगो भवति । उल्का पंचविधा उल्का १ धिष्ण्या २ ऽशानि ३ विद्युत् ४ तारा इति ॥ उल्कापक्षेण फलं तद्वद्धिष्ण्याशनिभिस्त्रिभिः पक्षैः॥ विद्युदहोभिः षड्भिस्तद्वत्तारा विपाचयति ॥ १ आसां लक्षणं संहितातो ज्ञेयं । दिशां दाहः पीतोऽग्निवर्णोऽरुणश्च नेष्टः संहितातः फलं ज्ञेयं हेमवर्णः शुभ इति । वा पुनरकालगे प्रावृड्वर्जितेऽब्दे मेघे सति वनानां जलानां निधिः समुद्रः स एव रसना मेखला यस्याः सा भूमिस्तस्या अर्यः स्वामी भूपतिः शत्रूत्थदोषं रिपुसंजातदोषं याति प्राप्नोति । किंविशिष्टं शत्रूत्थदोषं । अमितकलहममितो भूरिः कलहो राटिर्यस्मिंस्तदिति । 'वनं घनरसो यादो निवासोऽमृतं ' इति हैमः ॥ १६ ॥

भवति मुकुरनाशो हानये त्वोजसो वा प्रहरणपरिभंगः संगरे भंगलब्ध्यै ॥ अवनिपतिरकस्मादातपत्रस्य भंगे मरणमिह वरूथिन्यत्ययं चैति केतोः ॥ १७ ॥

अथ दर्पणादिविनाशे दोषमाह—**भवतीति** । हि निश्चितं मुकुरनाशो दर्पणविनाशयितुरोजसो बलस्य हानये नाशाय भवति वा पुनः प्रहरणपरिभंगोऽस्त्रभंगः संगरे संग्रामे भंगलब्ध्यै पराजयप्राप्तये भवति । च पुनरकस्मादातपत्रस्य छत्रस्य भंगे विनाशे सति इह नगरेऽवनिपतिर्नृपो मरणमेति प्राप्नोति । पुनः केतोः पताकाया भंगे सति वरूथिनी सेना अत्ययं क्षयं प्राप्नोति । यतः 'शक्रध्वजेंद्रकीलस्तंभद्वारप्रयातभंगेषु । तद्वत्कपाटतोरणकेतूनां नरपतेर्मरणम्' ॥ १७ ॥

जलदरसविवृद्धिं यात्यकाले स्रवंती यदि कुविभुरकस्मात्प्रत्यनीकापदं च ॥ भवति जनरुजेंऽभोऽवंध्यकोष्ठः सदैव कमलविहितखातो दृष्टकावर्तमध्यः ॥ १८ ॥

अथाकाले नदीपूरादौ दोषमाह—**जलदेति** । यदि स्रवंती नदी अकाले जलदस्य मेघस्य रसा जलानि तेषां विवृद्धिं जलपूरं याति तदाकस्मात् कुविभुर्भूपतिः प्रत्यनीकापदं शत्रुवान् विपदं याति प्राप्नोति । चपुनः सदैव अंभसा जलेनावंध्यः कोष्ठो यस्य स सदा जलभृतकोष्ठ

एवंविधः कमलार्थं जलार्थं विहितः कृतः खातः किंविशिष्टः कमलविहितखातः । दृष्टः कस्य जलस्य आवर्तो भ्रमो मध्ये यस्य स दृष्टकावर्तमध्यः । कोऽर्थः । देवखातादौ जलभ्रमणं भवति तदा जनरुजे लोकरोगाय स्यात् । 'आवर्त्तः पयसां भ्रम' इति । 'क्षीरं पुष्करमेघपुष्पकमलान्यापः पयः पाप्वसी' इति हैमः ॥ १८ ॥

**भ्रमरममरमूर्त्तेर्हंति भंगस्त्वकस्माद्भवति तदुप-**
**सर्प्पे सर्पणं लोकभूतेः ॥ अचरणशरणानामार्तये**
**श्रोत्रियाणां वसुवितरणमेधानां च देवाश्रुपातः ॥ १९ ॥**

अथ प्रतिमाभंगादौ दोषमाह—**भ्रमरेति** । अमरमूर्तेः प्रतिबिंबस्य भंगोऽकस्मान्भ्रमरं नृदेवं राजानं हंति । पुनस्तदुपसर्पे तस्या मूर्तेश्चलने सति लोकभूतेर्जनश्रियः सर्पणं गमनं हानिर्भवति । चपुनर्देवाश्रुपातो देवमूर्तिनेत्रात् स्रवदश्रुजलमार्तये पीडायै भवति । केषां अः कृष्णस्तस्य चरणमेव शरणं रक्षको येषां तेषां विष्णुचरणभक्तानां वैष्णवानामित्यर्थः। पुनः श्रोत्रियाणां वेदपाठकानां पुनः वसुवितरणे धनदाने मेधा बुद्धिर्येषां ते तेषां दातॄणां 'शरणं रक्षणे गेहे वधरक्षकयोरपि' इति हैमः । यतः प्रतिमावैकृतं । अनिमित्तचलनभंगस्वेदाश्रुनिपातजल्पनाद्यानि । लिंगार्चायतनानां नाशाय नरेंद्रदेशानां ॥ १९ ॥ बुध्वा देवविकारं शुचिः पुरोधास्त्र्यहोषितः स्नातः । स्नानकुसुमानुलेपनवस्त्रैरभ्यर्चयेत् प्रतिमां ॥ २ ॥ इत्यादि संहितायां । इति भौमोत्पाता विशेषतो ग्रंथांतरादवसेयाः ॥ १९ ॥

**वियति यदि खरांशोर्दृश्यते बिंबयुग्मसुदितमर-**
**मिलेशो जायते मंडलेऽन्यः ॥ निजपरिवृढनाशादिंदु-**
**बिंबद्वयं वा सति निजनरपाले तत्र राजा तदान्यः ॥ २० ॥**

अथ दिव्योत्पातेषु प्रथमं रविचंद्रयोरुदितबिंबद्वयदोषमाह—**वियतीति** । यदि वियति गगने खरांशोः सूर्यस्य बिंबयुग्मं बिंबद्वयमुदितं प्राप्तोदयं दृश्यते तदारं झटिति मंडले देशे निजपरिवृढनाशात् स्वस्वामिनाशतोऽन्योऽपर इलेशो भूमीशो राजा जायते । वा पुनरिंदुबिंबद्वयं व्योम्नि दृश्यते तदा निजनरपाले सति तत्र देशेऽन्यो राजा भवति ॥ २० ॥

**नभसि समरकालं खेटयोरेति राशिः प्रतिभयमनु**
**यस्तद्राशिभागस्थदेशाः ॥ गजरथहयहेषाकीर्णकौतूहले-**
**भ्यः परजनपदपेभ्यो यांति संग्राममाशु ॥ २१ ॥**

अथ ग्रहयुद्धदोषमाह—**नभसीति** । यदा नभसि व्योम्नि खेटयोर्ग्रहयो राशिः समरकालं युद्धसमयमेति प्राप्नोति तदाऽनु पश्चात् ये राशिभागनवांशास्तेषु स्थिता ये देशाः कोऽर्थो नवभागके कूर्मचक्रे यत्र भागे देशाः स्थितास्तेषां मध्ये ये जनपदाः खेटयुतिजा-

तराशौ स्थितास्ते देशा आशु शीघ्रं प्रतिभयं भयानकं संग्रामयंति । इणो रूपं प्राप्नुवंति । केभ्यः । जनपदा देशा जना वा तान् पांतीति जनपदपाः परे च ते जनपदपाश्च शत्रुभूपास्तेभ्यः । किंभूतेभ्य एभ्यो गजरथहयहेषाभिराकीर्णं कौतूहलं एषां तेभ्य इति ॥ २१ ॥

**गदितगगनमार्गेंद्वगनाभेदयोगेऽविरलगदकृता-**
**र्तिरेधते लोकशोकः ॥ जलदपटलगर्भैरावती-**
**दीप्तियाते व्रजति दरमकाले लोकपालात्प्रजा हि ॥ २२ ॥**

अथ नक्षत्रभेदयुतौ दोषमाह—गदितेति । गदितः प्रोक्तश्चासौ गगनमार्गेंद्वगनयोर्नक्षत्रयोर्भेदयोगश्च तस्मिन् नक्षत्रभेदयुतौ सत्यां लोकशोको जनानां खेद एधत्ते वृद्धिं प्राप्नोति । किंभूतो लोकशोकः । अविरला निबिडगदेन रोगेण कृता आर्तिः पीडा यस्मिन् सः । वा पुनर्हि निश्चितं अकाले जलदपटलगर्भान्मेघघटामध्यादैरावतीदीप्तियाते विद्युत्तेजःपाते सति प्रजा लोको लोकपालान्नृपाद्दरं भयं व्रजति प्राप्नोति । तडिदैरावतीविद्युदिति हैमः । अत्रोत्तरार्द्धे संलग्नत्वाद्गगनोत्पातः प्रोक्तः ॥ २२ ॥

**गवि हयकुमितांशे १ । १७ यस्य याम्यः पृषक्को द्रुहिणभ-**
**शकटं सार्द्धांशयुग्माधिकोऽसौ ॥ भवति भुवनभीतिं व्यो-**
**मगोऽपीति भित्वा मृजति विधुयमारा लोकनाशं मृजंति ॥ २३ ॥**

अथ दिव्योत्पाते रोहिणीशकटवेधमाह—गवीति । वृषराशौ हयकुमितांशे सप्तदशमितेंऽशे गते सति १ । १७ यस्य ग्रहस्य याम्यो दक्षिणगतः पृषत्को बाणः सार्द्धांशयुग्माधिकस्त्रिंशत्कलासहितांशद्वयाधिको भवति तदासौ व्योमगो ग्रहो द्रुहिणभं ब्रह्मणो नक्षत्रं रोहिणी तस्य शकटं भित्त्वा भुवनभीतिं सृजति । अपि पुनरिति पूर्वोक्तबाणवक्तव्यतायां १।१७ ॥ सत्यां विधुश्चंद्रो यमः शनिरारो भौमश्चैते लोकनाशं मृजंति 'बाणे पृषत्कविशिखौ' इति हैमः । यतः 'रोहिणीशकटमर्कनंदनो यदि भिनत्ति रुधिरोऽथवा शिखी । किंवदामि यदनिष्टसागरे जगदशेषमुपयाति संक्षयम्' ॥ २३ ॥

**व्रजति दिवि शिखी यद्युद्गमं दैवयोगादविरलमनुपु-**
**च्छाशागता देशभागाः ॥ किल कलकलमन्ये यांति**
**नश्यंति देशा जलदविहितपीडानेकसस्योनपीठाः ॥ २४ ॥**

अथ केतुवैकृतमाह—व्रजतीति । किलेति सत्ये यदि दैवयोगाद्दिवि व्योम्नि शिखी केतुरुद्गममुदयं व्रजति अनु पश्चात्तदा तत्पुच्छाशागताः तस्य केतोः पुच्छदिग्गता देशा नश्यंति क्षयं गच्छंति अन्ये देशा अविरलं गाढं कलकलं कोलाहलं यांति प्राप्नुवंति । किंभूता देशाः । जलदेन विहिता कृता पीडा तयाऽनेकसस्यैरूनं हीनं पीठं स्थानं येषु ते । यतः । 'दृश्येत

यावंति दिनानि केतुस्तत्तुल्यमासान् फलमस्य वाच्यं । वर्षाणि मासैरफलोदयोऽसौ ह्रस्वोऽतिसूक्ष्मोऽचिरकालदृष्टः' ॥ २४ ॥

**विधुविधुरुरुनेत्राव्याधयोगोंऽतरिक्षे भवति भुवनपीठे ब्राह्मकल्पांतहेतुः ॥ ध्रुवहरिपदरुंधत्यंशुमात्रीक्षणे यो न भवति तदभिज्ञोत्तारमायाति सोऽरम् ॥ २५ ॥**

अथ चंद्रलुब्धकनक्षत्रयोर्योगे दोषमाह—**विधिवति** । अंतरिक्षे व्योम्नि विधुश्चंद्रः विधुरुरुनेत्रा चंद्रमृगाक्षी नक्षत्रमित्यर्थः । तदेव व्याधः यंत्रराजे लुब्धकसंज्ञानक्षत्रं प्रोक्तं तयोश्चंद्रव्याधनक्षत्रयोर्योगो भुवनपीठे ब्राह्मकल्पांतहेतुः संसारप्रलयकारणं भवति । पुनर्यदा ध्रुव उत्तानपादजः हरिपदो विष्णुपदानि अरुंधती अक्षमाला अंशुमाता सूर्यमाता आसां द्वंद्वे आसामीक्षणे विलोकने यो नरोऽभिज्ञो ज्ञाता न भवति तदा स पुरुषोऽरं शीघ्रमत्तारं कालमायाति कालो जगद्भक्षक इत्युक्तत्वात् । यतः ' अरुंधतीं ध्रुवं चैव विष्णोस्त्रीणि पदानि च । आयुर्हीना न पश्यंति चतुर्थं मातृमंडलम् ' ॥ २९ ॥

**न दृश्यते येन विभा नरच्छविर्यदैति मृत्योर्लपनं च सत्वरं ॥ स वै भ्रुवंतर्गतविष्णुपत्रयघोणारसंज्ञाग्रविलोकनं तथा ॥ २६ ॥**

अथ छायापुरुषादिवैकृतमाह—**न दृश्यत इति** । यदा येन नरेण नरच्छविः पुरुषच्छाया विभाविशेषशोभायुक्ता न दृश्यते तदा वै निश्चितं स पुरुषः सत्वरं मृत्योर्यमस्य लपनं मुखमेति मरणं प्राप्नोति । तथैव भ्रुवोरंतर्गतं विष्णुपत्रयं घोणाग्रं नासिकाग्रं रसनाग्रं जिव्हाग्रमेषां विलोकनं कर्तव्यं यदा न दृश्यते तदा मरणं । यतः ' चतुःपार्श्वस्थगुरुपं यंत्रं वायुपुरावृतं । कल्पयित्वोपरि न्यसेत्पादद्वच्छीर्षसंधिषु ॥ १ ॥ सूर्योदयक्षणे सूर्यं पृष्ठे कृत्वा ततः सुधीः । स्वपरायुर्विनिश्चेतुं निजच्छायां विलोकयेत् ॥ २ ॥ पूर्णच्छायां यदीक्षेत तदा वर्षं न पंचता । कर्णाभावे नु पंचत्वं वर्षैर्द्वादशभिर्भवेत् ॥ ३ ॥ हस्तांगुलीस्कंधकेशपार्श्वनासाक्षये क्रमात् । दशाष्टसप्तपंचत्र्येकवर्षैर्मरणं दिशेत् ॥ ४ ॥ षण्मासान् म्रियते नाशे शिरसश्चिबुकस्य वा ॥ ग्रीवानाशे तु मासेनैकादशाहे च दृक्क्षये ॥ ५ ॥ सच्छिद्रे हृदये मृत्युर्दिवसैः सप्तभिर्भवेत् । यदि च्छायाद्वयं पश्येद्यमपार्श्वं तदा व्रजेत् ॥ ६ ॥ इति यंत्रप्रयोगेण छायापुरुषो ज्ञेयः ॥ प्रकारांतरेण विद्ययापि छायापुरुष इति योगशास्त्रे ॥ रोहिणींशशभृल्लक्ष्म महापथमरुंधतिं । ध्रुवं च न यदा पश्येद्वर्षेण स्यात्तदा मृतिः ॥ १ ॥ अथवा । अरुंधतीमित्यादि ॥ अरुंधती भवेज्जिव्हा ध्रुवो नासाग्रमुच्यते । तारा विष्णुपदं प्रोक्तं भ्रुवौ स्यान्मातृमंडलं ॥२॥ इति विद्या योगशास्त्रे । भ्रुवंतर्गतमित्यत्र इवर्णादे ह्रस्वे स्वरे यबरलमित्यस्य हेमसूत्रस्य पंचमीव्याख्यानात् । उकारादग्रे वकारव्यंजनागमः स्यात्ततो भ्रुवंतर्गतमिति सिद्धं ॥ उक्तं च । रजतं श्वेतवर्णाभं हारि अत्रच कांचनं ॥ दधि अत्र मधुवत्र कुमार्यो एवमूहते ॥ १॥ इति हेमद्व्याश्रये ॥ २६ ॥

**यदा ससभ्यः सहसाऽऽहिताग्नेरत्ता तदा शाम्यति गार्हपत्यः ।**
**पत्न्या भवेच्चांगभृतामपि द्राग् दुःस्वप्नमुत्पातहितं विचिंत्यम् ॥२७॥**

अथोपजात्या यज्ञात्प्रागग्न्यादिवैकृतमाह—यदेति । यदा गार्हपत्यस्तृतीयोऽग्निः ससभ्यः सभ्यसंज्ञचतुर्थसहितः शाम्यति निर्वाणं गच्छति तदा आहिताग्नेरग्निहोत्रिणः पत्न्याः स्त्रियाः सहसाऽत्ता विनाशः स्यात् । च पुनः दुःस्वप्नमपि द्राक् सत्वरमंगभृतां प्राणिनामुत्पातहितं दोषकरं विचिंत्यं ज्ञेयमिति । याज्ञिकाः पंचाग्नयः स्मृताः । एको दक्षिणोऽग्निः अर्द्धचंद्राकारोऽयं दक्षिणदिक्स्थितः १ । द्वितीय आहवनीयश्चतुरस्रोऽयं २ । तृतीयो गार्हपत्यो वर्तुलाकारोऽयं । चतुर्थः सभ्यः निष्कर्मकं द्वौ वर्तुलौ ४ पंचम आवसथ्य ५ इति ॥ स्वप्ने श्वभक्ष्यमाणश्च गृध्रकाकनिशाचरैः ॥ ऊह्यमानं खरोष्ट्राद्यैर्यदा पश्येत्तदा मृतिः ॥ १ ॥ रश्मिभिर्मुक्तमादित्यं रश्मियुक्तं हविर्भुजं ॥ यदा पश्येद्विपद्येत तदैकादशमासतः ॥ २ ॥ वृक्षाग्रे कुत्रचित्पश्येद्गंधर्वनगरं यदि । पश्येत्प्रेतान् पिशाचान् वा दशमासेन तन्मृतिः ॥ ३ ॥ इत्यादियोगशास्त्रे हेमाचार्याः ॥ २७ ॥

**जनो यदैत्यद्भुतसंभवं स व्रतोपयामाध्वरकर्म्मपूर्वं ॥**
**आरभ्य कर्मैति तदैति हास्यं भुक्त्वानु तद्भुक्तिमुपास्यमेतत् ॥२८॥**

अथ प्रारब्धकार्येउत्पातसंभवहेयतामाह—जन इति । यदा जनोऽद्भुतसंभवमुत्पातोद्गममेति प्राप्नोति किंकृत्वा व्रतोपयामाध्वरकर्म्मपूर्वं कर्म्म आरभ्य तदा स जनो हास्यमेति प्राप्नोति इति कारणात्तद्भुक्तिं भुक्त्वा तस्योत्पातस्य भोगनिजकालपर्यंतं विहाय अनु पश्चात् एतत् कर्म्म उपास्यं सेवनीयमिति ॥ २८ ॥

**अन्यैरथोत्पातदिनेऽपि कार्यं न मंगलं स्वागमभेदमंत्रैः ॥**
**उक्तौषधीस्नानविधेश्च होमादुत्सर्गतः शांतिमुपैति लोकः ॥२९॥**

अथोपसंहारेण शांतिमाह—अन्यैरिति । अथ अन्यैरपि पुरुषैरुत्पातदिने मंगलं न कर्तव्यं । लोक उत्सर्गतः सामान्यतो वा शांतिमुपैति कस्मात् उक्तौषधीस्नानविधेर्होमाच्च स्वागमभेदमंत्रैर्निजशाखाभेदमंत्रैश्चेति ॥ २९ ॥

इति श्रीज्योतिर्विदाभरणे उत्पाताध्यायः षष्ठः ॥ ६ ॥

इत्यादय उत्पाता ज्ञेयाः ॥ निजर्तुप्रभवा उत्पातास्तु न दोषाय स्युः । यतः ॥ वज्राशनिमहीकंपसंध्यानिर्घातनिःस्वनाः । परिवेषरजोधूमरक्ताकास्तिमनोदयाः ॥ १ ॥ द्रुमेभ्योऽन्नरसस्नेहबहुपुष्पफलोद्गमाः । गोपक्षिमदवृद्धिश्च शिवाय मधुमाधवे ॥ २ ॥ तारोल्कापातकलुषं कपिलार्केंदुमंडलं । अनग्निज्वलनस्फोटधूमरेण्वनिलाहतं ॥ ३ ॥ रक्तपद्मारुणं सांध्यं नभः क्षुब्धार्णवोपमं । सरितां चांबुसंशोषं दृष्ट्वा ग्रीष्मे शुभं वदेत् ॥ ४ ॥ शक्रायुधपरीवेषविद्युच्छुष्कविरोहणं । कंपोद्वर्तनवैकृत्यं रसनं दरणं क्षितेः ॥ ५ ॥ सरोनद्युदपानानां वृद्ध्यूर्ध्वतरणप्लवाः । सरणं चाद्रिगेहानां

वर्षासु न भयावहं ॥ ६ ॥ दिव्यस्त्रीभूतगंधर्वविमानाद्भुतदर्शनं । ग्रहनक्षत्रताराणां दर्शनं च दिवांबरे ॥ ७ ॥ गीतवादित्रनिर्घोषा वनपर्वतसानुषु । सस्यवृद्धिरपां हानिरपापाः शरदि स्मृताः ॥ ८ ॥ शीतानिलतुषारत्वं नर्दनं मृगपक्षिणां । रक्षोयक्षादिसत्वानां दर्शनं वागमानुषी ॥ ९ ॥ दिशो धूमांधकाराश्च सनभोवनपर्वताः । उच्चैः सूर्योदयास्तौ च हेमंते शोभनाः स्मृताः ॥ १० ॥ हिमपातानिलोत्पाता विरूपाद्भुतदर्शनं । कृष्णांजनाभमाकाशं तारोल्कापातपिंजरम् ॥ ११ ॥ चित्रगर्भोद्भवाः स्त्रीषु गोजाश्वमृगपक्षिषु । पत्रांकुरलतानां च विकाराः शिशिरे शुभाः ॥ १२ ॥ इति स्वर्तजाः शुभाः ॥ उन्मत्तानां च या गाथा शिशूनां यच्च भाषितं । स्त्रियो यच्च प्रभाषंते तस्य नास्ति व्यतिक्रमः ॥ १३ ॥ पूर्वं चरति देवेषु पश्चाद्गच्छति मानुषान् । नाचोदिता वाग् वदति सत्या ह्येषा सरस्वती ॥ १४ ॥

इति श्रीपौर्णिमीयगच्छाधिराजभट्टारकपुरंदरश्रीमहिमाप्रभसूरीश्वरचरणसरोरुहचंचरीकायमान शिष्यभावरत्नविरचितायां श्रीकविकालिदासकृतज्योतिर्विदाभरणस्य सुखबोधिकायामुत्पाताध्यायःषष्ठः समाप्तः ॥ ६ ॥

---

## अथ संस्कारप्रकरणम् । ७

**अथाहमाधानविधानतो मतैर्लपामि धारामरभूमिभृद्विशां ॥**
**स्वकीयकर्मोदितधर्मकीर्तनैर्मनीषिणां संस्कृतिकालनिर्णयान् ॥ १ ॥**

अथोत्पातज्ञानानंतरं पुरुषः शुभाशुभं समीक्ष्य योग्यव्यवहारमार्गे व्रजति व्यवहारस्तु गर्भाधानादारभ्य भवत्यतो वंशस्थेन गर्भाधानादिसंस्काराध्यायसंधानमाह—अथेति ॥ अथ प्रारंभे अहं आधानविधानतो गर्भाधानविधित आरभ्य संस्कृतिकालनिर्णयान् संस्कारसमयनिश्चयांल्लँपामि कथयामि । कैर्मनीषिणां बुद्धिमतां धारामरभूमिभृद्विशां विप्रक्षत्रियवैश्यानां मतैः कथंभूतैर्मतैः स्वकीयकर्मसु उदिता उद्गता कथिता वा ये धर्मास्तेषां कीर्तनं संकथनं येषु ते तैः स्वकीयकर्मोदितधर्मकीर्तनैः ॥ १ ॥

**ईयाद्रजोदर्शनकालतो नरो वशामहःपंचकमर्कसावनं ॥**
**विहाय युग्मासु विभावरीष्वतोऽप्यूर्ध्वं सुदायादफलाप्तिकामवान् ॥ २**

अथोपजात्या गर्भाधानदाने समयशुद्धिमाह—ईयादिति । सुदायादफलाप्तिकामवान् शुभपुत्रफलप्राप्तिस्पृहायुक्तो नरो रजोदर्शनकालतो दृष्टर्तुसमयादर्कसावनमहःपंचकं दिनपंचकं विहाय त्यक्त्वा अतोऽप्यूर्ध्वमेतस्मात्कालादग्रेऽपि युग्मासु विभावरीषु रात्रिषु वशां नारीमीयाद्गच्छेत्संभोगं कुर्यादित्यर्थः ॥ २ ॥

**त्रिविष्टपारीज्यदिने प्रशस्तं दिने गुरोश्चांद्रमसायनस्य ॥**
**दाक्षायणीकांतदिने क्वचित्स्यादाधानदानं प्रथमं वशायां ॥ ३ ॥**

अथ प्रथमाधानदाने वारानाह—त्रिविष्टपेति। वशायां स्त्रियां प्रथममाधानदानं प्रशस्तं शुभं स्यात्कस्मिन् त्रिविष्टपारीज्यदिने त्रिविष्टपस्य स्वर्गस्य आधारे आधेयोपचाराद्देवानामरयो दैत्यास्तेषामीज्यः पूज्यः शुक्रस्तस्य दिने शुक्रवारे पुनर्गुरोर्दिने चांद्रमसायनस्य बुधस्य दिने क्वचिद्दाक्षायणीनां तारकाणां कांतः चंद्रस्तद्दिनेऽपि ॥ ३ ॥

**धाराधरारूढतमीशदारा सकाशनाह्याभरणांत्यतारा ॥**
**सयातुभा सोग्रशुचींदुवामा नाधानदाने हि वरा पुरंध्र्याः ॥ ४ ॥**

अथाधानदाने वर्ज्यनक्षत्राण्याह—धाराधरेति । हि निश्चितं पुरंध्र्याः स्त्रियाः आधानदाने धाराधरारूढतमीशदारा धाराधरो मेघस्तमारूढ इंद्रः 'संक्रंदनाखंडलमेघवाहनाः' इति हेमवचनात् ॥ तस्य तमीशदारा चंद्रकलत्रं ज्येष्ठा न वरा न श्रेष्ठा इत्यर्थः । किंभूता धाराधरारूढतमीशदारा को वायुरशनं भक्षणं यस्य स काशनोऽहिस्तस्य भं अश्लेषा अह्याभरणः सर्पभूषणः शंभुरार्द्रा अंत्यतारा रेवती एताभिः सह वर्तमाना । पुनः किंभूता यातुनो रक्षसो भं मूलं तेन सह वर्तते सयातुभा । पुनः किंभूता उग्राणि उग्रसंज्ञभानि शुचिरग्निस्तस्येंदुवामा कृत्तिका एताभिः सह वर्तते या सा सोग्रशुचींदुवामा ज्येष्ठाश्लेषार्द्रारेवतीमूलमघापूर्वात्रयकृत्तिका एता नेष्टाः ॥ ४ ॥

**पश्येत्तमिस्रेशबलं युवत्या निषेककर्मण्यणुशोणितायाः ॥**
**राशौ ससोमप्रमदोत्थबीजे शृंगारयोन्याहवभावभाजि ॥ ५ ॥**

अथाधाने राशिबलमाह—पश्येदिति । निषेककर्मणि आधानदानविधौ भर्त्ता युवत्यास्तरुणस्त्रिया राशौ तमीशबलं चंद्रबलं पश्येत्समीक्षेत । किंभूताया युवत्या अणु स्तोकं शोणितमृतूत्पन्नरुधिरं यस्याःसा तस्या अणुशोणितायाः रजोदर्शनाद्बहुदिवसे षोडशे दिने वाणुशोणिता स्त्री भवतीत्यर्थः ॥ किंभूते राशौ सोमप्रमदा नक्षत्राणि ताभ्य उत्थं बीजं वीर्यं तेन सह वर्तते ससोमप्रमदोत्थबीजे । पुनः किं भूते राशौ शृंगारयोनिः कंदर्पस्तस्याहवभावं संग्रामभावं भजतीति शृंगारयोन्याहवभावभाक् तस्मिन् पुरुषराशौ इत्यर्थः ॥ ५ ॥

**पर्वादिजश्राद्धदिनेषु भीरोर्भवत्यभद्राय निषेककर्म्म ॥**
**रिक्तासु भैम्यां भवतुल्यघस्रे पौष्णे सचंद्रे विबले निजार्ये ॥ ६ ॥**
**तथाष्टमी दुष्टयुतिर्भघस्रजा वेला च संध्योर्दिनदोषयोर्बुधैः ॥**
**स्वमध्ययामद्वयकालचारिणी विगर्हिताधानविधौ विभावरी ॥ ७ ॥**

अथाधानविधौ श्लोकद्वयेन पर्वादीनि निषेधयति—पर्वेति ॥ पर्वादिषु निषेककर्म गर्भाधानकृत्यं भीरोः स्त्रिया अभद्राय दुःखाय भवति ॥ पर्व अमावास्यादि आदिजानां पितॄणां

श्राद्धं एषां द्वंद्वे एतद्दिनेषु च पुना रिक्तासु ४ । ९ । १४ तिथिषु भैम्यां विष्टौ पुनर्भवे रुद्रैस्तुल्यवस्रे एकादश्यामित्यर्थः ॥ पुनर्दास्रे चंद्रेऽश्विनीगतचंद्रे पुनर्विबले बलहीने निजार्ये निजे स्वकीये यः प्रथम आधानमासस्तस्यार्यः स्वामी शुक्रस्तस्मिन् गर्भप्रथममासस्य शुक्रस्वामित्वात् ॥ यदुक्तं बृहज्जातके ॥ कलल १ घनां २ कुरा ३ स्थि ४ चर्मा ५ गज ६ चेतनताः ७ सित १ कुज २ जीव ३ सूर्य ४ चंद्रा ५ किं ६ बुधाः ७ परतः ॥ उदयपतय ८ चंद्र ९ सूर्यनाथाः १० क्रमशो गदिता अधिपा इति ॥ ६ ॥ तथेति ॥ आधानविधौ तथा पुनर्बुधैरष्टमी गार्हिता तिरस्कृता एवं भयस्रजा नक्षत्रदिनजाता दुष्टयुतिर्दुष्टयोगः पुनर्दिनदोषयोः संध्यौ प्रातः सायं संध्याकालयोर्वेला पुनः स्वमध्ययामद्वयकालचारिणी निजमध्यानुगामिनी विभावरी रात्रिः रात्रेर्मध्यं त्याज्यमित्यर्थः ॥ ७ ॥

**नृयोषितोर्जन्मदिनं वराननां न कामयेदर्भकगर्भपुष्टये ॥**
**चरोदये चोदयगैरसाधुभिर्व्रध्नांशगे तूदयभागनेतरि ॥ ८ ॥**

अथाधानविधौ जन्मादिनादीनि निषेधयति—**ना इति** । ना पुरुषोऽर्भकगर्भपुष्टये बालकगर्भपोषणाय वराननां सुमुखीं न कामयेत् स्त्रीसेवां न कुर्यात् । कस्मिन् योषितो नार्या जन्मदिने पुनश्चरोदये चरलग्ने पुनर्व्रध्नांशगे सूर्यनवांशगते उदयभागनेतरि उदयो लग्नं भागो नवांशोऽनयोर्नेता स्वामी तस्मिन् वा पुनः कैः कृत्वाऽसाधुभिः खलग्रहैः किंभूतैरसाधुभिः उदयगैस्तनुलग्नगतैः ॥ ८ ॥

**विलग्नतो वारिवृषोपलब्धिगैः सौम्यैरसौम्यैररिविक्रमायगैः ॥**
**विधौ ससौम्ये च शुभाय चोद्गमे व्रजेदपत्याय नरो नितंबिनीम् ॥ ९**

अथाधानविधौ शुभलग्नं दर्शयति—विलग्नेति । नरो नितंबिनीं स्त्रीं व्रजेत्संगं कुर्यात् कस्मै शुभायापत्याय शुभपुत्राय कैः सौम्यग्रहैः कृत्वा किंभूतैः सौम्यैर्विलग्नतस्तनुभवनतो वारि चतुर्थः ४ वृषो नवमं ९ उपलब्धिर्बुद्धिः पंचमं ५ 'प्रेक्षाचिदुपलब्धयः' इति हैमः ॥ एषां द्वंद्वे एषु गतैः पुनरसौम्यैः खलग्रहैः किंभूतैरसौम्यैररिः षष्ठं ६ विक्रमस्तृतीयं ३ आय एकादशं ११ एषां द्वंद्वे एतद्गैः ॥ पुनः कस्मिन् ससौम्ये शुभग्रहसहिते विधौ चंद्रे उद्गमे प्रादुर्भूते सति ॥ ९ ॥

**काव्यारगुर्वंशुमदिंदुभास्करिज्ञलग्नपेंदूष्णमरीचयः क्रमात् ॥**
**आधानमासात्किल मासपालकाः पुष्णंत्यमी गर्भकलाःस्फुरद्घनाः ॥ १०**

अथ गर्भस्य दशमासानां पतीनाह—**काव्येति** । किलेति सत्ये आधानमासादमी काव्याद्याः क्रमात् मासपालका मासस्वामिनो गर्भकलाः पुष्णांति वृद्धिं नयंति । काव्यः शुक्रः प्रथमाधानमासस्वामी १ एवं आरो भौमो द्वितीयमासस्वामी २ गुरुस्तृतीयमासस्वामी ३ अंशुमान् सूर्यश्चतुर्थमासस्वामी ४ इंदुः पंचममासस्वामी ५ भास्करस्यापत्यं भास्करिः शनिः

षष्ठमासस्वामी ६ ज्ञो बुधः सप्तममासस्वामी ७ लग्नपतिः आधानकाललग्नपतिर्गर्भोऽष्टममासस्वामी ८ इंदुर्नवममासस्वामी ९ उष्णमरीचिः सूर्यो दशममासस्वामी १० किंभूता गर्भकलाः स्फुरद्घनाः लसद्वर्धमानगर्भपिंडविशेषाः ॥ १० ॥

**मासेश्वरे राजनि शक्तिशालिनि त्विष्टैर्ग्रहैर्दृष्टघने च साधुभिः ॥**
**नराख्यराशावुदये लवानुगे वदंति तत्कर्मविधिं मनीषिणः ॥ ११ ॥**

अथाधानविधाने मासेश्वरादिबलग्राह्यतामाह—मासेति । मनीषिणः पंडितास्तत्कर्मविधिं गर्भाधानकार्यविधानं वदंति कथयंति कस्मिन् मासेश्वरे शक्तिशालिनि बलयुक्ते सति तु पुनः राजनि चंद्रे शक्तिशालिनि सति पुनरिष्टैर्ग्रहैश्च पुनः साधुभिः सौम्यग्रहैर्दृष्टघने विलोकिततनुभवने सति पुनर्नराख्यराशौ मिथुनकन्यातुलाकुंभधनुःपूर्वार्द्धमकरोत्तरार्द्धे चैते नरराशयः लग्ने लवानुगे नवांशगते सति ॥ इति गर्भाधानसंस्कारः प्रथमः ॥ ११ ॥

**स्वजातिधर्मादृतमार्गतो वरं स्वकालगं पुंसवनं च कीर्तितं ॥**
**मासादिगर्भेऽगमितेऽष्टमेऽथवा सीमंतकर्म स्वकुलक्रमाद्वा ॥ १२ ॥**

अथपुंसवनसीमंतयोः कर्माह—स्वजातीति । आदिगर्भे बुधैः स्वकालगं पंचममासप्राप्तं पुंसवनं पंचममासीसंज्ञकं प्रकीर्तितं पंचमे मासि विधेयमित्यर्थः ॥ किंभूतं पुंसवनं स्वजातिधर्मादृतमार्गतो निजजातिधर्मांगीकृतमार्गेण वरं श्रेष्ठं ॥ पुनरादिगर्भे बुधैः स्वकुलक्रमात् सीमंतकर्म आग्रहणीकृत्यं प्रकीर्तितं कस्मिन् गमिते षष्ठेथवाऽष्टमे मासि ॥ १२ ॥

**सर्वसहायोनिपतंगमंत्रिणां वाराः पुरंध्रीधृतगर्भसंस्कृतौ ॥**
**शस्ता विभद्रा हि विनष्टशीतभाश्चतुर्दशीपक्षतिपातवर्जिताः ॥१३॥**

अथैतयोर्वारशुद्धिमाह—सर्वमिति । पुरंध्रीधृतगर्भसंस्कृतौ स्त्रीधृतगर्भसंस्कारे पुंसवने सीमंते चेत्यर्थः । सर्वसहा भूमिस्तस्यां योनिर्जन्म यस्य स भौमः पतंगः सूर्यः मंत्री गुरुरेषां द्वंद्वे एषां वाराः शस्ताः शुभाः प्रोक्ताः । किंभूता वाराः विभद्रा विष्टिरहिताः पुनः किंभूता वाराः विनष्टशीतभा नष्टः क्षयं गतः शीतभो हिमांशुश्चंद्रो यस्यां साऽमावासी विगता नष्टशीतभा येभ्यस्ते आमावासीरहिता इत्यर्थः । 'सा नष्टेंदुकला कुहूः' इति हैमः ॥ पुनः किंभूता वाराः चतुर्दशी पक्षतिः प्रतिपत् पातो व्यतीपात एभिर्वर्जिताः ॥ १३ ॥

**अधोक्षजादित्यपुरंदरार्चितक्रव्यादभार्यामरमातृतारकाः ॥**
**प्रकीर्तिताः पुंसवने स्फुरत्कलाः सीमंतकर्मण्यपि कामदा बुधैः ॥१४**

अथैतयोर्नक्षत्रशुद्धिमाह—अधोक्षजेति । पुंसवने सीमंतकर्मण्यपि बुधैरधोक्षजादितारकाः सिद्धिदाः प्रकीर्तिताः । अधोक्षजो विष्णुः श्रवणः आदित्यो हस्तः पुरंदरार्चितो गुरुः पुष्यः क्रव्यादो रक्षो मूलं भार्यो भानां नक्षत्राणामर्यः स्वामी चंद्रो मृगशीर्षं अमरमाता पुनर्वसू इति । किंभूता एतास्ताराः स्फुरत्कलाः अमुप्तकिरणाः । इति पुंसवनसंस्कारो द्वितीयः ॥ १४ ॥

**शक्तिर्विशां शूद्रजनस्य सप्तमे सीमंतकृत्यं च जगाद मास्यलं ॥**
**पौष्णेऽपि तत्कर्म कुमारहारितो न मेनिरेऽन्ये श्रुतिधर्मदृष्टयः ॥१५**

सीमंते ऋषिमतमाह—शक्तिरिति । अलं निश्चितं शक्तिर्ऋषिर्वैश्यानां तु पुनः शूद्रविशां शूद्रमनुष्याणां सीमंतकृत्यं सप्तमे मासि जगाद कथयामास ॥ 'विट्प्रवेशे नृवैश्ययोः' इति हैमः । च पुनः कुमारहारीतः ऋषिः पौष्णेऽपि रेवत्यामपि तत्कर्म सीमंतकार्यं जगाद अन्ये श्रुतिधर्मदृष्टयो वेदधर्मज्ञास्तत्कर्म न मेनिरे ॥ १५ ॥

**खलेतरैर्व्यष्टमहितांत्यभावगैर्ग्रहैरमित्रायसहोत्थगैः खलैः**
**त्रिकोणकेंद्रायगते पुरोधसि स्मृतं च सीमंतविधानमंगतः ॥ १६ ॥**

अथ सीमंतविधाने लग्नशुद्धिमाह—खलेति । अंगतो लग्नाद्व्यष्टमहितांत्यभावगैर्विगता अष्टा मृत्युरष्टमः ८ अहितः षष्ठः ६ अंत्यो द्वादशः १२ भावा एभ्यस्ते व्यष्टहितांत्यभावगैः अष्टमषष्ठद्वादशभाववर्जितैः खलेतरैः सौम्यग्रहैः च पुनरमित्रायसहोत्थगैः अमित्रः षष्ठः ६ आय एकादशः ११ सहोत्थस्तृतीयः ३ एतद्भावगतैः खलग्रहैः कृत्वा पुनस्त्रिकोणे नवमे पंचमे भवने केंद्रे प्रथमचतुर्थसप्तमदशमभवने आये एकादशे भवने गते पुरोधसि गुरौ सति सीमंतविधानं स्मृतं बुधैरिति शेषः । इति सीमंतसंस्कार-स्तृतीयः ॥ १६ ॥

**जन्यन्ह्यथो दारकजन्मनीते वार्कैरभिन्नेऽहनि जातकर्म्म ॥**
**श्रावान्हि वा साधुदिनेशदर्घ्ये नामान्तमाद्येऽपि दिने तदुक्तम् ॥१७**

अथ जन्मकृत्यमाह—जन्यन्हीति । अथानंतरं दारकजन्मनीते सुतजन्मप्राप्ते जन्यन्हि जन्मदिने तज्जातकर्म बालकजन्मकार्यं नामांतं नामपर्यंतमुक्तं बुधैरिति शेषः ॥ कस्मिन् अर्कैः सूर्यैरभिन्ने द्वादशेऽहनि इत्यर्थः ॥ अथवा श्रावान्हि श्रवणं श्रावस्तदन्हि पुत्रजन्मश्रुतादिनेऽथवा साधुदिने सौम्यग्रहवारदिने वा अथवा आद्ये रविवारेऽथवा आद्ये जन्मदिने ॥ १७ ॥

**खरोग्रसाधारणभान्यभेषु चिरायुषे नाम च जातकर्म्म ॥**
**शुभोदये कंटकगेऽथ सूनोर्धिष्ण्ये गुरौ वा खलु बोधने स्यात् ॥१८**

अथ जातकर्मणि नक्षत्रादीन्याह—खरोग्रेति । खरसंज्ञानि उग्रसंज्ञानि साधारणसंज्ञा-नक्षत्राणि विहाय अन्यभेषु इतरभेषु पुनः शुभोदये शुभलग्ने कंटकगे केंद्रगते धिष्ण्ये शुक्रे गुरौ वा सति खलु निश्चितं सुतो बालकस्तस्य जातकर्म चपुनर्बोधने व्यवहारप्रवर्तकज्ञानार्थं देवदत्त इत्यादि नाम स्यात् ॥ बोधनेऽत्र निमित्तार्थे सप्तमी ॥ कस्मै चिरायुषे दीर्घजीविताय ॥ इति जन्मसंस्कारश्चतुर्थः ॥ १८ ॥

**आजन्ममासांतमदुष्टवारे चोक्तेषु भेष्विदुबले शिशोर्भे ॥**
**केचिज्जगुर्नामविधानमेतत्प्रधानमूरूद्भवपद्यजातौ ॥ १९ ॥**

अथ नामविधाने मतांतरमाह—आजन्मेति । केचिन्मुनयः ऊरूद्भवा वैश्याः पद्भ्यः शूद्राः एषां जातौ सगोत्रे एतत् प्रधानं नामविधानं जगुः कथयामासुः । केचु आजन्ममासांतं जन्ममासमारभ्य उक्तेषु कथितनक्षत्रेषु पुनरदुष्टवारे पुनः शिशोर्बालस्येंदुबले चंद्रबलयुक्ते भे राशौ सति ॥ १९ ॥

**षट्कर्मणो बाहुभुवोत्थवार्यैर्नामोदितं वर्णचतुष्टयाढ्यं ॥**
**सत्र्यक्षरं हारि विशस्त्रिवर्णं द्विवर्णवच्छौद्रमतोऽत्यजेऽन्यत ॥ २० ॥**

अथ विप्रादीनां नामविवेकतामाह—षट्केति । आर्यैः षट्कर्मणो विप्रस्य बाहुभुवः क्षत्रियस्य वर्णचतुष्टयाढ्यं सत्र्यक्षरयुक्तं चतुरक्षरयुक्त त्र्यक्षरयुक्तं वा नाम हारि मनोहरं उदितं प्रोक्तं । एवं अथवा पुनः विशो वैश्यस्य त्र्यक्षरं पुनः शौद्रं नाम द्विवर्णवत् द्विवर्णयुक्तं पुनरतोऽस्मादंत्यजेऽन्यनामेति । विशेषस्तु ग्रंथांतरादवसेयम् ॥ २० ॥

**स्थिरोदये चापघटाङ्गभांशके युते च वा धिष्ण्यविदिंद्रपूजितैः ॥**
**विलोकिते नाम निगद्यते शिशोरसद्ग्रहालोकनयोगवर्जिते ॥२१॥**

अथ नामकथिते लग्नशुद्धिमाह—स्थिरोदयइति । शिशोर्बालकस्य नाम निगद्यते कथ्यते पित्रेति शेषः । कस्मिन् स्थिरलग्ने पुनश्चापो धनुराशिः घटस्तुलाराशिः ज्ञस्य बुधस्य भे राशी कन्यामिथुने एषां राशीनामंशे । किंभूते स्थिरोदये नवांशके च धिष्ण्यः शुक्रःविद् बुधः इंद्रपूजितो गुरुरेभिर्युतेऽथवाऽसद्ग्रहालोकनयोगवर्जित दुष्टग्रहविलोकनयोगैररि त्यक्ते ॥ २१ ॥

**यस्यैंद्रभं जन्मनि यातुधानभं जंतोररं वा हि भुजंगमं भवेत् ॥**
**गंडांतकं वा यमघंटतारकं यमालयं याति न संशयोऽत्र सः ॥२२॥**

अथ ज्येष्ठामूलजातापत्ये दुष्टफलमाह—यस्येति । यस्य जंतोः शिशोः जन्मनि इंद्रभं ज्येष्ठाथवा यातुधानभं मूलं वा भुजंगममश्लेषा वा गडांतकं वा यमघंटतारकं भवेत् अरं स नरो यमालयं मरणं याति एति अत्र संशयो नास्ति ॥ २२ ॥

**नक्तंचरज्योतिरनंत्यपद्भवं विनामकृत्यं प्रविधाय बालकं ॥**
**परित्यजेदाश्वथ हायनाष्टकं तदाननं वा न विलोकयेत्पिता ॥२३॥**

अथमूले जातपुत्रे कृत्यमाह—नक्तमिति । पिता हायनाष्टकं यावत् बालकमाशु शीघ्रं परित्यजेत् । किंकृत्वा विगतं नाम यस्मात्तत् विनाम नामरहितं सूतिकर्म प्रविधाय कथंभूतं नक्तंचरज्योतिर्मूलं तस्यानंत्यपद्भवं चतुर्थचरणं विहायान्यत्रिकचरणजातं वा पक्षांतरे पिता तदाननं तस्य पुत्रस्य मुखं न विलोकयेत् ॥ २३ ॥

**पितुः सवित्र्या विभवस्य चापदो भूलादिपादाःक्रमशस्तदग्रयः ॥**
**भवंति नाशाय शिशोर्भुजंगमे प्रतीपमेतत्फलमंत्यपादतः ॥ २४ ॥**

अथ मूले जातपुत्रे फलमाह—**पितुरिति** । मूलादिपादात् मूलप्रथमपादात् क्रमतः तदंघ्रयो मूलचरणाः शिशोर्बालकस्य पित्रादिकानां विनाशाय भवंति । कोऽर्थः । मूलप्रथमपादे जातशिशुः पितुर्नाशाय भवति ॥ द्वितीयपादजः शिशुः सवित्र्या मातुर्नाशाय भवति । तृतीयांघ्रिजः शिशुर्विभवस्य संपदो नाशाय चतुर्थांघ्रिजःशिशुरापदो नाशाय शुभाय भवतीत्यर्थः ॥ भुजंगभेऽश्लेषायामेतत्फलमंत्यपादतः प्रतीपं विपरीतं । कोऽर्थः । अश्लेषाया अत्यंपादे जातः शिशुः पितुर्नाशकः एवं तृतीयोमातुर्द्वितीयो धनस्य प्रथमपादः शुभाय इति ॥ २४ ॥

**बिडौजसो जन्मनि भस्य जंतोर्द्विजिव्हताराफलवत् फलं स्यात् ॥**
**शतौषधीमज्जनहोमदानात्किलैतदुक्ताखिलदोषशांतिः ॥ २५ ॥**

अथ ज्येष्ठाफलमाह—**बिडौजेति** । जन्मनि बिडौजस इंद्रस्य नक्षत्रस्य ज्येष्ठायाः फलं द्विजिव्हः सर्पस्तस्य ताराऽश्लेषा तद्वत्फलं स्यात् ॥ कस्य जंतोर्नरस्य किलेति तदुक्ताखिलदोषशांतिः तेषु मूलादिनक्षत्रेषु उक्ताऽखिला दोषास्तेषां शांतिरुपशमनं स्यात् । कस्मात् शतौषधीमज्जनहोमदानात् स्पष्टमिति ॥ २५ ॥

**प्रतिष्ठिताख्यस्य शिशोः शुभान्हि त्रयीतनोरन्ह्यथवा विरिक्ते ॥**
**भवेन्नवांदोलकपंजरस्य निबंधनं मांद्यनिमीलनाय ॥ २६ ॥**

अथ पालणकबंधनमुहूर्तमाह—**प्रतिष्ठितेति** ॥ शिशोर्बालकस्य मांद्यनिमीलनाय रोगनाशाय नवांदोलकपंजरस्य निबंधनं भवेत् । कस्मिन् शुभान्हि शुभदिनेऽथवा त्रयीतनोः सूर्यस्यान्हि दिने विरिक्ते रिक्तातिथिवर्जिते किंभूतस्य शिशोः प्रतिष्ठिताख्यस्य प्रतिष्ठिता स्थापिता आख्या नाम यस्य स तस्य ॥ २६ ॥

**सदागतित्वाष्ट्रदितीज्यभेषु ध्रुवेषु चांदोलनिबंध उक्तः ॥**
**सदेवदोषज्ञहरीनभेषु व्युग्रोदयापर्वविपातकालः ॥ २७ ॥**

अथांदोलकबंधने नक्षत्रशुद्धिमाह—**सदेति** । आंदोलविबंध उक्तः बुधैरिति शेषः। केषु सदागतिर्वायुःस्वाती त्वष्टा चित्रा आदितिः पुनर्वसुः ईज्यः पुष्यः एषु नक्षत्रेषु पुनर्ध्रुवेषु ध्रुवसंज्ञानक्षत्रेषु कथंभूतेषु सदेवदोषज्ञहरीनभेषु देवदोषज्ञौ देववैद्यावश्विनी हरिर्विष्णुः श्रवणः इनः सूर्यो हस्त एभिः सह वर्तते तानि तेषु किंभूत आंदोलनिबंधः व्युग्रोदयापर्वविपातकालः विगता उग्रात् ईश्वरात् उदयो जन्म यस्याः सा विष्टिः पर्वाणि विपातो व्यतपातादि रेते यस्मात्सः विष्टिव्यतीपातपर्वरहित इत्यर्थः ॥ 'श्रीकंठोग्रौ धूर्जटी च भीमभर्गौ' इति हैमः ॥ २७ ॥

**विचिंतयेद्दोलकपेटकेऽस्मिंश्चतुर्दिशो हंसकरावृतर्क्षात ॥**
**दिशो हरेर्भान्यथ पंच पंच मध्ये ततः सप्त बुधः क्रमेण ॥ २८ ॥**

अथांदोलके नक्षत्रस्थापनमाह—विचिंतयेदिति ॥ बुधः पंडितो हंसकरावृतर्क्षात् सूर्यनक्षत्रात्क्रमेण हरेरिंद्रस्य दिशः पूर्वतः पंच पंच भानि अस्मिन् दोलकपेटके चतुर्दिशो विचिंतयेत्ततः पुनर्मध्ये सप्तभानि स्थापयेत् ॥ २८ ॥*

**इंद्राशमृक्षं शयने शुभं भवेद्यमाशमामाय कपाशमामदं ॥**
**यज्ञाशमत्रेति सुखाय भं शिशोरंतर्गतं तस्य च दोलबंधने ॥ २९ ॥**

अथ पूर्वादिस्थभफलमाह—इंद्रेति ॥ इति पूर्वोक्तप्रकारेण दोलकबंधने दोलकनक्षत्रस्थापने स्थितमृक्षं वर्तमानं च नक्षत्रमिंद्राशं पूर्वदिग्गतं भवति तदा तस्य शिशोः शुभं भवेत् । एवं यदि यमाशं दक्षिणगं तदामाय रोगाय । यदि कं जलं पातीति कंपो वरुणस्तमश्नुते इति तदाशं पश्चिमगतं तदाऽऽमदं रोगदं । यदा यज्ञाशमुत्तरदिग्गतं तदाऽत्रे मरणाय यदि अंतर्गतं पेटकमध्यगतं तदा सुखाय भं भवेदिति ॥ २९ ॥

**दोलेन पोतश्चरभेतरोदये वना४य११मा७रांग६विय१०त्रिकोणगैः ॥**
**सौम्यैरसौम्यैरहितायवीर्यगैश्चांदोलितः काममियादलं नृपः ॥ ३० ॥**

अथ दोलके लग्नशुद्धिमाह—दोलेनेति ॥ पोतो नृपः बालो राजा च दोलेन पाळणकेनांदोलितो किंचन क्रियाकरणात् काममभीष्टमियात् प्राप्नुयात् ॥ ततो वसंतादौ शुभमुहूर्ते दोलाखेलनमपि नृपस्य सुखाय अत एतदपि संलग्नं प्रोक्तमलामित्यर्थः । कैश्चरभेतरोदये स्थिरलग्ने सौम्यैर्ग्रहैः कृत्वा । किंविशिष्टैः वनं जलं चतुर्थं ४ आय एकादशं ११ मारः कंदर्पः सप्तमं ७ अंग षष्ठं ६ वियद् गगनं दशमं १० कोणं नवपंचमं ९।५ एषु गतैः चपुनरसौम्यैः खलैः किंविशिष्टैरसौम्यैः अहितः षष्ठं ६ आय एकादशं ११ वीर्यं तृतीयं ३ एषु गतैरित्यर्थः ॥ ३० ॥

**निशांततो निष्क्रमणं प्रवीणैः सूनोरथो मासि मिते चतुर्भिः ॥**
**प्रकीर्तितं सद्ग्रहवासरे वा सौरे दिने सौम्यतिथावभीष्टम् ॥ ३१ ॥**

अथ बालकस्य निष्क्रमणमाह—निशांतेति ॥ अथानंतरं प्रवीणैर्बुधैः सूनोः सुतस्य निशांततो गृहात् निष्क्रमणं निर्गमनमभीष्टं कमनीयं प्रकीर्तितं ॥ कस्मिन् चतुर्भिर्मिते मासि पुनः सद्ग्रहवासरे वा रवेर्दिने वा सौम्यतिथौ ॥ ३१ ॥

**गदाग्रजश्वेतरुचीनमित्रत्रिविष्टपेज्यादितिदस्रपूष्णां ॥**
**धिष्ण्येषु सूनुर्बहिरोकसोऽर्कं पश्येत्स्वपुष्ट्यै ननु वासवे च ॥ ३२ ॥**

अथ निष्क्रमणे नक्षत्राण्याह—गदेति ॥ सुनिश्चितं सूनुः पुत्र ओकसो गृहाद्बहिरर्कं पश्येत् सूर्यदर्शनं कुर्यादित्यर्थः । कस्यै स्वपुष्ट्यै बालकपुष्टितायै केषु गदाग्रजो विष्णुः श्रवणः श्वेतरुचिश्चंद्रो मृगशीर्षं इनो हस्तः मित्रोऽनुराधा त्रिविष्टपेज्यो नाकपूज्यो

---

* आकृती नंबर १

गुरुः पुष्यः अदितिः पुनर्वसुः दस्रोऽश्विनी पूषा रेवती एषां द्वंद्वे एषां धिष्ण्येषु च पुनर्वासवे धनिष्ठायां ॥ ३२ ॥

**अन्नादनं मासि रसैरभिन्ने सूनोस्तदासन्नगमासयुग्मे ॥**
**पुत्र्या भवेच्चात्र विदर्शपूर्णाभद्राजयापक्षतयः प्रदिष्टाः ॥ ३३ ॥**

अथ बालस्यान्नप्राशनमाह—अन्नेति ॥ सूनोः रसैरभिन्ने षष्ठे मासि अन्नादनं भवेत् । चपुनः पुत्र्यास्तदासन्नगमासयुग्मे तस्य षष्ठमासस्य उभयत आसन्नगौ समीपगतौ मासौ तयोर्युग्मे पंचमे सप्तमे इत्यर्थः । पुनरत्र विदर्शेति । विगताः दर्शोऽमावासी पूर्णास्तिथयः जयास्तिथयः पक्षतिः प्रातिपत् याभ्यस्ता एताः प्रदिष्टाः कथिताः अन्याः शुभा इत्यर्थः ॥ ३३ ॥

**संतोर्भकान्नाशनकर्मणींदुज्ञदेववंद्योशनसामहानि ॥**
**विमित्रमैत्राख्यलघुध्रुवाणि श्रवःश्रविष्ठादितिभानि चाहुः ॥३४**

अथान्नाशने वारनक्षत्राण्याह—संत इति ॥ संतो बुधाः अर्भकान्नाशनकर्मणि एतानि शुभान्याहुः । इंदुश्चंद्रः विद् बुधः इंद्रवंद्यो गुरुः उशनाःशुक्रः एषां द्वंद्वे एषामहानि चपुनर्विगतो मित्रोऽनुराधा एभ्यस्तानि एवंविधानि मैत्राख्यनक्षत्राणि लघुसंज्ञानि ध्रुवसंज्ञानि श्रवः श्रवणः श्रविष्ठा धनिष्ठा अदितिः पुनर्वसुः एतानि भानि च ॥ ३४ ॥

**मित्रर्क्षमुष्णांशुदिनं च षष्ठीमन्नाशने मंजु जगाद कश्चित् ॥**
**वीक्ष्योदितं तेन नवान्नशुद्धिं तत्रान्नमेत्यात्ययमेति पोतः ॥ ३५ ॥**

अथात्र ऋषिमतमाह—मित्रेति । कश्चिन्मंजु शुभं यथा भवति तथान्नाशने मित्रर्क्षमनुराधां उष्णांशुदिनं रविवारं षष्ठीं तिथिं च जगाद कथयामास। पोतो बालकोऽन्नमेत्य भुक्त्वाऽत्ययं नाशमेति प्राप्नोति । किंभूतमन्नं तत्र तेन ऋषिणा नवान्नशुद्धिं वीक्ष्य उदितं कथितं । अन्नप्राशननवान्नयोरेकमुहूर्तत्वात्तत्र नवान्नशुद्ध्यपेक्षया उक्तं अन्नप्राशनविधौ नेत्यर्थः ॥ ३५ ॥

**प्रेक्षांत्यपुण्यात्ययकेंद्रगो रविस्तनोति चित्रं पृथुके रसात्मजः ॥**
**पित्तं च मंदस्तनुते प्रभंजनं कृशः किल ग्लौर्हि तथा दरिद्रताम् ॥३६**

अन्नाशने लग्नफलमाह—प्रेक्षेति ॥ बुध्यै इति युग्मं ॥ अन्नकाशनेऽन्नादने तनुतो लग्नादिति सर्वत्र योज्यं । रविः पृथुके बालके चित्रं कुष्ठं तनोति 'चित्रं स्यात्पांडुरं कुष्ठं' इति हैमः । किंभूतो रविः प्रेक्षा बुद्धिः पंचमं ५ अंत्यं द्वादशं १२ पुण्यं नवमं९ अत्ययः अष्टमं ८ केंद्रं १।४।७।१० एतद्भावगः । एवं रसात्मजो भौमः पित्तं तनोति चपुनर्मंदः शनिः प्रभंजनं वायुं तनोति तथा कृशः क्षीणो ग्लौश्चंद्रो दरिद्रतां तनोति । हि पादपूरणे किल भावनायाम् ॥ ३६ ॥

**बुध्यै बुधो गीष्पतिरायुषे भृगुर्भोगाय सारंगकलंकभृच्छिशोः ॥**
**तत्स्थो भवेत्सर्वकलःकलौघदोऽतद्धिधुश्चात्ररिगोन्नकाशने ॥३७॥**

बुध्यै इति ॥ बुधस्तत्स्थः पूर्वोक्तप्रेक्षादिभवनस्थितः सन् शिशोर्बालस्य बुध्यै मतये भवति। एवं गीष्पतिर्गुरुरायुषे जीविताय भृगुः शुक्रो भोगाय सारंगभृत् कलंकभृच्चंद्रः सर्वकलःसंपूर्णकलावान् सन् कलौघदो विज्ञानादिकलादायको भवेत्। तस्थ इति सर्वत्र योज्यं। यदि च पुनर्विधुरत्ररिगोऽस्ताष्टमं ८ अरिः षष्ठं ६ एतयोर्गतोऽस्तकृत् मरणकारको भवेदिति ॥ ३७ ॥

**अथ व्यतीतैकसमस्य सूनोरुशंति वर्षद्वयकालशुद्धं ॥**
**चौलं निजान्वायविधिक्रमेण विदूषणे मासि सदन्ह्यभिज्ञाः ॥३८**

अथ चौलकर्माह—अथेति ॥ अथानंतरं अभिज्ञा दैवज्ञा निजान्वायविधिक्रमेण निजवंशविधानानुक्रमेण सूनोः सुतस्य चौलं मुंडनमुशंति वांछंति। कस्मिन् विदूषणे दूषणरहिते मासि पुनः सदन्हि शुभवारे किंभूतस्य सूनोर्व्यतीताऽतिक्रांता एका समा वर्षं यस्मिन्स तस्य किंयंतं चौलं वर्षद्वयकालशुद्धं वर्षयुग्मकाले शुद्धं ॥ ३८ ॥

**शिशौ जरावत्यतिचारगेऽनृजौ मृगेऽस्तगे लेयगतौ गुरौ हरेः ॥**
**गुरौ हरेरस्तगते विरोधिनां चौलादिसंस्कारविधिर्ह्यनादृतः ॥ ३९ ॥**

अथ गुरुशुक्रदोषे चौलं निषेधति—शिशाविति ॥ शिशौ बालके चौलादिसंस्कारविधिरनादृतो नांगीकृतो बुधैरिति शेषः। कस्मिन्सति हरेरिंद्रस्य गुरौ जीवे शिशौ बालके जरावति वृद्धेऽतिचारगे चारमतिक्रांतेऽनृजौ वक्रे मृगे मकरराशिगतेऽस्तंगते सिंहराशिगते सति तुपुनर्हरेरिंद्रस्य विरोधिनां द्विषां दैत्यानां गुरौ शुक्रेऽस्तंगते सति ॥ ३९ ॥

**मास्यन्हि भे जन्मवतश्च जन्मनो न मंगलं मंगलकृत्सदा भवेत् ॥**
**किलाद्यपत्यस्य तदेव मंगलं पुरुक्रियं शौक्रयमभीष्टदं न यत् ॥ ४० ॥**

अथ मासादीन् दूषयति—मासीति ॥ सदा जन्मवतः शिशोर्जन्मनो मासि अन्हि भे राशौ च मंगलं चौलादिसंस्कारविधानं मंगलं न भवेत्। किलेति सत्ये। यद् यस्मात् आद्यापत्यस्य प्रथमसंतानस्य तदेव मंगलमभीष्टदं कामदं न भवेत्। किंभूतं मंगलं शौक्रयं शुक्रे ज्येष्ठमासे भवं कृत्यं वा पुनः किंभूतं पुरुक्रियं पुरुर्भूयसी क्रिया यस्मिंस्तत्। 'भूर्यदभ्रं पुरु स्फिरं' इति हैमः ॥ ४० ॥

**चलांशुमद्गोपतिभानि दास्रं धिष्ण्ये सहस्राक्षकशीतभासोः ॥**
**सपौष्णचित्राणि सदा प्रवीणाःक्षौरे जगुर्ह्यादृतसौम्यतारे ॥ ४१ ॥**

अथ चौले नक्षत्राण्याह—चलांशुमदिति ॥ सदा प्रवीणाः पंडिताः क्षौरे एतानि नक्षत्राणि जगुरूचुस्तान्याह। चलानि चलसंज्ञानि अंशुमान् सूर्यो हस्तः गोपतिर्वाक्पतिर्गुरुः पुष्यः एतानि पुनर्दास्रमश्विनी सहस्राक्षकः सहस्राक्ष इंद्रो ज्येष्ठा शीतभाश्चंद्रो मृगशीर्षं एतयोर्भे धिष्ण्ये नक्षत्रे किंभूतान्येतानि सपौष्णचित्राणि रेवतीचित्रायुक्तानि किंविशिष्टे क्षौरे आदृतसौम्यतारे आश्रितशुभतारके ॥ ४१ ॥

सद्भिर्विरिक्तास्तिथयो विपर्वा विषष्ठ्यमापक्षदलेंदुघस्राः ॥
भवारयोगाखिलशुद्धिवत्यः क्षुरक्रियायामुदिता विभद्राः ॥ ४२ ॥

अथात्र पर्वादीनि प्रतिषेधाति—सद्भिरिति ॥ सद्भिर्बुधैस्तिथय उक्ता उदिताः कस्यां क्षुरक्रियायां किंभूतास्तिथयः विरिक्ता रिक्तातिथिवर्जिताः पुनर्विपर्वाः पर्ववर्जिताः पुनः किंभूताः विगता षष्ठी अमावासी पक्षदलमष्टमी इंदुघस्रः पूर्णमासी याभ्यस्ता विषष्ठ्यमापक्षदलेंदुघस्राः । पुनः किंभूताःभवारयोगाखिलशुद्धिवत्यः भानि वारा योगा एषामखिलया समस्तया शुद्ध्या युक्ताः पुनः किंभूताः विभद्राः विष्टिराहिताः ॥ ४२ ॥

स्याद्गोचरेणाष्टकवर्गकेण वा चेद्दृश्यते शुद्धिरिहोक्तकालवत् ॥
गंडांतसंध्यासमयौ तमस्विनीमपास्य भद्राकरणं सुखार्थकृत् ॥४३॥

अथात्र गोचरशुद्धिमाह—स्यादिति ॥ चेद्यदि गोचेरणाष्टकवर्गकेण वा इह उक्तकालवत् क्षौरकर्मोक्तकालतुल्या शुद्धिर्दृश्यते तदा भद्राकरणं मुंडनसुखार्थकृत् । किंकृत्वा गंडांतसंध्यासमयौ तमस्विनीं रात्रीं चापास्य हित्वा ॥ ४३ ॥

त्रिकोणकेंद्रस्वगतैरपापैः पापैरमित्रायपराक्रमस्थैः ॥
शुभोदये चान्यगते च केतौ गदंति चूडाकरणं कृतींद्राः ॥४४॥

अथात्र लग्नशुद्धिमाह—त्रिकोणेति ॥ कृतींद्राः पंडितमुख्याः चूडाकरणं मुंडनं वदंति । कैः शुभोदये शुभलग्ने त्रिकोणं नव ९ पंचमं ५ केंद्रं १।४।७।१० स्वं धनं द्वितीयं २ एषु भवनेषु गतैरपापैः सौम्यैः पुनरमित्रं षष्ठं ६ आय एकादशं ११ पराक्रमस्तृतीयं ३ एषु स्थितैः पापैः खलग्रहैः कृत्वा पुनरन्यगते उक्तेभ्योऽन्यस्थानगते केतौ सति ॥ ४४ ॥

पित्तं पतंगो मृतिमसृगस्त्रादब्जः कृशः कंटककोणसंस्थः ॥
लयं यमो यच्छति पंगुभावं गलामयं ग्लौर्वपने शिशूनाम् ॥४५॥

अथ चौले कंटकादिस्थितरव्यादिफलमाह—पित्तमिति ॥ कंटकं प्रथमं चतुर्थकं सप्तमं दशमं कोणो नवमं पंचमं एषु स्थितः पतंगो रविः शिशूनां बालानां वपने मुंडने पित्तं मायुं यच्छति ददाति ।एवं असृग् भौमोऽस्त्रादायुधात् मृतिं मरणं यच्छति । कृशः क्षीणोऽब्जश्चंद्रो लयं नाशं पुनर्यमः शनिः पंगुभावं ग्लौश्चंद्रो गलामयं कंठरोगं यच्छति । गलामयेऽगुरिति पाठे राहुर्गलामये रोगार्थं स्यात् ॥ ४५ ॥

मित्राचलर्क्षादिजवन्हितारा वरा सदापास्य विरुद्धतारां ॥
स्यात्पंचमं पंचममेव चाह्नः श्मश्रुक्रिया पंचजनेश्वराणाम् ॥ ४६ ॥

अथ प्रसंगान्नृपाणां क्षौरकर्माह—मित्रेति ॥ पंचजनानां मनुष्याणामीश्वरा राजानस्तेषां श्मश्रुक्रिया मुखलोमक्रिया स्यात् " मर्त्यः पंचजनो भूस्पृग्' इति हैमः॥ अस्यां श्मश्रुक्रियायां मित्रोऽनुराधा अचलर्क्षाणि स्थिरसंज्ञभानि आदिजाः पितरो मघा वान्हिः कृत्तिका एतास्तारा अपास्य अर्थाच्चेच्छया सुताराासु सा क्रिया शस्ता शुभा ॥क्षुरक्रियायां च जनेश्वराणामिति पाठे

शेषास्तारा: शस्ता इति बहुवचनांतपाठश्च साधुः ॥ चपुनः पंचमं पंचममेवाहर्दिनं शस्तं किंकृत्वा विरुद्धतारां त्रिपंचसप्तमादितारामपास्य हित्वा ॥ ४६ ॥

**व्रते मृतौ चानुदितेऽपि तीर्थे क्षौरं निदेशान्नरदेवतायाः ॥**
**द्वैजाद्दिने चाध्वरदीक्षणे भे धनंजयाधानविधौ वरं स्यात्॥४७॥**

अथ मुहूर्तं विनापि व्रतादौ क्षौरमाह—व्रते इति ॥ अनुदितेऽनुक्तेऽपि भे नक्षत्रे दिने च एषु क्षौरं वरं स्यात्तानाह ॥ व्रते व्रतविषये मृतौ मरणे तीर्थयात्रायां नरदेवतायाः भूपस्य निदेशादादेशात् द्वैजात् विप्रसंबंधिनिदेशात् अध्वरदीक्षणे यज्ञदीक्षायां धनंजयाधानविधौ अग्न्याधानकर्मणि दिने इति ॥ ४७ ॥

**कर्मन्दिनां पक्षविरामघस्रे स्याद्ब्रह्मचर्याहितपावकानां ॥**
**सत्यां सदा मुंडनमप्यशुद्धौ चतुर्विधैनोवयसापहं च ॥ ४८ ॥**

अथ संन्यासिकादीना क्षौरमाह—कर्मेमिति ॥ कर्मंदिना संन्यासिना ब्रह्मचर्याहितपावकानां ब्रह्मचारिणामग्निहोत्रिणां पक्षविरामघस्रे पक्षांतदिने पूर्णिमाऽमावास्यो च एतयो-र्मुंडनं स्यात् ॥ कस्यां शुद्धिरहिते पुनः सत्यां विधवायां सदा मुंडनं स्यात् ॥ किं-भूतं मुंडनं चतुर्विधैनोवयसापहं चतुर्विधगोघातादिपापावस्थानाशकं वयःशब्दोऽकारांतो-ऽपि अथवा समासेऽकारांतत्वम् ॥ ४८ ॥

**क्षौरैंदवाहर्युतिवारभेषु मासे नुरुक्तेष्ववदन्नथार्याः ॥**
**केशांतकर्मेज्यभृगूदयस्थे सौम्यायने षोडशहायनस्य ॥४९॥**

अथ षोडशवर्षस्य केशांतकृत्यमाह—क्षौरैंद्विति ॥ अथानंतरं आर्याः आचार्याः षोडशहायनस्य षोडशवर्षकस्य नुर्नरस्य केशांतकर्म केशक्षुरकार्यमवदन् जगुः । कस्मिन् केषु ईज्यभृगूदयस्थे गुरुशुक्रलग्नस्थिते सौम्यायने उत्तरायणे उक्तेषु कथितेषु क्षौरैं-दवाहर्युतिवारभेषु क्षौरोक्ततिथिवारनक्षत्रेषु ऐंदवाहेन चांद्रदिनेन युक्तवारनक्षत्रेषु समासे हसांतशब्दस्याऽकारांतत्वमनित्यं तेनैंदवाहर्युतिरित्यादि सर्वत्र ज्ञेयम् ॥ ४९ ॥

**वर्षे त्रिभिः प्रदरकांडमिते मिते वा संतः शिशोःश्रवणवेधविधानमाहुः।**
**मासेषु फाल्गुनमधूर्जसहस्यकेषु काव्येंद्रमंत्र्युदयवत्स्वसितान्यपक्षे ॥५०**

अथ वसंततिलकेन कर्णवेधमाह—वर्षे इति ॥ संतो विबुधाः शिशोर्बालस्य श्रवणवे-धविधानं कर्णाकीर्णकृत्यमाहुः । कस्मिन् केषु त्रिभिर्मिते वर्षे प्रशस्ताः प्रदरा बाणाः प्रदर-कांडाः कांडशब्दः प्रशस्यार्थस्तैर्मिते वा पंचमे इत्यर्थः ॥ फाल्गुनो मधुश्चैत्र उक्तः कार्तिकः सहस्यः पौषः एषु मासेषु किंभूतेषु मासेषु काव्यः शुक्रः इंद्रमंत्री गुरुर-नयोरुदयवत्सु शुक्रजीवोद्गमयुक्तेषु असितान्यपक्षे शुक्लपक्षे इत्यर्थः ॥ ५० ॥

**आदित्यभे मृदुलघुश्रुतिवासवेषु भिंद्याच्च सद्गगनमार्गदिनेषु शश्वत् ॥**
**कर्णौ शिशोर्गरलभूषितकंठजामारिक्तेतराखिलशशांकदिनेषु सूच्या ५१**

अथ कर्णवेधे नक्षत्रादीनाह—आदित्येति ॥ सुधीः शश्वत् सदा सूच्या प्रोक्तधातुशलाकया शिशोः कर्णौ भिंद्यात् उत्कीर्णयेत् । केषु आदित्यभे हस्तनक्षत्रे मृदुसंज्ञानि लघुसंज्ञानि श्रुतिः श्रवणो वासवं धनिष्ठा एषु पुनः सद्गगनमार्गदिनेषु शुभग्रहवारे पुनः गरलभूषितकंठः शंभुस्तस्माज्जायते इति तज्जा विष्टिरमावासी रिक्तास्तिथयः आभ्य इतरा अखिलाः समस्ताः शशांकदिनश्च इंद्वः एषु ॥ ५१ ॥

**कश्चिद्रदोदयत ईरितमुत्तराणां तेन त्रये लपदिह श्रुतिवेधकर्म ॥ अर्वागसाध्विति शिशोर्वचनं च क्लृप्तिः सल्लब्धवर्णगदितोक्तिविलोकनत्वात् ॥ ५२ ॥**

अथ मतांतरमाह—कश्चिदिति ॥ कश्चिदृषिः पंडितः इति वचनमलपत् । इतीति किं रदोदयतो दंतोद्गमादर्वाक् असाधु तेन हेतुना इह दंतोद्गमे सति श्रुतिवेधकर्म ईरितं प्रोक्तं कस्मिन् उत्तराणां त्रये नक्षत्रेषु कस्मात् सल्लब्धवर्णगदितोक्तिविलोकनत्वात् ॥ ५२ ॥

**संवेधयेच्छ्रवणमैंद्रनते खरांशौ योगे शुभेऽमृतमयूखबले च पौरे ॥ शीर्षोदयेमरपुरोधसि सद्युसद्भिः श्रोत्राश्रितैर्व्यशुभयोगनिशामनैश्च॥५३**

अथ कर्णवेधे लग्नादीनाह—संवेधयेदिति ॥ सुधीःश्रवणं कर्णं संवेधयेत् भिंद्यात् कस्मिन् सति ऐंद्रनते पूर्वाण्हे खरांशौ सूर्ये च पुनः शुभे योगे पुनरमृतमयूखबले चंद्रबले शीर्षोदये पौरे लग्ने । शीर्षोदयास्तु मिथुनसिंव्हकन्यातुलावृश्चिककुंभाः कथ्यंते । अमरपुरोधसि गुरौ शीर्षोदयलग्नगते इत्यर्थः ॥ पुनः कैःकृत्वा श्रोत्राश्रितैः तृतीये ३ कादश ११ गतैः सद्युसद्भिः सद्ग्रहैः कथंभूतैः सद्युसद्भिर्व्यशुभयोगनिशामनैः 'ईक्षणं तु निशामनं' इति हैमः ॥ ५३ ॥

**घोणामथोदगयने विषमे कुमार्या वर्षे सुवारतिथियोगविलग्नलग्नैः ॥ भिंद्यात्तु लघ्वचलमैत्रचरैर्विकर्क्षैर्भैराद्यपक्षवति राजनि चादियामे५४**

**इतिश्री कविकालिदासोदिते ज्योतिर्विदाभरणे मध्यसंस्काराध्यायः॥७॥**

अथ कुमार्या घ्राणवेधमाह—घोणामिति । अथानंतरं सुधीः कुमार्या घोणां घ्राणं भिंद्यात् वेधयेत् 'घ्राणं घोणा विकूणिका' इतिहैमः । कस्मिन् विषये वर्षे पुनरुदगयने पुनराद्यपक्षवति शुक्लपक्षयुक्ते राजनि चंद्रे पुनरादियामे प्रथमप्रहरे पुनः कैः कृत्वा सुवारातिथियोगविलग्नलग्नैः शुभवारः शुभातिथिः सुयोगः शुभविलग्नं एभिर्लग्नैर्युक्तैः 'लग्नं विलग्नं मेषादिः' इति॥ शब्दप्रभेदः। पुनर्लघुसंज्ञानि अचलानि स्थिरसंज्ञानि मैत्रसंज्ञानि चरसंज्ञानि एतैर्भैर्नक्षत्रैः किंभूतैर्नक्षत्रैः विकर्क्षैः रोहिणीवार्जितैः ॥ ५४ ॥

इति श्रीपौर्णिमीयगच्छाधिराजभट्टारकपुरंदरश्रीमहिमाप्रभसूरीश्वरचरणसरोरुहचंचरीकायमान शिष्यभावरत्नविरचितायां श्रीकविकालिदासकृतज्योतिर्विदाभरणस्य सुखबोधिकायांमध्यसंस्काराध्यायः सप्तमः ॥ ७ ॥

# उपवीतप्रकरणम् ८ ।

**जनितोऽथ निषेकतोऽष्टमे रशनाबंधनमग्रजन्मनाम् ।**
**श्रुतिधर्मविदो हि हायने जगदुर्वाक्षमितेऽपि वा गिरे ॥ १ ॥**

अथैतत्संस्कारकथनानंतरमुपनयनसंस्कारो घटतेऽतो वैतालीयेनोपवीताध्यायसंधानमाह—**जनित इति** ॥ अथानंतरं हि निश्चितं श्रुतिधर्मविदो विबुधाः जनितो जन्मतो निषेकतो गर्भाधानतो वाऽष्टमेऽक्षमिते पंचमेऽपि हायने वर्षे द्विजन्मनां विप्राणां रशनाबंधनं जगदुः कस्मै गिरे विद्यायै पठनायेत्यर्थः ॥ रशनाबंधनं तु विप्राणां मौंजीबंधः क्षत्रियाणां धनुर्ज्याबंधो वैश्यानां मौर्वीबंध इति विशेषः शास्त्राज्ज्ञेयः ॥ १ ॥

**शरदामगदच्चतुष्टये कुसुराणामपि पंचमाब्दतः ।**
**मुनिरासुरिरष्टमे व्रतं समये कश्चिदरं बटोरिते ॥ २ ॥**

अथात्र मतांतरमाह—**शरदामिति** ॥ अरं निश्चितं आसुरिर्मुनिः कुसुराणां भूदेवानां विप्राणां पंचमाब्दतः पंचमवर्षादारभ्य शरदां वर्षाणां चतुष्टये मौंजीबंधनमगदज्जगाद । अपि पुनः कश्चिदष्टमे समये वर्षे इते प्राप्ते सति बटोर्माणवकस्य व्रतं रशनाबंधनं जगाद ॥ २ ॥

**वरमर्णवचीवराभुजां व्रतमेकादशमे च हायने ।**
**सुसमीकविधानतेजसे खलु षष्ठेऽत्र न विभ्रमो भवेत् ॥ ३ ॥**

अथ क्षत्रियाणां व्रतमाह—**वरमिति** ॥ खलु निश्चितं अर्णव एव चीवरं यस्याःसा भूमिस्तां भुंजंतीति भुजस्तेषां क्षत्रियाणां एकादशेन मीयते इति एकादशमः अन्यद्धात्र मट्प्रत्ययस्याविषयत्वात् एकादशम इति न स्यात् । तस्मिन् षष्ठे च हायने वर्षे व्रतं धनुर्ज्याबंधनं वरं श्रेष्ठं स्यात् । कस्मै सुसमीकविधानतेजसे संग्रामकार्यवीर्याय अत्र विभ्रमः संशयो न भवेत् ॥ ३ ॥

**उपवीतविधानकं विशामलमर्कप्रतिमे विपश्चितः ।**
**अपि पण्यफलाप्तये भवेदवदन्वा व्रतमष्टकेऽब्दके ॥४॥**

अथ वैश्यानां व्रतबंधनमाह—**उपवीतेति** ॥ अलं निश्चितं विपश्चितः पंडिताः विशो वैश्यानामुपवीतविधानकं व्रतबंधनमवदन्नकथयन् । कस्मिन्नर्कप्रमिते द्वादशेऽब्दके वर्षे कस्यै पण्यफलाप्तये विक्रेयफलप्राप्तये 'पणितव्यं तु विक्रेयं पण्यं सत्यापनं' इति हैमः । वा पक्षांतरेऽष्टमे वर्षे व्रतं भवेत् ॥ ४ ॥

**कुभुजामपि सप्तमाब्दतोऽर्कसमाषट्कमुदीरितं व्रते ।**
**यवनासुरिदेवलोक्तिभिर्विबुधैराचितसंमितैर्विशाम् ॥ ५ ॥**

अथ व्रतबंधे ऋषिमतमाह—कुभुजामिति ॥ यवनासुरिदेवलोकिभिरेषामृषीणामुक्तिभिः कृत्वा विबुधैः कुभुजां क्षत्रियाणां विशां वैश्यानामपि सप्तमाब्दतः सप्तमवर्षादर्कसमाषट्कं सावनसूर्यसमानवर्षषट्कं व्रते ईरितं प्रोक्तं किंभूतैर्विबुधैराचितसंमतैः पूर्णमतैः ॥ ५ ॥

तरणावलकेशदिग्गतेऽमरदित्युद्भववंदितोद्गमे ।
जगुरंतरभागसंयुते व्रतबंधस्य विधिं मुनीश्वराः ॥६॥

अथोत्तरायणादौ व्रतबंधमाह—तरणेति ॥ मुनीश्वराः व्रतबंधस्य विधिं जगुः कस्मिन्नलकेशादिग्गते उत्तरायणे सूर्ये पुनरमरा देवा दित्युद्भवा दैत्या आभ्यां वंदितौ गुरुशुक्रौ अनयोरुद्गमे उदिते सति किंभूते तरणौ अंतरभागसंयुते सायनांशसहिते ॥ ६ ॥

निजतुंगभतोऽगभस्थिते हरिगे वक्रिणि वातिचारिणि ।
नमुचेरहितार्चिते शिशौ व्रतबंधो न पुराणविग्रहे ॥ ७ ॥

अथ गुरुदोषे व्रतबंधं निषेधति—निजेति ॥ व्रतबंधो न भवेत् कस्मिन् निजतुंगभतो निजोच्चराशितोऽगभस्थिते सप्तमराशिस्थिते हरिस्थे सिंव्हस्थे वक्रिणि वाऽतिचारिणि वा शिशौ बाले वा पुराणविग्रहे वृद्धे वा नमुचेर्दैत्यस्याहित इंद्रस्तेन अर्चिते गुरौ सति ॥ ७ ॥

दितिजेज्यतमीशयोरपीतरकामाय च वृद्धबालता ।
निगमस्मृतिकर्मतो भवेदुपवीतस्य विधानके बटोः ॥ ८ ॥

अथ शुक्रचंद्रयोर्वृद्धबालत्वे व्रतं निषेधति—दितीति ॥ दितिजानां ईज्यः पूज्यः शुक्रः तमीशश्चंद्रः अनयोर्वृद्धबालता बटोर्माणवकस्य उपवीतस्य विधानके निगमस्मृतिकर्मतो वेदस्मृतिकार्यात् इतरकामाय धर्मनाशाय भवेदित्यर्थः ॥ ८ ॥

क्षितिकंपनकालतो व्रतं नभसस्तारकपातकालतः ।
न विदुर्ग्रहतोंशुचंद्रयोरगभिद्यामयुगाश्रितं बुधाः ॥ ९ ॥

भूकंपनादौ दोषे मासत्रयं व्रतबंधनं निषेधति—क्षितीति ॥ बुधाः क्षितिकंपनकालतो भूकंपकालात् नभस आकाशात् तारकपातकालतस्तारापतनकालात् अंशुचंद्रयोश्चंद्रार्कयोर्ग्रहतो ग्रहणाच्च व्रतं न विदुः अगभिदिंद्रस्तस्य यामयुगाश्रितं द्विप्रहराश्रितं मासत्रयं यावदिति ॥ ९ ॥

प्रथमामररुंडमूर्तिभृद्गगने केतुरुदेति चेत्तदा ।
व्रतकृत्यमसिद्धिलाब्धिवत्स्मृतमाहायनमागमांबकैः ॥ १० ॥

अथ केतूदये वर्षपर्यंतं व्रतबंधनं निषेधति—प्रथमेति । चेद्यदि गगने केतुरुदेति उदयं प्राप्नोति किंभूतः केतुः प्रथमामराः पूर्वदेवा दैत्यास्तेषां रुंडमूर्तिरिव रुंडमूर्तिं बिभर्तीति प्रथमामररुंडमूर्तिभृत् रुंडशब्दः प्राकृते रोडबोडवो इति भाषा । तदा आगमांबकैर्वेदा एवांबकानि

नेत्राणि एषां तैर्वेदचतुर्भिर्वेददर्शनैर्वेदपाठकैराहायनं आङ् मर्यादायां वर्षपर्यंतं व्रतकृत्यं व्रतकार्यं आसीद्विलब्धिवत् फललब्धिशून्यं स्मृतम् ॥ १० ॥

**क्षयमास्यधिमास्यकालजस्तनयित्नूपलपातभागृतौ ।**
**व्रतमेत्य बटुः पुनर्भवेदवकीर्णी च विलुप्तहायने ॥ ११ ॥**

अथ क्षयमासादौ व्रतं निषेधति—क्षयेति ॥ बटुःव्रतमेत्य व्रतबंधनं प्राप्य पुनरवकीर्णी-खंडितव्रतो भवेत् 'क्षतव्रतोऽवकीर्णी स्यात्' इतिहैमः ॥ क्षयमासि अधिमासि अधिकमासे पुनः अकालजः प्रावृट्ऋतुं विना जातश्चासौ स्तनयित्नुर्मेघश्च तस्योपलपातः करकाणां पातस्तं भजतीति भाक् स चासौ ऋतुश्च तस्मिन् पुनर्विलुप्तहायने यस्मिन् वर्षे बृहस्पतेर्वत्सरे संमक्र-मणद्वयं स्यात्तल्लुप्तवर्षं तस्मिन् ॥ ११ ॥

**गुरुसंक्रमयुग्मवत्समा गदिता सा ननु लुप्तसंज्ञिका ।**
**विबुधैरहिता व्रते तु याऽधिसमा गीष्पतिसंक्रमोज्झिता ॥ १२ ॥**

अथ लुप्ताधिकवर्षलक्षणमाह—गुर्विति ॥ ननु निश्चितं विबुधैः सा समा लुप्तसंज्ञिता प्रोक्ता या गुरुसंक्रमयुग्मवत्समा गुरुसंक्रमणद्विकयुक्तं वर्षं स्यात् । पुनः साऽधिसमाऽधिकवर्षं स्याद्या गीष्पतिसंक्रमोज्झिता गुरुसंक्रमणरहितं वर्षं स्यात् ॥ १२ ॥

**स्वमदप्रतिभायधर्मगं धिषणं चातिबलं जगुर्बुधाः ।**
**घनकर्मबलाभियातिगं स्वबलीतार्चमिहर्क्षतो बटोः ॥ १३ ॥**

अथ राशिगतगुरोः फलमाह—स्वमदेति ॥ इह व्रतबंधे बुधाः बटोर्धिषणं गुरुं अतिबलं सानुकूलं सुखदं जगुः ऊचुः ॥ चातिफलमित्यपि पाठः ॥ किंभूतं गुरुं ऋक्षतो जन्मराशितः स्वं धनं द्वितीयः २ मदः सप्तमः ७ प्रतिभा विद्या पंचमः ५ आय एकादशः ११ धर्मो नवमः ९ एषां द्वंद्वे एषु राशिषु गतं जन्मराशित एतत्संख्याप्राप्तो गुरुः शुभ इति पुनर्बुधाः घनः प्रथमः १ धाम दशमः १० बलं तृतीयः ३ अभियातिः शत्रुः षष्ठः ६ एषां द्वंद्वे एषु राशिषु गतं गुरुं स्वब-लिना निजपूजोपहारेण इता प्राप्ताऽर्चा पूजा येन तं स्वबलीतार्चं सानुकूलं जगुः अनुकूलं इति शब्दप्रभेदः ॥ १३॥

**तनुतेऽर्चितकोऽप्यरं बटोर्जनिराशेर्हिबुकात्ययांत्यगः ।**
**धिषणो रशनानिबंधने वृजिनं दंडधरार्तिसंभवम् ॥ १४ ॥**

तनुत इति ॥ धिषणो गुरुररमत्यर्थमर्चितकोऽपि पूजितोऽपि बटो रशनाबंधने मौंजिबंधे वृजिनं वक्रमर्थसामर्थ्याद्दुःखं पापं वा तनुते विस्तारयति । किंभूतो धिषणो जनिराशेर्जन्मराशितो हिबुकं चतुर्थः ४ अत्ययमष्टमः ८ अंत्यं द्वादशः १२ एषां द्वंद्वे एतद्राशिगतः किंभूतं वृजिनं दंडधरार्तिसंभवं यमपीडाजातं 'दंडधरोऽर्कसूनुः' इति हैमः ॥ इति राशिगतगुरुफलम् ॥१४॥

यदा व्यतीताष्टसमस्य राशेर्बटोरनिष्टो भवतींद्रमंत्री ।
तमर्चयित्वा हि तदा विधेया व्रतक्रिया बुद्धिमतां वरिष्ठैः ॥१५॥

अथोपेंद्रवज्रया वयोतिते गुरुपूजामाह—यदेति ॥ यदा व्यतीताष्टमवर्षस्य बटोःराशेः जन्मराशेरिंद्रमंत्री अनिष्टो भवति तदा बुद्धिमतां वरिष्ठैर्धीरैःपंडितैर्व्रतक्रिया हि निश्चितं विधेया कर्तव्या किंकृत्वा तं गुरुमर्चयित्वा ॥ १५ ॥

सदा सपर्या द्विगुणातिदुष्टे शस्ता गुरावादिभुवामपींदौ ।
तथा नृपाणां त्रिगुणा विशां सा चतुर्गुणात्मीयबलिक्रियार्हा ॥१६॥

अथोपजात्या दुष्टगुरुचंद्रयोर्विप्रादीनां पूजाधिक्यमाह—सदेति । सदा गुरौ इंदौ चंद्रेऽप्यतिदुष्टे सति आदिभुवां द्विजानां द्विगुणा सपर्या पूजा शस्ता प्रोक्ता तदा नृपाणां त्रिगुणा पूजा विशां वैश्यानां सा पूजा चतुर्गुणा । किंभूता सपर्या आत्मीयबलिक्रियार्हा निजपूजाविधानयोग्या ॥ १६ ॥

यदातिदुष्टोऽमरधीसहायो द्विपारिगो मासि मधौ तिमिस्थे ।
तदा दिवानेतरि वा निबंधः षट्कर्मणां स्यात्खलु मेखलायाः॥१७॥

अथ दुष्टगुरौ चैत्रादौ व्रतबंधमाह—यदेति ॥ यदाऽमरधीसहायो गुरुरतिदुष्टो दुष्टतरो द्विपारिगः सिंहराशिगतो भवेत्तदा खलु निश्चितं षट्कर्मणां विप्राणां मेखलाया मौंज्या निबंधः स्यात् । कस्मिन्मधौ चैत्रे मासि दिवानेतरि सूर्ये तिमिस्थे मीनराशिस्थिते वेति॥१७॥

न गोचरे दृश्यत एव शुद्धिस्तदाष्टवर्गेण विलोकनीया ।
यदा व्रतस्योभयतो न मित्रे चैत्रे भवेन्नीरनिकेतनस्थे ॥ १८ ॥

अथ व्रतबंधे गोचरादिशुद्धिमाह—न गोचरइति॥ यदा गोचरे ग्रहगोचरे व्रतस्योपनयनस्य शुद्धिर्न दृश्यते तदाष्टवर्गेण शुद्धिर्विलोकनीया । यदा उभयतो गोचराष्टकवर्गाभ्यां शुद्धिर्न तदा चैत्रे मासे मित्रे सूर्ये सति शुद्धिर्भवेत् । किंभूते सूर्ये नीरनिकेतस्नथे नीरे जले निकेतनं गृहं यस्य स मीनस्तद्राशिस्थिते ॥ १८ ॥

न शक्तिनीने जगदुस्तपस्ये पराशराद्या रशनानिबंधं ।
न शुक्रसंज्ञे जितुमाश्रिते च न पौषमास्यूष्मकरे मृगस्थे ॥१९॥

अथात्र ऋषिमतमाह—न शक्तीति । पराशराद्या ऋषयोः रशनानिबंधं जगदुः कथयामासुः कस्मिन् शक्तिनि मीने इने सूर्ये सति पुनस्तपस्ये फाल्गुने मासे शुक्रसंज्ञे ज्येष्ठमासे पौषमासे पुनर्जितुमाश्रिते मिथुनराशिगते मृगस्थे मकरस्थे चोष्मकरे सूर्ये सति ॥ १९ ॥

हंसेऽजगे हारितदेवलादयो व्रतक्रियारंभमलं न मेनिरे ।
व्यासादयो धर्मविदोऽनिशं व्रतं वदंति तस्मिन्किल माधवाश्रिते ॥२०॥

पुनर्मतांतरमाह—**हंस इति** ॥ अलं भृशं हारितदेवलादय ऋषयो व्रतक्रियारंभं न मेनिरे नांगीचक्रुः कस्मिन् अजगे मेषराशिगते हंसे सूर्ये । किल निश्चितमनिशं निरंतरं धर्मविदो व्यासादयो व्रतं वदंति कस्मिन् तस्मिन्मेषराशिगते सूर्ये किंभूते तस्मिन्माधवाश्रिते वैशाखमासप्राप्ते ॥ २० ॥

**व्रतं गिरे मासि तपस्यपि स्याच्चिरायुषे फाल्गुनसंज्ञके च ।**
**वैशाखमध्वोरखिलार्थसिद्ध्यै शुक्रे शुचौ गोऽर्थदरिद्रतायै ॥ २१ ॥**

अथ माघादौ व्रतबंधफलमाह—**व्रतमिति** ॥ अपि निश्चितं तपसि माघे मासि व्रतं गिरे विद्याप्राप्तये स्यात् ॥ चपुनः फाल्गुनसंज्ञके मासि व्रतं चिरायुषे दीर्घजीविताय स्यात् ॥ पुनर्वैशाखे चैत्रे च व्रतमखिलार्थसिद्ध्यै समस्तपदार्थसिद्धये स्यात् ॥ पुनः शुक्रे ज्येष्ठमासे शुचौ आषाढमासे व्रतं गोऽर्थदरिद्रतायै गौः सरस्वती अर्थो द्रव्यं अनयोर्दरिद्रताऽभावस्तस्यै स्यात् । कस्य बटोरिति शेषः ॥ २१ ॥

**माघास्यमासामुपवीतकृत्ये स्यादादृतं षट्कमपि प्रियं न ।**
**तदादिजानामुदितं तदेवाऽत्रिणोत्तराशायनगं परेषाम् ॥ २२ ॥**

अथ मतांतरमाह—**माघेति** ॥ आदिजानां विप्राणामुपवीतकृत्ये माघास्यमासां माघप्रमुखमासानां यत् षट्कमादृतमंगीकृतमपि प्रियं न स्यात्साधरणत्वात् । अत्रिणा ऋषिणा तदेव माघादिषट्कमुत्तराशायनगमुत्तरदिगयनगतमुदितं प्रोक्तं केषां परेषामितरेषां क्षत्रियादीनाम् ॥ २२ ॥

**मासं बटोरजिनदंडकमेखलानां केचिद्बुधा वितरणे वरमामनंति ।**
**दर्शावधिं सकलधर्मविदो वदंति मासं च षोडशकलेंदुवतीविरामम् ॥ २३ ॥**

अथ वसंततिलकया चर्मदंडमौंजीधारणे मतांतरमाह—**मासमिति** । केचिद् बुधाः बटोर्माणवकस्याजिनदंडकमेखलानां चर्मदंडमौंजीनां वितरणे दाने दर्शावधिममावास्यांतं मासं वरं श्रेष्ठमामनंति कथयंति ॥ चपुनः सकलवेदविदोऽखंडवेदपारगाः षोडशकलेंदुवती समस्तकलायुक्तचंद्रयुक्ता पूर्णिमा तस्या विरामपर्यंतं मासं वरं वदंति—**अजिनेति** । यत उक्तं ‘मेखलामजिनं दंडमुपवीतं च नित्यशः ॥ कौपीनं कटिसूत्रं च ब्रह्मचारी तु धारयेत् ॥ १ ॥ अग्नींधनमधःशय्यां भैक्षचर्यां गुरोर्हितं’ इति ॥ २३ ॥

**सदा वरं काश्यपिकामराणां मधावृतौ मेखलबंधकर्म्म ।**
**मधौ निदाघे किल बाहुजानां विशां भवेत्प्रावृषि वा निदाघे ॥ २४ ॥**

अथोपेंद्रवज्रया वसंतादौ विप्रादीनां व्रतबंधमाह—**सदेति** ॥ काश्यपी एव काश्यपिका भूमिस्तस्या अमरा देवा विप्रास्तेषां मेखलबंधकर्म मौंजीकार्यं मधौ बसंते ऋतौ सदा वरं श्रेष्ठं

भवेत् "काश्यपीपर्वताधारा" इति हैमः ॥ एवं बाहुजानां क्षत्रियाणां मेखलाकार्यं मधौ वसंते निदाघे ग्रीष्मे वा पुनर्विशां वैश्यानां प्रावृषि वर्षाकाले निदाघे ग्रीष्मे वा ॥ २४ ॥

**व्रतं सिते सद्भिरुदीरितं वा राजा भवेत्पंचकलावशेषः ।**
**पक्षे सिते यावदपीति तावत्सितेऽसिते त्रैघृणिना प्रदिष्टम् ॥ २५ ॥**

अथोपजात्या शुक्लकृष्णपक्षयोर्व्रतबंधं दर्शयति—व्रतेति ॥ सद्भिर्बुधैः सिते पक्षे व्रतमुदीरितं प्रोक्तं च पुनर्यावत् पंचकलावशेषोऽवशेषपंचकलामात्रो राजा चंद्रो भवेत्तावत्कालं त्रैघृणिना ऋषिणा सितेऽसिते वा पक्षे व्रतं प्रदिष्टं प्रोक्तम् ॥ २५ ॥

**रिक्तात्रये निस्तृतियाजयाढये ससप्तमीपक्षतिपूर्णिमामे ।**
**गलग्रहः स्यात्तमपास्य शंखो व्रते सदाहोभयचांद्रपक्षौ ॥ २६ ॥**

अथ व्रतबंधे गलग्रहं निषेधति—रिक्तेति ॥ सदा निरंतरं गलग्रहः स्यात् । कस्मिन् रिक्तात्रये चतुर्थीनवमीचतुर्दशीतिथौ ।किंभूते रिक्तात्रये निस्तृतीयाजयाढये तृतीयां विनाष्टमी-त्रयोदशीयुक्ते पुनः ।किंभूते रिक्तात्रये ससप्तमीपक्षतिपूर्णिमामे सप्तमी प्रतिपत् पूर्णिमाऽमावा-स्याभिः सह वर्तते यत्तत्तस्मिन् सदा शंखो मुनिस्तं गलग्रहमपास्य हित्वा व्रते उभयचांद्रपक्षौ शुक्लकृष्णचांद्रपक्षौ आह वदति ॥ २६ ॥

**घस्रा दिगीशेष्विनषट्त्र्य १०।११।५।१२।६।३। भिन्नाःशस्ता**
**व्रते चेह सदादिपक्षे । कार्ष्णा मिता द्व्यक्ष ५ दिगं १०ग ६**
**रामै ३ रनेकपक्षेष्वविरुद्धमेतत् ॥ २७ ॥**

अथ व्रतबंधे दशम्यादितिथीन् दर्शयति—घस्राइति ॥ सदा निरंतरमिह व्रते आदिपक्षे शुक्लपक्षे घस्राः दिवसाः शस्ताः प्रोक्ताः । किंभूता घस्राः दिग् १० दश ईशा एकादश ११ इषवः पंच ५ इना द्वादश १२ षट् ६ त्रयः ३ एषां द्वंद्वे एभिरभिन्नास्तुल्याः दश-म्यैकादशीपंचमीद्वादशीषष्ठीतृतीयातिथय इति । पुनः कार्ष्णाः कृष्णपक्षभवाः घस्राः शस्ताः । किंभूता घस्राः द्व्य २ क्ष ५ दि १० गंग ६ रामै ३ मिताः द्वितीया पंचमी षष्ठी तृतीया इति । अनेकपक्षेषु बहुऋषिमतेषु एतदुक्तमविरुद्धं सर्वेषां संमतमिति ॥ २७ ॥

**भवोद्भवायामयनर्तुसंध्योर्गलग्रहे पर्वणि मंदवारे ।**
**क्रांत्योः समत्वेंऽशुमदृक्षभर्त्रोर्व्रतं बटोरत्ययदं कुयोगे ॥ २८ ॥**

अथ व्रतबंधे विष्ट्यादीन् निषेधति—भवोद्भवायेति ॥ व्रतं बटोरत्ययदं मृत्युदं स्यात् । कस्मात् भवादीश्वरादुद्भवो यस्याः सा भद्रा तस्यां पुनरयनर्तुसंध्योः अयनसंधौ ऋतुसंधौ पुनर्गलग्रहे पुनः पर्वणि पुनर्मंदवारे पुनरंशुमदृक्षभर्त्रोः अंशुमांश्च ऋक्षभर्ता च तयोः सूर्यचंद्रयोः क्रांत्योः समत्वे पुनः कुयोगे ॥ २८ ॥

गुरूशनोंगारकराजपुत्रा ज्ञेयाः क्रमेणागमपाः प्रवीणैः ॥
निजागमेशाहनि मेखलाया बंधस्तदाचारकरो निरुक्तः ॥ २९ ॥

अथ वेदस्वामिन आह—गुर्विति ॥ प्रवीणैः पंडितैः क्रमेण गुर्वादय आगमपा ज्ञेयाः ॥ ऋग्वेदस्य गुरुः स्वामी यजुषः शुक्रः साम्नो भौमः अथर्वणो बुध इति वेदपाः ॥ मेखलाया बंधस्तदाचारकरस्तेषां विप्रादीनामाचारकृदुक्तः कस्मिन् निजागमेशाहनि निजनिज-वेदपतिदिवसे ॥ २९ ॥

द्विजौ हरीज्यास्फुजितौ च राजावारांशुमंतौ विडथोषधीशः ॥
स्ववर्णखेटान्ह्युपवीतकर्म स्वधर्मदं वै तदसंभवत्वात् ॥ ३० ॥

अथ गुर्वादीनां वर्णसंज्ञामाह—द्विजाइति ॥ हरीज्यः इंद्रपूज्यो गुरुश्च आस्फुजिच्छुक्रश्च तौ द्विजौ विप्रौ स्तः। चपुनरारांशुमंतौ आरश्च अंशुमांश्च तौ भौमसूर्यौ राजौ क्षत्रियौ स्तः। राट् राजौ इति द्विवचनं ॥ अथ पुनरोषधीशश्चंद्रो विट् वैश्यः स्यात् । वै निश्चितं स्ववर्णखेटान्हि निजवर्णग्रहदिने उपवीतकर्म स्वधर्मदं निजधर्मदं स्यात् । यथा विप्राणां विप्रसंज्ञगुरुशुक्र-दिने व्रतकार्यं निजधर्मदं स्यात् । पुनस्तदसंभवत्वात्तयोर्विप्रादिवर्णगुर्वादिवर्णयोर्योगस्याभावात् किंकर्तव्यं तदाह अग्रेतनकाव्ये ॥ ३० ॥

सर्वागमेष्वर्कगुरूशनोब्जा व्रतार्थदाः स्युस्त्वथ सामगानां ।
राज्ञां धराभूर्विदथर्वगानां तत्सिद्धिदश्चोरुभुवामिह स्यात् ॥ ३१ ॥

सर्वेति। सर्वागमेषु अर्कः गुरुः उशनाः शुक्रः अब्जश्चंद्र एते व्रतार्थदाः व्रतेऽर्थदायकाः स्युः॥ अथ तु पुनः सामगानां सामवेदानुगामिनां राज्ञां क्षत्रियाणां धराभूर्भौमस्तत्सिद्धिदस्तस्य व्रतस्य सिद्धिदायकः स्यात् । चपुनरेवमिह ऊरुभुवां वैश्यानां विद् बुधस्तत्सिद्धिदःस्यात् । किंभूतानां वैश्यानामथर्वगानामथर्ववेदानुगानामिति ॥ ३१ ॥

विषविषाभरणाहिभगोष्मकृन्निर्ऋतिमारुतमारमणोडुषु ॥
ससुरवर्द्धकिभेषु भवेद्बटोर्व्रतमृचो विधये श्रुतिकर्मणः ॥३२॥

अथ द्रुतविलंबितेन ऋग्वेदव्रतनक्षत्राण्याह—विषेति । श्रुतिकर्मणो वेदकार्यस्य बटोर्माण-वकस्य ऋचो विधये ऋग्वेदविधानाय व्रतं भवेत् । केषु विषं जलं पूर्वाषाढा विषाभरणः कंठे काल आर्द्रा अहिराश्लेषा भगः पूर्वाफाल्गुनी ऊष्मकृत्सूर्यो हस्तः निर्ऋतिर्मूलं मारुतः स्वाती मा लक्ष्मीस्तस्या रमणो विष्णुः श्रवण एषां द्वंद्वे एतदुडुषु किंभूतेष्वेषु सुरवर्द्धकिर्देवसूत्रधार-स्तस्य भं चित्रा तेन सह वर्तंते यानि तानि ससुरवर्द्धकिभानि तेषु 'विषं जले क्ष्वेडे' इति हैमः ॥ ३२ ॥

अलमलोललघुत्रिदशेंद्रभूभगहिमांशुहिमांशुमृगीदृशः ॥
ननु बटोर्यजुषो व्रतबंधने मुनिवरैरुदिताः श्रुतिपारगैः ॥३३॥

अथ यजुर्वेदव्रतनक्षत्राण्याह—अलमिति ॥ ननु निश्चितमलमित्यवधारणे श्रुतिपारगैः वेदपारप्राप्तैर्मुनिवरैर्वटोर्यजुषो व्रतबंधनेऽलोलादितारा उदिताः प्रोक्ताः ॥ अलोलानि स्थिरसंज्ञानि लघुसंज्ञानि भानि त्रिदशेंद्रसूः सुरपतिमाताऽदितिः पुनर्वसुः भगः पूर्वाफाल्गुनी हिमांशुश्चंद्रो मृगशीर्षं एषां द्वंद्वे एषां हिमांशुमृगीदृशश्चंद्रभार्यास्तारा इत्यर्थः ॥ ३३ ॥

**प्रथमभासुरवैरिविभूतिभृद्धिषणभोत्तरभेनवसूडुषु ॥**
**ननु समेत्य हि सामबटुर्व्रतं श्रुतिरसं श्रुतिसंभवमश्नुते ॥३४॥**

अथ सामवेदव्रतनक्षत्राण्याह—प्रथमेति ॥ हि युक्तं सामबटुः सामवेदाध्ययनार्थी बटुः प्रथमभादिभेषु व्रतमेत्य प्राप्य सततं निरंतरं श्रुतिरसं कर्णपुटस्वादमश्नुते प्राप्नोति ॥ प्रथमभं अश्विनी असुरवैरी विष्णुः श्रवणः बिभूर्तिं भस्म बिभर्ति इति विभूतिभृत् शिव आर्द्रा धिषणो गुरुस्तद्भं पुष्यः उत्तरभानि उत्तरात्रयं इनः सूर्यो हस्तः वसवो धनिष्ठा एषां द्वंद्वे उडुषु । किंभूतं श्रुतिरसं श्रुतिसंभवं वेदघोषसंजातम् ॥ ३४ ॥

**बलनिषूदनजिद्रथकाश्यपीश्वसनमित्रसवित्रिनवैद्यभैः ॥**
**सवसुभामरवर्द्धकिभैः स्मृतं व्रतमथर्ववटौ पटुबुद्धिभिः ॥३५॥**

अथाथर्ववेदव्रते नक्षत्राण्याह—बलेति । पटुबुद्धिभिरथर्ववटौ अथर्ववेदमाणवके व्रतं स्मृतं कथितं कैः बलनिषूदन इंद्रस्तं जितवान् इति तज्जिद्गरुडः ' वज्रिजिद्वज्रतुंड, इत्यभिधानचिंतामणिवचनात् ॥ स एव रथो यस्य तेन रमते वा इति बलनिषूदनजिद्रथो विष्णुस्तस्य भं श्रवणः काश्यपी अदितिः पुनर्वसुः श्वसनोऽनिलः स्वाती मित्रोऽनुराधा सविता सूर्यो हस्तः इनवैद्यौ इनः सूर्यस्तस्यापि देवत्वात्तद्वैद्यौ आश्विनी एषां द्वंद्वे एभिः किंभूतैः सवास्विति । वसुभं धनिष्ठा अमरवर्द्धकिभं चित्रा आभ्यां सह वर्तते यानि तानि तैः ॥ ३५ ॥

**मुक्त्वादिभं क्वचिदिहादृतमांत्यमैत्रेऽथोवादृते व्रतविधौ यजुषां च साम्नां ॥ नांगीकृतं त्रिदशदोषविदृक्षमांत्योपांत्यर्क्षमादृतमृचामसदस्त्यपीति ॥ ३६ ॥**

अथ वसंततिलकेन मतांतरमाह—मुक्त्वेति । अपि निश्चितमिति असत् अस्ति इतीति किं तदाह यजुषां साम्नां च वेदानां व्रतविधौ इह नक्षत्रेषु क्वचिदांत्यमैत्रे रेवत्यनुराधे मुक्त्वा आदिभमश्विनी आदृतं क्वचिदादिभं मुक्त्वा आंत्यमैत्रे आदृते । अथो वा ऋचां वेदानां व्रतविधौ त्रिदशदोषविदृक्षं देवदोषज्ञनक्षत्रमश्विनी नांगीकृतं क्वचित् आंत्योपांत्यर्क्षं उत्तराभाद्रपदांऽगीकृतामिति । आंत्यमैत्रेऽथो वा इत्यत्र एकारांतद्विवचनांते संधिकार्यं केषांचिन्मताश्रितत्वाद्भवत्येव । यतो बृहद्वृत्तौ केचिन्मणी वेत्यादौ असंधिप्रतिषेधं वर्णयंति तदयुक्तं वशब्देनोपमार्थेन सिद्धत्वात् । मणि इवोद्भिन्नमनोहरत्विषावित्यादावसंधिदर्शनाच्च ॥ अन्ये तु यथादर्शनं संधिमसंधिं वेच्छंति माणि इव दंपतीव रोदसीव मणीवेति हेमसूरिभिः स्वयं नांगीकृतं मताश्रितं तु दर्शितं च संधिकार्यं अतो वक्ष्यमाणाधिकारेऽपिज्ञेयम् ॥ ३६ ॥

**पौष्णेंदिरारमणकैरविणीशगंधवाहाख्यवस्वमरवर्द्धकिभेषु केचित् ॥**
**आहुर्व्रतं सकलवेदविभेदगानां ब्रध्नेज्यभादिभयुतेषु धरामराणाम् ॥३७**

पुनर्मतांतरमाह—पौष्णेति । केचिद्बुधाः सकलवेदविभेदगानां सर्ववेदभेदानुगामीनां धरामराणां विप्राणां पौष्णादिभेषु व्रतमाहुः। पौष्णं रेवती इंदिरा लक्ष्मीस्तस्या रमणो विष्णु श्रवणः कैरविणीशश्चंद्रो मृगशीर्षं गंधवहाख्यो वायुः स्वाती वसवो धनिष्ठाऽमरवर्द्धकिर्भं चित्रा एषां द्वंद्वे । एषु किंभूतेषु ब्रध्नो रविर्हस्तः ईज्यभं पुष्यः आदिभमश्विनी एषां द्वंद्वे एभिर्युतेषु ॥ ३७ ॥

**सनिजवेदविभुन्यथ न व्रतं मघवमंडलखंडनमंडले ।**
**पणफरालयतत्परभावगे घनगृहान्निजवेदविभौ भवेत ॥३८॥**

अथ द्रुतविलंबितेनास्तंगते वेदविभौ तनुभावादिगते च व्रतं निषेधति—स निजेति ॥ मघवो नक्षत्रस्वामी चंद्रस्तस्य मंडलस्य खंडनः सूर्यस्तस्य मंडले मघवमंडलखंडनमंडले सूर्यमंडले किंभूते सनिजवेदविभुनि निजनिजवेदस्वामिना सह वर्तते यत्र तस्मिन् स्ववेदविभौ अस्तंगते सति व्रतं न स्यादित्यर्थः। वेदविभावथेति पाठोऽपि त्रिलिंगत्वाद्युक्तः ॥ अथ पुनर्घनगृहात्तनुभवनतः पणफरालयतत्परभावगे निजवेदविभौ सति व्रतं न भवेत् ॥ द्वितीय २ पंचम ५ अष्टमै ८ कादश ११ भावानां पणफरालयसंज्ञा इति तत्परभावास्तेभ्यः पणफरालयेभ्यः परा अग्रेतना भावास्तृतीय ३ षष्ठ ६ नवम ९ द्वादशा १२ आपोक्लिमसंज्ञा इति बृहज्जातके प्रोक्तं ॥ पणफरालयाश्च तत्परभावाश्च ते तेषु गते इति ॥ ३८ ॥

**सपुरपुष्करकर्ममदैकभःश्रुतिपतिः कुरुते व्रतकामिनं ॥**
**व्रतविलब्धकलं च निजस्तनोः सुमतिलब्धभुजं मतिलब्धिगः ॥३९॥**

अथ तनुभावादिगतवेदपतेः फलं वर्णयति—सपुरेति ॥ निजः श्रुतिपतिर्वेदस्वामी व्रतकामिनं व्रतेच्छुं बटुं व्रतविलब्धकलं व्रतात् विशेषेण लब्धाः प्राप्ताः कला ज्ञानरूपा येन स तं एवंविधं कुरुते। विलब्धफलमिति पाठः विभूषफलमित्यपि पाठः । किं विशिष्टः श्रुतिपतिः तनोः प्रथमभवनात् सपुरपुष्करकर्ममदैकभः पुरं शरीरं प्रथमं १ पुष्करं जलपर्यायत्वाच्चतुर्थं ४ कर्म दशमं १० मदः सप्तमं ७ एषां मध्ये एकभेन एकतरतात्कालिकलग्नराशिना सह वर्तते यः स च पुनर्मतिलब्धिगः पंचमभवनतो निजः श्रुतिपतिः सुमतिलब्धभुजं नरं कुरुते शुभमत्या लब्धं यद्व्रतादि तद् भुनक्तीति सुमतिलब्धभुक् तं ॥ ३९ ॥

**अनिमिषानिमिषद्विषदर्चितौ द्विषदगारगतौ विरतिप्रदौ ।**
**श्रुतिपवर्णविभू च निजौ तु वा विरतिगावपि तौ विरतिप्रदौ॥४०॥**

अथ व्रते गुरुशुक्रयोर्वेदवर्णस्वामिनोश्च फलमाह—अनिमिषेति ॥ द्विषदगारगतौ षष्ठाभावस्थितौ अनिमिषा देवाः अनिमिषद्विषंतो दैत्याः अनयोर्द्वंद्वे एभिरर्चितौ पूजितौ गुरुशुक्रौ

विरतिप्रदौ मृत्युदायकौ भवेतां । वा तु पुनः निजौ श्रुतिवर्णविभू वेदस्वामिवर्णस्वामिनौ विरतिगौ अष्टमभावस्थितौ तदा विरतिप्रदौ मृत्युदायकौ स्तः॥ तु पुनस्तावपि गुरुशुक्रावपि विरतिगौ मृत्युदौ स्तः ॥ ४० ॥

**कुलिशभृत्सचिवे घनगे सिते मतितपोऽनुगते मघवेऽथवा ।**
**कविलवेऽखिलतर्कचरो भवेच्छ्रुतिपथि द्रुहिणाद्यनुगे व्रती ॥४१॥**

अथ व्रते गुरुशुक्रचंद्राणां शुभफलमाह—कुलिशेति ॥ व्रते मौंज्यादिधारकः श्रुतिपथि वेदमार्गेऽखिलतर्कचरः समस्तवेदविचारगामी भवेत् । किंभूते श्रुतिपथि द्रुहिणाद्यनुगे ब्रह्मादिदेवानुगामिनि कस्मिन् कुलिशभृदिंद्रस्तस्य सचिवे गुरौ घनगे तनुभावगे सति पुनः सिते शुक्रे मतितपोनुगते पंचमनवमभावगे मघवे चंद्रे अथवा कविलवे शुक्रनवांशे सति ॥ ४१ ॥

**भगलवेऽथ कृशोऽब्जलवे जडः कुजलवे कुमना ज्ञलवे बुधः ।**
**धिषणाधिष्ण्यलवेऽध्वरकृद्बटुर्भवति मातृमुखो हरिजांशके ॥ ४२ ॥**

अथ व्रते सूर्याद्यंशानां फलमाह—भगेति ॥ बटुर्भगलवे सूर्यनवांशे कृशो दुर्बलो भवति । एवमब्जलवे चंद्रांशे जडो मूर्खः कुजलवे भौमांशे कुमना विमनस्कः ज्ञलवे बुधनवांशे बुधः पंडितः धिषणधिष्ण्यलवे गुरुशुक्रनवांशेऽध्वरकृत् यज्ञकर्ता हरिः सूर्यस्तस्माज्जायते इति तज्जः शनिस्तस्य नवांशे मातृमुखो मूर्ख इति ॥ ४२ ॥

**प्रथमदेवपुरोधसि वा गुरौ द्विजविभावसदन्वितमंडले ॥**
**अहितकालकुले कुलकालकृद्भवति दंड्यसदंशगतेऽपि च ॥ ४३ ॥**

अथ व्रते क्रूरग्रहयुक्तशुक्रगुरुचंद्राणां फलमाह—प्रथमेति । दंडी व्रती कुलकालकृत् अन्वयनाशको भवति कस्मिन् प्रथमदेवा दैत्यास्तेषां पुरोधसि शुक्रे वा द्विजविभौ चंद्रे वाऽसदन्वितमंडले दुष्टग्रहयुक्तमंडले सति पुनरहितकालकुले षष्ठाष्टमगते चैतत्त्रये असदंशगते पापग्रहनवांशगते सति ॥ ४३ ॥

**खरघृणावनुजीव्यचलाभृतः शशिनि कंटकगे कृषिको बटुः ॥**
**कुभुवि शस्त्र्यतिविद्य इहैंदवेऽमरपुरोधसि भूरिगुणार्थभुक् ॥४४॥**

अथ काव्यद्वयेन व्रते केंद्रगतसूर्यादीनां फलमाह—खरेति ॥ इह लग्ने बटुः खरघृणौ सूर्ये कंटकगे १।४।७।१० सति अचलाभृतो नृपस्यानुजीवी सेवको भवति । एवं शशिनि चंद्रे कंटकगे कृषिको हलकर्मकारकः पुनःकुभुवि भौमे कंटकगे शस्त्री शस्त्रायुधः पुनरैंदवे बुधे कंटकगेऽतिविद्यो बहुविद्यायुक्तः पुनरमरपुरोधसि गुरौ कंटकगे भूरिगुणार्थभुक् बहुकीर्ति द्रव्यभोक्ता भवतीति ॥ ४४ ॥

**दितिजबुद्धिसहायनभश्चरे चरति तत्र बटुर्व्रतलब्धितः ॥**
**वृषमखादिकमोति न किं शुभं तरणिजे च जनंगमसंगकृत् ॥ ४५॥**

दितिजेति ॥ व्रतलब्धितो व्रतप्राप्तकालात् बटुर्वृषमखादिकं धर्मयज्ञादिकं शुभं किं न एति प्राप्नोति । कस्मिन् नत्र कंटके दितिजबुद्धिसहायनभश्चेर शुक्रग्रहे चरम् तस्मिन् चरति गच्छति सति च पुनर्बटुर्जनंगमसंगकृत् चांडालसंगकारी भवेत् कस्मिन् तरणिजे शनौ कंटकगे सति ॥ ' दिवाकीर्तिजनंगमाः ' इति हैमः ॥ ४५ ॥

**सादितरांबरपाथचतुष्टयं खलु विखोपचयर्क्षकृताश्रयं ॥**
**सदुपकारफलं व्रतबंधने किल करोत्यथ वर्णिनि सूदयम् ॥४६॥**

अथ व्रते उपचयगतदुष्टग्रहाणां फलमाह—सादितरेति ॥ सादितरांबरपांथचतुष्टयं सद्भ्यः शुभग्रहेभ्य इतरे अन्येंऽबरपांथा दुष्टग्रहा रविभौमशनिक्षीणचंद्राः एषां चतुष्टयं कर्तृपदं वर्णिनि ब्रह्मचारिणि व्रतबंधने सदुपकारफलं सज्जनानामुपकारफलं करोति किंविशिष्टं चतुष्टयं विखोपचयर्क्षकृताश्रयं विगतं खं दशमं येभ्यस्तानि एवं विधानि उपचयर्क्षाणि तृतीय ३ षष्ठे ६ कादश ११ भवनानि तेषु कृत आश्रयो येन तत् ॥ पुनः किंविशिष्टं सूदयं शुभोदयं ॥ ४६ ॥

**ब्रह्मसूत्रधृतिरुत्तमोदयादुष्मगोः क्षणचतुष्टये बटोः ॥**
**मध्यमा च तदहर्दलावधि स्यादतः क्षणचतुष्टयेऽधमा ॥ ४७ ॥**

अथ रथोद्धताछंदसा यज्ञसूत्रधारणे दिनविभागफलं काव्यद्वयेनाह—ब्रह्मेति । उष्मगोः सूर्यस्योदयात्प्रभातात् क्षणचतुष्टये मुहूर्तचतुष्के बटोर्ब्रह्मसूत्रधृतिर्यज्ञसूत्रधारणमुत्तमा श्रेष्ठा च पुनरेवं तदहर्दलावधि तस्मात् क्षणचतुष्टयात्परमहर्दलावधि मध्याह्नपर्यंतं ब्रह्मसूत्रधृतिर्मध्यमा पुनरतो मध्यान्हतः परं क्षणचतुष्टयेऽधमा ॥ ४७ ॥

**सेतशेषदिवसाधमाधमा गर्हिता व्रतविधौ तु वर्णिनः ॥**
**उत्तमावनिसुरस्य वा हिता मध्यमाऽवनिभुजोऽधमा विशः॥ ४८ ॥**

सेतेति ॥ सा ब्रह्मसूत्रधृतिः इतः प्राप्तः शेषदिवसो यया सा इतशेषदिवसा एवंविधाऽधमा उक्ता सा तु पुनर्वर्णिनो ब्रह्मचारिणो व्रतविधौ गर्हिता वाऽथवा अवनिसुरस्य विप्रस्य उत्तमा हिता हितकारिणी पुनरवनिभुजः क्षत्रियस्य मध्यमा श्रेष्ठा पुनर्विशो वैश्यस्याऽधमा श्रेष्ठा ' उपवीतं यज्ञसूत्रम् ' इति हैमः ॥ ४८ ॥

**कश्चिदाह दिवसावसानगं यामसुज्झ्य दिनपत्रयं कृती ।**
**ईरितोपनयनाभिलाषकं मुक्तसंध्यमखिलं द्विजातिषु ॥ ४९ ॥**

अथात्र मतांतरमाह—कश्चिदिति । कश्चित् कृती पंडितः दिनपत्रयं दिवसस्य चरणत्रयमाह कथयति ॥ किंकृत्वा दिवसावसानगं दिनांतगतं यामं चरमप्रहरं विहाय किं विशिष्टं दिनपत्रयं ईरितोपनयनाभिलाषकं ईरितः कथित उपनयनाभिलाषो यस्मिंस्तत् । पुनः किंभूतं दिनपत्रयं मुक्तसंध्यं त्रिसंध्यारहितं केषु अखिलद्विजातिषु 'यमामुज्झ्य' इति सूत्रपाठे सूत्रलेखकदोषो

दृश्यते । याममुङ्क्ष्येत्येतद्युक्तं तत उङ्क्षत्यागे त्रिवर्णात्मकोऽखंडितो द्कारोपांत्यो यो धातुस्ततः समासं विना ल्यपाप्रवृत्तिस्तेन प्रोङ्क्ष्येत्यादि युक्तं अत आङा सह समासे कृते उङ्क्ष्येति जायते परंतु सुशाब्दिको उशांति तत्प्रमाणं ! ॥ ४९ ॥

स्वोक्तकालगवयोवतामलं स्वोक्तकालसमये द्विजन्मनां ॥
अन्यथा हि रशनानिबंधनं बंधनाय भवति स्वकर्मणाम् ॥ ५० ॥

अथोपसंहारेण व्रते पूर्वोक्तकालं द्रढयति—स्वोक्तेति । अलमित्यवधारणे द्विजन्मनां विप्राणां स्वोक्तकालसमये पूर्वोक्तनिजकालप्राप्तौ रशनानिबंधनं भवति किंभूतानां द्विजन्मनां स्वोक्तकालगवयोवतां निजकालप्राप्तवयोयुक्तानां हि युक्तार्थेऽन्यथा पूर्वोक्तकालाद्यभावे रशनानिबंधनं स्वकर्मणां बंधनाय पापकर्मणे भवतीत्यर्थः ॥ ५० ॥

नैव कर्म विदधीत सोमपः षोडशाब्दसमयादनंतरं ॥
भूभुजां द्वियमतुल्यहायनान्न व्रतस्य जिनवर्षतो विशाम् ॥ ५१ ॥

अथ व्यतीते काले विप्रादीनां व्रतं प्रतिषेधति—नैवेति । सोमपो यज्ञकर्तृविशेषः षोडशाब्दसमयात् षोडशवर्षकालादनंतरं व्रतस्य कर्म व्रतकार्यं नैव विदधीत न कुर्यात् । अत्र विध्यर्थः॥ तु पुनर्भूभुजां क्षत्रियाणां द्वियमतुल्यहायनाद् द्वाविंशतिवर्षादूर्ध्वं व्रतस्य कर्म न स्यात्पुनर्विशां वैश्यानां जिनवर्षतश्चतुर्विंशतिवर्षत ऊर्ध्वं व्रतकर्म न स्यात् ॥ ५१ ॥

कालशुद्धिरुदिता मया सदा सैव यास्ति रशनानिबंधने ॥
मेखलाव्रतविमोक्षणे हिता चागमव्रतविधौ द्विजातिनाम् ॥ ५२ ॥

अथोक्तकालशुद्धेर्ग्राह्यस्थानमाह— कालेति । आगमव्रतविधौ वेदव्रतकर्मणि द्विजन्मनां या मया कालिदासेन कालशुद्धिरुदिता प्रोक्ता एव निश्चितं सा रशनानिबंधने मौंजीबंधे सदाऽस्ति च पुनः सा मेखला व्रतविमोक्षणे मौंजीबंधविमोचने हितकारिणी ॥ ५२ ॥

ब्रह्मचारिणमधीरभोदये यो दधाति निजकर्मधर्मगं ॥
साधुना प्रवसनं ह्यधिष्ठिते प्रोक्तकालवदगारतो निजात् ॥ ५३ ॥

अथोपनयनानंतरं बटोर्वनगमनशुद्धिमाह—ब्रह्मेति । अथो अनंतरं हि युक्तार्थे निजादगारतः स्वगृहात् प्रवसनं वने गमनं कर्तृपदं ब्रह्मचारिणं निजकर्मधर्मगं स्वकृत्यधर्मगतं दधाति पुष्णाति किंविशिष्टं प्रसवनं प्रोक्तकालवत् उपवीतकालशुद्धियुक्तं कस्मिन् अधीरभोदये चरराश्युदये किंविशिष्टे अधीरभोदये साधुना शुभग्रहेणाधिष्ठिते आश्रिते यत उपवीतं धृत्वाधुनापि वनं प्रतिधावति ॥ प्रसवनमिति षूङ् षू गतौ इति धातोः प्रयोगः ॥ ५३ ॥

आनकाननसुवाद्यजस्वनैर्मातुलेन पुनरागमः पुरः ॥
छांदसास्यनिगमोक्तिरंजितो गोमतिस्वशकसिद्धये बटोः ॥ ५४ ॥

अथ बटोर्वनात् पुनर्गृहानयने मातुलकृतगौरवं दर्शयति—आनकेति ! मातुलेन कृत्वा बटोर्माणवकस्य पुनरागमः पुनर्गृहे आगमनं भवेत् । कस्यै गोमतिस्वशकसिद्धये गौर्वाणी मतिर्बुद्धिःस्वं धनं शं सुखं कं ज्ञानं एषां निष्पत्तये । किंभूत आगमः पुरोऽग्रे छांदसास्यनिगमोक्तिरंजितः छांदसानां श्रोत्रियाणामास्येषु ये निगमा वेदास्तेषामुक्तिभिरुद्घोषणै रंजितो रागीकृतः शोभां प्राप्त इत्यर्थः ॥ पुनः किंभूत आगमः आनकाननसुवाद्यजस्वनैरुपलक्षितः उपलक्षणार्थे तृतीया आनकाननं भेरीप्रमुखं यत्सुवाद्यं शुभवादित्रं तस्माज्जातैः स्वनैः शब्दैरिति । यतोऽधुनापि मातुलः किंचिद्दानं विधानं विधाय बटु गृहे आकारयति ॥ ९४ ॥

अथात्र सुबोधार्थं नामतः सर्वे संस्कारा लिख्यंते—गर्भाधानं१ पूंसवनं २ सीमंतोन्नयनं ३ तथा ॥ जातकर्म४ तथा नाम५ चंद्रदर्शन६ मेव च॥१॥ अन्नस्य प्राशनं७ चूडा८ नवमं९ चोपवीतकं॥ गोदानं१०व्रातिकं११ चैव आदित्यव्रतमेव१२ च॥२॥उपनिष१३द्विवाहश्च१४ देवयज्ञ१ स्तथैव च ॥ भूतयज्ञः२पितृयज्ञो३ ब्रह्मयज्ञ४स्तथैव च ॥३॥ नृयज्ञो५ दार्शिकं१ श्राद्धं पक्षादि २ श्रावणी३ तथा ॥ आश्वयुज्यां४ तु यत्कर्म आग्रहायणकं५ तथा ॥४॥ सन्त्यष्टका६ तथा चैत्री७ स्मार्तकर्मणि योजिताः ॥ अग्न्याधेय १ मग्निहोत्रं २ दर्शेष्टिः ३ पौर्णमासिकी४ ॥ ५ ॥ चातुर्मास्यानि सर्वाणि५पशुबंध६स्तथैव च ॥ सौत्रामण्याग्रयणानि७ प्रोक्ताश्चैते हविर्मखाः ॥६॥ अग्निष्टोमो१त्यग्निष्टोम२ उक्थ्य३श्चै व तु षोडशी४॥७॥ अतिरात्रो५ वाजपेय६ आप्तोर्याम७ स्तथैव च॥सोमसंस्था तु विज्ञेया सर्वशाखासु ताः स्मृताः॥८॥शमो१दमो२ यम३श्चैव नियमश्च ४ चतुर्थकः ॥ प्राणायामः ५ प्रत्याहारो ६ ध्यानं ७ धारण ८ मेव च ॥ योगशास्त्रात्तु विज्ञेया अष्टौ चैवात्मनो गुणाः ॥ ९ ॥ अष्टाचत्वारिंशत् ख्याताः संस्कारा गौतमेन तु ॥ एभिस्तु संस्कृतो यो वै स नरः पुरुषोत्तमः ॥ १० ॥ अथैतान् प्रकारांतरेणाह ॥ गर्भाधान१मथापि पूंसवनकं २ सीमंत ३ जातक्रिया ४ नामा ५ न्नादन ६ चौलको ७ पनयनं ८ श्रौतव्रतान्यप्यथ ॥ चत्वारि स्तपनं ९ विवाहकरणं १० पंचाभियज्ञा अपि संस्थाः सप्त च सप्त सप्त इति ते संस्कारजा अप्यमी ॥ ११ ॥ अस्य व्याख्या ॥ नामादिसंस्कारा दश १० श्रौतकर्माणि चत्वारि शुक्रियं १ शाकरं २ व्रातिका ३ उपनिषद् ४ पंचयज्ञाः ५ पाकयज्ञसंस्थाः सप्त ७ हविर्यज्ञसंस्थाः सप्त ७ सोमसंख्याः सप्त सर्वमिलनेऽत्र काव्ये ४० चत्वारिंशत्संस्काराः ॥ अत्रानुक्ता अप्यष्टौ ग्राह्याः दमः१ क्षांतिः२ अनसूया ३ इशौ च ४ अनायासः ५ मंगलं ६ अकार्पण्यं ७ अस्पृहा ८ ॥ ४८॥ इति पाठांतरं॥ इत्यष्टाचत्वारिंशत्संस्काराः ॥ नन्वत्र केचित्स्वसमयपरसमयानभिज्ञा लुंभकप्राया जैनानां संस्कारा न संतीति वदंत्यतस्तेषां नेत्रोद्घाटनाय सज्जनानां ज्ञानाय च जैनमतसंस्कारा अपि नामतो लिख्यंते ॥ यदाहुराचारदिनकरे वर्द्धमानसूर्याः ॥ इह हि केचिद्दर्शनमोहांधधिया आर्हत १ सौगत २ वैशेषिक ३ नैयायिक ४ सांख्य ५ चार्वाक ६ तत्वालोकनामानुसारिण एव अदृष्टतत्परमार्था सहृदयोपात्तप्रमातृप्रमेयप्रमाणप्रभावा आचारमेव तिरस्कुर्वंति न तेषां वचः सद्भिः प्रमाणपदमुन्नेयं यतो भगवानृषभादिः अर्हन्नपि विदितसमस्तोपमार्थ

आगर्भाद्राज्याभिषेकपर्यंतं संस्कारांगीकारात्स्वदेहेप्याविश्चकार ॥ यत उक्तमागमे समणरसणं उंमहावीरस्स अस्मापि उरेपिठमे हिवसे ठिईपडिकरंति तई दिवसे चंदसूरदंसणं कुणंति इत्यादौ ॥ अत आदौ गृहधर्मकथने षोडशसंस्कारश्लोकाः॥ गर्भाधानं १ पूंसवनं २ जन्म ३ चंद्रार्कदर्शनं ४ ॥ क्षीराशनं ५ चैव षष्ठी ६ तथा निष्क्रमणं स्मृतं ७॥ तथाच नामकरण ८ मन्नप्राशनमेव च ९॥ कर्णवेधो १० मुंडनं च ११ तथोपनयनं परं ॥ १२ ॥ पाठालंभो १३ विवाहश्च १४ व्रतारोपों १५ तकर्म च १६॥ अमी षोडशसंस्कारा गृहीणां परिकीर्तिताः ॥ ३ ॥ ब्रह्मचर्यं १ क्षुल्लकत्वं २ प्रव्रज्या ३ स्थापना ४ तथा ॥ तथाच योगोद्वहनं ५ वाचनाग्रहणं तथा ६ ॥ ततश्च वाचनानुज्ञा ७ सोपाध्यायपदस्थितिः ८॥ आचार्यपदयुक्तिश्च ९ प्रतिमोद्वहनं तथा १०॥ व्रतिनि व्रतदानं च ११ प्रवर्तिनीपदक्रमः १२ ॥ महत्तरा-पदाचारो १३ दिनरात्रिस्थितिर्द्वयोः ॥१४॥ ऋतुस्थितिश्च सव्याख्या १५ मरणस्य विधिः पुनः १६ ॥ द्वाराणि षोडशैतानि यत्याचारे प्रदर्शयेत् ॥ ७ ॥ प्रतिष्ठा बिंबचैत्यादेः १ शांतिकं २ पौष्टिकं ३ बलिः ४॥ प्रायश्चित्तविधिश्चैव ५ आवश्यकविधिस्तथा ६ ॥८॥ तपोविधि ७ स्त्रिविधोऽपि पदारोपणमेवच॥८॥ गृहिसाध्वोः समानानि द्वाराण्यष्ट प्रकीर्तयेत्॥९॥ उपनयनविधिस्तु इक्ष्वाकुवंशयादववंशप्राच्योदीच्यवंशादीनां जैनब्राह्मणानां उपनयनं यज्ञोपवीतधारणं च तथा क्षत्रियवंशोत्पन्नानां जिनचक्रिबलदेववासुदेवानां श्रेयांसदशार्णभद्रप्रभृतीनां नृपाणामपि हरिवंशविद्याधरवंशसंभवानां न जिनोपवीतधारणविधिः ॥ यतस्तेषामंतकुलादिषूत्पत्यभावात्पुनः कदाचिदुत्पत्तौ उग्रकुलादिषु संक्रामणत्वात् ॥ वैश्यानां कार्तिकश्रेष्ठिकामदेवादीनामप्युपनयनजिनोपवीतधारणं शूद्राणामपि आनंदादीनां उत्तरीयधारणं शेषाणां वणिगादीनामुत्तरासंगानुज्ञा ॥ जिनोपवीतं हि भगवतो जिनस्य गार्हस्थ्यमुद्रा यतीनां हि निर्ग्रंथानां सर्वबाह्याभ्यंतरकर्मविमुक्तानां नव ब्रह्मगुप्तिगुप्तानां ज्ञानदर्शनचारित्ररत्नत्रयी हृद्गतैवाभूद्भावनाभाविता हि सर्वसामुदयो नव हि सूत्ररूपा नव ब्रह्मगुप्तियुतां रत्नत्रयीं वहंति तन्मयत्वान्न समुद्रो जलपात्रं करे करोति न सूर्यो दीपं बिभर्ति । यत उक्तं 'अग्नौ देवोस्ति विप्राणां हृदि देवोस्ति योगिनां॥ प्रतिमास्वल्पबुद्धीना सर्वत्र विदितात्मनां ॥ १ ॥ अतः शिखासूत्रविवर्जिता यतयो ब्रह्मगुप्तिरत्नत्रयकरणाकारणानुमतिषु सदैवादृता ॥ इति जैनमते आचारदिनकरतश्चत्वारिंशत्संस्कारा लिखिताः ॥ एषां मंत्रादिविधिस्तु तस्मादेव सविस्तरेण ज्ञेयः ॥ उक्तं च भगवत्यामपि ॥ एकादशशतस्यैकादशोद्देशे बलाधिकारे संस्कारविधानं ततेणं तस्स महब्बलस्य दारगतस्स अम्मापितरो अणुपुव्वेणं द्वितिपडियं वाचं दसूरदं सावणियं वाजागरियं वाणामकरण वा परं गामणं पयचं कामणं वा जेमावणं वा पिंडवद्वाणं वा पछं पामणं वा कणवेहणं वा संवच्छर पडिलेहणंवा चोलोयणंवा उवणयणं वा आणाणियबहूनि गब्भादणजम्मणमादीयाईकोनूयाई करेति इति सूत्रपाठः ॥ अथास्य वृत्तिः परं गामंति भूमौ सप्पणं पयचं कामणंति पादाभ्यां संचारणं जेमामणंति भोजनकारणं पिंडवद्धणंति कवलवृद्धिकारणं पजंपामाति प्रजल्पनकारणं कणवेहणंति प्रतीतं संवच्छरपडिलेपहणंति वर्षग्रंथकारिणं चोलो-

पणगंति चूडाधरणं उवणयणंति कलाग्राहनं गब्भादाणजम्मणमाईयाइको उगाइकेरीतार्त्ति गर्भादानादिषु यानि कौतुकानि रक्षाविधानादीनि तानि गर्भादानादीन्येवोच्यंते ॥ इत्यभयदेवसूरयः ॥ इत्यादि व्यवहारकर्म भगवद्भिरप्याचीर्णमागमे विनिर्दिष्टं च यतः व्यवहारो विबहुबलवं जंबं देदेइकेवलीविथउमत्थमित्यादिगाथा ॥ १ ॥ लोकेप्येवं ' चतुर्णामपि वेदानां धारको यदि पारगः ॥ तथापि लौकिकाचारं मनसापि न लंघयेत् ' ॥ १ ॥ इति जैनमतावतरणं संपूर्णम् ॥

**इति श्रीकविकालिदासोदिते ज्योतिर्विदाभरणे व्रताध्यायोऽष्टमः ॥ ८ ॥**

इति श्रीपौर्णिमीयगच्छाधिराजभट्टारकपुरंदरश्रीमहिमाप्रभसूरीश्वरचरणसरोरुहचंचरीकायमान शिष्यभावरत्नविरचितायां श्रीकविकालिदासकृतज्योतिर्विदाभरणस्य सुखबोधिकायां व्रताध्यायोष्टमः ॥ ८ ॥

---

# विद्यारंभविवेकप्रकरणम्

**विहितेऽथागमारंभे विद्यारंभो मयोच्यते ॥**
**आगमांगागमाशेषशास्त्रविद्यार्थसिद्धये ॥ १ ॥**

अथ बटुकरणानंतरमध्ययनं करोत्यतोऽनुष्टुभा विद्यारंभाध्यायसंधानमाह—**विहितइति** ॥ अथानंतरमागमारंभे वेदपठनारंभे विहिते सति मया कालिदासेन विद्यारंभ उच्यते किमर्थं आगमेति आगमांगानि षडंगानि आगमाश्च अशेषशास्त्राणि चैता विद्याश्चतुर्दश आसामर्थसिद्धयेऽभिधेयप्राप्तये ॥ १ ॥

**शाखापरिवृढपुज्योशनसासुदये ह्युपलब्ध्यै सततं स्यात् ॥**
**वागर्थिन इह भाषायशसे विद्यारंभोऽमरवरदिवसे ॥ २ ॥**

अथ उपचित्रा पादत्रयमात्रासमैकैकपादरचितेन पादाकुलकेन साधारणविद्यारंभशुद्धिमाह—**शाखेति** ॥ हि निश्चितं सततं निरंतरं वागर्थिनः शिष्यस्य विद्यारंभ इह लोके उपलब्ध्यै ज्ञानाय स्यात् ॥ किंभूतायै उपलब्ध्यै भाषायशसे भाषायां सरस्वत्यां यशो यस्यां सा तस्यै वक्तृत्वकवित्वगुणायेत्यर्थः ॥ कस्मिन् अमरवरदिवसेऽमराणां देवानां मध्ये वरः श्रेष्ठ इंद्रस्तस्य दिवसे उत्तरायणे इत्यर्थः ॥ पुनः कस्मिन् शाखापरिवृढो वेदशाखास्वामी पूज्यो गुरुश्च उशनाः शुक्रश्चैषां द्वंद्वे उदये उद्गमे सति ॥ ' वाणी भाषा सरस्वती ' इति हैमः ॥ २ ॥

**कश्चिदुपक्रममाह महर्षिर्देवशयनवत्कालमपास्य ॥**
**विद्यायाः क्षितिसुरविभुवर्षे काव्यगुरूदयकालसमेते ॥ ३ ॥**

अथात्र मतांतरमाह—**कश्चिदिति** ॥ कश्चिन्महर्षिर्विद्यायां उपक्रममारंभमाह कस्मिन् क्षितिसुरा विप्रास्तेषां विभुश्चंद्रस्तस्य वर्षे किंविशिष्टे क्षितिसुरविभुवर्षे काव्यगुरूदयकालसमेते

शुक्रगुरूदयसमकालप्राप्ते किंकृत्वा देवशयनवक्रकालमपास्य विष्णुसुप्तकालं विहाय आषाढ-शुद्धैकादशीमारभ्य कार्तिकशुक्लैकादशीं यावदिति ॥ ३ ॥

पक्षद्वितयगताखिलघस्रैर्विष्टिकुयोगगलग्रहमुक्तैः ॥
संततमिह किल विद्यारंभः सर्वागमकृतसिद्धिप्रदः स्यात् ॥४॥

अथ साधारणविद्यारंभदिनान्याह—पक्षेति ॥ किलेति प्रसिद्धौ इह विद्यारंभः सततं निरंतरं सर्वागमकृतसिद्धिप्रदः स्यात् । सर्वागमेषु सर्वशास्त्रेषु कृतं सिद्धिपदं व्युत्पत्तिस्थानं येन स इति कैः पक्षेति पक्षद्वितयं शुक्लकृष्णपक्षद्वयं तस्मिन् गमो गमनं येषां ते एवंविधा येऽखिलाः समस्ता घस्रा दिवसास्तैः किंभूतैः पक्षद्वितयगताखिलघस्रैः विष्टिकुयोगगलग्रहमुक्तैः स्पष्टम् ॥ ४ ॥

नक्तंचरपुष्करविधुशर्क्षैस्त्वष्ट्रजपत्पन्नगभगभाढ्यैः ॥
लोललघूडुसमेतैरखिलो विद्यारंभः सुमतिभिरुदितः ॥ ५ ॥

अथ साधारणविद्यारंभनक्षत्राण्याह—नक्तमिति ॥ नक्तंचरादिनक्षत्रैः कृत्वा सुमतिभिः पंडितैरखिलो विद्यारंभ उदितः प्रोक्तः । नक्तंचरो रक्षो मूलं पुष्करं जलपर्यायत्वात्पूर्वाषाढा रविर्हस्तः विधुर्मृगशीर्षं शः शंभुस्तस्य ऋक्षमार्द्रा एषां द्वंद्वे एभिः किंभूतैः त्वष्टा चित्रा अजपत् पूर्वाभाद्रपदा पन्नगोऽश्लेषा भगस्तस्य भं पूर्वाफाल्गुनी एभिराढ्यैर्युक्तैः पुनः किं-भूतैः लोललघूडुसमेतैः चरलघुनक्षत्रयुक्तैः ॥ ५ ॥

पर्जन्यार्चितपाद्विदुशनसामाहुरहानि वराण्यभिरूपाः ॥
विद्याया विधुमिहिरदिने वारंभे क्वचिदनसौम्यफलेऽस्मिन् ॥६॥

अथ साधारणविद्यारंभे वारानाह—पर्जन्येति ॥ अभिरूपाः पंडिता विद्याया आरंभे पर्जन्येनेंद्रेणार्चितौ पदौ यस्य स गुरुः विद् बुधः उशनाः शुक्रः एषामहानि दिनानि वराण्याहुः कथयंति ॥ क्वचिदस्मिन् विद्यारंभे विधुमिहिरदिने चंद्रसूर्यदिने अत्र नपुंसके प्रथमाद्विवचनं कर्तृपदं अनसौम्यफले अनसौम्यं शुभं फलं ययोस्ते भवेतां ॥ फलेऽस्मिन्नित्यत्र संधिकार्यं मणीवादिवर्ज्यमित्यादिवत् ॥ वा इति पक्षांतरं ॥६ ॥

संधावमरतमिस्रादिनयोः संधौ मनुजतमिस्रादिनयोः ॥
विद्यारंभोऽमरगुरुशरदोः संधावृत्वोरपि न हि वरदः ॥ ७ ॥

अथ विद्यारंभेऽयनादिसंधिं निषेधति—संधाविति । अतिनिश्चितं विद्यारंभो वरदः शुभ-दायको नहि स्यात् ।कस्मिन् अमरतमिस्रादिनयोः देवरात्रिदिवसयोरुत्तरायणदक्षिणायनयोः संधावित्यर्थः ॥ पुनर्मनुजतमिस्रादिनयोर्मनुष्याणां रात्रिदिनयोः संधौ पुनः सुरगुरुशरदोः बृहस्पतेः संवत्सरयोः संधौ पुनः ऋत्वोः संधौ ॥ ७ ॥

**संसमशरदितविद्यारंभो विद्यार्थिनि तनुतेऽखिलदंभान् ॥**
**मासत्रयमवसानादिगतं समशरदः कुरुते गोसिद्धिम् ॥ ८ ॥**

अथ विद्यारंभे समवर्षं निषेधति—संसमेति ॥ संसमाः सम्यक् अविषमाः शरदो वर्षाणि इतानि प्राप्तानि येन सचासौ विद्यारंभश्चेति समासः । समवर्षगतविद्यारंभो विद्यार्थिनि शिष्येऽखिलदंभान् समस्तकैतवानि तनुते विस्तारयति विद्यारंभे समवर्षनिषेध इत्यर्थः॥ पुनः समशरदः समवर्षस्य अवसानादिगतं आदिस्थितं अंतस्थितं च मासत्रयं गोसिद्धिं वाणीनिष्पात्तिं कुरुते समवर्षस्याद्यंत्यमासत्रयं शुभमिति ॥ ८ ॥

**संक्रंदनसचिवे विदि धिष्ण्ये संहननाय ११ नभो१० वृष९धीस्थे ५॥**
**चंचलराश्युदये स तु शस्तोऽथासृजि वांशुभुवि त्र्यहितस्थे ॥९॥**

अथ विद्यारंभे लग्नशुद्धिमाह—संक्रंदनेति ॥ विद्यारंभः शस्तः शुभः स्यात् ॥ कस्मिन् संहननं वपुः प्रथमं १ आय एकादशं ११ नभो दशमं १० वृषो नवमं ९ धीः पंचमं५ एषां द्वंद्वे एतद्भवनस्थे संक्रंदन इंद्रस्तस्य सचिवे गुरौ वा विदि बुधे वा धिष्ण्ये शुक्रे वा सति तु पुनश्चंचलराश्युदये चरराशिलग्ने पुनः अहितस्थे त्रिस्तृतीयं ३ अहितः षष्ठं ६ एतद्गतेऽसृजि भौमे अंशुभुवि शनौ वा ॥ ९ ॥

**वाडवनृपविट्पद्यजनानां विद्यास्वयमखिलासु मयोक्तः ॥**
**विद्यापृथुलविशेषविभेदारंभविनिर्णयमत्र वदामि ॥ १० ॥**

अथ साधारणविद्यारंभोपसंहारमाह—वाडवेति ॥ मया कालिदासेनायं विद्यारंभ उक्तः कासु वाडवा विप्राः नृपाः क्षत्रियाः विशो वैश्याः पद्यजनाः शूद्रा एषां द्वंद्वे एषां विद्यासु किंभूतासु विद्यासु अखिलासु समस्तासु॥अथात्राध्यायेऽहं विद्यापृथुलादिनिर्णयं वदामि ब्रवीमि विद्यायाः पृथुलो विस्तीर्णो विशेषः सामान्येतरो विभेदो नानाप्रकारः एषामारंभ उपक्रमस्तन्निर्णयस्तमिति ॥ इति पादाकुलकछंदोजातिः छंदोनुशासनतो ज्ञेयः ॥ १० ॥

**द्युनेतुर्दिनेऽत्रीतजन्मांगजान्हि प्रबुद्धा विदोषे च गाणित्यमूचुः ॥**
**सदारंभमुग्रर्क्षरक्षोनलर्क्षैःसनासत्यशेज्येंदुभार्कांत्यलोलैः ॥ ११ ॥**

अथ भुजंगप्रयातेन गणितशास्त्रारंभमाह—द्युनेतुरिति ॥ सदा प्रबुद्धाः पंडिताः गाणित्यं गणितशास्त्रस्यायं गाणित्यस्तमारंभमूचुः कथयामासुः। द्युनेतुर्दिने सूर्यदिने च पुनरत्रीतजन्मांगजान्हि अत्रेऋषेः सकाशात् इतं प्राप्तं जन्म येन स चंद्रस्तस्यांगजो बुधस्तस्यान्हि दिवसे किंभूते विदोषे दोषरहिते रात्रिवर्जिते वा ॥ च पुनः कैःउग्रर्क्षाणि क्रूरसंज्ञभानि रक्षो मूलं अनलर्क्षं कृत्तिका एषां द्वंद्वे एभिः किंभूतैः नासत्यौ अश्विनी ईशः रुद्र आर्द्रा ईज्यः पुष्यः इंदुभं मृगशीर्षं अर्को हस्तः अंत्यं रेवती लोलानि चरसंज्ञोडूनि एभिः सह वर्तमानैः ॥ ११ ॥

गलग्राहभर्गांगजापर्वघस्रानशेषेष्वपास्यैतदारंभ इष्टः ॥
तथारंभका वक्ष्यमाणाः समस्ता विशस्ता भवेदेषु घस्रेषु शश्वत् ॥१२॥

अथात्र गलग्रहादीन्निषेधति—गलग्राहेति ॥ शश्वन्निरंतरं एतदारंभो गणितस्योपक्रमे इष्टः शुभो भवेत् । केषु अशेषेषु घस्रेषु किंकृत्वा गलग्रहः प्रतीतः भर्ग ईश्वरस्तस्यांगजा विष्टिः पर्वाणि एषां घस्रान् दिवसान् आपास्य त्यक्त्वा तथा पुनरेषु घस्रेषु वक्ष्यमाणा आरंभका विशस्ताः प्रशस्ताः स्युः ॥ १२ ॥

नयेच्छब्दशास्त्रागमारंभकालं कृती शेमुषीशोशनोविद्दिनेषु ॥
चलक्षिप्रमैत्रोडुशैवाश्रितेषु त्वितो धर्मशास्त्रादिकारब्धिकालम् ॥१३॥

अथ व्याकरणप्रारंभशुद्धिमाह—नयेदिति ॥ कृती पंडितः शब्दशास्त्रागमारंभकालं नयेत् कुर्वीतेत्यर्थः ॥ शब्दशास्त्रं व्याकरणं तदेव आगमः शास्त्रं व्याकरणशास्त्रमित्यर्थः ॥ अथवा आगमो वेदो विद्या शास्त्रं वा एतयोरारंभ उपक्रमस्तमिति केषु शेमुषीशो गीष्पतिः उशनाः शुक्रःविद् बुधः एषां दिनेषु किंभूतेषु चलसंज्ञानि क्षिप्रसंज्ञानि मैत्रसंज्ञानि भानि शैवमार्द्रा एभिर्नक्षत्रैराश्रितेषु युक्तेषु तु पुनरत एषु उक्तमुहूर्तेषु कृती धर्मशास्त्रादिकारब्धिकालं नयेदिति प्रतीतं धर्मशास्त्रं स्यात् ॥ 'स्मृतिर्धर्म संहिता' इतिहैमः ॥ १३ ॥

त्रियुग्मीश्रवोयुग्मभैः सद्ग्रहाणां समारंभितं सांख्यशास्त्रादिशास्त्रं ॥
मृदुक्षिप्रशंभूडुशंभूडुयुक्तैर्दिनेष्वेव तद्बोधसिद्धिं तनोति ॥ १४ ॥

अथ सांख्यशास्त्रादिप्रारंभशुद्धिमाह—त्रियुग्मीति ॥ सांख्यशास्त्रादिशास्त्रं कर्तृपदं वेदांतादिशास्त्रं तद्बोधसिद्धिं तनोति विस्तारयति तस्य शिष्यस्य बोधसिद्धिर्ज्ञाननिष्पतिस्तां किंभूतं सांख्यशास्त्रादिशास्त्रं सद्ग्रहाणां दिनेषु समारंभितं प्रारब्धं कैः त्रयाणां युग्मयोः समाहारस्त्रियुग्मी पूर्वात्रयमुत्तरात्रयमित्यर्थः । श्रवोयुग्मं श्रवणधनिष्ठा एषां द्वंद्वे एभिर्नक्षत्रैः किंभूतैः मृदुसंज्ञानि क्षिप्रसंज्ञानि शंभूडु आर्द्रा द्वितीयं शंभुडुपदं शंभु ब्रह्मा तस्योडु रोहिणी एभिर्युक्तैः ॥ १४ ॥

सशर्वाभगाश्वींद्रजेज्यांबुपर्क्षं शयादिंदुसारंगदृक्सप्तकं च ॥
कवीनारवारानभिज्ञा वदेयुर्धनुर्वेदविद्यासमारंभकाले ॥ १५ ॥

अथ धनुर्वेदविद्यामुहूर्तमाह—सशर्वेति ॥ अभिज्ञाः पंडिताः धनुर्वेदविद्यासमारंभकाले शयादिमानि कव्यादिवारान् वदेयुः कथयेयुस्तानाह ॥ शयात् हस्तनक्षत्रात् इंदुसारंगदृशां तारकाणां सप्तकं नक्षत्रसप्तकं हस्त १ चित्रा २ स्वाती३ विशाखा ४ अनुराधा ५ ज्येष्ठा ६ मूलमिति किंभूतं सप्तकं सशर्वेति शः रुद्र आर्द्रा अः विष्णुः श्रवणः वाः जलं पूर्वाषाढा भगः पूर्वाफाल्गुनी अश्विनौ अश्विनी इंदुर्मृगशीर्षं अजो ब्रह्मा रोहिणी ईज्यः पुष्यः अंबुपो वरुणस्तस्य भं शतभिषक् एभिः सहवर्तते यत्तत् । चपुनः कविः शुक्रः इनः सूर्यः आरो भौमः एषां वारान् ॥ १५ ॥

**मृदुक्षिप्रतीक्ष्णाख्यलोलोडुवर्गे तमिस्राभियार्तींद्वसृग्वासरेषु ॥**
**सदा दोषविच्छास्त्रविद्या निरैंद्रे तथारंभयेद्गारुडं कर्म सर्वम् ॥ १६ ॥**

अथ वैद्यकशास्त्रमुहूर्तमाह—मृद्विति ॥ सदा शिष्यः दोषविच्छास्त्रविद्याः वैद्यकशास्त्रविद्या आरंभयेत् । तथा सर्वं गारुडकर्मापि नागदमनादिकं आरंभयेत पठेत । कस्मिन् मृदुसंज्ञानि क्षिप्रसंज्ञानि तीक्ष्णाख्यानि लोलसंज्ञानि उडूनि एषां वर्गे किंभूते निरैंद्रे निर्गतं ऐंद्रं ज्येष्ठा यस्मात्तस्मिन् । च पुनः केषु तमिस्रा तामसी तस्या अभियातिर्वैरी सूर्यः इंदुः असृग् भौमः एषां वासरेषु । तमिस्रातमिस्रे रुदंत्याविति शब्दप्रभेदे साधुसुंदरगणयः ॥ १६ ॥

**हरेर्भे च तिष्ये भगर्क्षे हरेर्भे हरेर्भे च मैत्रे च वैश्वे हरेर्भे**
**हरेर्भे श्रविष्ठाद्वयेऽंत्ये सदन्हि किलारंभयेन्नाट्यसंगीतशास्त्रम् ॥१७॥**

अथ नाट्यसंगीतशास्त्रमुहूर्तमाह—हरेरिति ॥ सदा शिष्यः नाट्यसंगीतशास्त्रमारंभयेत् पठनोद्यमं कुर्यात् । कस्मिन् हरेः सूर्यस्य भे हस्तनक्षत्रे च पुनः तिष्ये पुष्ये पुनर्भगर्क्षे पूर्वाफाल्गुन्यां पुनर्हरेश्चंद्रस्य भे मृगशीर्षे पुनर्हरेरिंद्रस्य भे ज्येष्ठायां पुनर्मैत्रेऽनुराधायां पुनर्वैश्वे उत्तराषाढायां पुनर्हरेर्विष्णोर्भे श्रवणे पुनर्हरेर्वायोर्भे स्वातौ श्रविष्ठाद्वये धनिष्ठायां शतभिषजि पुनरंत्ये रेवत्यां सदन्हि शुभग्रहवासरे च ॥ १७ ॥

**योगवद्भिस्तरण्यास्फुजिद्वारयोर्वारवारस्य यादोर्यदिक्नम्रगे ॥**
**जैनविद्योग्रलोलाद्यमिश्रांत्यभैर्हंस आरंभिता नंदतायै भवेत् ॥१८॥**

अथ स्रग्विण्या जैनविद्यापठनमुहूर्तमाह—योगवद्भिरिति ॥ जैनविद्या नंदतायै वृद्धिभावाय भवेत् । किंभूता जैनविद्या आरंभिता सती कस्मिन् हंसे सूर्ये यादोर्यदिग्नम्रगे यादसां जलजंतूनामर्यः स्वामी वरुणस्तस्य दिक् पश्चिमा तस्यां नमनशीलप्राप्तेऽपराण्हे इत्यर्थः॥ पुनः कैः उग्रसंज्ञानि आद्यमश्विनी मिश्रसंज्ञे द्वे अंत्यं रेवती एभिर्नक्षत्रैः कृत्वा किंभूतैरेतैः तरणिः सूर्यः आस्फुजित् शुक्रः एतयोर्वारयोर्वाऽथवा आरवारस्य योगवद्भिः संयोगयुक्तः ॥ १८ ॥

**यावनीयुक्तिभाषादिकारंभके दारुणं क्रूरभद्वीशपाथोर्यभैः ॥**
**विश्वकृद्वीतिहोत्रांत्यभैर्वाचिते वीज्यवारे सदारंभिते शं भवेत् ॥१९॥**

अथ यवनविद्यामुहूर्तमाह—यावनीति ॥ सदा यावनी यवनसंबंधिनी या युक्तिभाषादिका क्रूरा या पारसी इत्यादिका विद्या तस्या आरंभके उद्यमे आरंभिते प्रारब्धे सति शं सुखं भवेत् । कस्मिन् वीज्यवारे विगतो नष्ट ईज्यो गुरुर्यस्मात् गुरुं विनान्यवारे किंभूते आचिते युक्तेऽन्विते इत्यपि पाठः ॥ कैः दारुणसंज्ञानि क्रूरभानि द्वीशं विशाखा पाथसा जलानामर्यः स्वामी वरुणस्तस्य भं शतभिषक् एभिः वाऽथवा विश्वकृच्चित्रा वीतिहोत्रोऽग्निः कृत्तिका अंत्यभं रेवती एभिर्युक्ते ॥ १९ ॥

**कश्चिदाहोशनोहोत्रभार्य्योदयाद्ध्येकः१ वेदे४ ष्वि५ ना१२ शे १० श ११ घस्रैरथ ॥ विंशती २० न्द्रा १४ कृती २२ लेश १६ तत्वैरभिन्नानि भाहानि ताद्भिर्हिरुक्तानि च ॥ २० ॥**

अथ यावन्यां मतांतरमाह—कश्चिदिति ॥ कश्चित इति आह । इतीति किं तदाह अत्र यावनीविद्यारंभे उशनोऽहः शुक्रवारो भवेत् । अथ पुनस्ताद्भिर्द्वियवनविद्याविद्भिः भाहानि भस्य चद्रस्याहानि चांद्रदिनानि उक्तानि । तारीख इति म्लेंछभाषायां ॥ किंभूतानि भाहानि तुल्यानि कैः भार्योदयाद्भानां नक्षत्राणामर्यः स्वामी चंद्रस्तदुदयात् द्वौ २ एकः १ वेदाः ४ इषवः ५ इनाः १२ आशाः १० ईशाः ११ एतत्संख्यावस्त्रैः च पुनर्विंशतिः २० इंद्राः १४ आकृतयः २२ इलेशाः भूपाः १६ तत्वानि २५ एतत्संख्यावस्त्रैः । कोऽर्थः द्दष्टचंद्र द्वितीयातिथितो द्व्येकादिसंख्यामितताररीखदिनानि शुभानीति ॥ भाहानीति । 'भः शुक्रोऽथ भः सोमो भा कांतिर्मंदिरेंदिरा' इत्येकाक्षरकोषे सौभरिः ॥ २० ॥

**धीरधीरेतरक्षिपचांद्रैशवद्धिष्ण्यवागीशविद्धेलिराजद्युगम् ॥ शिल्पशास्त्रादिविद्यासमारंभणं स्यादनध्यायघस्त्रान्यघस्रेष्वलम् ॥ २१ ॥**

अथ शिल्पशास्त्रमुहूर्तमाह—धीरेति ॥ अलमित्यवधारणे शिल्पशास्त्रादि वास्तुकादिशास्त्रं तस्य विद्यासमारंभणं स्यात् । केषु अनध्यायघस्त्रान्यघस्रेषु अनध्यायदिनानि हित्वान्यदिनेषु किंभूतं तत् धीराणि स्थिरसंज्ञानि धीरेतराणि चरसंज्ञानि चांद्रं मृगशीर्षं ऐशं आर्द्रा एतानि अस्यास्तीति वतुप्प्रत्यये एभियुक्तमित्यर्थः । पुनः किंभूतं धिष्ण्यःशुक्रः वागीशो गुरुः विद् बुधः हेलिः सूर्यः राजा चंद्र एषां द्युगं दिवसमासत् ॥ २१ ॥

**मातृकारंभकालोऽस्ति पूर्वं मया कीर्तितश्चागमारंभकालो भ्रत ॥ तत्र ये शेषयोगाः स्मृतास्ते सदैवेक्षितुं सर्वविद्यासमारंभणे ॥ २२ ॥**

अथोपसंहारेण मुहूर्तानाह—मातृकेति ॥ मया पूर्वं मातृकारंभकालः कीर्तितोऽस्ति च पुनर्भ्रते आगमारंभकालो वेदारंभसमयः कीर्तितोऽस्ति तत्र आगमादौ ये शेषयोगाः स्मृताः ते योगाः सदैव सर्वविद्यासमारंभणे ईक्षितुं विलोकनाय योग्या भवेयुः ॥ २२ ॥

**षड्दलांभोजचक्रे लिखेन्मध्यगं भद्रवर्णं तदाद्येऽर्द्धमात्रात्मकम् ॥ वर्णमोंकारपूर्वानभिज्ञो दलेऽतोपसव्यान्नमःसिद्धवर्णान्क्रमात्॥२३॥**

अथ काव्यत्रयेण मातृकाचक्रमाह—षडिति ॥ अभिज्ञः पंडितः षड्दलांभोजचक्रं षट्पर्णकमलचक्रं भद्रवर्णं लिखेत्तच्चक्रे भाले इत्यक्षरं मध्यगं मध्यभागे लिखेदित्यर्थः ॥ पुनस्तदाद्ये तस्य चक्रस्याद्ये दले प्रथमे पर्णेऽर्द्धमात्रात्मकं पूर्णमग्रे रेखाद्वयं०॥ वर्णं लिखेत् । अतः प्रथमदलात् अपसव्यं वामं सव्यं विदुः प्राज्ञाः "अपसव्यं तु दक्षिणं" इति कोषात् ॥ क्रमात् दक्षिणभ्रमणेन ॐकारपूर्वान् ॐनमः सिद्धमिति लिखेत् ॥ २३ ॥

भत्रयं भास्वदध्याश्रितर्क्षान्न्यसेद्भद्रवर्णेऽथ दारा हिमांशोरतः ॥
शेषतारागणाभिन्नषड्भागगाः खंडमात्रादिवर्णेषु देयाः क्रमात् ॥२४॥

अथात्र चक्रे भानि स्थापयति—भत्रयमिति ॥ पंडितो भास्वदध्याश्रितर्क्षात् सूर्यनक्षत्रात् भद्रवर्णे भाले स्थितकोष्टके भत्रयं नक्षत्रत्रयं न्यसेत् स्थापयेत् ॥ अथातःपरं पंडितेन हिमांशोश्चंद्रस्य दाराः नक्षत्राणि क्रमात्क्रमेण खंडमात्रादिवर्णेषु पूर्णरेखाद्वयादिवर्णेषु देयाः स्थाप्याः । किंभूता दाराः शेषेति शेषतारागणेन भत्रयवर्जितशेषचतुर्विंशतिनक्षत्रगणेनाभिन्नस्तुल्यः षड्भागः चतुर्भिर्नक्षत्रैरेको भागः एवं षड्भागास्तेषु गता इत्यर्थः ॥२४॥*

चक्रमंतर्भमत्रेऽत्र भाषार्थिनश्चार्द्धमात्राक्षरर्क्षे भवेद्भीतये ॥
शेषभानीति सिद्ध्यै विलोक्यं सदा सर्वविद्यासमारंभसिद्धावदः ॥२५॥

अथैतच्चक्रकोष्टगतफलमाह—चक्रेति ॥ अत्र चक्रेंतर्भे मध्यगतवर्तमानचंद्रक्षनत्रं कर्तृपदं भाषार्थिनोऽत्रे मरणाय भवेत् । चपुनरर्द्धमात्राक्षरर्क्षे कर्तृपदं अर्द्धमात्रे पूर्णरेखाद्वयस्थाने ऋक्षं वर्तमानर्क्षं नकारस्थाने वर्तमाननक्षत्रं च अनयोर्द्वेद्वे द्वे नक्षत्रे भीतये भयाय भवेतां । शेषभानि आभ्यां व्यतिरिक्तानि शेषस्थानस्थितनक्षत्राणि सिद्ध्यै सिद्धकार्याय भवेयुः ॥ इत्यदश्चक्रं सदा विलोक्यं सुधीभिरिति शेषः कस्यां सर्वविद्यासमारंभासिद्धौ स्पष्टम् ॥ २५ ॥

मेशातारेशपित्र्यर्यमद्वीश्वरज्योतिराख्येननामेंदुमासेष्वथ ॥
यंत्रमंत्रोपचारक्रियारंभणं ह्यागमज्ञा विदुःकेचिदार्या इषे ॥ २६ ॥

अथ यंत्रमंत्रादिमुहूर्तमाह—मेशेति ॥ हि युक्तार्थे आगमज्ञाः शारदातिलकादिशास्त्रज्ञाः यंत्राणि सूर्यप्रतापादीनि मंत्राः शारदातिलकाद्युक्ताः उपचारो भूतादिसाधनं एषां क्रियारंभणं विदुः कथयंति ॥ केषु मेशेति । मा लक्ष्मीस्तस्या ईशो विष्णुः तारेशश्चंद्रः पितरः प्रतीताः अर्यमा द्वीश्वरौ शक्राग्नी एषां ज्योतींषि श्रवणमृगशीर्षमघोत्तराफाल्गुनीविशाखानक्षत्राणि एषां या आख्या संज्ञास्ताभिरितानि प्राप्तानि नामानि येषां ते च यथा श्रावणः १ एवं मार्गशीर्षः २ माघः ३ फाल्गुनः ४ वैशाख ५ इति इंदुमासाश्च तेषु केचिदार्या आचार्या इषे आश्विने मासे विदुः ॥ २६ ॥

श्रौतमंत्राननध्यायतिथ्युज्झितैरंशुमत्सावनाहोभिरारंभयेत् ॥
व्यासपक्षद्वयेष्वागमोक्तानमापक्षतिप्रोज्झिताशेषघस्रेष्वपि ॥२७॥

अथ वेदमंत्रमुहूर्तमाह—श्रौतेति । मंत्रवित् आगमोक्तान् श्रौतमंत्रान् वेदसंबंधिमंत्रान् आरंभयेत् । कैः केषु अंशुमत्सावनाहोभिः सौरसावनदिनैः किंभूतैः अनध्यायतिथ्युज्झितैः स्पष्टं । अपि पुनः अमावास्या पक्षतिः प्रतिपत् आभ्यां प्रोज्झितास्त्यक्ता येऽशेषाः समस्ताः घस्रास्तेषु किंभूतेषु व्यासपक्षद्वयेषु आश्विनशुक्लकृष्णपक्षेषु ॥ २७ ॥

---

* आकृति नंबर २

यस्य येनास्ति मंत्राद्यमारभ्यते तद्धितं तस्य वारंभितं तारके ॥
तस्य देवस्य घस्रेऽथ वारेऽसतो दारुणे यक्षमंत्रादिकं साधयेत् ॥२८॥

अथ मंत्रादितारंभणशुद्धिमाह—यस्येति ॥ येन पुरुषेण यस्य देवस्य मंत्राद्यमारभ्यते तस्य पुरुषस्य तन्मंत्राद्यं आरंभितं हितं हितकारि अस्ति। कस्मिन् तस्य देवस्य तारके वाऽथवा तस्य देवस्य घस्रे दिने । अथ मंत्रवित् यक्षमंत्रादिकं साधयेत् कस्मिन् असतोऽशुभग्रहस्य वारे दारुणे तीक्ष्णनक्षत्रे ॥ २८ ॥

स्कंदमारद्युपूर्णाख्य ५।१०।१५ भद्रासु २।७।१२ वा
मंत्रयंत्रव्रतारंभमाद्या विदुः ॥ सानिलैंद्रानलर्क्षध्रुव-
र्क्षेष्वमुं धूर्जटीज्येंद्रदस्राच्युतर्क्षेषु च ॥ २९ ॥

अथ मंत्रादिस्वामिनं वर्णयति—स्कंदेति ॥ आद्याः पुरातनाचार्या अमुं मंत्रयंत्रव्रतारंभं विदुः जानंति कासु स्कंदः कार्तिकेयस्तस्य द्युः षष्ठीदिनं मारः कंदर्पस्तस्य द्युस्त्रयोदशी पूर्णाख्यभद्रासंज्ञाः प्रतीताः आसां द्वंद्वे आसु च पुनः केषु धूर्जटिः शंभुः आर्द्रा ईज्यः पुष्यः इंद्रो ज्येष्ठा दस्रौ अश्विनी अच्युतः श्रवण एषु ऋक्षेषु किंभूतेषु सानिलेति अनिलः स्वाती इंद्रानलौ शक्राग्नी तयो ऋक्षं विशाखा ध्रुवर्क्षाणि स्थिरसंज्ञानि एषां द्वंद्वे एभिःसह वर्तते यानि तानि तेषु ॥ २९ ॥

भैमिकाकालमुक्तं दिनं मंत्रिणः सोमसूनोरशीतद्युतेः कव्यहः ॥
आह चाशेषमंत्रोपचारे सदा सद्गणोऽहः क्वचिच्चांद्रमप्यादृतम् ॥ ३० ॥

अथ समस्तमंत्रोपचारमुहूर्तमाह—भैमिकेति ॥ सदा सद्गणः पंडितवर्गः अशेषमंत्रोपचारे मंत्रिणो गुरोः सोमसूनोर्बुधस्य अशीतद्युतेः सूर्यस्य च एषां दिनमाह कथयति। च पुनः कव्यहःकवेः शुक्रस्य अहः दिनमाह । अपिपुनः क्वचित चांद्रमहश्चंद्रदिनमादृतमंगीकृतं किंविशिष्टं दिनं भैमिकाकालमुक्तं विष्टिसमयवर्जितम् ॥ ३० ॥

पुष्करागारराशौ च शेपासने पूषिण धिष्ण्येऽशुलुप्तच्छवौ मंत्रिणि॥
मंत्रयंत्रव्रतोपासनोद्यापने नोचुरत्र्यादयोऽभीष्टये सूरयः ॥ ३१ ॥

अथ मंत्रादीनामाराधनादौ मीनार्कादीन्निषेधति—पुष्करेति ॥ अत्र्यादयः सूरयः पंडिताः मंत्रयंत्रव्रतानां उपासनां आराधनां च उद्यापनं पूर्णे बलिकृत्यं च अनयोर्द्वंद्वे एतत्कर्मपदं अभीष्टये?प्रति नोचुः नजगदुः । कस्मिन् पुष्करे जले अगारं गेहं यस्य स मीनस्तस्य राशौ शेपासने शेपो बाणस्तस्यासनं धनुस्तस्मिंश्च पूष्णि सूर्ये मीनार्के धनुष्यर्के सति इत्यर्थः ॥ पुनर्मंत्रिणि गुरौ धिष्ण्ये शुक्रे चांशुलुप्तच्छवौ सूर्येण गाहतकांतौ अस्तंगते सति इत्यर्थः ॥ ३१ ॥

वर्णिनीनां व्रतोपासनं नो हितं कुंभतीर्थोदये वर्णिनीस्थे हरौ ॥
देवतासुप्तिकालेऽथ मासेऽधिके पूर्वदेवेज्यदेवेज्ययोरस्तके ॥ ३२ ॥

अथ कन्यासंक्रांत्यादौ स्त्रीणां व्रतं निषेधयति—वर्णिनीनामिति ॥ वर्णिनीनां स्त्रीणां व्रतोपासनं व्रताराधनं नो हितं हितकारि न स्यात्। कस्मिन् कुंभतीर्थोदये कुंभे घटे तीर्थं योनिरुत्पत्तिर्यस्य स कुंभतीर्थोऽगस्तिस्तस्योदये । यदुक्तं हेमचंद्रपादैः । 'योनौ पात्रे दर्शनेषु तीर्थशब्दस्त्रयोदशार्थेषु' तत्रोक्तः पुनर्हरौ सूर्ये वर्णिनीस्थे कन्याराशिगते पुनर्देवतासुप्तिकाले चातुर्मासके अथ पुनरधिके मासे पुनः पूर्वदेवेज्यः शुक्रः देवेज्यो गुरुस्तयोः स्तकेऽस्तमने सति ॥३२॥

स्यादभद्राय भद्रा न शंभोर्जपे मीनराशीनयोगस्तथाप्यर्चने ॥
होमकाले शिवायास्तमी तद्भुवः साधने सर्वकालोऽथ मेशेनयोः॥३३॥

अथ महादेवादीनां पूजादौ विष्टिप्रमुखाणामनिंद्यतामाह—स्यादिति ॥ भद्रा विष्टिरभद्राय दुःखाय न स्यात् । तथा मीनराशीनयोगो मीनार्कोऽभद्राय न स्यात् । कस्मिन् शंभोर्महादेवस्य जपेऽर्चनेऽपि पुनः शिवाया भवान्या होमकाले तद्भुवस्तस्या भवान्या भवतीति तद्भूर्गणेशस्तस्य तमी रात्रिरभद्राय न स्यात् । अथ पुनर्मेशेनयोः मेशो रमापतिश्च इनश्च तयोर्विष्णुसूर्ययोः साधने सर्वकालोऽभद्राय न स्यात् ॥ ३३ ॥

निंद्यकालोऽप्यनिंद्यो मया कीर्तितोऽविघ्नकालोऽथ निंद्योऽखिले साधने
अन्यदेवव्रतानां स यः सूरिभिस्तत्र सत्यादिभिः प्राक्तनैरादृतः ॥३४॥

अथ शुभाशुभकालग्रहणे निजमतं द्रढयति—निंद्येति ॥ मया कालिदासेन योऽनिंद्यः कालोऽपि निंद्यः कालः कीर्तितः। यो निंद्यकालोऽनिंद्य उक्तः कस्मिन् अन्यदेवव्रतानां साधने प्राक्तनैः सत्यादिभिः सत्यनामाचार्यादिभिः सूरिभिः पंडितैस्तत्र स मंत्रदेवस्य शरीरे अविघ्नः काल आदृतोऽगीकृतः ॥ ३४ ॥

कास्यकंठाशयोगांसि गर्भः कटिःपद्युगं मंत्रदेवस्य सेनर्क्षतः ॥
त्र्य ३ ग्नि३ रामा ३ ब्धि ४ वेदा ४ ग्नि ३ रामा ३ गमै ४ रोषधी-
शाबलास्तुल्यमानाः क्रमात् ॥ ३५ ॥

अथ मंत्रदेवस्य शरीरमाह—कास्येति । ओषधीशश्चन्द्रस्तस्याबला नार्यो नक्षत्राणि सेनर्क्षतः सूर्यनक्षत्रात् क्रमात् त्र्यग्न्यादिभिस्तुल्यमाना मंत्रदेवस्य कास्यादिकानि स्युः ॥ त्रयः३ अग्नयस्त्रयः रामास्त्रयः३ अब्धयश्चत्वारः४ वेदाश्चत्वारः४ अग्नयस्त्रयः३ रामा३स्त्रयः३ आगमाश्चत्वारः ४एषां द्वंद्वे एभिः । कोऽर्थः सूर्यनक्षत्रात् नक्षत्रत्रयेण मंत्रदेवस्य कं मस्तकं स्यात् । एवं पुनर्नक्षत्रत्रयेणास्यं मुखं पुनर्नक्षत्रत्रयेण कंठः एषां द्वंद्वे कास्यकंठाः पुनर्नक्षत्रचतुष्केण शयौ हस्तौ पुनर्नक्षत्रचतुष्केण उरो हृदयं एषां द्वंद्वे हस्तयुग्मेन उरसा च शयोरांसि

इति बहुवचनं सिद्धं पुनर्नक्षत्रत्रयेण गर्भे उदरं पुनर्नक्षत्रत्रयेण कटिः पुनर्नक्षत्रचतुष्केण पदद्वयं चरणद्वयं स्यात् ॥ प्राण्यंगानां द्वंद्व नित्यमेकत्वं अत्र तदनित्यत्वादथबहुवचनं सिद्धं यतः "राजहंसास्त्वमी चंचुचरणैरतिलोहितैः" इत्यभिधानचिंतामणिः। एवं सर्वत्र ज्ञेयम्॥३१॥*

**मूर्ध्नि मंत्रो विसिद्धिर्मुखे सिद्धिदः कालकृत्कंधरायां च दोषो रिपुः ॥**
**वक्षसीष्टोऽपि गर्भे अवेदर्थहा साधनादर्थदायी तु कट्यंघ्रिषु ॥ ३६ ॥**

अथ मंत्रशरीरावयवफलमाह—मूर्ध्नीति ॥ यदि मंत्रपुरुषस्य मूर्ध्नि मस्तके वर्तमानचंद्रनक्षत्रं स्यात्तदा साधनान्मंत्रो विसिद्धिर्गतसिद्धिर्भवेत्साधकस्येति शेषः ॥ एवं मुखे सिद्धिदः च पुनः कंधरायां ग्रीवायां कालकृत् मृत्युदायकः। दोषो हस्तयो रिपुर्वैरी वक्षसि हृदये इष्टो वल्लभः गर्भे उदरेऽर्थहा द्रव्यघातकः कट्यंघ्रिषु कटौ चरणयोश्चार्थदायी द्रव्यदायकः ॥ ३६ ॥

**स्वस्वयंत्रादिकारंभशुद्धौ तदुद्यापनं तत्र वा पुण्यकाले हितं ॥**
**मंत्रजाप्यांशहोमं च कुर्यात्सदा चेदपांपित्तचक्रे भशुद्धिर्भवेत् ॥ ३७ ॥**

अथ मंत्रोद्यापनकालशुद्धिमाह—स्वस्वेति ॥ तदुद्यापनं तस्य मंत्रस्योद्यापनं तत्र स्वस्वमंत्रादिकारंभशुद्धौ वाथवा पुण्यकाले हितं हितकारी स्यात । च पुनश्चेद्यादि अपांपित्तचक्रे भशुद्धिर्नक्षत्रशुद्धिर्भवेत् ॥'अपांपित्तधूमध्वजौकृष्णवर्त्मा' इतिहैमः॥ तदा सदा मंत्रजाप्यांशहोमं कुर्यात्साधक इति शेषः । मंत्रजाप्यस्यांशो दशांशः स चासौ होमस्य तं यथा शतसंख्यमंत्रे दश आहुतय इति ॥ ३७ ॥

**अथाग्निचक्रं विलिखेन्नवास्रं क्रमेण धाराधरभिद्दिगस्रात् ॥**
**रवींदुजेंद्वैनिसितारजीवागुकेतवस्तत्र नियोजनीयाः ॥ ३८ ॥**

अग्निचक्रम्

| के | बु | शु |
|---|---|---|
| २७ | ६ | ९ |
| रा | सू | श |
| २४ | ३ | १२ |
| बृ | मं | चं |
| २१ | १८ | १५ |

अथोपेंद्रवज्रयाग्निचक्रमाह—अथेति ॥ सुधीराग्निचक्रं लिखेत् ॥ किंभूतं नवास्रं नवकोष्टकमितं पुनः सुधियः तत्राग्निचक्रे क्रमेण धाराधराः पर्वतास्तान् भिनत्तीति तद्भिद् इंद्रस्तस्य दिक् पूर्वा तस्यारूयस्रात् कोष्टात् रवींद्वादयो योजनीयाः । रविः सूर्यः इंदुजो बुधः इंदुश्चंद्रः ऐनिः शनिः सितः शुक्रः आरो भौमः जीवो गुरुः अगुः राहुः केतुश्चैषां द्वंद्वे इति॥ ३८

**भपंजरं हंससमाश्रितर्क्षाद्यथाक्रमं चक्रगतग्रहेषु ॥**
**होमे विदध्यान्नवधा विभक्तं खलार्थगं सिद्धिनुदस्ति यत्तत् ॥३९॥**

अथास्मिंश्चक्रे भानि स्थापयति—भपंजरमिति ॥ सुधीः हंससमाश्रितर्क्षात्सूर्यनक्षत्रात् यथाक्रममनुक्रमेण होमे होमकुंडे चक्रगतग्रहेषु भपंजरं सप्तविंशतिनक्षत्रसमूहं नवधा विभक्तं नवभिर्भागैः कृत्वा विदध्यात् न्यसेदित्यर्थः ॥ तत्र यद्भं खलस्थगं क्रूरग्रहमुखगतं तद्भं सिद्धिनुत सिद्धिनाशकमस्ति ॥ ३९ ॥

* आकृति नंबर ३

**कवेःक्वचित्कल्पित ओषधीशे भपंजरांशश्च विधोः सितेऽस्तु ॥**
**तथैव शेषत्रिकलेंदुभागस्थितं तदृक्षत्रयमर्थहृत्स्यात् ॥ ४० ॥**

अथ मतांतरमाह—**कवेरिति** ॥ क्वचित् कवेः शुक्रात् भपंजरांशो नक्षत्रसमूहभागः ओषधीशे चंद्रे कल्पितः च पुनः क्वचित् विधोश्चंद्रात् भपंजरांशः सिते शुक्रेऽस्तु । तथैव पुनः शेषत्रिकलेंदुभागस्थितं शेषकलात्रयं चंद्रांशस्थितं तदृक्षत्रयं नक्षत्रयमर्थहृत् द्रव्यनाशकं स्यात्॥४०

**जन्यादिसंस्कारविधानहोमे होमेंदिरायाश्च हरेःक्रतौ स्यात् ॥**
**नित्ये ग्रहेष्टौ च हुताशचक्रं नैमित्तिके दोषवहं न शश्वत् ॥ ४१ ॥**

अथ जन्मादिविधानहोमेऽग्निचक्रं निर्दूषणमाह—**जन्येति** ॥ शश्वत् निरंतरं हुताशचक्रमग्निचक्रं दोषवहं दूषणधारकं न स्यात् ॥ जन्यादिसंस्कारविधानहोमे जातकर्मादिविधिहोमे च पुनरिंदिराया लक्ष्म्या होमे पुनर्हरेः कृष्णस्य होमे पुनर्नित्ययज्ञे पुनर्ग्रहेष्टौ ग्रहस्य इष्टिर्यज्ञस्तस्यां पुनर्नैमित्तिके वैश्वदेवे । होमेंदिराया इत्यत्र सप्तम्येकवचनेऽयादेशे कृते यकारलोपे पुनः सैषादिसंहिता । यदुक्तं लौकिकायेह तद्वदेव बहुलं भवेत् । समाभ्यादढे सैषा नित्यादीनामदुष्टता इति मार्गमाश्रित्य महाकविना संधिः कृतः ॥ ४१ ॥

**यस्या मयारंभणशुद्धिरुक्ता तच्छुद्धिकालेऽथ तदीरितार्थं ॥**
**न संशयोऽत्र व्यवहारकर्म विधेयमादेशिभिरप्यशेषम् ॥ ४२ ॥**

**इति श्रीकविकालिदासोदिते ज्योतिर्विदाभरणे विद्यारंभविवेकाध्यायो नवमः ॥९॥**

अथोपसंहारमाह—**यस्येति** ॥ निश्चितं यस्या मया कालिदासेन आरंभणशुद्धिर्विद्यारंभशुद्धिरुक्ता कस्मिंस्तस्या विद्यायाः शुद्धिकालस्तस्मिन् । अथ पुनरादेशिभिर्गणकैरशेषं व्यवहारकर्म विधेयं कर्तव्यं किंभूतं तदीरितार्थं तया शुद्ध्या ईरितः प्रेरितोऽर्थो यस्मिंस्तत् । अत्र निर्णये संशयः संदेहो नास्ति ॥ ४२ ॥

इति श्रीपौर्णिमीयगच्छाधिराजभट्टारकपुरंदरश्रीमहिमाप्रभसूरीश्वरचरणसरोजचंचरीकायमान शिष्यभावरत्नविरचितायां श्रीकविकालिदासकृतज्योतिर्विदाभरणस्य सुखबोधिकायामनेकविद्यारंभवर्णन नामाध्यायो नवमः ॥ ९ ॥

## राजसत्ताध्यायः । १०

**अथार्थपाशायनकेऽचलाभृतामुक्तोऽभिषेको नृपवंशजन्मनां ॥**
**पुष्पंधये तौलिगते त्वलं हरौ केचित्सहस्याहुरिषेऽभिषेचनम् ॥ १ ॥**

अथ पठितानंतरं नृपवंशजानां राज्याभिषेको भवत्यता राजसत्ताध्यायसंधानमाह—**अथेति** ॥ अलमित्यवधारणेऽथानंतरं अचलाभृतां महीपतीनां नृपवंशजन्मनां राजवंशजाता-

१ उक्तंच वीरमित्रोदये—विवाहयात्राव्रतवास्तुयज्ञचौलोपवीतग्रहणे युगादौ ॥
तथाच दुर्गार्चनसंविधाने न वन्हिचक्रं परिचिन्तनीयम् ॥ १ ॥

नामभिषेकः पश्चाभिषेक उक्तः। कस्मिन्नर्थपाशायनकेऽर्थपो धनपतिः कुबेरस्तस्य आशा उत्तरा तस्या अयनके सति। तु पुनर्हरौ सूर्ये पुष्पं वयति आस्वादयतीति पुष्पंधयो भ्रमरः भ्रमरशब्द-पर्यायस्य ज्योतिषे वृश्चिकपर्यायार्थत्वात् वृश्चिकस्तस्मिन् वृश्चिकसंक्रांतावित्यर्थः॥ पुनस्तौलि-गते तुलाराशिस्थे रवौ केचिदाचार्याः सहसि मार्गशीर्षे इषे आश्विने चाभिषेचनमाहुः ॥ १ ॥

**स्फुरद्घने निर्जरवंदिते च धिष्ण्येऽभिषिंचेदिह सारवीर्यं ॥**
**सिंहासनस्थं किल सार्वभौममितातपत्रधृतिमीशमुर्व्याः ॥ २ ॥**

अथ गुरुशुक्रशुद्धौ चक्रवर्त्यभिषेचनमाह—स्फुरद्घनेति ॥ किलेत्यवधारणे जन इह उर्व्या ईशं भूपं सार्वभौमं मांधातृप्रमुखषट्चक्रवर्तिसमानं जैनमते तु भरतादिसमानं चक्र-वर्तिनमभिषिंचेत् ॥ कस्मिन् निर्जरवंदिते गुरौ धिष्ण्ये शुक्रे च किंभूते स्फुरद्घने दिव्य-शरीरेऽनस्तंगते इत्यर्थः । किंभूतं भूपं सारवीर्यं आरस्य वीर्येण बलेन सह वर्तते यः स तं पुनः किंभूतं सिंहासनस्थं पुनः किंभूतं इतातपत्रधृतिं इता प्राप्ता आतपत्रस्य छत्रस्य धृतिर्धारणं येन स तं ॥ २ ॥

**सौरं सदा मंडलनेतुरद्वमनादृताषाढनभोनभस्यं ॥**
**किलाभिषेके व्यधिकेंदुमासं महीभुजः पेशलमाहुरार्याः ॥ ३ ॥**

अथ देशस्वामिनोऽभिषेकशुद्धिमाह—सौरमिति ॥ किलेति सत्ये सदा आर्याः मंडलने-तुर्देशस्वामिनो महीभुजो भूपतेरभिषेके सौरमब्दं सौरवर्षं मनोहरमाहुः कथयंति ॥ किंभूतमब्दं अनादृतास्त्यक्ता आषाढः नभः श्रावणः नभस्यो भाद्रपदश्च एते मासा यस्मिंस्तत् अनादृता-षाढनभोनभस्यं पुनः किंभूतं व्यधिकेंदुमासं अधिकचंद्रमासवर्जितं। मध्यममंडलाधीशः मध्यमो-ऽत्रेतनसम्राजापेक्षया सामान्यः॥ मंडलस्य द्वादशराजमंडलमध्यात् मंडलमात्रस्य स्वामी इति हैमः॥ 'नृपोऽन्यो मंडलेश्वरः' इत्यमरः॥ अन्यो भूम्येकदेशे यो नृप इति तट्टीका॥'मध्यमो मंडलेश्वरः' इति हलायुधः ॥ भूम्येकदेशे द्वौ इति तट्टीका ॥ ३ ॥

**दुर्गाधिपं मंडलपालवत्स्यात्सदाभिषिंचेदथ शासनेशं ॥**
**प्रजापतेः प्रागगदिताभिषेककालः कवीज्योदयभागपीष्टः ॥ ४ ॥**

अथ दुर्गस्वामिनोऽभिषेकशुद्धिमाह—दुर्गेति ॥ सदा जनो दुर्गाधिपं वप्रस्वामिनं शासनेशं निर्देशाधिपं मंडलपालवत् देशनेतृवत् अभिषिंचेत् ॥ अथ प्रजापतेर्नृपस्य प्रागगदिताभिषेक-कालोऽपि इष्टः स्यात् । किंभूतः कवीज्योदयभाग् शुक्रगुरूदययुक्तः। प्रजापतेरिति॥सामान्य राजशब्दवाची भूप्रजा नृप इति हेमवचनात् ॥ ४ ॥

**रिक्तातिथिं विष्टिमपास्य भूभृतोऽभिषेचनेऽक्षीणविभावरीश्वरं ॥**
**पक्षावुभौ चानु कुयोगवर्जितौ हितौ भवेतामपि भूषणार्चितौ ॥ ५ ॥**

अथ भूपाभिषेके पक्षशुद्धिमाह—रिक्तेति ॥ भूभृतो महीपस्याभिषेचने उभौ पक्षौ हितौ हितकारिणौ भवेतां किंकृत्वा रिक्तातिथिं विष्टिं क्षीणचंद्रं चापास्य हित्वा किंभूतौ पक्षौ कुयोगवर्जितौ अनु पश्चात् किंभूतौ भूषणाचितौ सुयोगान्वितौ ॥ ५ ॥

**गुर्वौषधीशास्फुजिदंशुमद्विदामतिस्फुरद्बिंबकलाविभावतां ॥**
**तमीशशुद्ध्याश्रितभस्य गोविभोरहानि शस्तान्यभिषेककर्मणि॥६॥**

अथाभिषेके दिनशुद्धिमाह—गुर्विति ॥ गोविभोर्महीपतेरभिषेककर्मणि गुरुः बृहस्पतिओषधीशश्चंद्रः आस्फुजिच्छुक्रः अंशुमान् सूर्यः विद् बुधः एषां द्वंद्वे अहानि दिनानि शस्तानि प्रोक्तानि । किंभूतानां अतिस्फुरद्बिंबकलाविभावतां अधिकदेदीप्यमानमंडलकलाप्रभायुक्तानां अस्तरहितानामित्यर्थः ॥ किंभूतस्य गोविभोः तमीशस्य चंद्रस्य शुद्ध्या दोषवर्जनेन आश्रितं भं नक्षत्रं राशिर्वा येन सः तस्य तमीशशुद्ध्याश्रितभस्य ॥ ६ ॥

**राजा भवेद्बाहुजवंशभूर्यदाभिषेचने भूमिसुवोऽप्यहः स्मृतं ॥**
**तस्यासुरो याम्यमहोऽत्र वा विदो दिनं न सर्वत्र जगाद देवलः॥७॥**

अथाभिषेके दिनशुद्धौ ऋषिमतमाह—राजेति ॥ यदा बाहुजवंशभूः क्षत्रियो राजा भवेत्तदा तस्याभिषेचने भूमिसुवो भौमस्याप्यहर्दिनं स्मृतं । अत्र देवलऋषिः सर्वत्र वारेषु पट्टाभिषेकं न जगाद उवाच कतिपयवारे जगादेत्यर्थः। अहोऽत्र इत्यत्र रत्वविधिमपास्य कस्यचिन्मतमाश्रित्य कविना उत्वविधिरंगीकृतः ॥ ७ ॥

**राज्ञामलोलैणकलंकभेंद्रभक्षिप्रेंदिरानायकतारकासु च ॥**
**मैत्रांत्यचित्रास्वभिषेचनक्रियामुशंत्यविद्धासु शुभेतरैर्बुधाः ॥ ८ ॥**

अथात्राभिषेके नक्षत्राणि दर्शयति—राज्ञेति ॥ बुधाः राज्ञामभिषेचनक्रियामुशंति वांछंति कासु अलोलानि धीरसंज्ञानि एणकलंकश्चंद्रस्तस्य भं मृगशीर्षं इंद्रभं ज्येष्ठा क्षिप्रसंज्ञानि इंदिरानायकः कमलापतिर्विष्णुः श्रवणः आसां द्वंद्वे आसु तारकासु भेषु च पुनर्मैत्रमनुराधा अंत्यं रेवती चित्रा आसु किंभूतासु शुभेतरैः पापग्रहैरविद्धासु ॥ ८ ॥

**अनिर्बलैर्निर्मलमंडलांशुभिर्जनीशलग्नेशविपाकपांशुभिः ॥**
**भतश्च लग्नादपिसद्ग्रहोपगैर्नृपाभिषेको नृपशक्तिभाग्भवेत्॥९॥**

अथाभिषेके गोचरशुद्धिमाह—अनिर्बलैरिति ॥ नृपाभिषेको राज्याभिषेको नृपशक्तिभाग् राज्ञः शक्तयस्तिस्रः प्रभुत्वोत्साहमंत्रजा इति ताभिरन्वितो भवेदित्यर्थः ॥ कैः भतो गोचरराशेर्लग्नाच्च जनीशो जन्मराशिस्वामी लग्नेशो जन्मलग्नस्वामी विपाकपो दशास्वामी अंशुः सूर्य एषां द्वंद्वे एभिः किंभूतैरनिर्बलैर्बलिष्ठैः पुनः किंभूतैः निर्मलाः विशदाः मंडलांशवो बिंबकिरणा एषां ते तैरस्तरहितैरित्यर्थः ॥ पुनः किंभूतैःसद्ग्रहोपगैः शुभग्रहान्वितैः ॥ ९ ॥

शस्तास्तिमिस्त्रीजितुमादिहोरास्थिरांशकुवर्गवतीह लग्ने ॥
चरेतरेग्वंशुमंदशुजारैस्त्र्यायारिगैर्भूमिभुजोऽभिषेकः ॥ १० ॥

अथाभिषेके लग्नशुद्धिमाह—शस्त इति ॥ भूमिभुजो महीपतेरभिषेकः शस्तः प्रोक्तः कस्मिन् इह चरेतरे स्थिरे लग्ने किंभूते लग्ने तिमिर्मीनः स्त्री कन्या जितुमं मिथुनः आदिर्मेषः एतेषां होरा लग्नार्द्धं तिमिस्त्रीजितुमादिहोराः स्थिरांशो नवांशश्च कुवर्गः शुभवर्गांशश्च एषां द्वंद्वे एते अस्यास्तीति मतुप्प्रत्यये एतद्वत् तस्मिन् । पुनः कैः अगुः राहुः अंशुमान् सूर्यः अंशुजः शनिः आरो भौमः एषां द्वंद्वे एभिः अग्वंशुमंदशुजारैः किंभूतैः त्र्यस्तृतीयं ३ आय एकादशं ११ अरिः षष्ठं एषु गतैः त्र्यायारिगैः ॥ १० ॥

सौम्यैरमित्रान्त्यलयान्यभावगैरसाधुदृष्टयुक्षितलग्नमूर्तिभिर्ग्रहैः ॥
स यो विभुत्वं विभुरेति वै भवेद्रसेशमत्तेभकदंबकेसरी ॥ ११ ॥

अथोचितभावगतग्रहैरभिषेकफलमाह—सौम्यैरिति ॥ यो विभुः सौम्यैर्ग्रहैर्विभुत्वं यदाभिषेकमेति प्राप्नोति किंभूतैर्ग्रहैरमित्रः षष्ठं ६ अंत्यो द्वादशं १२ लयो अष्टमं ८ एभ्योऽन्यभावगैरितरभावप्राप्तैः पुनः किंभूतैः सौम्यैर्ग्रहैरसाधुदृष्टयुक्षितलग्नमूर्तिभिः क्रूरग्रहदृष्टिवर्जितमंडलैः वै इति हेतौ स विभुः रसेशमत्तेभकदंबकेसरी भवेत् रसा भूपिस्तस्या ईशा राजानस्त एव मत्तेभाः प्रमत्तगजास्तेषां कदंबःसमूहस्तस्मिन् केसरीव केसरी सिंह इति ॥ ११ ॥

शीर्षोदयैश्चोपचयाश्रितैः कुजे निजोच्चगे चोपचयेऽचरोदये ॥
पट्टाभिषेकादचलाभृतो दरो रिपोः पदं नैव दधाति मंडले ॥ १२ ॥

अथ भौमशीर्षोदयैरभिषेकफलमाह—शीर्षोदयैरिति ॥ अचलाभृतो महीपतेः पट्टाभिषेकात् रिपोः शत्रोर्दरो भयं मंडले देशे पदं नैव दधाति तत्र रिपुभयं न स्यादित्यर्थः ॥ कैः उपचयाश्रितैः त्रि ३ षट् ६ दशमै १० कादश ११ भावगतैः शीर्षोदयैर्मिथुनसिंहकन्यातुलावृश्चिककुंभैः पुनः कस्मिन् उपचये त्रिषड्दशमैकादशभवनेऽचरोदये स्थिरलग्ने च निजोच्चगे स्वोच्चभावगते कुजे भौमे सति ॥ १२ ॥

अथातपत्रं विलिखेद्विदिग्ध्वजं भद्रासनं तत्तललग्नपूर्वगं ॥
सव्यापसव्यांसगचामरद्वयं तद्राज्यमुद्रावलयं च कीर्तितम् ॥ १३॥

अथ राजमुद्राचक्रमाह—अथेति ॥ सुधीः आतपत्रं छत्रं विलिखेत् । पुनरेवं विदिक् विदिशो ध्वजो यस्मिंस्तत् विदिग्ध्वजं एवंविधं तत्तललग्नपूर्वगं भद्रासनं पुनः सव्यापसव्यांसगचामरद्वयं वामदक्षिणस्कंधकान्तचामरयुग्मं लिखेत् । बुधैस्तद् राज्यमुद्रावलयं राज्यचिन्हचक्रं प्रकीर्तितम् ॥ १३ ॥

**विरोचनाधिष्ठितभाद्भमंडलं सिंहासनाधस्तलमध्यतो न्यसेत् ॥**
**सव्यापसव्योभयपार्श्वकोदितं तावत्तलस्थं भयुगं बलार्थहृत् ॥१४॥**

अथात्र चक्रे नक्षत्राणि स्थापयति—विरोचनेति ॥ विरोचनाधिष्ठितभात् सूर्यनक्षत्रात् सिंहासनाधस्तलमध्यतोऽत्र मंडलं न्यसेत्स्थापयेद्दैवज्ञ इति शेषः । किंभूतं भमंडलं सव्यापसव्योभयपार्श्वकोदितं वामदक्षिणोभयपार्श्वस्थितं इति नक्षत्रस्थापना ॥ अथैषां फलमाह॥ तावत्तलस्थं सिंहासनाधस्तलमध्यभागस्थितं भयुगं विभोः स्वामिनो बलार्थहृत् सैन्यपदार्थनाशकं स्यात्॥१४*

**अधोंऽसयुग्मे भचतुष्टयं वरं पश्चाद्विदिक्केतुयुगे प्रमापणं ॥**
**ताराचतुष्के भचतुष्कमिंद्रदिग्ध्वजाश्रितं मंडलकीर्तिवर्द्धनम् ॥१५॥**

अधोंऽसेति ॥ अधोंऽसयुग्मे भद्रासनाधस्तलस्कंधयुग्मे भचतुष्टयं नक्षत्रचतुष्कं वरं श्रेष्ठं स्यात् । पश्चाद्विदिक्केतुयुगे ताराचतुष्के विदिशोर्गतं भयुग्मं प्रमापणं विशरणं (प्रमयं प्रमापणमिति हैमं मापणं?) व्यापादनं स्यात् । इंद्रदिक्ध्वजाश्रितं पूर्वदिग्ध्वजयोर्गतं भचतुष्कं उभयतो नक्षत्रस्य युग्मं मंडलकीर्तिवर्द्धनं नीवृद्यशोवृद्धिकारकं स्यात् ॥ १५ ॥

**ततो भवेदासनपीठमध्यगं ताराद्वयं भीतिकरं प्रकीर्णयोः ॥**
**ज्योतिश्चतुष्कं जनयेद्धितं विभोश्छत्रश्रवोंसर्क्षचतुष्टयं लयम् ॥१६॥**

तत इति ॥ ततस्तदनंतरं आसनपीठमध्यगं भद्रासनमध्यभागगतं ताराद्वयं भीतिकरं भयानकं स्यात् । प्रकीर्णयोश्चामरयोर्ज्योतिश्चतुष्कं हितं जनयेत् ॥ छत्रश्रवोंसर्क्षचतुष्टयं छत्रकर्णस्कंधनक्षत्रचतुष्कं लयं मृत्युं जनयेत् । विभोः स्वामिन इति सर्वत्र योज्यं । यत्र नक्षत्रचतुष्कं प्रोक्तं तत्र उभयपार्श्वे भद्वयं स्थाप्यम् ॥ १६ ॥

**तारात्रये छत्रविमौलिसंस्थे पट्टाभिषेकान्नरदेवता स्यात् ॥**
**सम्राडतश्चेदिह चक्रवर्ती स्वराडपापे ननु छत्रयुक्स्थे ॥ १७ ॥**

तारेति ॥ छत्रविमौलिसंस्थे छत्रशिखोपरिस्थिते तारात्रये इह पट्टाभिषेकात् स्वराड् निजराजा नरदेवता नरपतिः सम्राड् द्वादशराजचक्रस्य स्वामी स्यात् । यतः ' येनेष्टं राजसूयेन मंडलस्येश्वरश्च यः । शास्ति यश्चाज्ञया राज्ञः स सम्राड्' इत्यमरः॥ इति राजमुद्राचक्रं ॥ ननु निश्चितं यदि चेत् इह भद्रासने छत्रयुक्स्थेऽपापत्रययोगे स्थिते शुभग्रहे सति अतोऽभिषेकात् स्वराट् चक्रवर्ती स्यात् ॥ ननु छत्र इत्यत्र लघुप्रयत्नत्वं संभाव्यतेऽन्यथा छंदोभंगाश्रित्यच्छकारस्याद्विर्भावत्वादेवं केवलछत्रमंडले इत्यादिपदेष्वपि ज्ञेयम् ॥ १७ ॥

**भाग्यं भगे भूषणभाज्यविद्धं विधौ कभं भूभुवि मूलमोड्ड ॥**
**विदि त्वहिर्बुध्न्यभमिंद्रवंद्ये शौच्यं कवौ छत्रयुगार्किसूड्ड ॥ १८॥**

* आकृति नंबर ४

अथ छत्रयोगे ग्रहनक्षत्रशुद्धिं दर्शयति—भाग्यमिति ॥ भगे सूर्ये भाग्यं पूर्वाफल्गुनी अविद्धं वेधवर्जितं एवं विधौ चंद्रे कभं को वायुस्तस्य भं स्वाती पुनर्भूर्भुवि भौमे मूलं पुनर्विदि बुधे ओडु अत्र पदच्छेदः कर्तव्यः अ उडु अः विष्णुस्तस्य उडु संधौ कृते त्रयोदशमस्वरो जातः श्रवणः तु पुनरिंद्रवंद्ये गुरौ अहिर्बुध्न्यभं उत्तराभाद्रपदा पुनः कवौ शुक्रे शौच्यमग्निभं कृत्तिका पुनरार्किसूडु कोऽर्थः अर्कस्वर्कसूडु अत्रार्थभेदेऽपि सरूपाणामेकशेष इत्याश्रित्य प्रथमार्कसूशब्दस्य लोपः अर्कसूः शनिस्तस्मिन्नर्कसूः सूर्यस्य देवपर्यायत्वाददितिस्तस्या उडु पुनर्वसू किंभूते भगादिग्रहे भूषणभाजि सुयोगयुक्ते इति छत्रयुक् छत्रयोगः स्यात् ॥ १८ ॥

**इहाभिषेकादितिचादृते भे सच्छत्रयुग्भाजि महारथो राट् ॥**
**अनेकशालेशनतीरितौजा यथाविधोऽन्यत्र तथाविधः स्यात् ॥१९॥**

इहेति ॥ इति पूर्वोक्तप्रकारेण इह आसने च पुनःसच्छत्रयुगभाजि शुभछत्रयोगाश्रिते आदृतेऽगीकृते भे नक्षत्रे सति अभिषेकात् राट् राजा महारथः सहस्रयोद्धा स्यात् । किंभूतो राट् अनेकेषां शालेशानां प्राकारस्वामिनां नतिभिर्नमनैरीरितं प्राप्तमोजो बलं यस्य स इति । अन्यत्र यथाविधो नक्षत्रादियोगस्तथाविधस्तादृक् राजा स्यादित्यर्थः ॥ १९ ॥

**तपोधनोपासितराज्यलब्धौ तत्कालमार्यास्त्वभिषेकमूचुः ॥**
**स्ववंशराज्ञोऽन्यविभोरिते वा राज्यावसाने नरदेवतायाः ॥२०॥**

अथाकस्माद्राज्यप्राप्तनरस्य तत्कालाभिषेकं दर्शयति—तपोधनेति ॥ तपोधनस्य महर्षेरुपासितान् सेवनात् राज्यप्राप्तौ सत्यां आर्याः नरदेवताया नृपस्य तत्कालमभिषेकमूचुः कथयामासुः । तु पुनरार्याः स्ववंशराज्ञो निजवंशनृपस्य वाऽथवाऽन्यविभोरन्यस्वामिनो राज्यावसाने पित्रादिमरणावसाने इते प्राप्ते सति नृपाभिषेकं तत्कालमूचुरिति ॥ २० ॥

**अहेलिभिः पंचभिरुच्चगैर्ग्रहैर्नरो भवेन्नीचकुलेऽपि पार्थिवः ॥**
**तस्याभिषेको जनितोऽधिकैरतस्तज्जातकर्मैव न चात्र विभ्रमः ॥२१॥**

अथ नीचकुलोत्पन्ननृपाभिषेकविधिमाह—अहेलिभिरिति ॥ अहेलिभिः सूर्यरहितैः पंचभिरुच्चगैर्ग्रहैः कृत्वा नीचकुले जनितो जन्मप्राप्तोऽपि नरः पार्थिवो भूपतिर्भवेत् । अतः पंचग्रहतोऽधिकैर्ग्रहैस्तस्याभिषेकोऽभिधीयते । तज्जातकर्म एव तस्य सोऽभिषेक एव जातकर्म प्रोक्तं नीचकुलत्वेन पूर्वं संस्काराभावात् । अत्र विभ्रमः संशयो नास्ति ॥ २१ ॥

**भशुद्धिमाहाथ कुमारहारितौ महीभुजः केवलछत्रमंडले ॥**
**सिंहासने सत्यमुखा विदुर्ध्वजे वत्सोऽभिषेकेऽपि च चामरेऽपरे ॥२२॥**

अथाभिषेके छत्रासनध्वजचामरशुद्धौ मतांतरमाह—भेति ॥ अथ कुमारहारितो लघुहारितऋषिर्महीभुजो महीपतेरभिषेके केवलछत्रमंडले भशुद्धिं नक्षत्रशुद्धिमाह । पुनः सत्यमुखाः सत्याचार्यप्रमुखाः पंडिताः केवले सिंहासने भशुद्धिं विदुः । पुनर्वत्सो मुनिर्ध्वजे पताकायां भशुद्धिमाह पुनरप्यपरे ऋषयः केवले चामरे भशुद्धिमाहुः । इति छत्रभशुद्धिश्चामरभशुद्धिश्चाभिषेके दर्शिता ॥ २२ ॥

**वसिष्ठैरभ्यात्रिपराशरादिभिश्चक्रं समग्रागमजैकभावगैः ॥**
**अदो विरुद्धं विशदं सदोदितं राज्ञोऽभिषेकेऽपि मयोदितं ततः॥२३॥**

अथ राज्यमुद्रावलयस्योपसंहारमाह—वसिष्ठेति ॥ वसिष्ठैरभ्यात्रिपराशरादिभिर्ऋषिभिः सदाऽदश्चक्रमुदितं प्रोक्तं किंभूतमविरुद्धं सर्वेषां मान्यमित्यर्थः । पुनः किंभूतं विशदं दोषरहितं कस्मिन् राज्ञो नृपस्याभिषेके किंभूतैर्वसिष्ठादिभिः समग्रागमजैकभावगैः समस्तशास्त्रोत्पन्नभावप्राप्तैः ततस्तस्मात् कारणान्मयाप्यदश्चक्रमुदितम् ॥ २३ ॥

**सतीति कीर्णा नृपगौरवोचिता निष्णातवीरैर्विदधीत मंत्रिणा ॥**
**नरैरनूचानरसामरैः सभा चापाकृतिर्न्यस्तनृपासनोदरा ॥ २४ ॥**

अथ सभारचनामाह—सतीति ॥ सभा इति एवं विदधीत तदाह किंभूता सभा सती समीचीना पुनः किंभूता निष्णातवीरैरुद्भटैः मंत्रिणाऽनूचानरसामरैः समग्राधीतागमविप्रैश्च नरैश्च कीर्णा व्याप्ता पुनः किंभूता नृपगौरवोचिता राज्ञो गौरवाय योग्या पुनः किंभूता चापाकृतिर्धनुराकारमयी पुनः किंभूता न्यस्तनृपासनोदरा न्यस्तं स्थापितं नृपासनं यस्मिंस्तत् एवं विधं उदरं मध्यं यस्याः सा । अत्र काव्ये इति पूर्वोक्तभद्रासनादौ सति मंत्रिणा सभा विदधीत क्रियत इत्यन्वयोऽत्र कर्म्मणि संभाव्यते यतो वक्ष्यमाणाध्यायेऽपि "वधुप्रवेशो विदधीत धीमता पुनरेकोनविंशतितमेऽध्याये ८७ काव्ये कुविंदकुत्यं विदधीत धीमता २० अध्याये ३९ काव्ये विदधीत नात्र इत्यादौ विदधीत इति कर्मोक्तिप्रयोगो विबुधैश्चिंत्यः ॥ २४ ॥

**तदासनस्याभिमुखे गजव्रजे सकेतने सप्तिशतांगमध्यगे ॥**
**क्षत्तारमर्योऽथ विशेत्सदः पुरो विधाय पार्श्वेऽधिजनांश्च मागधान् २५**

अथ सभाप्रवेशविधिमाह—तदेति ॥ अथ अर्यः स्वामी नृपः सदः सभां विशेत् सभायां प्रवेशं कुर्यादित्यर्थः । सदःशब्दो हसांतः स्त्रीक्लीबलिंगः । किंकृत्वा क्षत्तारं द्वारपालकं पुरोऽग्रे विधाय पुनरधिजनान् अधिकारिमनुष्यान् पुनर्मागधान् मंगलपाठकान् पार्श्वे विधाय कस्मिन् सति तदासनस्याभिमुखे गजव्रजे किंभूते सकेतने ध्वजान्विते पुनः किंभूते सप्तिशतांगमध्यगे सप्तयस्तुरंगाः शतांगा रथा एषां मध्यभागप्राप्ते ॥ २५ ॥

**स्तंबेरमास्यं च हरिं हरं हरिं देवीमथाभ्यर्च्य दिगीश्वरान् ग्रहान् ॥**
**स्मरन्प्रणम्यादिसुवोऽवनीश्वरो राज्यासनं दत्तवरानियादिह ॥२६॥**

अथ भद्रासने समारोहणविधिमाह—स्तंबेरमेति ॥ अवनीश्वरो महीपतिरिह सभायां राज्यासनं भद्रासनं इत्यादावितिष्ठेत ॥ किंकृत्वा स्तंबेरमास्यं गजाननं गणेशं च हरिं विष्णुं च हरं शिवं च हरिं सूर्यं च देवीं लक्ष्मीं चाभ्यर्च्य संपूज्य पुनः किंकृत्वा आदिभुवो विप्रान्प्रणम्य पुनः किंकुर्वन् दिगीश्वरान् लोकपालान् ग्रहांश्च स्मरन् किंभूतान् इमान् दत्तवरान् दत्तो वरः आशिर्वादोऽभीप्सितं वा यैस्ते तान् 'वरो वृतौ विटे जामातरि श्रेष्ठे देवतादेरभीप्सिते' इति हैमः ॥ २६ ॥

**भद्रासनं दैवविदे च तार्क्ष्यं पुरं द्विजेभ्यः भुवं द्विजेभ्यः ॥**
**शस्त्राणि विक्रांतजनाय दद्यादर्थं परेभ्यः स्वपुरोधसेऽश्वम् ॥२७॥**

अथ काव्यद्वयेन सिंहासनाधिरूढनृपस्य कर्तव्यतामाह—भद्रेति ॥ स भूपतिर्भद्रासनं समारुह्य उपविश्य दैवविदे गणकाय तार्क्ष्यं तुरंगमं दद्यात्। एवं द्विजेभ्यः पुरं ग्रामं भुवं महीं च दद्यात्। विक्रांतजनाय सुभटजनाय शस्त्राणि प्रहरणानि पुरोधसे पुरोहितायाश्वं घोटकं अपरेभ्यो याचकेभ्योऽर्थं द्रव्यं दद्यात्। 'शूरश्चारुभटो वीरो विक्रांतश्चाप्यकातरः' इति हैमः॥२७॥

**प्रबोधकेभ्यो नवचीवराणि विशांपतिः स्वासनगोऽथ दद्यात् ॥**
**स्ववेदभेदोक्तविधानमित्थं सर्वं विधेयं क्षितिदेवताभिः ॥ २८ ॥**

प्रबोधकेति ॥ अथ पुनः विशांपतिः स्वासनगो निजासनस्थितः सन् प्रबोधकेभ्यो वैतालिकेभ्यो नवचीवराणि नवीनवस्त्राणि दद्यात् ॥ इत्थममुना प्रकारेण क्षितिदेवताभिर्विप्रैः स्ववेदभेदोक्तविधानं निजशाखाविहितस्य उक्तकार्यं सर्वं विधेयं कर्तव्यम् ॥ २८ ॥

**राज्ञामनेकैरनिशं यतोऽगैरतोऽस्ति राज्यव्यवहारसिद्धिः ॥**
**अनोगजाश्वायुधमंडलाद्यैर्वदाम्यहं तद्व्यवहारशुद्धिम् ॥ २९ ॥**

अथ गजादिराज्यांगानां संधानमाह—राज्ञामिति ॥ यतो यस्मात्कारणात् अनिशं निरंतरं राज्ञां नृपाणां राज्यव्यवहारसिद्धिरस्ति कैरनेकैरंगैः किंभूतैः अनोगजाश्वायुधमंडलाद्यैः अनांसि शकटाः गजाः अश्वाः आयुधानि मंडलानि देशा आदयो येषां तानि तैः। मुख्यांगानि सप्त 'स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च ॥ राज्यांगानि प्रकृतयः पौराणां श्रेणयोऽपि च' ॥ १ ॥ इति हेमसूरयः॥ अतोऽस्मात्कारणादहं तद्व्यवहारशुद्धिं तेषामंगानां व्यवहारशुद्धिं वदामि ॥ २९ ॥

**अथ प्रजामंडलके च पत्तने देशे पुरे चाधिगते निकेतने ॥**
**तत्रोदितं वंदनमालबंधनं नृपाभिषेके शुभलग्नशुद्धिषु ॥ ३० ॥**

अथ ग्रामादिषु दामबंधनशुद्धिमाह—अथेति ॥अथ नृपाभिषेकस्य यानि दिनानि भानि नक्षत्राणि लग्नानि एषां द्वंद्वे एषां शुद्धिषु वंदनमालबंधनं उदितं कथितं "दाम बंधनमालिका" इति हैमः।

केषु तत्र तेषु तान्येवाह। भूमंडलके जनपदे पत्तने नगरे च पुरे ग्रामे वा निकेतने गृहे चाधिगतेऽधिकारमाप्ते नेति ॥ ३० ॥

**अस्ते च जीवोशनसोर्झषे गुरौ नभस्ये कुजमंदवासरे ॥**
**राज्यांगकर्माण्यथ कोविदा विदुर्न वक्ष्यमाणान्यसदिंदुवासरे ॥३१**

अथ गुरुशुक्रास्तादिदोषे राज्यांगकर्माणि प्रतिषेधति—अस्ते चेति ॥ अथ कोविदाः पंडिताः राज्यांगकर्माणि वक्ष्यमाणानि न विदुः न कथयंति ॥ कस्मिन् जीवोशनसोर्गुरुशुक्रयोरस्तेऽस्तंगते सति पुनर्झषे मीने इते सूर्ये सति पुनः गुरौ आषाढे नभस्ये भाद्रपदे कुजमंदवासरे भौमशन्योर्दिने पुनरसदिंदुवासरे पापचंद्रदिने ॥ ३१ ॥

**लघूडुचित्रादितिमातरिश्वभैरशेषकर्माणि गदंति कुंभिनः ॥**
**चराचरर्क्षेशपुरोहितोडुभिर्ध्वजाक्रिया वारणधिष्ण्यकर्म च ॥ ३२ ॥**

अथ गजकर्मसु मुहूर्तमाह—लघ्विति ॥ कोविदाः कुंभिनो गजस्याशेषकर्माणि समस्तकृत्यानि ध्वजाक्रिया पताकाद्यारोपणं च वारणधिष्ण्यकर्म च 'अंबारी' इति भाषायां गदंति। कैः लघूडूनि लघुसंज्ञभानि चित्रा अदितिः पुनर्वसु मातरिश्वा वायुस्तस्य भं स्वाती एषां द्वंद्वे एभिः पुनः चरसंज्ञानि अचरसंज्ञानि ईशः आर्द्रा पुरोहितो गुरुः पुष्यः एषां द्वंद्वे एभिर्नक्षत्रैः ॥ ३२ ॥

**सामोद्भवस्येनसुताडुतो लिखेद्धान्यतरे त्रीण्यनुमूर्धपिंडयोः ॥**
**तत्संधिनीदंडगतं च भत्रयं भानां द्वयं तुण्डगतं त्वदि त्रयम् ॥ ३३ ॥**

अथ काव्यद्वयेन गजचक्रमाह—सामेति ॥ सुधीः इनसुताडुतः सूर्यभात् सामोद्भवस्य गजस्य मूर्द्धपिंडयोः कुंभयोरंतरे विचाले विदौ त्रीणि भानि लिखेत् निवेशयेत् 'कुंभौ तु पिंडौ शिरसः कुंभयोरंतरं विदुः' इति हैमः ॥ एवं च तत्संधिनीदंडगतं शुंडादंडप्राप्तं भत्रयं पुनर्द्वयं तुंडगतं नक्षत्रयुग्मं मुखप्राप्तं पुनर्भानां त्रयं त्वदि त्वदये लिखेत ॥ ३३ ॥*

**ताराचतुष्कं तु ततोऽग्रपादयोः सदा पराङ्घ्र्योर्भचतुष्टयं लिखेत् ॥**
**चतुष्टयं लूनलतागतं गजे चतुष्टयं पृष्ठगमिंदुयोषिताम् ॥ ३४ ॥**

तारेति ॥ सदा सुधीस्ततस्तस्मादग्रपादयोस्ताराचतुष्कं लिखेत । च पुनरपराङ्घ्र्योः पश्चाच्चरणयोर्भचतुष्टयं पुनर्लूनलतागतं पुच्छलताप्राप्तं इंदुयोषितां नक्षत्राणां चतुष्टयं करे कुर्यात् न्यसेत् इत्यर्थः ॥ करोतेस्तनादिगणमपास्य भ्वादिगणे उकारविकल्पार्थं पाठ उक्तस्तेन शाववपि करति करतः करंतीत्यादिरूपाणि हैममते भवंति पाणिनियास्त्वेनं पृथग्धातुं मन्यंते ॥ पुनः पृष्ठगं वंशव्याप्तं नक्षत्राणां चतुष्टयं लिखेत ॥ ३४ ॥

---

* आकृति नंबर ५

शुंडादंडे कुंभयोराविलोक्यं वक्त्रेऽन्ता स्याच्छं त्हदि व्याधिरंघ्योः ॥
पश्चादंघ्योर्भीतिरन्तेति लूने पृष्ठे व्याधिः कुंभिनोऽशेषकृत्ये ॥ ३५॥

अथ शालिनीछंदसैतच्चक्रगतनक्षत्रफलमाह—शुंडेति ॥ गजस्य शुंडादंडे कुंभयोश्च वर्तमानं चंद्रनक्षत्रं स्यात्तदा राः राज्यद्रव्यं अथवा लक्ष्मीः स्यात् ॥ एवं वक्त्रे मुखेऽन्ता मरणं स्यात् । त्हदि त्हदये शं सुखं पुनरंघ्योरग्रचरणयोर्व्याधिर्गदः पश्चादंघ्योर्भीतिर्भयं लूने पुच्छेऽन्ता मरणं पृष्ठे व्याधिः इत्यमुना प्रकारेण कुंभिनो गजस्याशेषकृत्ये समस्तकार्ये गजचक्रं विलोक्यं । शुंडा शुंडा इति शब्दप्रभेदो दृश्यते ॥ ३९ ॥

तिर्यग्वक्त्रैर्भैरिनैनीज्यविद्भिः कुंभिज्योतिःशुद्धिगैर्वेह शस्तः ॥
धीरे लग्ने शुद्धकेंद्रत्रिकोणे सन्नात्द्यः व्यालोपवात्द्यादिबंधः ॥ ३६ ॥

अथ गजबंधमुहूर्तमाह—तिर्यगिति ॥ इह सन्नात्द्यः समरोचितः व्यालो मदोन्मत्तो गज उपवाह्यो राजवाह्योऽरण्यहस्ती एषां द्वंद्वे एषां बंधः शस्तः प्रोक्तः कैः तिर्यग्वक्त्रैर्भैस्तिर्यङ्मुखनक्षत्रैर्वा इनः सूर्यः ऐनिः शनिः ईज्यो गुरुः विद् बुधः एषां द्वंद्वे एतैः किंभूतैः कुंभिज्योतिःशुद्धिगैर्गजनक्षत्रशुद्धिप्राप्तैः । पुनः कस्मिन् शुद्धकेंद्रत्रिकोणे धीरे लग्ने सति १।४।७।१०।९।५ व्यालो 'दुष्टगजो गंभीरवेद्यवमतांकुशः राजवात्द्यः सन्नात्द्यः समरोचित' इति हैमः ॥ ३६ ॥

दाक्षायण्यर्यैन्द्रसूवातभांत्यक्षिप्रार्णोर्योडुश्रविष्ठासु धीराः ॥
लग्नाल्लोलात्र्यायकेंद्रेषु सौम्यैराजानेयाद्यश्वकर्माण्यथाहुः ॥ ३७ ॥

अथाश्वकर्मशुद्धिमाह—दाक्षायणीति ॥ धीराः पंडिताः आजानेयाः कुंभीनाश्वा इत्यादयोऽश्वाः एषां कर्माणि आहुः कैः लग्नात् लोलाच्चरराशेस्त्रयः ३ आयः ११ केंद्राणि १।४।७।१० एषु भावेषु स्थितैः सौम्यैः शुभग्रहैः पुनः कासु दाक्षायणीनां नक्षत्राणामर्यः स्वामी चंद्रो मृगशीर्षं इंद्रसूरिंद्रमाताऽदितिः पुनर्वसू वातभं स्वाती अंत्यं रेवती क्षिप्रसंज्ञा इति अर्णोर्यो जलस्वामी वरुणस्तस्योडु शतभिषक् श्रविष्ठा धनिष्ठा आसां ताराणां द्वंद्वे आसु ॥ ३७ ॥

वाहे मौलिस्तंभतो भत्रयं स्यात्सेनादर्थायास्यगा लब्धकामाः ॥
तारास्तिस्रःपंच त्हत्स्था वरिष्ठा दुष्टाश्चाग्रांघ्योश्चतस्रःप्रदिष्टाः॥३८॥

अथाश्वचक्रे भानि स्थापयति—वाहे इति ॥ सेनात् सह इनेन सूर्येण वर्तते यत्तस्मात् सूर्यनक्षत्रात् वाहेऽश्वे मौलिस्तंभतो मस्तकस्थूणातो भत्रयं नक्षत्रत्रयमर्थाय द्रव्याय स्यात् । अर्थात् वर्तमानचंद्रभं यदाऽत्र भवेत्तदेति । एवं आस्यगा मुखगतास्तिस्रस्तारा लब्धकामा आप्तकामाः प्रदिष्टाः प्रोक्ताः । पुनर्त्हत्स्थाः त्हदयस्थिताः पंचताराः वरिष्ठाः श्रेष्ठाः पुनरग्रांघ्योरग्रपादयोश्चतस्रस्तारा दुष्टाः प्रदिष्टाः ॥ ३८ ॥*

---

* आकृति नंबर ६.

**तारा: पश्चात्पादयोर्मांघदाः स्युर्वेदाभिन्नाः पृष्ठदेशे चतस्रः ॥**
**व्यर्था लूने भानि चत्वारि हान्यै कर्मण्याश्वे चेत्यदश्चिंतनीयम् ॥ ३९॥**

ताराइति ॥ पश्चात्पादयोर्वेदाभिन्नाश्चतस्रस्तारा मांद्यदाः रोगदाः स्युः । एवं पृष्ठदेशे वंशे चतस्रस्तारा: व्यर्था निष्फलाः स्युः । लूने पुच्छे चत्वारि भानि हान्यै विनाशाय स्युः । इति प्रकारेण अश्वस्य इदं आश्वं तस्मिन् आश्वेऽश्वसंबंधिनि कर्मणि अदश्चक्रं चिंतनीयं विबुधैः॥ ३९॥

**लोलमैत्रलघुजिष्णुकभेषु स्यंदनाखिलविधानमथाहुः ॥**
**सेनसद्युषु वशां१बुधतप९स्थैः साधुराशिवति साधुभिरंगे ॥ ४०॥**

अथ स्वागताछंदसा रथकर्माह—लोलेति ॥ अथानंतरं धीराः स्यंदनाखिलविधानं रथानां समस्तकार्यमाहुः । केषु लोलसंज्ञानि मैत्रसंज्ञानि लघुसंज्ञानि जिष्णुरिंद्रो ज्येष्ठा को ब्रह्मा रोहिणीभं एषां द्वंद्वे एषु किंभूतेषु सेनसद्युषु सूर्यशुभग्रहदिनैः सह वर्तमानेषु पुनः कस्मिन् साधुराशिवति शुभग्रहराशियुक्तेऽंगे लग्ने सति पुनर्वशा स्त्रीभवनं पुनः अंबु चतुर्थं तपो नवमं एतद्भवनस्थैः साधुभिः शुभग्रहैः ॥ ४० ॥

**ऊष्मवृष्णिकरकीर्णपुरक्षाद्देयमृक्षवलयं वलयस्य ॥**
**सव्यभागनिचितभ्रममग्रादाविमध्यमनसो नवभागम् ॥ ४१॥**

अथ रथचक्रे भानि स्थापयति—ऊष्मेति ॥ ऊष्मवृष्णिः सूर्यस्तस्य करैः कीर्णं व्याप्तं पुरं यस्य तच्च ऋक्षं च तस्मात्सूर्यभात् सुधिया ऋक्षवलयं भचक्रं देयं न्यासः कर्त्तव्यं। कस्मात् अनसः शकटस्य वलयस्य चक्रस्याग्रादग्रभागात् आविमध्यं मध्यभागपर्यंतं किंभूतं ऋक्षवलयं नवभागं नवभिर्भागैः स्थितं पुनः किंभूत सव्यभागनिचितभ्रमं वामभागचारितभ्रमणं वृष्णिरिति प्रष्णिः वृष्णिः शब्दप्रभेदोक्तोऽयं शब्दः दंत्यौष्ठ्यवर्गस्त्वजादिपाठे संभाव्यते ॥ ४१ ॥ *

**अग्रभे भवति संकलिरत्ता कूबरोडुनि जयोऽथ रथांगे ॥**
**संधिभेऽर्थहृतिरंतरसंधौ भीतिरिष्टमनसो ननु गर्भे ॥ ४२ ॥**

अथैतच्चक्रगतभफलमाह—अग्रेति ॥ अनसः शकटस्य अग्रेऽग्रत वर्तमानचंद्रभे संकलिर्युद्धं भवति । एवं कूबरोडुनि कूबरे युगंधरे 'कांमरा' इति भाषायां । उडुनि वर्तमानचंद्रनक्षत्रेऽत्ता मरणं भवति । रथांगे रथपादे चक्रयुग्मे जयः स्यात् । संधिभे संधिगतनक्षत्रेऽर्थहृतिर्द्रव्यहरणं अंतरसंधौ मध्यसंधानगतैर्भैर्भीतिर्भयं गर्भे मध्यभागभे इष्टं शुभं ननु निश्चितं ॥ ४२ ॥

**आंत्ययातुभचलाचलमैत्रद्व्यर्यदास्रलघुभैर्निचितेषु ॥**
**सद्भिरुक्तमृषभाखिलकार्यं व्यारविद्यमसमग्रदिनेषु ॥ ४३ ॥**

अथ वृषभसमस्तकर्माह—आंत्येति ॥ सद्भिः पंडितैः वृषभाखिलकार्यं सौरभेयाणां समस्तकृत्यमुक्तं प्रोक्तं केषु व्यारविद्यमसमग्रदिनेषु भौमबुधशनिवर्जितेषु सर्वदिनेषु किंभूतेषु निचितेषु

---

* आकृति नंबर ७

ष्वातेषु कैः आंत्यं रेवती यातुभं मूलं चलसंज्ञानि अचलसंज्ञानि मैत्रं अनुराधा द्व्यर्यं द्विस्वामिकं विशाखा दास्रमश्विनी लघुसंज्ञानि एभिर्भैः ॥ ४३ ॥

**याप्ययाननिखिलव्यवहाराः सद्युसत्तिथिषु सत्सु वराः स्युः ॥**
**उत्तरेंद्रलघुमैत्रचलर्क्षैःकंटके १।४।७।१० त्युपचये३।६।११ऽथ खलेषु।**

अथ शिबिकासमस्तकर्माह—याप्येति ॥ हि युक्तार्थे याप्ययानं शिबिका तस्या निखिलव्यवहाराः वराः श्रेष्ठाः स्युः ॥ केषु सद्युसत्तिथिषु शुभदिनशुभवासरेषु सत्सु पुनः कंटके १।४।७।१० उपचये ३।६।१०।११ खलेषु खलग्रहेषु पुनः कैः उत्तरात्रयं इंद्रो ज्येष्ठा लघुसंज्ञानि मैत्रसंज्ञानि चलसंज्ञानि एभिः ॥ ४४ ॥

**पेटके हरिदिशोंऽशुयुतर्क्षात्पंच पंच हरितः शिबिकायाः ॥**
**मध्यगा गुणमिताश्च चतस्रो दंडगा विधुवशा ननु देयाः ॥४५॥**

अथ शिबिकाचक्रे नक्षत्राणि स्थापयति—पेटकेति ॥ अंशुयुतर्क्षात् सूर्यभात् शिबिकायाः पेटके हरिदिशः पूर्वतो हरितश्चतुर्दिक्षु पंच पंच विधुवशाः नक्षत्राणि देयाः । हरित इति सार्वविभक्तिकस्तस् इत्येके इतिबहुवचनं ॥ च पुनर्मौलिगा मस्तकगताः गुणमितास्त्रिसंख्यास्तारा देयाः पुनर्दंडगाः वेणुप्रांते द्वे द्वे इत्यर्थः । ताश्चतस्रस्तारा देयाः । ननु निश्चितं दैवज्ञैरिति शेषः ॥ ४९ ॥ *

**जिष्णुदिश्यपि कमंतकदिग्गं भं गदाय दरदं वनपाशं ॥**
**वित्तपाशमतिवेदनमृक्षं मध्यवेणुगमभीष्टमिह स्यात् ॥ ४६ ॥**

अथ शिबिकाचक्रगतनक्षत्रफलमाह—जिष्णुरिति ॥ इह चक्रे जिष्णुदिशि पूर्वस्यां यदा भं वर्तमानचंद्रनक्षत्रं स्यात्तदापि निश्चितं कं सुखं स्यात् । एवं अंतकदिग्गं दक्षिणदिक्स्थितं भं नक्षत्रं गदाय रोगाय स्यात् । पुनः वनपो जलस्वामी वरुणस्तमश्नुते प्राप्नोति इति वनपाशं वारुणदिग्गतं भं दरदं भयदं स्यात् । वित्तपाशं धनददिग्गतं उत्तरस्थं भ्रमति वेदनं बहुपीडाकृत ।मध्यश्च वेणुश्च तौ गच्छतीति तन्मध्यवेणुगमिति मध्यगं मौलिगतं वेणुगं उभयपार्श्वे वंशप्रांतप्राप्तमभीष्टं शुभं स्यात् ॥ ४६ ॥

**पुष्पवंतकविजीवदिनेषु क्षिप्रधीरमृदुशौरिभशाक्रैः ॥**
**सेवनाद्यखिलबिंबशशांके सर्वकर्म गदितं त्वनुगानाम् ॥ ४७ ॥**

अथ राजसेवामुहूर्तमाह—पुष्पेति ॥ हि युक्तार्थे अनुगानां सेवकानां सेवनादि भूपसेवादि सर्वकर्म गदितं प्रोक्तं । कस्मिन् अखिलबिंबशशांकेऽक्षीणचंद्रे पुनः केषु पुष्पवंतौ शशिभास्करौ कविः शुक्रः जीवो गुरुरेषां दिनेषु पुनः कैः क्षिप्रसंज्ञानि धीरसंज्ञानि मृदुसंज्ञानि शौरिर्विष्णुः श्रवणः शाक्रं ज्येष्ठा एषां द्वंद्वे एभिः कृत्वा ॥ ४७ ॥

* आकृति नंबर ८

मारवर्तिनि गुरावसितेऽशावारहंसवति तेजसि वाये ॥
के सितेऽब्जवति वाथ विलग्ने सेवनं मुनिवरा वरमाहुः ॥ ४८ ॥

अथ सेवायां लग्नशुद्धिमाह—मारेति ॥ मुनिवराः सेवनं राजसेवां वरमाहुः । कस्मिन् मारवर्तिनि कंदर्पभाजि सप्तमभावे गुरौ सति । अथ पुनररौ शत्रौ षष्ठभावेऽसिते शनौ सति पुनरारहंसवति भौमसूर्ययुक्ते तेजसि पराक्रमभावे तृतीये वाऽथवा आये एकादशभावे सति पुनः के सुखे चतुर्थभावे सिते शुक्रे सति वाथवाऽब्जवति चंद्रयुक्ते विलग्ने लग्ने सति ॥ ४८ ॥

कासराख्यकरभाविमुखानामुक्तपार्श्वलपनोडुषु सर्वम् ॥
वारुपेंद्रवसुवारिनभेषु कर्म सद्भिरिनसद्युषु वैनौ ॥ ४९ ॥

अथ माहिषोष्ट्रादीनां कर्माह—कासरेति ॥ सद्भिः पंडितैः कासराख्यो महिषः करभ उष्ट्रः अविर्मेषः मुखं आदिर्येषां तेषां महिषादीनां सर्वं कर्म कथितं । केषु उक्तपार्श्वलपनोडुषु प्रोक्ततिर्यङ्मुखनक्षत्रेषु । पुनः केषु वारुपेति । वार्जलं पूर्वाषाढा उपेंद्रो विष्णुः श्रवणो वसु धनिष्ठा वारि जलं तस्य इनः स्वामी वरुणस्तस्य भं शतभिषक् एषां द्वंद्वे एषु भेषु पुनः इनः सूर्यः सद्दिवः शुभग्रहवासराः एषां द्वंद्वे एषु वाऽथवा ऐनौ शनौ ॥४९

स्याद्यमोष्णघृणिमंत्र्यरुणानामन्हि मैत्रलघुभर्गकभेंद्रैः ॥
कर्म पालनमुखं हि सपूर्वैः पुंडरीकमुखहेतिनखानाम् ॥ ५० ॥

अथ सिंहादीनां पालनमुहूर्तमाह—स्याद्यमेति ॥ हि युक्तार्थे पुंडरीकमुखाः चित्रकायप्रमुखाः हेतिवत् प्रहरणवत् नखाः एषां ते तेषां व्याघ्रप्रमुखनखरायुधानां पालनमुखं कर्म स्यात् । कस्मिन् यमोष्णघृणिमंत्र्यरुणानां शनिसूर्यगुरुभौमानामन्हि दिने पुनः कैः मैत्रसंज्ञानि लघुसंज्ञानि भर्गः शिव आर्द्रा को ब्रह्मा रोहिणी ऐंद्रं ज्येष्ठा एषां द्वंद्वे एभिः किंभूतैः सपूर्वैः पूर्वात्रययुक्तैः ॥ ५० ॥

स्याद्वलीमुखरुरुप्रमुखानामैशधीरलघुलोलमृगर्क्षैः ॥
खेलतोऽहनि सतो नरनेतुः कर्मभिः शमटवीशरणानाम् ॥ ५१ ॥

अथ वानरप्रमुखानां खेलनादिकर्ममुहूर्तमाह—स्याद्वेति ॥ अटवीशरणानां वलीमुखा वानराः रुरवो मृगभेदाः प्रमुखा एषां वलीमुखरुरुप्रमुखानां खेलतः खेलनात् कर्मभिः नरनेतुर्नृपस्य शं सुखं स्यात् । कस्मिन् सतः शुभग्रहस्याहनि दिने पुनः कैः ऐशमार्द्रा धीरसंज्ञानि लघुसंज्ञानि मृगर्क्षं मृगशीर्षं एषां द्वंद्वे एभिः ॥ ५१ ॥

चीरताम्रमुकुटादिशकुंतास्तिर्यगाननतमीशवशासु ॥
शश्वदुद्धदनभेषु भजेद्वाडास्फुजिद्विदिनजीवभपान्हि ॥ ५२ ॥

अथ कुक्कुटादीनां सेवनमुहूर्तमाह- —चीरेति ॥ शश्वन्निरंतरं राट् नृपः चीरताम्रमुकुटादिशकुंतान् चीरः पक्षिविशेषः ताम्रमुकुटः कुक्कुट इत्यादयःशकुंताः पक्षिणस्तान् भजेत् । तेषां अभिनवग्रहणादिकं कारयेदित्यर्थः ॥ कस्मिन् आस्फुजिच्छुक्रः विद् बुधः इनो रविः जीवो गुरुः भपो भेशश्चंद्र एषां द्वंद्वे एषामन्हि दिने पुनः कासु तिर्यगाननतमीशवशासु तिर्यङ्मुखतारासु पुनः उद्वदनभेषु ऊर्ध्वमुखनक्षत्रेषु ॥ ९२ ॥

कार्यकत्रयभदारुणदंडीशेनभेष्वभिनवं हि कुवेण्याः ॥
सिध्यति ग्रहणमारकवीनैर्यादसामनिमिषाख्यमुखानाम् ॥५३॥

अथ मत्स्यग्रहणमुहूर्तमाह——कार्येति ॥ हि युक्तार्थे कुवेण्या मत्स्यबंधत्यक्तत्वाद्निमिषाख्यमुखानां मत्स्यप्रमुखानां यादसां जलजंतूनामभिनवं नवीनं ग्रहणं सिद्ध्यति । अथवा कुवेण्या अभिनवग्रहणामिति संबंधे षष्ठी ग्राह्या । नवीनकुवेण्यां मत्स्यानां प्रथमस्थापनमित्यर्थः ॥ यतः 'मत्स्याधानी कुवेणी स्यात्' इत्यमरः ॥ मत्स्या धीयंते स्थाप्यंतेऽस्यां मत्स्याधानीति क्षीरस्वामी ॥ कैः आरो भौमः कविः शुक्रः इनो रविः एषां द्वंद्वे एभिः ॥ पुनः केषु । कार्येति ॥ कस्य जलस्य अर्थः स्वामी कार्यो वरुणः शतभिक्कत्रयं को वायुः स्वाती को ब्रह्मा रोहिणी कं जलं पूर्वाषाढेति ककारत्रयभानि दारुणसंज्ञानि दंडीशो यमो भरणी इनभं हस्तः एषां द्वंद्व एषु ॥ ९३ ॥

साध्वहानि निचितानि विरिक्तैर्धीरभैर्मृदुभिराज्ययुगांत्यैः ॥
वांछसीह शिबिराखिलकृत्ये मर्त्यदेववरमाश्रयचेत्त्वम् ॥ ५४ ॥

अथ पटमंडपादिसैन्यरचनामुहूर्तमाह—साध्वेति ॥ हे मर्त्यदेव हे नृदेव चेद्यदि त्वं वरं शुभं वांछसि तदा त्वं इह शिबिराखिलकृत्ये सैन्यचनासमस्तकार्ये पटमंडपादिनिवेशे साध्वहानि साधुग्रहदिनानि आश्रय अंगीकुरु । 'निवेशः शिबिरं' इत्यमरः ॥ निवेशः शिबिकोद्वाहविन्यासेषु प्रकाशितः १ इति महेश्वरः ॥ 'निवेशः सैन्यावास' इति क्षीरस्वामी ॥ किंभूतानि साध्वहानि धीरभैः स्थिरसंज्ञानक्षत्रैर्मृदुभिर्मैत्रसंज्ञैः अजस्य विष्णोरिदं आज्यं युगं द्वयं श्रवण धनिष्ठे अंत्यं रेवती एषां द्वंद्वे एभिश्च भैर्निचितानि व्याप्तानि किंभूतैरेभिर्भैः विरिक्तैः रिक्तातिथिवर्जितैः ॥ ९४ ॥

काव्यजीवविधुहेलिदिनेषु स्यादुदास्यविधुभीरुषु बंधात् ।
शं वितानरथकावरणानां सद्युताचलभकंटककाले ॥ ५५ ॥

अथ चंद्रोदयादीनां बंधनमुहूर्तमाह—काव्येति ॥ वितानरथकावरणानां चंद्रोदयस्यंदनाच्छादनानां बंधात् शं सुखं स्यात् । केषु काव्यः शुक्रः जीवो गुरुः विधुः हेलिः सूर्यः एषां द्वंद्वे एषां दिनेषु पुनः कासु उदास्यविधुभीरुषु ऊर्ध्वमुखचंद्रभार्यासु ऊर्ध्वमुखभेषु इत्यर्थः ॥ 'भीरु

कातरयोषितोः" इतिकोपः ॥ पुनः कस्मिन् सद्भिः शुभग्रहैर्युतानि अचलभानि स्थिरराशयो यस्मिन् सकंटकस्तस्य काले लग्ने तस्मिन् सद्युताचलनकंटककाले ॥ ५५ ॥

क्षिप्रवासवमृदुध्रुवकर्णान्सज्जनो व्यमृगशेषदिनेषु ॥
सेवितुं वसुमतीशमरिक्तेष्विच्छतींदुसितवत्युदयेऽपि ॥ ५६ ॥

अथ राजसेवामुहूर्तमाह—क्षिप्रेति ॥ सज्जनः वसुमतीशं महीपं सेवितुं क्षिप्रादीन् इच्छति ऊरीकरोतीत्यर्थः। इयं सेवा राजद्वारगमनं परदासभावो नास्ति ॥ क्षिप्रेति ॥ क्षिप्रसंज्ञानि वासवं धनिष्ठा मृदुसंज्ञानि ध्रुवसंज्ञानि कर्णः श्रवणः एषां द्वंद्वे इमान् केषु व्यमृगशेषदिनेषु पुनः कस्मिन् इंदुसितवति चंद्रशुक्रयुक्ते उदये लग्ने सति किंभूतेषु समस्तदिनेषु अरिक्तेषु रिक्तातिथिवर्जितेषु ॥ ५६ ॥

विश्वकृत्सुरसवित्र्यजमित्रस्तोमनष्टरदभद्वयधीरैः ॥
संत इज्यसुखवारचतुष्के नव्यवर्मफलकाधृतिमाहुः ॥ ५७ ॥

अथ नुन्नसन्नाहखेटकधारणमुहूर्तमाह—विश्वेति ॥ संतः पंडिताः नव्यवर्मफलकाधृतिं नुन्नसन्नाहखेटकयोः आधारणमाहुः ॥ फलं 'कंटाल' इति भाषा। कस्मिन् इज्यो गुरुः सन्मुखे यस्य तत् वारचतुष्कं गुरुशुक्रशनिसूर्याणां चतुष्के इत्यर्थः। पुनः कैः विश्वेति ॥ विश्वकृच्चित्रा सुरसावित्री अदितिः पुनर्वसुः अजो विष्णुः श्रवणः मित्रोऽनुराधा स्तोमेन यज्ञेन नष्टाः रदाः दंताः यस्य स पूषा तस्माद्द्वयं रेवत्यश्विन्यो धीरसंज्ञानि एषां द्वंद्वे एभिर्भैः ॥ ५७ ॥

साधुभिर्निशिथिनीशवदंगान्मारधामगगनोपगतैर्वा ।
वर्मितोऽरि ६भव११ गैरनपापैः स्यात्क्षमोऽहितगणानथ जेतुम् ॥ ५८

अथ सन्नाहधारणे लग्नशुद्धिमाह—साध्विति ॥ ना पुरुषोऽहितगणान् रिपुसमूहान् विजेतुमधरीकर्तुं क्षमः स्यात् । किंभूतः साधुभिः शुभग्रहैः पुनरनपापैः पापग्रहैः कृत्वा वर्मितो-धृतसन्नाहः किंभूतैः साधुभिः निशिथिनीशवदंगान् चंद्रराशियुक्तलग्नात् मारधामगगनोपगतैः सप्तमचतुर्थदशमभावोपगतैः किंभूतैरनपापैरिरि ६ भव ११ गैः षष्ठैकादशगतैः ॥ ५८ ॥

आंत्यवात्यबृहदैज्यशयैंद्रत्वाष्ट्रभाग्यवसुभान्यगदश्च ॥
रिष्टितोमरधृतौ धरणेऽस्याः काव्यसद्युभरितानि वराणि ॥ ५९ ॥

अथ खड्गतोमरधारणमुहूर्तमाह—आंत्येति ॥ अथ बुधाः रिष्टितोमरधृतौ खड्गसर्वलाधार-णेऽस्याः कटारिकाया धारणे च अंत्यादीनि भानि वराणि अगदन् "क्षुर्यस्त्रिको शशायिका" इति हैमशेषकोषः ॥ अंत्यं रेवती वात्यं स्वाती बृहत्संज्ञानि ऐज्यं पुष्यः शयः करो हस्तः ऐंद्रं ज्येष्ठा त्वाष्ट्रं चित्रा भाग्यं पूर्वाफल्गुनी वसुभं धनिष्ठा एषां द्वंद्वे इमानि किंभूतानि काव्यसद्द्युभ-युतानि कविःशुक्रः असंतोऽशुभग्रहास्तेषां यस्त्रा दिनाः भानि राशयश्चैषां द्वंद्वे एभिर्युतानि ॥५९

**ऐनशैंद्रकभनिष्कमधीराचार्यवासवमहारिविशाखाः ॥**
**कंकपत्रधनुरादिकधृत्यै भिंडिपालधृतयेऽपि च धीराः ॥ ६० ॥**

अथ बाणधनुर्भिंदिपालादिधारणे शुद्धिमाह—ऐनेति ॥ धीराः ऐनशेत्यादि अकथयन् जगदुः ॥ कस्मै कंकपत्राः बाणाः धनुश्चापः इत्यादिकानां धृत्यै धारणाय च पुनर्भिंदिपालधारणाय भिंदिपालः भिंडपाल इति शब्दे भेदः 'बरछी' इति भाषा ॥ ऐनशेति ॥ अः विष्णुः इनः सूर्यश्च शः शंभुश्च इंद्रश्च कः ब्रह्मा च द्वंद्वे एषां भानि श्रवणहस्तार्द्राज्येष्ठारोहिण्यः निष्कं जलं तस्य भं पूर्वाषाढा धीरसंज्ञानि आचार्यो गुरुः पुष्यः वासवं धनिष्ठाभं हारिणि मृदुसंज्ञानि विशाखा आसां द्वंद्वे श्रवणादी एनास्तारा: प्रतिनिष्कमिति कं जलं निःसंयोगेऽपि तदेवार्थः ॥ ६० ॥

**लोहितांगहरिहंसदिनाढ्यैर्भद्रपूर्णजयवद्विधुवारैः ॥**
**क्षेपणीयधनुषेषु गदास्यो धीयतेऽस्त्रविसरः सति लग्ने ॥ ६१ ॥**

अथ बाणादिधारणे तिथिवारशुद्धिमाह—लोहितेति ॥ अस्त्रविसरः शस्त्रसमूहो धीयते भटैरिति शेषः । कैः । भद्रेति । भद्रास्तिथयः पूर्णाः जयाश्च वतुप्रत्यये भद्रवतीभद्रा पूर्णवती पूर्णा इत्यर्थः । एताभिर्युक्ताः विधुवाराश्चांद्रदिनास्तैः किंभूतैः लोहितांगो भौमः हरिर्यमः शनिः हंसो रविः एषां दिनैराढ्यैर्युक्तैः पुनः कस्मिन् सति शुभग्रहे शुभे वा लग्ने सति किंभूतोऽस्त्रविसरः ॥ क्षेपेति ॥ क्षेपणीयं गोफणिकादि धनुः समासे धनुषामिति इषुर्बाणः गदा अतीता एता आस्यं मुखं यस्य स इत्यादियुक्त इत्यर्थः । धीयते इत्यत्र ऋकारस्य रिङ्यादेशत्वाद्दीर्घत्वाभावो घटते परमत्र कस्याचिन्मताश्रितं ज्ञातेऽन्यथा धीयते इति डुधाञः प्रयोगो वरमिति ॥ ६१ ॥

**उग्रदारुणमहाबलभांत्यत्वाष्ट्रतिष्यकरकार्ष्णभमिश्रैः ॥**
**आश्रितान्यसदहानि जगुस्तेऽनेकभेदनालिकास्त्रविधाने ॥ ६२ ॥**

अथ नलिकादिशस्त्रविधाने भवारशुद्धिमाह—उग्रेति ॥ ते प्रसिद्धाः धीराः अनेकभेदनलिकास्त्रविधाने लघुबृहदनेकभेदः वहपं नालिं जंबूग इत्यादि वन्हिशस्त्रविधाने असदहानि पापग्रहादिवसानि जगुः कथयामासुः । किंभूतानि असदहानि आश्रितानि युक्तानि कैः । उग्रेति । उग्रसंज्ञानि दारुणसंज्ञानि महाबलो वायुस्तद्भं स्वाती आंत्यं रेवती त्वाष्ट्रं चित्रा तिष्यः पुष्यः करो हस्तः कृष्णस्येदं कार्ष्ण्यभं श्रवणं मिश्रसंज्ञे द्वे एषां द्वंद्व एतैः ॥ ६२ ॥

**स्याज्जयाय सजयं च सरिक्तं वन्हिमुक्तपरमास्त्रविधानं ॥**
**चंचरीकहरितावुरिकुंभैरायगैरुपचयेष्वनदुष्टैः ॥ ६३ ॥**

अथ वान्हिमुक्तास्त्रे तिथ्यंशशुद्धिमाह—स्याज्जयायेति ॥ वन्हिमुक्तपरमास्त्रविधानं कर्तृपदं अग्निना प्रेरितलोहगोलकबृहन्नलिकास्त्रं कोकबाणादिकं वा जयाय वैरिपराभवाय

स्यात् । किंभूतं सजयं जयातिथियुक्तं पुनः किंभूतं मरिक्तं रिक्तायुक्तं कैः कृत्वा अनपुष्टैः पापग्रहैः किंभूतैः आयगैः एकादशभावगैः उपचयेषु विषये ३।६।१०।११।चंचरीको वृश्चिकराशिः हरिः सिंहः ताउरिर्वृषः कुंभ एभिः ॥ ६३ ॥

नव्यदुंदुभिजवादनमन्यद्वाद्यवादनमविघ्नुगमिष्टं ॥
भूभुजोऽस्ति जयाभिधपूर्णे मैत्रलोललघुभैरितकोणम् ॥ ६४ ॥

अथ नवीनभेर्याविवादने तिथिवारनक्षत्रशुद्धिमाह—नव्येति ॥ नव्यदुंदुभिजवादनं अन्यद्वाद्यवादनं च कर्तृपदं भूभुजो नृपस्येष्टं श्रेष्ठमस्ति कैः मैत्रलोललघुभैः स्पष्टं । किंभूतं नव्यदुंदुभिजवादनं अविघ्नुगं बुधवर्जितान्यग्रहदिनगतं पुनः किंभूतं सजयाभिधपूर्णे जयातिथिपूर्णातिथियुक्तं पुनः किंभूतं इतकोणं इतः प्राप्त अर्थशक्त्या आस्फालितः कोणो वीणादिवादनं यस्मिंस्तत् कोणस्तु वाजित्र वजाडवानाडांडीयादिकइतिभाषायां 'भेरी दुंदुभिरानकः' इति हैमः । भेरीशब्दस्यायं विवेकः । भेरी दंडयोग इत्यत्र दंडोपयोगिनी भेरी 'दमामा' इति भाषा इति तार्किकाः । अपरा यतः "सार्द्धहस्तत्रयमानं भेरीणां समुदाहृतं॥ पिंडे षडंगुला प्रोक्ता वादयेन्मुखफुंकयोः" ॥ १ ॥ इति रंगोदये परंतु दुंदुभिस्तु भेर्याकारा संकटमुखी 'नफेरीति' भाषा । अपरं अग्रेतनकाव्ये काहल इत्यत्र ढक्काकारा काहला मदनभेरी 'बरघू' इत्यादिभाषा इति ॥ प्राप्तकोणं इत्यत्र दंडादिघातकरणं अन्यत्र मुखफुंकसंयोगकरणं ॥ ६४ ॥

रिक्तयाहनि युतेऽहितसंघं भीषयत्यहिभयातुभशाक्रैः ॥
नव्यकाहलधृतेरपि पापे तद्रवः समिति वा विमघोग्रैः ॥ ६५ ॥

अथ भेरीधारणे कालशुद्धिमाह—रिक्तेति ॥ काहलधृतेरपि भेरीधारणादपि तद्रवस्तस्य काहलस्य रवः शब्दः समिति संग्रामेऽहितसंघं शत्रुसमूहं भीषयति भीषयते कस्मिन् पापे पापग्रहेऽहनि दिने किंभूते रिक्तया युते वाऽथवाऽहिभमश्लेषा यातुभं मूलं शाक्रं ज्येष्ठा एभिर्युक्ते किंभूतैरेभिः विमघोग्रैर्मघावर्जितानि उग्रसंज्ञानि येषु तानि तैः ॥ ६५ ॥

सिद्धियुज्यमृतसिद्धियुगास्येऽशेषवाद्यगणकर्म विभद्रे ॥
वाद्यधर्तुररसद्वाति राशौ प्राक्कुजे लगति शब्दवतीते ॥ ६६ ॥

अथ वादित्राणां सर्वेषां कर्मशुद्धिमाह—सिद्धीति ॥ अलमित्यवधारणे वाद्यधर्तुर्नरस्य अशेषवाद्यगणकर्म स्यात् ॥ कस्मिन् सिद्धियुजि निष्पत्तिभाजि अमृतसिद्धियुगास्ये अमृतसिद्धियोगप्रमुखे किंभूते विभद्रे विष्टिरहिते पुनः कस्मिन् अनसद्वाति शुभग्रहयुतेऽतिशब्दवति कोऽर्थः मेषवृषभमिथुनसिंहधनुषां गणोऽतिशब्दवान् कथ्यते तस्मिन्निते प्राप्ते प्राक् कुजे लग्न सति इत्यर्थः ॥ प्राक् पूर्वस्यां कुर्भूमिस्तस्यां जायते इति उदयाचलार्कोदयस्थानं प्राक्कुजं लग्नसंज्ञमित्यर्थः॥ कथं कन्याराशिरतिशब्दवान् न स्यात् सत्यं कन्याराशिः शब्दवान् स्यात परं अतिशब्दवान् न स्यात् स्त्रीणां मधुरस्वरत्वात् ॥ ६६ ॥

**उक्तवस्त्रमुखनिर्णयकालं प्रोक्तराज्यभवकर्म करोति ॥**
**अन्यथैत्यथ समुज्झ्य स योऽर्थं वच्मि दिग्विजयकालमिदानीम् ॥६७॥**

अथोपसंहारेण पूर्वोक्तकालशुद्धिं द्रढयति—उक्तेति ॥ यो राजा उक्तवस्त्रनिर्णयकालं पूर्वकथितदिनादिनिश्चयसमयं उज्झ्य विहाय उक्तराज्यभवकर्म कथितराज्योत्पन्नविधानं करोति सोऽन्यथा वैपरीत्यं न एति इति न अपितु प्राप्नोतीत्यर्थः ॥ अथानंतरं अहं इदानीं सांप्रतं दिग्विजयकालं वच्मि कथयामि समुज्झ्येत्ययं कस्यचिन्मताश्रितत्वात्प्रयोगः समासंविना दृश्य तेऽन्यथा प्रोक्तेत्यादि स्यात् ॥ ६७ ॥

**जेतुमिच्छति परावनिपालं तावदप्युपकुलैः सजयैर्यः ॥**
**भैरनीककघटाघटनं राट् क्षत्रियद्युनिचितैर्विदधीत ॥ ६८ ॥**

अथ नक्षत्रवारशुद्धौ सैन्यरचनामाह—जेतुमिति ॥ यो राट् परावनिपालं रिपुभूपं जेतुं हंतुमिच्छतीति स राट् तावत्प्रथममनीकं घटाघटनं सैन्यसमूहरचनां सैन्यरचनाकरणं वा विदधीत । कैः उपकुलैः उपकुलसंज्ञैर्भैर्नक्षत्रैः किंभूतैः सजयैः जयातिथिसहितैः पुनः किंभूतैः क्षत्रियद्युनिचितैः रविभौमौ क्षत्रियसंज्ञो अनयोर्दिनयुक्तैः ॥ ६८ ॥

**वासवांत्यलघुमित्रजनित्रीमित्रशीतलभमानुगभेषु ॥**
**तं प्रतीष्टमविधेष्वनुयानं तस्य वाडवखगद्युयुतेषु ॥ ६९ ॥**

अथ भवारशुद्धौ नृपप्रयाणमाह—वासवेति ॥ अनु पश्चात् तस्य राज्ञो यानं प्रयाणं तत् सैन्यं प्रति इष्टं शुभं स्यात् । केषु वासवं धनिष्ठा अंत्यं रेवती लघुसंज्ञानि मित्रजनित्री सूर्यमाता अदितिः पुनर्वसुः मित्रोऽनुराधा शीतलभो हिमांशुश्चंद्रो मृगशीर्षं मा लक्ष्मीस्तस्या अनुगः स्वामी मानुगो विष्णुस्तद्भं श्रवणः एषां द्वंद्वे एषु किंभूतेषु वाडवखगयोर्गुरुशुक्रयोर्विप्रसंज्ञ अनयोर्दिनयुतेषु पुनः किंभूतेषु अविधेषु कुयोगैरविद्धेषु विधं विद्धमिति शब्दप्रभेदः । जनित्री जनयत्री इति शब्दप्रभेदः ॥ ६९ ॥

**पर्वपक्षतियुगाखिलरिक्ताद्वादशीत्रिचरणाख्यकुयोगान् ॥**
**प्रोज्झ्य दिग्विजययानमुशंति योगिनीमुखगणाभिमुखांश्च ॥७०॥**

अथ दिग्विजयगमने पर्वादीन् निषेधति—पर्वेति ॥ बुधाः दिग्विजयप्रयाणं उशंति वांछंति किंकृत्वा पर्वेति पर्वाणि पक्षतियुगं प्रतिपद्द्वितीये अखिला रिक्ता द्वादशी त्रिचरणाख्यकुयोगः त्रिपुष्करनामकुयोग एषां द्वंद्वे एतान् प्रोज्झ्य हित्वा च पुनर्योगिनीमुखगणाभिमुखान् योगिनीमुखयोगगणसन्मुखान् हित्वा ॥ ७० ॥

**निम्नकालवलयं फलकामं संलिखेद्भुतभुजस्तु दिशोंऽशाः ॥**
**यत्र ध्रुवाद्दिदिशि तस्य कमिज्याद्वासरानिह समस्तविदिक्षु ॥७१॥**

अथ निघ्नकालचक्रमाह—निघ्नेति ॥ सुधीः फलकार्थं दारुपट्टकमष्टशं निघ्नकालवलयं हननकालचक्रं लिखेत् । इह चक्रे सुधीः हुतभुजोऽग्नेर्दिशोऽग्निकोष्टतः समस्तविदिक्षु अंशोः सूर्यात् तु पुनरिज्यात् गुरुतो वारान् दिनान् लिखेत् । विदिशि यद् द्युवन् यत्र उदयास्तग्रह-दिनयुक्तकोष्टकं तत् कोष्टकं तस्य निघ्नकालस्य के मुखं स्थानं स्यादित्यर्थः ॥ ७१ ॥ *

**निघ्नकालमनुगैरनुगं यः किं विधाय कुरुते मृधमग्रे ॥**
**सव्यसाच्यनुगशात्रवसंघैस्तस्य संयति रणांगणसंस्थैः ॥ ७२ ॥**

अथ सन्मुखं निघ्नकालमुखं परिहरन् युद्धजयं दर्शयन्नाह—निघ्नेति ॥ यो राट् अनुगैः पदातिभिः सह निघ्नकालमनुगं पृष्ठगं विधाय कृत्वा मृधं युद्धं कुरुते तस्य भूपतेरग्रे संयति संग्रामे सव्यसाच्यनुगशात्रवसंघैः किं स्यात्तस्य किमप्यनिष्टं न कुर्युरित्यर्थः ॥ सव्यसाचि-नमर्जुनमनुगच्छंति अनुकुर्वंतीति सव्यसाच्यनुगा. अर्जुनाख्यपांडवसदृशा ये शात्रवाः रिपव-स्तेषां संघाः समूहास्तैः संयतो रणांगणे संस्थैः युद्धभूमिव्याप्तैः 'सव्यसाची धनंजयः' इति हैमः ॥ ७२ ॥

**द्युनिशेन दिशोंऽशुमानथैंद्या निखिला भुंजति दक्षिणभ्रमेण ।**
**स च तिष्ठति यत्र तत्र कीलास्त्वनुगाग्रस्थदिशोः स्फुलिंगधूमौ ॥७३॥**

अथ मालभारिणीछंदसास्मिन्नेव निघ्नकालचक्रे ज्वालादिसंज्ञात्रयं स्थापयति—द्युनिशेनेति ॥ अंशुमान् सूर्यो द्युनिशेनाहोरात्रेण ऐंद्याः पूर्वदिक्तो निखिलाः समस्ताः दिशो भुंजति भुनक्ति कन दक्षिणभ्रमेण सूर्यो यत्र तिष्ठति तत्र स्थाने कीलाग्निज्वाला अस्ति । अनुगाग्रस्थदिशोः स्फुलिंगधूमौ स्तः ॥ कोऽर्थः सूर्याधिष्ठितस्थानात् पृष्ठगतादिशि स्फुलिंगा अग्निकणा भवंति अग्रगत-दिशि धूमो भवतीत्यर्थः ॥ मालभारिणीछंदस इदं लक्षणं ' ओजे ससजजगाः समे पादे सभरयाः ॥ऽ॥ऽऽ॥ऽऽऽप्रथमपादः ॥ऽऽ॥ऽ।ऽ।ऽ।ऽ।ऽऽ द्वितीयपादः' यथा 'इह वासकसज्जिकाविलासं वहते शारदशर्वरीवरेण्यः ॥ अवतंसितकैरवोज्ज्वलश्रीविंकसत्तारकमालभारिणीयं' ॥ १ ॥ इति छंदो-ऽनुशासने हेमसूरयः ॥ भुंजतिप्रयोगो महाकविगम्यः ॥ ७३ ॥

**हरिदग्निशिखावतीति यातुर्दहतीष्टं शितिपद्धतीद्धदाहा ॥**
**सृजति भ्रममग्रगात्तधूमा न च हंसाभिमुखं हि यानमुक्तम् ॥७४॥**

अथ ज्वालादियुक्तदिशां फलमाह—हरिदिति ॥ अग्निशिखावती हरित् वन्हिज्वालायुक्ता दिग् यातुर्नरस्य प्रयाणकारकस्य इष्टं वांछितं दहति । पुनः शितिपद्धतीद्धदाहा शितिपद्धतिः कृष्णवर्त्मा वन्हिस्तेन इनः प्राप्तो दाहो यया साऽग्निकणयुक्ता पृष्ठगदिग् यातुरिष्टं दहति । पुन-रग्रगात्तधूमा आत्तः प्राप्तो धूमो यया साऽग्रगा दिग् भ्रमं संशयं सृजति करोति इति हेतोर्हि युक्तार्थे हंसाभिमुखं सूर्यसन्मुखं यानं प्रयाणं नोक्तं ॥ इति निघ्नकालचक्रम् ॥ ७४ ॥

---

* आकृति नंबर ९

शिखिनस्तमसश्च भुक्तभेषु क्रमतस्तौ मृतजीविताख्यपक्षौ ॥
दहनेंदु १३ मितेष्विति स्वरज्ञा दहनेंदु १३प्रतिमौ विदुर्मृधे तौ ॥७५

अथ स्वरोदयोक्तमृतजीविताख्यपक्षौ स्तः भवतः इति स्वरज्ञाः स्वरोदयवेदिनः॥ तौ मृतजीवितपक्षौ मृधे संग्रामे दहनेंदुप्रतिमौ विदुः। मृतपक्षोऽग्निसदृशो जीवितपक्षश्चंद्रसदृश इत्यर्थः॥ यतः 'यत्र ऋक्षे स्थितो राहुर्वदनं तद्विनिर्दिशेत्। मुखात्पंचदशं ऋक्षं तस्य पुच्छे व्यवस्थितं ॥ १ ॥ राहुभुक्तानि ऋक्षाणि जीवपक्षे त्रयोदश ॥ त्रयोदशैव भोग्यानि मृतपक्षः प्रकीर्तितः ॥२॥ जीवपक्षे क्षपानाथे मृतपक्षे रवौ स्थिते। तस्मिन् काले शुभा यात्रा विपरीते तु हानिदा ॥ ३ ॥ चंद्रादित्यौ यदा युक्तौ जीवपक्षे व्यवस्थितौ। तत्र क्षेमं जयं लाभं यात्राकाले विनिर्दिशेत् ॥ ४ ॥ मृतपक्षे यदा काले संस्थितौ चंद्रभास्करौ। तदा हानिर्भयं भंगो मृत्युर्यात्राफलं मतं ॥ ५ ॥ जीवपक्षे स्थिते चंद्रे कार्यं स्यादमृतोपमं। मृतपक्षे मृतं शेषं यत्र चंद्रबलाबलं ॥ ६ ॥ न तिथिर्न च नक्षत्रं न वारो न च चंद्रमाः। लग्नमेकं प्रशंसंति त्रिषडेकादशे रवौ ॥ ७ ॥ इति जीवपक्षमृतपक्षराहुविचारचक्रं ॥ ७५ ॥

अहितैरपसव्यभागगं तैः पदिकं युध्यति जीवपक्षलब्धौ ॥
प्रविधाय निहंतुमेकमग्रे युधि शक्यंत इनं न योऽपि तस्य ॥ ७६ ॥

अथ जीवितपक्षे दक्षिणार्कफलं दर्शयति—अहितैरिति ॥ यो राट् तैः अहितैः शात्रवैः समं पदिकं पादचारि यथा स्यात्तथा इति क्रियाविशेषणं युध्यति किंकृत्वा जीवपक्षलब्धौ जीवितकालप्राप्तावपि एकं केवलं इनं सूर्यं अपसव्यभागगं दक्षिणभागस्थितं प्रविधाय ते शात्रवस्तस्य राज्ञो निहंतुं हननाय न शक्यंते समर्था न भवंति कस्मिन् उग्रे उत्कटे युधि संग्रामे। अयं धातुर्दिवादिगणीयस्तेन कर्तुरुक्तिः। यतः 'प्राणप्रवेशो वहनाडिपार्श्वं कृत्वा पुरो दक्षिणमर्कबिंबं ॥ गच्छेच्छुभायारिवधाय' इत्यादि ॥ ७६ ॥

कुरु तेऽपि कलिं स्पृहास्ति राजन्मिहिराराहनि नागरेण कर्तुं ॥
यदि जीवितपक्षगासु धीरैः सजयासूपकुलेंदुवासिनीषु ॥ ७७ ॥

अथ जीवितपक्षे भवारशुद्धौ युद्धमाह—कुरुत इति ॥ हेराजन् यदि ते तव नागरेण नगरसंबंधिशत्रुजनेन सह कलिं कर्तुं स्पृहा वांछाऽस्ति तदा त्वं धीरैः सुभटैः कृत्वा कलिं कुरु कस्मिन् मिहिराराहनि मिहिरः सूर्यः आरो भौमस्तयोरहनि दिने पुनः कासु उपकुलेंदुवासिनीषु उपकुलसंज्ञाः इंदोश्चंद्रस्य वासिन्यः कलत्राणीत्यर्थः। किंभूतासु उपकुलतारासु सजयातिथियुक्तासु पुनःकिंभूतासु जीवितपक्षगासु जीवितपक्षसंश्रितासु 'वासिनी वर्णिनी स्त्री' इति हलायुधः ॥ 'सुवासिनी वधूटी स्यात्' इति हेमः ॥ ७७ ॥

कुलभेऽभिभवः सतीति युद्धान्नृपतेः स्यादनु नागरस्य सिद्धिः ॥
उभयोरपि संधिरन्यधिष्ण्ये गुरुधिष्ण्याहनि पूर्णयाश्रितेऽतः ॥७८ ॥

अथ जीवितपक्षे कुलभादिमवारफलमाह—कुलेति ॥ इति सति जीवितपक्षे कुलभे कुलसंज्ञनक्षत्रे युद्धात् भूपतेः राज्ञोऽभिभवः पराभवः स्यात् । अनु पश्चात् नागरस्य शात्रवस्य सिद्धिः स्यात् ॥ अतोऽस्मादन्यधिष्ण्येऽन्यनक्षत्रे उभयोः संधिः संधानं स्यात् ॥ कस्मिन् गुरुधिष्ण्याहनि गुरुशुक्रदिने किंभूते पूर्णया पूर्णासंज्ञतिथ्याश्रिते ॥ ७८ ॥

**यदि शालमसह्यराजधानीं नृपतेर्नेतुमरं तदीश्वरं चेत् ॥**
**धिषणाऽस्ति सदन्यखायनैर्वा नय मध्ये निचितेऽथ तस्य जित्वा ॥७९**

अथ युद्धे जयाय कोटचक्रसंधानमाह—यदीति ॥ अथ यदि चेत् अरं शीघ्रं तदीश्वरं शालस्वामिनं जित्वा शालं प्राकारमसह्यराजधानीं उत्कटस्कंधावारं वा नेतुं गृहीतुं नृपतेर्भूपस्य धिषणाऽस्ति तदा त्वमेतद्वक्ष्यमाणं नय कुरु ॥ अथवा नृपते इत्यत्र संबोधनांतपाठे हे नृपते हे राजन् यदि तदीश्वरं शालस्वामिनं जित्वाऽसह्यराजधानीं नेतुं तव धिषणा बुद्धिः इच्छाऽस्ति तदा त्वं शालं नय गृहाण इत्यप्यन्वयः । कस्मिन् सदन्याखायनैः पापग्रहैस्तस्य मध्ये शालचक्रमध्ये निचिते व्याप्ते सति 'स्कंधावारो राजधानी' राजाश्रितमूलनगरमित्यर्थः ॥ इति हैम' ॥ ७९ ॥

**चतुरस्रमुदीरितं त्रिकोष्टं वलयं यत्स्वरशास्त्रभेदविद्भिः ॥**
**तदथोच्यत एव चक्रसंज्ञं शदिशो न्यस्तकृशानुभादि चक्रम ॥८०॥**

अथ कोटचक्रस्थापनां दर्शयति—चतुरस्रमिति ॥ हे राजन् स्वरशास्त्रभेदविद्भिश्चतुरस्रं चतुष्कोणं त्रिकोष्ट त्रयः कोष्टाः यस्य तत् यद् वलयं चक्रमुदीरितं कथितं अथ मया तच्चक्रमुच्यते कथ्यते ॥ किंभूतं तत् चक्रसंज्ञं चक्राभिधं दुर्गचक्राभिधं दुर्गचक्रमित्यर्थः ॥ पुनः किंभूतं शादिशः शस्य ईश्वरस्य दिग् तस्या ईशानदिक्तो न्यस्तकृशानुभादि न्यस्तानि स्थापितानि कृत्तिकादि भानि यस्मिंस्तत् ॥ ८० ॥ *

**इह शौच्यभमैज्यमाद्यपित्र्येऽनिलभं द्वीशभमित्रभे च भैम्याः ॥**
**अभिजित्त्रयमाद्यमांतकर्क्षं ककुभोऽयं परिधौ गणोऽस्ति बाह्ये ॥८१॥**

अथ कोटचक्रस्य प्रथममुपरितनकोष्टके कृत्तिकादिभानां स्थापनां दर्शयति—इहेति ॥ हे राजन् इह चक्रे शौच्यभं कृत्तिका ऐज्यं पुष्यः आद्यं च पित्र्यं च अनयोर्द्वंद्वे आद्यपित्र्ये आश्लेषामघे द्वे अनिलभं स्वाती द्वीशभमित्रभे विशाखाऽनुराधे द्वे अभिजित्त्रयं अभिजित् श्रवण धनिष्ठा आद्यमश्विनी आंतकर्क्षं भरणी च समुच्चये एषां द्वादशभानां गणोऽयं भीमस्य ईश्वरस्य इयं भैमी दिक् तस्या भैम्याः ईशानकोणतो बाह्ये परिधौ परिवेषे उपरितनकोष्टकेऽस्ति तिष्ठति ॥ आद्यपित्र्येऽनिलभमित्यत्र द्विवचनं मणीवादिवर्ज्जमितिवत् संधिः ॥८१॥

**कभकश्यपभीरुभे च भाग्यं सततं विश्वकृद्दक्षमैंद्रविश्वे ॥**
**शततारकमंत्यभं च दुर्गे गदितोऽसावुडुसंचयः स्वरज्ञैः ॥ ८२ ॥**

---

* आकृति नंबर १०

अथ चक्रस्य द्वितीयेंऽतरालके रोहिण्याद्यष्टभानि दर्शयति—कभेति ॥ हे राजन् सततं सदा कस्य ब्रह्मणो भं कभं रोहिणी कश्यपस्य भीरुः कश्यपर्षेः स्त्री अदितिस्तद्भं पुनर्वसु अनयोर्द्वंद्वे इमे भे भाग्यं पूर्वाफाल्गुनी विश्वकृद्दक्षं चित्रा ऐंद्रविश्वे ज्येष्ठोत्तराषाढे शततारकं शतभिषक् अंत्यभं रेवती च समुच्चये इत्यसावुडुसंचयो भवर्गो दुर्गविचाले स्वरज्ञैर्गदितः प्रोक्तः ॥ ८२ ॥

**रुरुकार्यमयातुधिष्ण्ययुग्मं त्रिकमंत्यानुगभद्वयं च मध्ये ॥**
**इह मध्यगभाष्टकेंऽग वार्तं ससमस्तांबरगैः सदैव विद्धि ॥ ८३ ॥**

अथ चक्रस्य तृतीये मध्यभागकोष्टकेऽष्टमृगशीर्षादिस्थापनां दर्शयति—रुर्विति ॥ तु पुनः स्वरज्ञैः रुरु मृगशीर्षं शः रुद्रः आर्द्रा अर्यमयातुधिष्ण्ययुग्ममिति । कोऽर्थः अर्यमयुग्मं उत्तराफाल्गुनी हस्त इति द्वयं यातुयुग्मं मूलं पूर्वाषाढा इति द्वयं अजपत् पूर्वभाद्रपदा अंत्यानुगभं अंत्यस्य रेवतीनक्षत्रस्यानुपश्चात् गच्छतीति तत् उत्तराभद्रापदाभमित्यर्थः ॥ एषां द्वंद्वे समग्रपदं ॥ इत्ययं भानां गणो मध्ये शालमध्यकोष्टके गदितः प्रोक्तः । अंग इति कोमलामंत्रणे हे राजन् ससमस्तांबरगैः समग्रग्रहैः सह वर्तमाने इह मध्यभाष्टके मध्यप्राप्तनक्षत्राणामष्टके त्वं सदैव वार्तं कल्याणं विद्धि जानीहि 'स्वास्थ्ये वार्तमनामयम्' इतिहैमः ॥ ८३ ॥

**विदिगंशुसमानभैः प्रवेशो गदितस्तंभ इहानुबाह्यकोणं ॥**
**भचतुष्टयमंतरस्थतारा निखिला निर्गमगा बुधैर्विचिंत्याः ॥ ८४ ॥**

अथ भैः प्रवेशनिर्गमस्तंभस्थानानि दर्शयति -विदिगमिति ॥ इह शालचक्रे विदिगंशुसमानभैः विदिक्षु चतसृषु अंशुभिः सूर्यैर्मानं प्रमाणं येषां तानि तैर्भैर्द्वादशनक्षत्रैः कृत्वा बुधैः प्रवेशो गदितः ॥ कृत्तिकारोहिणीमृगशीर्षाणि १ मघापूर्वाफाल्गुन्युत्तरफल्गुन्यः २ अनुराधाज्येष्ठामूलानि ३ धनिष्ठाशतभिषक्पूर्वाभाद्रपदा ४ इति प्रवेशे द्वादश । पुनः अनु वाह्यकोणं शालबाह्यकोणसमीपात् अंत्यस्थतारा निखिला अंतरालगतद्वादशभानि बुधैर्निर्गमगा विचिंत्याः ॥ पुनर्वसुपुष्याश्लेषाः १ चित्रास्वातीविशाखाः २ उत्तराषाढाऽभिजिच्छ्रवणाः ३ रेवत्यश्विनीभरण्यः ४ ॥ पूर्वादिदिक्षु आर्द्राहस्त पूर्वाषाढोत्तराभाद्रपदा इति स्तंभनक्षत्रचतुष्कं ॥ यतः 'कोटचक्रं लिखेच्चादौ चतुरस्रं त्रिनाडिकं । कृत्तिकादीनि भान्यत्र चाभिजित् तत्र दापयेत् ॥ १ ॥ बहिः प्राकारमध्ये च मध्ये दुर्गे बहिर्बहिः । प्रवेशो निर्गमस्तत्र ज्ञातव्यः स्वरवेदिभिः ॥२॥ बहिर्द्वादशभान्येवं प्राकारे तारकाष्टकं । दुर्गमध्ये तथा चाष्टौ तन्मध्ये स्तंभतुर्यकं ॥३॥ प्राच्यां रौद्रं यमे हस्तं पूर्वाषाढा च पश्चिमे । कौबेर्यामुत्तराभद्रा एतत्स्तंभचतुष्टयं ॥४॥ कृत्तिकाद्यं मघाद्यं च मैत्राद्यं वासवादिकं । त्रीणि त्रीणि प्रवेशे च द्वादशान्यानि निर्गमे ॥५॥ चतुरस्रं तथा दीर्घं त्रिकोणं वृत्तदीर्घकं । अर्द्धचंद्रं तथा ज्ञेयं गोस्तनं धनुराकृतिः ॥ ६ ॥ चतुरस्रे यथा न्यासो भूमिभागक्रमेण च । प्रवेशनिर्गमस्तंभास्तथा वृत्तादिसप्तके ॥७॥ इत्यादि नरपतिजयचर्यादिशास्त्रतो ज्ञेयं ॥८४॥*

---

* आकृति नंबर ११

विदधत्यनसाधवो बहिस्था द्युसदो वप्रविभंगमप्यसंतः ॥
इह मध्यगता विलोमगा वा कलिना वेष्टकवाहिनीलयं ते ॥८५॥

अथ शालचक्रे ग्रहस्थानफलमाह—विदधतीति ॥ इह शालेऽनसाधवः शुभा द्युसदो ग्रहाः बहिस्था वप्रविभंगं प्राकारभंगं विदधति कुर्वंति । अपि पुनः असंतः पापग्रहा मध्यगता वप्रभंगं विदधति केन कलिना संग्रामेण । वेति पक्षांतरे । इह ते एते विलोमगाः मध्यगताः सौम्याः ग्रहाः बहिस्थाः पापाश्च आवेष्टकवाहिनीलयं आयातसेनाक्षयं विदधति ॥ यतः 'क्रूरा गर्भे शुभा बाह्ये गृह्यते निश्चितं पुरं । सौम्या मध्ये बहिः क्रूरा असाध्यं दुर्गमुच्यते' ॥८५॥

इतपापचतुष्टयं तदंतर्यदि शालः ससमस्तसाधुखेटः
कलिना किल तत्र भेदभंगोऽरमृते स्यादमुनान्यथेतभंगः ॥ ८६॥

अथांतर्गतक्रूरग्रहचतुष्केण कोटग्रहणमाह—इतेति ॥ यदि चेत् तदंतस्तस्य शालस्य मध्ये इतपापचतुष्टयं गतक्रूरग्रहचतुष्कं भवति । यदि ससमस्तसाधुखेटः समग्रसौम्यग्रहैः सह वर्तमानः शालो भवति किलेति सत्ये तदारं शीघ्रं तत्र शाले भेदभंग उपजायते भंगः स्यात् । केन अमुना कलिना युद्धेन कृतेन विना यतः 'क्रूरं चतुष्टयं मध्ये प्राकारे सौम्यखेचराः । भेदभंगो भवेत्तत्र विना युद्धेन गृह्यते' ॥१॥ इति ॥ अन्यथेति ॥ एवं पूर्वोक्ताभावे भंगः पराजयः स्यात् । आगतस्य पलायनमित्यर्थः ॥ उपजापः पुनर्भेद इति 'पराजयो रणे भंग' इति हैमः ॥८६॥

यदि शालकमध्यगाः सदन्ये त्वसदन्ये गगनायना बहिस्थाः ॥
अतिकृछ्रवताहवेन दुर्गन्नधिभूर्भज्यति तत्र नास्य वेशः ॥ ८७ ॥

अथ मध्यबाह्ययोः पापसौम्यैः समयुद्धमाह—सदीति ॥ यदि चेत् शालमध्यगताः प्राकारमध्यगताः सदऽन्ये पापग्रहाः तु पुनर्बहिस्था असदन्ये शुभा गगनायना ग्रहाः संति तदानधिभूर्नृपतिर्भज्यति भनक्ति केनातिकृछ्रवता महत्कष्टयुक्तेन आहवेन संग्रामेण कृत्वा पुनरस्य आयातनृपस्य वेशः प्रवेशो नास्ति ॥ भज्यते इति भज्यः भज्य इव आचरतीति भज्यति अन्यथायं प्रयोगो महाकविगम्यः ॥ ८७ ॥

कृतशालकबाह्यवासखेटास्त्वसदन्यग्रहयुक्तगर्भदुर्गः ॥
यदि तत्र न जायतेऽपि भंगः प्रबले द्वेषिणि चास्तु खंडिपातः॥८८॥

अथवा स्वमध्ययोः पापसौम्यैः पुरोऽभंगतामाह—कृतेति ॥ यदि कृतो बाह्यकशाले वासो यैस्ते च खेटाश्च प्राकारबाह्यस्थिताः पापखेटाः संति तु पुनरसदन्यग्रहयुक्तगर्भदुर्गः दुर्गमध्यगतशुभग्रहाः संति तदा तत्र शाले भंगो न जायते कस्मिन्प्रबले द्वेषिणि सति अपि च पुनः खंडिपातः किंचित् कोटपतनमस्तु ॥ यतः 'प्राकारे बाह्यगाः क्रूराः सौम्या मध्यगता यदि ॥ युद्धं प्राकारखंडिश्च पुरभंगो न जायते' ॥१॥ इति ॥ ८८ ॥

**बहिरंतरगाः खलाः खपांथाः स्युरपापा यदि शालधिष्ण्यसंस्थाः ॥**
**उभयोश्च चमूक्षयोऽतियुद्धान्नियतं भूमिभुजोस्तयोर्निवृत्तिः ॥ ८९ ॥**

अथ बाह्यमध्ये पापसौम्यमिश्रे फलमाह—बहिरिति ॥ यदि खलाः क्रूराः खपांथाः ग्रहाः बहिरंतरगाः स्युः अपापाः शुभा ग्रहाः शालधिष्ण्ये संस्थाः प्राकारनक्षत्रे स्थिताः स्युस्तदा नियतं निश्चितं तयोरुभयोर्भूमिभुजोश्चमूक्षयः सेनाविनाशः स्यात् ॥ कस्मादतियुद्धात् च पुनरुभयोर्भूमिभुजोर्निवृत्तिः कल्याणं स्यात् ॥ यतः ‘ सौम्यमध्ये च कोटे च बाह्ये पापग्रहा यदि । देवैर्ब्रह्मादिभिर्दुर्गं रणारंभे न गृह्यते’ ॥ ८९ ॥

**सखलग्रहशालतारका चेद्बहिरंतर्गतशोभनग्रहेंद्राः ॥**
**समसंगरयामनंति संतः प्रतिवारं च पतत्यपीह खंडिः ॥ ९० ॥**

अथोक्तवैपरीत्ये फलं दर्शयति—सखलेति ॥ चेद् यदि सखलग्रहशालतारका खलग्रहयुक्तप्राकारनक्षत्रं स्यात् बहिरंतर्गतशोभनग्रहेंद्राः संतः पंडिताः समसंगरं समानसंग्रामं आमनंति कथयंति च पुनरिह [illegible] वर्तमानवारतोऽग्रवार इति प्रतिवारं खंडिरपि पतति किंचित् किंचित् कोटगांद्यादिक्षयः स्यादित्यर्थः ॥ यतः ‘ प्राकारस्था ग्रहाः क्रूरा बहिर्मध्ये शुभाः स्थिताः । समयुद्धं भवेत्तत्र खंडिपातो दिने दिने’ ॥ ९० ॥

**युगपत्सदसद्वियच्चरेंद्रा यदि मध्यस्थलदुर्गबाह्यगाः स्युः ॥**
**युधि घोरतरेऽतकास्ययानं भवतीलातलपालयोर्द्वयोर्वा ॥ ९१ ॥**

अथ मध्यबाह्ये युगपच्छुभाशुभग्रहैः सैन्यक्षयं दर्शयति—युगपदिति ॥ यदि चेत् यत् समकालं सदसद्वियच्चरेंद्राः शुभाशुभग्रहाः मध्यस्थलदुर्गबाह्यगाः स्युस्तदा घोरतरे उग्रे युधि संग्रामे द्वयोः इलातलपालयोर्भूतलस्वामिनोः अंतकास्ययानं प्रयाणं मृत्युर्भवतीत्यर्थः ॥ यतः ‘ क्रूराक्रूरग्रहाश्चाद्यौ प्राकारे मध्यबाह्यतः । एकस्था यत्र कुर्वंति संग्रामं तत्र दारुणं ॥ न कश्चित् विजयं युद्धे द्वयं याति यमालयं ’ इति ॥ ९१ ॥

**सममानतया शुभाशुभाश्चेत्सहिता बाह्यविमध्ययोर्नभोगाः ॥**
**परिवेष्टकशालपालराज्ञोरिह संधिं कथयंति कोविदा वा ॥ ९२ ॥**

अथवा स्तमध्ये समभागस्थितशुभाशुभग्रहैः फलमाह—समेति ॥ चेद् यदि शुभाऽशुभाः सममानतया तुल्यप्रमाणेन सहिताः युक्ताः नभोगाः ग्रहाः बाह्यमध्ययोः बाह्यमध्यगाः स्युः वेति पक्षांतरे इह तदा कोविदाः पण्डिताः परिवेष्टकशालपालराज्ञो वेष्टकभूपतेः शालभूपतेश्चान्योन्यं संधिं कथयंति ॥ यतः ‘समसंख्याः शुभाः क्रूरा बहिर्मध्ये च संस्थिताः ॥ तदा संधिं विजानीयात्सैन्ययोरुभयोरपि’ ॥ ९२ ॥

**चरतोरवनीतजन्मचांद्र्योरहनि स्तांभ्य उत प्रवेशभे मे ॥**
**पुररोधमवेहि जीवपक्षे त्वकुलस्थे हिमभासि भूरिकालम् ॥ ९३ ॥**

अथ भौमबुधचंद्रनक्षत्रसंयोगे पुरगर्भं दर्शयति---अवनीति ॥ हे राजन् त्वं पुरगर्भमवेहि जानीहि कस्मिन् अवनीतजन्मचांद्र्योः अवनिर्भूमिस्तस्या इत प्राप्तं जन्म येन स अवनीतजन्मा चंद्रस्यापत्यं चांद्रिर्बुधः अनयोर्द्वंद्वे भूतयोः स्थाने दिने किंभूतयोर्भौमबुधयोः स्तंभ भवं स्तांभ्यं तस्मिन् स्तंभसंबंधिनि भे नक्षत्रे उत अथवा सव्वानभात्रे चरलोगच्छतोः नु पुनरकुलर्क्षे कुलसंज्ञभवर्जितनक्षत्रे जीवपक्षे हिमभासि चंद्रे भुक्तिकाले पुरगर्भं जानीहि ॥ ९३ ॥

दिशि मंत्रिणि संस्थिते मघोनः क्षितिजे दंडभृतः सिते परस्यां ॥
विदि वित्तविमोक्षे जिह्मभावे तु मिथः शैबिरशालभेदभंगः ॥९४॥

अथात्र पूर्वादिदिक्षु स्थितगुरुभौमशुक्रबुधानां फलमाह—दिशीति ॥ नु वितर्के मिथः परस्परं शैबिरशालभेदभंगः सैन्यरचनापटमंडपादिः शालः प्राकारभेदः उपजाप एषां भंगः स्यात् कस्मिन् मघोन इंद्रस्य दिशि पूर्वस्यां मंत्रिणि गुरौ सति पुनः क्षितिजे भौमे दंडभृतो यमस्य दिशि दक्षिणस्यां संस्थिते सति पुनः सिते शुक्रे परस्यां पश्चिमायां दिशि संस्थिते सति पुनर्विदि बुधे वित्तविमोक्षनदस्य दिशि उत्तरस्यां संस्थिते सति किंभूते गुरुप्रमुखे जिह्मभावे वक्रगतिं प्राप्ते ॥ ९४ ॥

ससदन्यनिरीक्षिताद्विजेशा द्युसदोऽसंत उतासित यत्र तत्र ॥
खलु खंडिनिपात ईक्षितास्तैः पुरवेशो विशतोऽसतोऽयनेन ॥९५॥

क्रूरग्रहविलोकितस्थाने फलं दर्शयति—ससेति ॥ उत वितर्के यत्रासंतः क्रूरा द्युसदो ग्रहाः सति किंभूताः ससदन्यनिरीक्षिताद्विजेशाः क्रूरग्रहविलोकितचंद्रसहिताः द्विजेट् द्विजेशौ द्विजेशः इति बहुवचनं खलु निश्चितं तत्र खंडिपातो यत्रभंगोऽस्ति पुनर्यत्र तैः पापैरीक्षिताः क्रूरग्रहाः संति तत्र विशन् तस्य विशतः प्रवेशकारस्य राज्ञः पुरवेशो नगरप्रवेशः स्यात् शत्रुःपुरं गृण्हातीत्यर्थः । केनासतः पापस्यायनेन मार्गेण दारुणयुद्धे बहुजनयुद्धे क्षयत्वात् ॥९५

इह निर्गमभे निहंति पापः कुटिली बाह्यविशालशालभित्तिं ॥
स तु शालगतो हि मध्यभागं जठराद्वाममिदं भवेत्प्रवेशे ॥ ९६ ॥

अथ वक्रिग्रहाश्रितस्थाने फलमाह—इहेति ॥ हि नुक्तार्थे इह निर्गमभे कुटिली वक्री सन् पापो ग्रहो बाह्यविशालशालभित्तिं बाह्यबृहत्प्राकारकुड्यं निहंति तु पुनः स वक्री पापग्रहः शालगतः सन् मध्यभागं हंति पुनरिदं फलं जठरान्मध्यभागात् वामं विलोमं प्रवेशे भवेदित्यर्थः ॥ ९६ ॥

यदि दुर्गविभुः खला विमध्ये निखिलास्तंभवर्तिनो भवंति ॥
पुरुहूतपराक्रमोऽपि शालं बत मुक्त्वा विपलायते खपांथाः ॥९७॥

अथ स्तंभनक्षत्राश्रितक्रूरग्रहाणां फलमाह—यदीति ॥ यदि विमध्ये शालपंटके निखिलाः समस्ताः खलाः पापाः खपांथाः ग्रहाः स्तंभवर्तिनः स्तंभनक्षत्रेषु वर्त्तमाना भवंति तदा

वतेति खेदे दुर्गविभुः प्राकारस्वामी शालं मुक्त्वा विपलायते गृहीतदिग् भवति । किंभूतः पु-रुहूतपराक्रमोऽपि इंद्रसमानवीर्योऽपि ॥ ९७ ॥

**इह शालवदेव देशचक्रे कथितस्तारकखेचरादिभेदः ॥**
**पुरनामभपंचभागधिष्ण्यात्पुरचक्रे च सदोदितः प्रबुद्धैः ॥ ९८॥**

अथ कोटचक्रोपसंहारेणान्यदपि दर्शयति--इहेति ॥ इह चक्राधिकारे सदा प्रबुद्धैः पंडितैः तारकखेचरादिभेदः नक्षत्रग्रहादिस्थापनाभेदः शालवत् प्राकारवत् एवं कथितः। कस्मिन् देशचक्रे जनपदसाधनचक्रे च पुनः पुरचक्रे नगरचक्रे पुरनामभपंचभागधिष्ण्यात् नगरनाम-नक्षत्रात् पंचभागस्थानात् तारकखेचरादिभेद उदितः प्रोक्तः चतुर्दिक्षु मध्यभागे चेति पंचभागेन स्थापना इति शालादिचक्राधिकारः संपूर्णः ॥ सालो दंत्यस्तालव्यश्च ॥ ९८ ॥

**समिताजपदृक्षवैश्वमिश्रैर्द्विनगेनैंदवघस्रवर्तमानैः ॥**
**रविमंदरथद्युगद्युभी राट् पुरवेशी बहुदेशवेशकः स्यात् ॥ ९९ ॥**

अथ युद्धे नगरपुरादिप्रवेशे तिथिवारशुद्धिमाह—समितेति ॥ राट् राजा समिता संग्रा-मेण पुरवेशीनगरप्रवेशको बहुदेशवेशको भूरिजनप्रवेशकारकः स्यात् ॥ कैः अजपदृक्षवैश्वमिश्रैः पूर्वाभाद्रपदा उत्तराषाढा मिश्रे कृत्तिकाविशाखे एषां द्वंद्वे एभिः किंभूतैः द्विनगेति । द्वौ द्वितीया २ नगाः सप्तमी ७ इनाः द्वादशी १२ भद्रास्तिथयः एते चैंदवघस्राश्चांद्रदिनाश्चैषु वर्तमानैः पुनः किंभूतैः रविमंदेति । रविः सूर्यः मंदो रथो वेगो गमनं यस्य स मंदरथः शनिः इमौ च द्युगौ खगौ च रविमंदरथद्युगौ तयोर्द्यू दिनौ एषु तानि तै द्युभी राट् इत्यत्र पुरतो विसर्गस्य रत्वे तस्य लोपे च कृते पूर्वस्वरस्य दीर्घे द्युभीराट् इति जातं ॥ ९९ ॥

**सुखवृत्तिभृतः पुरादिवेशेऽधिभुवो मैत्रलघुध्रुवैरवार्तं ॥**
**भगभार्गवभाग्यजीववारा ददतींद्वीरितकैः सुयोगलग्नाः॥१००॥**

अथ प्रवेशेऽशुभाशुभवारान् दर्शयन्नाह—सुखेति ॥ अधिभुवो नृपस्य पुरादिवेशे नग-रादिप्रवेशे भगभार्गवभाग्यजीववाराः सूर्यःशुक्रः भगस्य सूर्यस्यापत्यं भाग्यः शनिः गुरुः एषां द्वंद्वे एते वारा अवार्तमभद्रं ददति कैःकृत्वा मित्रलघुध्रुवैर्मित्रमनुराधा लघुसंज्ञानि ध्रुवसंज्ञानि एभिर्नक्षत्रैः किंभूतैरिंद्वीरितकैः चंद्रेण प्रेरितैश्चंद्रेण युक्तैरित्यर्थः । किंभूता सुष्ठु योगो यस्मिन् तत्सुयोगं एवं विधं लग्नं एषु ते। किंभूतस्य अधिभुवः सुखवृत्तिभृतः सुखवर्तनधारकस्य ॥१००

**स्थिरभोदयभाज्यनेहसीज्ये सुख४धाम्नो१०सखवर्त्मनोश्च दुष्टैः ॥**
**अरिध्रलब्धिगतैर्हितः प्रवेशः पुरि संक्रीडितसुस्थिरेंद्ववस्थैः ॥ १०१ ॥**

अथ स्थिरलग्नादौ प्रवेशं दर्शयति—स्थिरेति ॥ पुरि नगर्यां राज्ञः प्रवेशो हितो हित-कारी स्यात् । कस्मिन् स्थिरभोदयभाजि स्थिरराशिलग्नयुक्ते अनेहसि काले इज्ये गुरौ सति च पुनः सखवर्त्मनोः खगैः सह वर्तमानयोः सुख ४ धाम्नोः १० चतुर्थदशमभावयोः सतोः

पुनः कैः अरिलब्धगतैः तृतीयषष्ठैकादशभावगैः दुष्टैः पापग्रहैः किंभूतैर्दुष्टैः संक्रीडितसुस्थिरेंद्ववस्थैः संक्रीडिता १ सुस्थिरा २ इमे चंद्रावस्थे द्वे एषु ते तैः॥ १०१॥

**प्रवासा विनष्टा मृताख्या जया च प्रहास्या रतिः क्रीडिता सुप्तभुक्ते ॥**
**ज्वरा कंपिता सुस्थिरैवानुभं स्युः क्रमेण क्रियादर्कमा इंद्ववस्थाः॥१०२**

अथ भुजंगप्रयातेन चंद्रस्य द्वादशावस्था आह—प्रवासेति ॥ क्रियात् मेषात् क्रमेणानुभं राशिं राशिं प्रवासादय इंद्ववस्थाश्चंद्रावस्था अर्कमा अर्कैर्मीयंते इत्यर्कमा द्वादशसंख्याः स्युः॥ मेषराशिस्थचंद्रात् प्रवासादयः १२ वृषराशिस्थचंद्रात् विनष्टादयः १२ एवं सर्वा अपि। सुप्ता च भुक्ता च अनयोर्द्वंद्वे सुप्तभुक्ते एव निश्चितम्॥ १०२॥

**प्रवासे श्रमो वा प्रवासोदयेऽब्जे विनष्टश्रुतिःस्याद्विनष्टानुयाते ॥**
**मृतायां कलिर्वा रुगार्तिर्जयायां जयःसर्वतःस्मैतयोगः स्मितायाम्॥१०३**

अथासां फलमाह काव्यत्रयेण—प्रवास इति ॥ प्रवासोदये प्रवासावस्थायामब्जे चंद्रे सति प्रवासे बहिर्गमने श्रमः स्यान्नरस्येति शेषः ॥ एवं विनष्टानुयातेऽब्जे विनष्टश्रुतिः विनाशस्य श्रवणं पुनर्मृतायामब्जे कलिर्वाथवा रुगार्तिः रोगपीडा पुनर्जयायामब्जे सर्वतो जयः पुनः स्मितायामब्जे स्मैतयोगः हास्यसंयोगः स्यात्॥ १०३॥

**रतौ रात्र्यधीशे रतीशे रतिर्वा जनैः क्रीडितायां वशाभिर्विलासः ॥**
**मदालस्यमोहः प्रसुप्तानुगे स्यात्सुभुक्तिश्च भुक्ताश्रितेऽर्तिर्ज्वरायां १०४**

रताविति॥ रतौ रात्र्यधीशे रत्यवस्थायां चंद्रे सति रतीशे कामविषये रतिः स्यात्॥ वा पुनः क्रीडितायां चंद्रे वशाभिर्वध्यास्त्रीजनैः सह विलासः। पुनः प्रसुप्तानुगे चंद्रे मदालस्यमोहः मदतंद्राभ्यां मौढ्यं स्यात् ॥ पुनर्भुक्तामिश्रिते चंद्रे भुक्तिः पुनर्ज्वरायां चंद्रेऽर्त्तिः पीडा स्यात्॥ १०४॥

**दरो वेपथुः कंपितायामितींदौ स्थितिः स्थायिनी जायते सुस्थिरायां ॥**
**समामासघस्रप्रवेशे च याने दरे पूःप्रवेशे कलौ चिंत्यमेतत् ॥ १०५॥**

दर इति॥ कंपितायामिंदौ चंद्रे दरो भयं वेपथुः कंपश्च जायते। पुनः सुस्थिरायामिंदौ स्थायिनी तिष्ठच्छीला स्थितिर्जायते इति एवमेतच्चिंत्यं। कस्मिन् समादिप्रवेशे समा वर्षं मासः घस्रः एषां प्रवेशे च पुनर्याने प्रयाणे पुनर्दरे भये पुनः पूःप्रवेशे नगरीप्रवेशे पुनः कलौ संग्रामे॥ १०५॥

**विपक्षं विजित्वा तदर्थं च नीत्वा समापूरयत्यात्मकोशालयं यः ॥**
**स जीवे शुभे भोदयेऽब्जे स्थिरे स्वे सपूर्णे शनीज्यान्हि यात्यर्थवृद्धिम्१०६**

अथ भंडारभरणशुद्धिमाह—विपक्षमिति॥ यो नृपः आत्मकोशालयं निजभंडारगृहं समापूरयति किं कृत्वा विपक्षं शत्रुं विजित्य च पुनस्तदर्थं शत्रुधनं नीत्वा गृहीत्वा कस्मिन्

स्वे धनभावे स्थिरे मोदये धनभावस्थस्थिरराशिलग्ने पुनरब्जे चंद्रे जीवे गुरौ च शुभे पुन पूर्णातिथिसहिते शनीज्यान्हि शनिगुरुदिने सति सो नृपोऽर्थवृद्धिं याति प्राप्नोति ॥ १०६ ॥

**कलौ भविष्यंत्यथ भारतावनौ महीभुजो बाहुभुवोऽप्यनेकशः ॥**
**शकास्तथैषामभिषेचनादिकं हितं सदोदीरितकालसाधितम् ॥१०७**

अथ वंशस्थेन कलौ राजाभिषेकं पूर्ववद्दर्शयति—कलाविति ॥ अथानंतरं कलौ युगे भारतावनौ भरतक्षेत्रेऽनेकशो बहवो बाहुभुवः क्षत्रियाः महीभुजो राजानो भविष्यंति तथा शकाः म्लेंछा अपि राजानो भविष्यंति सदा तेषामभिषेचनादिकं हितं स्यात् । किंभूतमभिषेचनादिकं उदीरितकालसाधितं पूर्वोक्तकालसाधितं ॥ १०७ ॥

**धराधिभूर्भिल्लशकादिजातिजस्तदासनस्थोऽभिजनैर्नमस्कृतः ॥**
**स्तुतः स राजाधिजनैः प्रतिष्ठितो न मंत्रभेदाद्यभिषेचनोचितः॥१०८**

अथ भिल्लादिजातिनृपाणामभिषेकादिकं निषेधति—धरेति ॥ भिल्लशकादिजातिजो धराधिभूः राजा मंत्रभेदाद्यभिषेचनोचितो न स्यात् । किंभूतो धराधिभूः तदासनस्थः पूर्वोक्तासनस्थितः पुनः किंभूतः अभिजनैः योधृजनैर्नमस्कृतश्च पुनः किंभूतः स्तुतः॥ अथवाभिजनाः पूर्वबांधवा इति काशिकायां तैरिति ॥ पुनः किंभूतो राजाधिजनै राज्ञोऽधिकारप्राप्तैर्विप्रैः प्रतिष्ठितः ॥ १०८ ॥

**निहंति यो भूतलमंडले शकान् सपंचकोट्य**
**५५०००००००ब्जदलप्रमान् कलौ ॥ स राज-**
**पुत्रः शककारको भवेन्नृपाधिराजो ह्युत शाककर्तृहा ॥१०९॥**

अथ शाककर्तृत्वमाह—निहंतीति ॥ यो भूतलमंडले शकान् म्लेंछान् निहंति कस्मिन् कलौ कलियुगे किंभूतान् शकान् सपंचेति ॥ अब्जं शतकोटिस्तस्य दलमर्द्धं पंचाशत्कोटि अब्जदलसहपंचकोट्या वर्तते यत्तत्सपंचकोटि तच्चाब्जदलं च तेन प्रमीयंते इति प्रमाः स्युः ॥ अंकतोऽप्यत्र ५५००००००० स राजपुत्रः शककारको नृपाधिराजश्चक्रवर्त्ती भवेत् । हि युक्तार्थे उत पुनःशकानां म्लेंछानां नाशकालः शाकः शाककर्तॄन् हंतीति शाककर्तृहा सोऽपि शाककर्त्ता चक्रवर्ती भवेत् । यथा जैनमते वासुदेवं प्रति वासुदेववत् ॥ १०९ ॥

**युधिष्ठिरो विक्रमशालिवाहनौ नराधिनाथौ विजयाभिनंदनः ॥**
**इमेऽनु नागार्जुनमेदिनीविभुर्बली क्रमात् षट् शककारकाः कलौ ॥११०**

अथ कलौ षट् शककारकनामान्याह—युधिष्ठिर इति ॥ कलौ क्रमात् इमे युधिष्ठिरादयः षट् शककारकाः स्युः । अनु पश्चादर्थे स्पष्टं ॥ ११० ॥

युधिष्ठिराद्वेदयुगांबराग्नयः ३०४४ कलंबविश्वे १३५
ऽभ्रखखाष्टभूमयः १८००० ॥ ततोऽयुतं लक्षचतुष्टयं
४०००००क्रमाद्धराद्दगष्टा ८२१ विति शाकवत्सराः ॥ १११ ॥

अथ युधिष्ठिरादीनामंतरालवर्षाण्याह—युधिष्ठिरादिति ॥ युधिष्ठिरात् कलिसंक्रमणकाल-
ात् ॥ वेदयुगांबराग्नयः ३०४४ चतुश्चत्वारिंशदधिकसहस्रत्रयं शाकवत्सरा भवंति एताव-
ालं युधिष्ठिरशाकः ॥ ततः कलंबविश्वे कलंबा बाणाः ५ विश्वे त्रयोदश १३५ पंचत्रिंश-
धिकशतं एतावत्कालं विक्रमशाकः ॥ 'रोपः कलंबशरमार्गणचित्रपुंखाः' इति हेमः ॥ ततोऽ
ाखखाष्टभूमयः १८००० अष्टादशसहस्रा एतावत्कालं शालिवाहनशाकः ॥ ततोऽयुतं
०००० दशसहस्रा एतावत्कालं विजयाभिनंदनशाकः ॥ ततो लक्षचतुष्टयं ४०००००
तावत्कालं नागार्जुनशाकः ॥ ततो धराद्दगष्टौ धराद्दकुअष्टौ८२१ 'महीद्विनागाः' इत्यपिपाठः॥
ुकविंशत्यधिकाष्टशतं एतावत्कालं बलिशाकः॥ इति इह कलौ क्रमात् शाकवत्सराः स्युः॥१११

युधिष्ठिरोऽभूद्भुवि हस्तिनापुरे तथोज्जयिन्यां पुरि विक्रमाव्हयः ॥
शालेयधाराभृति शालिवाहनः सुचित्रकूटे विजयाभिनंदनः॥११२॥

अथोपजात्यैषां जन्मभूमिमाह—युधिष्ठिरादिति ॥ स्पष्टं नगरं शालेयधाराभृति
ालेरमोलेरनाम्नि गिरौ ॥ ११२ ॥

नागार्जुनो रोहितके क्षितौ बलिर्भविष्यतींद्रो भृगुकच्छपत्तने ॥
कृतप्रवृत्तिस्तदनंतरं भवेत्तदा भविष्यंत्यवनीभृतोऽर्कतः ॥ ११३ ॥

नागेति ॥ पूर्वार्द्धं स्पष्टं । नगरं रोहितके क्षितौ रोहितासभूमौ ॥अनुक्तान्यप्यत्र ग्रंथांतरादेषां
ंशनामान्याह ॥ यतः 'युधिष्ठिरोभूत्किल राजवंशजः स राजपुत्रः परमारवंशभूः ॥
श्रीविक्रमार्को ननु शालिवाहनो गोहिल्लभूर्वै विजयाभिनंदनः ॥ १ ॥ शिशोदरान्वायभवो भवि-
ष्यत्ततोऽत्र नागार्जुनसंज्ञको नृपः ॥ राजाधिराजः किल कल्किरात्मभूस्ततस्थापितो राट्
ालिरत्र दीक्षकः ॥ २ ॥ इति ॥ अथ उत्तरार्द्धमाह ॥ तदनंतरं कृतप्रवृत्तिः सत्य-
युगप्रवर्तनं भवेत्तदार्कतः सूर्यतोऽवनीभृतो राजानः सूर्यवंश्या भविष्यंति ॥ ११३ ॥

समस्तकाष्ठाचरतामिलाभृतामेषामृतं दिग्विजयोऽनिशं भवेत् ॥
इति प्रयत्नाद्गणकैरुदीरितं यानं सदा कालगमेषु कामदम् ॥११४॥

अथैषां सदाकालप्रयाणमाह—समस्तेति ॥ अनिशं निरंतरं इलाभृतां महीपतीनां सम-
स्तकाष्ठाचरतां सर्वदिक्षु गच्छतां सतां अनेकभूपदेशेषु गमनशीलानां एषां चक्रवर्तिनां दि-
ग्विजयो भवेदिति हेतोः ऋतं सत्यं गणकैर्यत्नादुद्यमात् सदाकालगं सर्वकालप्राप्तं यानं प्रयाणं
कामदमभीष्टदायकमुदीरितं प्रोक्तं केषु एषु चक्रवर्तिषु ॥ ११४ ॥

गजपतिरधिमत्तो वांतरं योऽधिदेशो हयपतिरचलेशः
सोऽपि साधारणः स्यात् ॥ नरपतिरिह मंदो लेशदेशाव-
नीशो निजबलवशतोऽमी दिग्जये सत्वभाजः ॥ ११५ ॥

इति श्रीकविकालिदासोदिते ज्योतिर्विदाभरणे राजसत्ताध्यायो दशमः ॥ १० ॥

अथ मालिन्यैषां सर्वेषां बलं वर्णयति ॥ गजपतिर्वाधिमत्तोऽधिकारयुक्तो वाऽधिदेशोऽधिकदेशवान् वा हयपतिर्वाचलेशः पर्वतेशो भूमीशो वा नरपतिर्वा लेशदेशावनीशः स्वल्पदेशवान् स्वल्पभूमीशो वा यः स्यात्सोऽपि मंदः सन् साधारणः सामान्यः स्यात् । कस्मिन्निह दिग्विजयेऽनंतरं पश्चात् अमी षट्चक्रवर्तिनो दिग्जये सत्वभाजोऽभग्नशक्तियुक्ताः स्युः कस्मान्निजबलवशात इति ॥ ११५ ॥

इति श्रीपौर्णिमीयगच्छाधिराजभट्टारकपुरंदरश्रीमहिमाप्रभसूरीश्वरचरणसरोरुहचंचरीकायमान
शिष्यभावरत्नविरचितायां श्रीकविकालिदासकृतज्योतिर्विदाभरणस्य
सुखबोधिकायां राजसत्ताध्यायो दशमः ॥ १० ॥

## त्रिविधयात्राध्यायप्रकरणम् ।

अथ प्रयाणं त्रिविधं बृहत्समं मितं भवेदेतदपि त्रिभेदकृत् ॥
कलिक्रियं तीर्थफलं च पण्यवत् किलेति तत्कालनयं ब्रवीम्यहम् ॥१॥

अथ राजसत्तामाश्रित्य प्रयाणं स्यादतो वंशस्थेन प्रयाणाध्यायसंधानमाह—अथेति ॥ अथानंतरं किलेति सत्यवचारणे बृहत् प्रौढं १ समं तुल्यं न्यूनाधिकविकलमित्यर्थः २ मितं लघु ३ इति त्रिविधं प्रयाणं भवतु ॥ अपि पुनरेतद्बृहत्समलघुत्रिविधमपि प्रयाणमेकैकं त्रिभेदवात्रिभेदयुक्तं स्यात्तदाह ॥ कलिक्रियं कलेर्युद्धस्य क्रिया यस्मिंस्तत् पुनः किंभूतं तीर्थस्य फलं लाभो यस्मात्तत् 'फलं शस्त्राग्रव्युष्टिलाभयोः' इत्यनेकार्थः ॥ पुनः किंभूतं पण्यवत् पणितव्ययुक्तं 'पणितव्यं तु विक्रेयं पण्यमिति' हैमः ॥ यथा बृहत्प्रयाणं कलिक्रियं तीर्थफलं पण्यवत् इति त्रिधा तथा बृहत् समं लघु च त्रिधा योज्यमिति ॥ अहं तत्कालनयं तेषां प्रयाणानां समयनीतिं समयनिर्णयं वा ब्रवीमि कथयामि ॥ १ ॥

शुचे शुचिः स्याच्च नभो नभोगकृन्नभस्यमासो नुरभस्यसंगदः ॥
बृहद्गमस्योशनसश्च मीष्पतेरनुद्गमो ह्युद्गमनं सृजत्यरम् ॥ २ ॥

अथ बृहत्प्रयाणे आषाढादीन् दूषयति—शुचे इति ॥ नुर्नरस्य शुचिराषाढः शुचे शुक् तस्यै शोकाय स्यात् । किंभूतस्य नुः बृहद्गमस्य बृहद्गमो गमनं यस्य स तस्य अर्थादन्यप्रयाणे निषेधो न । च पुनरेवं नभः श्रावणो भोगकृन्न स्यात् । अयं नभःशब्दोऽकारांतः

शब्दप्रभेदे दृश्यतेऽपरस्तु नभाः सकारांतः पुंसि सुवचःशब्दवत् । पुनर्नभस्यमासो भाद्रपदमासो नरस्याभस्य संगदो मृत्युदायकः स्यात् ॥ भातीति भा नास्ति भा कांतिर्यस्य स अभो यमः कालः अदृश्यरूपत्वादभ इति पदं युक्तं तस्याभस्येति ॥ च पुनरुशनसः शुक्रस्य गीष्पतेर्गुरोश्चा-नुद्गमोऽस्तकालोऽरं शीघ्रं नरस्योद्गमनं मरणं सृजति करोति हि युक्तार्थे ॥ २ ॥

**सिते समांशावुदयानुगे सदानुकूलवर्तिन्यधिवृत्तिकृद्गमः ॥**
**भवत्यसौ च त्रिविधो जनुर्विभावनस्तगे न्यस्तफलस्तमीश्वरे ॥ ३ ॥**

अथ शुक्रादिशुद्धौ प्रयाणमाह—सित इति ॥ सदाऽसौ त्रिविधो गमो गमनमाधि-वृत्तिकृत् अधिकां वृत्तिं करोतीति तथा भवति । कस्मिन् सिते शुक्रे सति । किंभूते शुक्रे समांशौ कोऽर्थः ग्रहयुतौ अन्यग्रहेण विजितो न स्यात्स समांशः पूर्णवीर्यस्तस्मिन् । पुनः किंभूते शुक्रे-उदयानुगे उदयप्राप्ते पुनः किंभूते अनुकूलवर्तिनि पुनः कस्मिन् सति अनगस्ते उदयप्राप्ते जनुर्विभौ जन्मलग्नस्वामिनि किंभूतो गमः तमीश्वरे चंद्रे न्यस्तफलः आरोपितफलः गृहीत-शुभचंद्र इत्यर्थः ॥ ३ ॥

**न तीर्थकामः सति पाणिजायुधेऽनृजौ शिशौ वृद्धघने च नीचगे ॥**
**नरोऽमरार्च्ये गमनं प्रकारयेद्विनैव कुंभस्थलगौतमीगयाः ॥ ४ ॥**

अथानिष्टगुरौ तीर्थप्रयाणं निषेधति—न तीर्थेति ॥ तीर्थकामस्तीर्थगमनेच्छुर्नरो गमनं न कारयेत् । कस्मिन् पाणिजायुधे पाणिजा नखास्त एवायुधं यस्य स सिंहस्तस्मिन् सिंहराशौ अमरार्च्ये गुरौ सति किंभूते गुरौ अनृजौ वक्रिणि पुनः किंभूते शिशौ बाल्यावस्थां गते पुनः किंभूते वृद्धघने वृद्धावस्था गते पुनः किंभूते नीचगे स्पष्टं किंविना कुंभस्थलगौतमीगयाः विनायोगे द्वितीया अत्र कुंभस्थलादिष्वेव गमनं कुर्यादित्यर्थः ॥ यतः कुंभराशिगुरौ कुंभस्थलं हरिद्वारं गच्छेत् । सिंहगुरौ गोदावरीं गच्छेत्सर्वकाले गयां गच्छे दित्यादि ॥ यतः 'हरिद्वारे प्रयागे च गंगासागरसंगमे ॥ सर्वत्र दुर्लभा गंगा त्रिषु स्थाने विशेषतः' ॥ १ ॥ वासिष्ठ्यां गोमती तद्वत् गौतमी स्यादिति शब्दप्रभेदः ॥ ४ ॥

**स्वधामतो द्वादशयोजनावधि प्रयाणमाद्यैरिह तीर्थमानिभिः ॥**
**नोदीरितं तैर्थ्यमशेषधर्मदं परैरुदन्वद्युतिनिम्नगावधि ॥ ५ ॥**

अथानिष्टे गुरौ निष्फलतीर्थप्रयाणमाह—स्वधामेति ॥ तीर्थमानिभिस्तीर्थफलवेदिभिराद्यैः पुरा-तनैर्बुधैरिह पूर्वोक्तगुरावनिष्टे सति तैर्थ्यं तीर्थेभवं प्रयाणमशेषधर्मदं नोदीरितं न कथितं ॥ किंभूतं प्रयाणं स्वधामतो निजगृहात् द्वादशयोजनावधि अष्टाचत्वारिंशत्क्रोशपर्यंतं पुनः परैरपरैरुद-न्वद्युतिनिम्नगावधि न कथितं उदन्वान् समुद्रस्तस्मिन् युतिर्मिलितं यस्याः साऽसौ च निम्नगा नदी च तस्या अवधिर्मर्यादा यस्मिंस्तदिति गंगासागरसंगमपर्यंतमिति ॥ ५ ॥

गतिर्नृणामृत्वनुकूलगामिनी मुदि प्रधानेव सदैव भामिनी ॥
सुशुद्धिगाशाश्रयसिद्धिकारिणी समस्तयानोत्सवकार्यचेतसां ॥ ६ ॥

अथ गमने सामान्येन ऋतुशुद्धिमाह—गतिरिति ॥ समस्तयानोत्सवकामे चेतो एषां ते तेषां नृणां गतिर्गमनं ऋत्वनुकूलगामिनी सदैव मुदि हर्षनिमित्तं प्रधाना वरा स्यात् षड्ऋतूनामनुकूलं योग्यतां गच्छतीत्येवंशीला यादृक् ऋतुस्तादृक् प्रयाणं शुभमित्यर्थः ॥ किंभूता गतिः सुशुद्धिगा अतिशयशुद्धिं प्राप्ता पुनः किंभूता गतिः आशाश्रयसिद्धिकारिणी इच्छाधारकस्य सिद्धिकरणशीला अथवा समस्तं पदं अतिशुद्धिं प्राप्ता चासौ आशा दिक् च तस्यामाश्रयो निवासो यस्य स तस्य नरस्य सिद्धिकारिणी केव भामिनीव भामिनी वधूरप्येवंविधा भवति किंभूता भामिनी ऋत्वनुकूलगामिनी ऋतुकालानुगमनशीला सती प्रधाना पुनः किंभूता सुशुद्धिगा ऋतुस्नानानंतरं शुद्धिं प्राप्ता पुनराशाश्रयस्य इच्छाधारकस्य भर्तुः सिद्धिकारिणी ॥ ६ ॥

ईषत्तडिद्वासवतीमाधिक्रियां घनांबरामिंद्रधनुःकटाक्षिणीं ॥
शिखिस्वनां वृत्तपयोधरां सुधीः प्रावृड्वशामेत्य न यानमिच्छति ॥ ७

अथ काव्यद्वयेन वर्षासु वर्णनद्वारेण प्रयाणं निषेधति—ईषदिति ॥ सुधीः प्रावृड्वशा वर्षाऋतुरेव स्त्री तामेत्य प्राप्य ईषत् स्तोकमपि यानं प्रयाणं न इच्छति किंभूतां प्रावृड्वशां तडिद्वासवतीं तडितां विद्युतां वासोऽवस्थानमस्यास्तीति सा तां विद्युत्स्थितिमतीं यथा 'सरस्वती वासवती मुखे' इति नैवबाधितविसर्गः ॥ अथवा ईषच्छब्दोऽत्रापि योज्यः ॥ ईषद् वारं वारं तडितामिति तथैव ॥ पुनः किंभूतां प्रावृड्वशा अधिक्रियां अधिका क्रिया कर्षणादिका बहुत्पन्नजंतुहिंसादिरूपा वा यस्यां सा तां पुनः किंभूता प्रावृड्वशां घनांबरां घना मेघा एव अंबराणि वस्त्राणि यस्याः सा तां पुनः किंभूतां इंद्रधनुःकटाक्षिणीं इंद्रधनुरेव कटाक्षोऽक्षिविकूणितमस्यास्तीति तां पुनः किंभूतां शिखिस्वनां शिखिनां मयूराणां स्वनाः शब्दा यस्यां सा तां पुनः किंभूतां वृत्तपयोधरा वृत्ताः सर्वत्र प्रसरणशीलाः पयोधरा मेघा यस्यां सा तां ॥ अथ स्त्रीपक्षं दर्शयति ॥ किंभूतां वशां तडिद्वत् वासवती स्थितिमती तडिदुपमानेन चंचलत्वौजसादिस्वभावः प्रोक्तः ॥ अथवा तडिद्वत् वासवती वारांगना यस्याः सा तां पुनः किंभूता आधिका क्रिया षोडशालंकाररूपा यस्याः ॥ पुनः किंभूता घनानि सूक्ष्माणि वस्त्राणि यस्याः सा पुनः किंभूता इंद्रधनुर्वत् कटाक्षा यस्याः सा । पुनः किंभूता शिखिनः स्वन इव स्वनो यस्याः सा । पुनः किंभूता वृत्तौ मंडलाकारौ पयोधरौ स्तनौ यस्याः सा तामिति रूपकालंकारः ॥ यतः 'रूपकं यत्र साधर्म्यादर्थयोरभिधा भवेत् ॥ समस्तं वासमस्तं वाखंडं वा खंडमेव वा ॥ १ ॥ कीर्णांधकारा कलशालमाना निबद्धताराऽस्थिमणिः कुतोऽपि ॥ निशापिशाची व्यचरद्दधाना महांत्युलूकध्वनिफत्कृतानि ॥ २ ॥ इति वाग्भट्टालंकारे ॥ ७ ॥

इयं लसच्छाड्वलकार्द्रचीवरा धुनीभुजाबंधितपांथपद्धतिः ॥
नवांबुदासिंचितपर्वतस्तनावनीव वर्षासु चरद्वधूसखी ॥ ८ ॥

इयमिति—इयमवनी भूमिरेवंविधा स्यात् किंभूतावनी लसदिति ॥ लसंतो देदीप्यमाना ये शाद्वलका बालतृणयुक्तस्थानानि त एव आर्द्राणि चीवराणि यस्याः सा । पुनः किंभूता धुन्यो नद्यस्ता एव भुजौ हस्तौ ताभ्यां बंधिता रुद्धा पांथस्य पथिकजनस्य पद्धतिर्मार्गो ऽथवा पांथश्रेणिर्यया सा । पुनः किंभूता नवांबुदैर्नवीनमेघैः सिंचिताः पर्वताः शैला एव स्तनौ यस्याः सा । अवनी केव चरद्वधूसखी इव यथा चरतो देशांतरं गच्छतो नरस्य वधूर्वधूटी तस्याः सखी अथवा वधूरेव सखी सध्रीची एवंविधा भवेत् ॥ किंभूता चरद्वधूसखी लसच्छाद्वलकवत् आर्द्राणि क्लिन्नानि चीवराणि यस्याः सा । पुनः किंभूता धुनीवत् भुजौ दीर्घबाहू ताभ्यां बंधिता पांथस्य गच्छद्भर्तुः पद्धतिर्यया सा । पुनः किंभूता नवांबुदैः सिंचितौ पर्वतवत् स्तनौ यस्याः सा इति वर्षासु गमनं निषिद्धमित्यर्थः ॥ ८ ॥

शरद्गते मुक्तपयःपयोधरे पयोनिधौ वर्षति शौक्तिकेयतां ॥
तद्बिंदवो वाथ विभूषयंत्यतो जगत् शरत्स्याद्गमनोचिता गुणात् ॥ ९ ॥

अथ काव्यद्वयेन वर्णनद्वारेण शरदृतौ प्रयाणं दर्शयति—शरदिति ॥ शरद्गते शरत्कालप्राप्ते मुक्तपयःपयोधरे मुक्तजले मेघे पयोनिधौ समुद्रे वर्षति सति तद्बिंदवोऽपि तस्य मेघस्य जलकणा अपि जगद् विभूषयंति आधाराधेयोपचारात् जगज्जनानलंकरोति किंकृत्वा शौक्तिकेयतां मुक्ताफलत्वमवाप्य प्राप्य समुद्रे अतो हेतोर्गुणात् शरद् गमनोचिता प्रयाणाय योग्या स्यात् ॥ ९ ॥

केदारपात्रधृतशालिभिरिष्टगंधैः शुद्धांबरा विकचदंबुजमंजुनेत्राः ॥
सिद्धेःपुरः शरदि हीवनुलक्ष्मेतत्तद्यायिनो दिगबलाः समवाकिरंति ॥ १० ॥

अथ वसंततिलकेनाह—केदारेति ॥ शरदि ऋतौ दिगबला दिग्वध्वस्तद्यायिनस्तासु दिक्षु गमनशीलान्नरान् समवाकिरंति वर्द्धापयंति कैः केदारेति । केदाराः क्षेत्राणि त एव पात्राणि तेषु धृताः शालयो व्रीहयस्तैःकृत्वा किंभूतैः इष्टगंधैर्मनोहरगंधैः किंभूता दिगबलाः शुद्धानि निर्मलानि अंबराणि नभांसि यासु ताः । पुनः किंभूताः विकचेति । विकचंति विकस्वराणि च तानि अंबुजानि कमलानि च तान्येव मंजूनि मनोहराणि नेत्राणि यासां ताः । यथा स्त्रियोऽपि दिग्यायिनं वर्द्धयंति केदारेभ्यः केदारवत् वा पात्रे रौप्यादिभाजने धृतशालिभिः मनोहरगंधैः किंभूताः स्त्रियः शुद्धांबराः पवित्रवस्त्राः पुनः किंभूताः स्त्रियः विकचदंबुजवत् मंजूनि नेत्राणि यासां ता इत्युक्तिलेशः ॥ हि युक्तार्थे नु वितर्के पुरोऽग्रे सिद्धेः सिद्धिकार्यस्यैतल्लक्ष्म चिन्हमिव यतोऽग्रतः शुभशकुनं कार्यसिद्धिं कथयति ॥ १० ॥

मंदं महोंऽतकदिशं व्रजतोऽगभाजो हेमंतमत्तहिमसंपदसह्यवृत्तां ॥
युक्तं भवेत्तिमिरनाशविधेरिवैनां प्रोज्झ्येतियानमतिमानपरंपराशां ॥ ११ ॥

अथ वर्णनद्वारेण हेमंततौ लब्धेऽपि प्रयाणगमनिष्टं दर्शयति—मंदमिति ॥ अंगभाजः प्राणिनो महस्तेजो मंदं क्षीणं भवेत् । किंभूतस्यांगभाजः एनां अंतकदिशं समीपकाष्ठां

व्रजतो गच्छतः किंभूतामंतकादिशं हेमंतेन शीतकालेन मता पुष्टा चासौ हिम-संपच्च तयाऽसह्यं सोढुमशक्यं वृत्तं शीलं यस्याः सा तां कस्येव तिमिरनाशविधेः सूर्यस्येव यथा अंतकादिशं दक्षिणाशां व्रजतस्तिमिरनाशविधेर्महो मंदं भवति तथैव हे नर त्वं यानं प्रयाणं जहि । किंभूतं यानं अतिमानपरंपराशं अतिक्रांतमाना परंपराशा दिग् यस्मिंस्तत् ॥ यथा सूर्योऽपि दक्षिणायने बृहत्पंथानं त्यजति इति युक्तोऽयमर्थः । लघुप्रयाणेऽपि शीतपराभवत्वात् बृहत्प्रयाणं सर्वथा निषिद्धमित्यर्थः ॥ ११ ॥

**आशाविनीतगमने शिशिरेऽभ्युपेयान्नीहारपेलवकला-**
**स्यसरोजशोभाः ॥ सर्वा वशा इव नरो गमना-**
**भिलाषी भाक्षीणभानुतनुतापपराः प्रियाशाः ॥ १२ ॥**

अथ वर्णनद्वारेण शिशिरर्तौ प्रयाणमाह—आशेति ॥ आशया काष्ठया इच्छया वा विनीतं प्राप्तं गमनं यस्मिन् स तस्मिन् आशाविनीतगमने शिशिरे ऋतौ नरः गमनाभिलाषी सन् सर्वाः प्रियाशा ईप्सितकाष्ठा अभ्युपेयात् गच्छेत् । किंभूताः प्रियाशाः नीहारेति। नीहारेण हिमेन पेलवं श्लक्ष्णं कृशं कं जलं तस्मिंश्चास्यानि देदीप्यमानानि सरोजानि कमलानि तेषां शोभा यासु ताः । अथवा नीहारपेलवेन हिमस्तोकेन कलानि मनोहराणि आस्यानि मुखानि तद्वत् सरोजानि तेषां शोभा यासु ताः । अथवा नीहारेण पेलवानि स्तोकानि कलानि आस्यवत्सरोजानि शेषं तथैव । पुनः किंभूताः प्रियाशाः भाक्षीणेति । भाभिः प्रभाभिः क्षीणश्चासौ भानुः सूर्यश्च तस्य तनुः सूक्ष्मश्चासौ तापश्च तेन परा उत्कृष्टाः का इव वशा इव यथा नरः सर्वाः वशा इयात् किंभूताः वशाः प्रिया श्रेष्ठा आशा इच्छा यासां ताः अथवा प्रियेषु भर्तृषु आशा यासां ताः । पुनः किंभूताः आस्यान्येव सरोजानि शेषं सर्वमपि पूर्ववत् ॥ १२ ॥

**प्रेत्यानिलो मलयमद्रिमृतौ विधत्ते पांथश्रमं त्रिगुण-**
**भावमपोहितुं किं ॥ कर्तुं मधाविति पराभवमन्यस-**
**त्वं शक्यं यियासुरखिलासु ककुप्सु तस्मिन् ॥ १३ ॥**

अथ वर्णनद्वारा वसंततौं सर्वदिक्षु प्रयाणमाह—प्रेत्येति ॥ अनिलो वायुर्मलयमद्रिं मलयाचलं प्रेत्य प्राप्य मधौ वसंते तस्मिन् ऋतौ त्रिगुणभावं शीतमंदसौरभाख्यं विधत्ते बिभर्ति किंकर्तुं उत्प्रेक्ष्यते । पांथश्रमं पथिकजनश्रममपोहितुं निरसितुं किंभूतोऽनिल इति अखिलासु ककुप्सु दिक्षु इयासुर्गमनेच्छुः किंकर्तुं शक्यं समर्थमपि अन्यसत्वं विरहिजनं पराभवं कर्तुं किं यदाह हर्षकविः 'विषमो मलयाहिमंडलीविषफूत्कारमयो मयोदितः ॥ लगकालककलादिश्वसः पवनस्तद्विरहानलैधसा' ॥ १ ॥ १३ ॥

अवकीर्णरसासु दिक्षु कामं गमनं मानव वामलोचनासु ॥
दवथुव्यथितासु घर्मकाले स्वशिवं वांछसि चेदिव त्यज त्वं॥१४

अथ मालभारिण्या वर्णनद्वारेणोष्मकाले प्रयाणं निषेधति—अवकीर्णेति ॥ हे मानव चेद्यदि त्वं स्वशिवमात्मनि भद्रं वांछसि तदा त्वं घर्मकाले ग्रीष्मकाले काममत्यर्थं गमनं प्रयाणं त्यज मुंच कासु दिक्षु किंभूतासु अवकीर्णरसासु अवकीर्णोऽवध्वस्तो विसंस्थूलप्रायो रसो यासु ताः अथवाऽवध्वस्ता रसा भूमिर्यासु तासु 'अवकीर्णेत्ववध्वस्तम्' इति हैमः ॥ पुनः किंभूतासु दिक्षु दवथुना दाहेन व्यथितासु पीडितासु कासु इव वामलोचनासु इव ग्रीष्मे एवंविधासु स्त्रीषु यथा गाढं गमनं त्याज्यमिति ॥ १४ ॥

समेऽयने शीतलगूष्मरश्म्योर्गमोऽथ सर्वत्र भवेदतुल्ये ॥
तस्मिन् द्युनेतुर्द्युनि रात्रिनेतू रात्रौ प्रयाणे त्वयनेऽन्यथा न ॥१५

अथोपजात्यायनदिक्शूलचक्रमाह—समइति ॥ शीतलगूष्मरश्म्योः चंद्रसूर्ययोः समेऽयने एकस्मिन्नयने सति गमः प्रयाणं सर्वत्र सर्वस्मिन् काले भवेत् । कोऽर्थः यदि चंद्रार्कावुत्तरायणगतौ स्यातां तदा उत्तरस्यां प्राचीं वा व्रजेत् । यदि रविचंद्रौ दक्षिणायनगतौ स्यातां तदा प्रतीचीं दक्षिणां वा व्रजेत्तद्दिङ्मुखा यात्रा शुभेति ॥ अथ पुनर्द्युनेतुः सूर्यस्यातुल्ये भिन्नेऽयने चंद्रात्पृथगयने द्युनि दिवसे प्रयाणं भवेत् ॥ द्युशब्दो नपुंसकः यतः 'द्युरल्पयव्ययमप्यहः' इति शब्दप्रभेदे साधुसुंदरगणयः ॥ तु पुनः रात्रिनेतुश्चंद्रस्यातुल्ये सूर्याद्भिन्नेऽयने रात्रौ प्रयाणं भवेत् । कोऽर्थः यस्मिन्नयने रविः स्यात्तदयनस्य दिशि दिवा प्रयाणं स्यादेवं चंद्रस्य रात्राविति ॥ उत्तरस्यां पूर्वस्या अंतर्भावः दक्षिणस्यां पश्चिमाया अंतर्भाव इति । अन्यथेति । पूर्वोक्तरीत्या अभावे प्रयाणं न भवेत ॥ १५ ॥

न देवसुप्तौ गमनं गृणंति प्रभूतमार्गं च समं प्रबुद्धाः ॥
होलांतपक्षे न समस्तयानं दोषस्तदीयो नहि नित्ययाने ॥ १६ ॥

अथ चतुर्मासकादौ प्रयाणं निषेधति—न देवेति॥ प्रबुद्धाः पंडिताः प्रभूतमार्गं बृहत्प्रयाणं च पुनः समं मध्यगमनं प्रयाणं न गृणंति न कथयंति कस्यां देवसुप्तौ चातुर्मासके च पुनर्होलांतपक्षे फाल्गुनशुक्लप्रतिपदमारभ्य पूर्णिमांतं समस्तयानं न गृणंति पुनर्नित्ययाने तदीयो दोषो देवसुप्तिहोलांतपक्षयोर्दोषो नहि स्यात् ॥ गृणंतीति गॄ निगरणे धातुः ॥ १६ ॥

बृहद्गमो नो विषमैर्वियच्चरैरुत्पातवर्तिन्ययने च मंगिनीं ॥
यानं तु नारुह्य तरंगिणीश्वरे समीककामस्त्रिविधो गमो विशां॥१७॥

अथ विषमग्रहैः प्रयाणं निषेधति—बृहद्गमेति ॥ बृहद्गमो वृद्धप्रयाणं १ च पुनस्तरंगिणीश्वरे समुद्रे मंगिनीं नावं समारुह्य यानं प्रयाणं २ पुनः समीककामो युद्धकामो गमः ३

इति त्रिविधो गमः प्रयाणं विशां नृणां न स्यात् । कस्मिन् विषमैर्वियच्चरैः सूर्यमंगलशनैश्चर-ग्रहैः कृत्वा उत्पातवर्तिनि उपरागादिदोषयुक्तेऽयने मार्गपञ्चलक्षणे भाति ॥ १७ ॥

**महोनिधौ द्विप्रकृतिं प्रयाते प्रयातुरन्तो वननिर्गयाने ॥**
**तथा भवेत्तावुरिलेयकौर्प्या ८ नधिष्ठिते नारपथप्रयाणे ॥१८॥**

अथ द्विस्वभावादिराशिगते रवौ वृद्धप्रयाणादि निषेधति—महोनिधाविति ॥ द्विप्रकृतिं प्रयाते द्विस्वभावराशिगते महोनिधौ सूर्ये महसां तेजसां निधिरिति प्रयातुः प्रयाण-कारकस्य नरस्यान्तो मरणं भवेत् । कस्मिन्वननिर्गयाने भूम्यां दीर्घप्रयाणे तथा पुनः तावुरिः वृषराशिः लेयः सिंहराशिः कौर्प्यो वृश्चिकराशिरेषां द्वंद्वे तान् राशीन् अधिष्ठिते आश्रिते सूर्ये सति नारपथप्रयाणे जलपथगमने प्रयातुर्मरणं स्यात् ॥ नार यथा नारे जलेऽयनं गृहं यस्य स नारायणो विष्णुः नारमिति शब्दप्रभेदः ॥ १८ ॥

**जनो गमं भाद्रपदे प्रयातोऽखिलासु नो भद्रपदं प्रयाति ॥**
**मितेतरं दिक्षु तथाऽश्विनेऽस्मिन्निजास्थितिं तीर्थमियाद्दशेषे ॥१९॥**

अथ भाद्रपदादौ वृद्धप्रयाणादि निषेधति —जन इति ॥ जनो भाद्रपदे मासेऽखिलासु दिक्षु मितेतरे मितात् इतरे बृहन्मध्यप्रयाणे द्वे यस्मिन् स तं गमं गमनं प्रयातः प्राप्तः सन् भद्रपदं कल्याणं न प्रयाति न प्राप्नोति । तथास्मिन्नशेषे आश्विने मासे निजस्थितिती नीज-कुलागततीर्थं प्रयातः सन् भद्रपदं न इयान्न प्राप्नुयात् ॥ १९ ॥

**पक्षद्वयेऽसद्ग्रहवाररिक्तापक्षादिमध्यांततिथीरपास्य ॥**
**विष्टिं कुयोगं क्वचिदप्यजाहः षष्ठीमशेषं गमनं च हारि ॥ २० ॥**

अथ कुयोगं हित्वा पक्षद्वयेऽपि प्रयाणमाह—पक्षेति ॥ पक्षद्वयेऽशेषं त्रिविधमपि गमनं हारि शुभं स्यात् ॥ किंकृत्वा असदिति ॥ असद्ग्रहवारान् क्रूरग्रहवारान् रिक्तास्तिथीः पक्षयो-रादितिथिं प्रतिपदं मध्यतिथिमष्टमीं अंततिथिं पंचदश्यौ च अपास्य विहाय च पुनर्विष्टिं कुयोगं च क्वचित् अजाहं अजस्य विष्णोर्दिनं द्वादशीं षष्ठीं चापास्येति ॥ २० ॥

**विकर्तनेलामरराजमध्ये द्विराशिमानाधिकमंडलं चेत् ॥**
**महागमश्चाहवकामयानं भवेदलुप्ताधिककालमाने ॥ २१ ॥**

अथार्केंदुद्विराशिमानविचालं त्यजन्प्रयाणमाह—विकर्तनेति ॥ चेद्यदि विकर्तनः सूर्यः इलामरराजो द्विजराजश्चंद्रः अनयोर्मध्येऽन्तरं विचालं द्विराशिमानाधिकं भवेत् ॥ कोऽर्थः कृष्ण दशमीमारभ्य शुक्लपंचमीं यावत् सूर्यचंद्रयोर्द्विराशिमानं विचालं स्यात् ॥ तादृग्चालं क्षीणचंद्र-कालत्वात्त्याज्यमित्यर्थः ॥ तदा महागमो बृहत्प्रयाणं च पुनराहवकामयानं संग्रामकार्यप्रयाणं न भवेत् । कस्मिन्नलुप्ताधिककालमाने क्षीणाधिकवर्षमासदिनवर्जिते काले ॥ २१ ॥

सुरासुराचार्यगमोऽतिमान्यो मध्यो विदब्जांशुगमोऽपि निंद्यः ॥
पतंगजारज्ञगमो यियासोरात्मीयनामानुगुणोऽयमुक्तः ॥ २२ ॥

अथ गुरुमनुसृत्य वारेषु शुभमध्याशुभप्रयाणमाह—सुरेति ॥ सुराश्चासुराश्चानयोराचार्यौ गुरुशुक्रौ एतयोर्दिने गमो गमनं यियासो नरस्यातिमान्यो भृशमंगीकार्यः श्रेष्ठतम इत्यर्थः ॥ विदब्जांशुगमो बुधचंद्ररविदिने गमो मध्यः । पतंगजः शनिरारो भौमोऽनयोर्ज्ञुनि दिने गमोऽपि निंद्यः स्यात् ॥ अयं गुण आत्मीयनामानुसदृश उक्तः । शुभनामा ग्रहःशुभोऽशुभनामाऽशुभ इति ॥ २२ ॥

संसिद्धियोगे समिति प्रयाणं प्रभाकरारान्ह्यपि वाग्र्यमाहुः ॥
तथा स्वपूर्वेशमितप्रयाणं शनौ च नौयानमरौद्रकेतौ ॥ २३ ॥

अथ सिद्धियोगादौ प्रयाणमाचिष्टे—संसिद्धीति ॥ पंडिताः समिति संग्रामे प्रयाणमग्र्यं श्रेष्ठमाहुः वदंति कस्मिन् संसिद्धियोगे सम्यक्सिद्धियोगे च पुनः प्रभाकरः सूर्यः आरो भौमोऽनयोरह्नि तथा पुनः स्वपूरिति । स्वपूः निजनगरी तस्याः देशाय प्रवेशाय मितं प्रयाणमग्र्यमाहुः ॥ कस्मिन् शनौ शनिवारे च पुनर्नौयानं नौकायाः प्रयाणमग्र्यमाहुः । कस्मिन्नरौद्रकेतौ अरौद्राः रौद्राः केतवः चिह्नानि यस्य स चंद्रस्तद्दिने ॥ २३ ॥

लघुश्रवोऽचित्रमृदुध्रुविष्ठादित्यानि भान्याहुरशेषयाने ॥
शुभानि साजेंद्रवनेशतारां साधारणां गाणितिकास्त्रियुग्मीम् ॥ २४

अथ काव्यद्वयेन प्रयाणे उत्तममध्यमशुभभान्याह—लघ्विति ॥ गाणितिकाः दैवज्ञाः अशेषयाने समस्तप्रयाणे लघ्वादीनि भानि शुभानि आहुः वदंति । लघ्विति । लघुसंज्ञानि अश्विनीपुष्यहस्ताः श्रवः श्रवणः अचित्रमृदूनि चित्रावर्जितमृदुसंज्ञानि अनुराधा रेवती मृगशीर्षाणि श्रविष्ठा धनिष्ठा आदित्यं पुनर्वसु एषां द्वंद्वे इमानि नव भानि शुभयात्रेयाणि । पुनर्गाणितिकास्त्रियुग्मीं साधारणां मध्ययात्रेयाण्याहुः । व्याख्यामाहुः त्रयाणां पूर्वाभाद्रपदाउत्तराभद्रपदा इति युग्मं १ पूर्वाषाढा उत्तराषाढा इति युग्मं २ पूर्वाफल्गुनीउत्तराफल्गुनी इति युग्मं ३ इति एषां युग्मानां समाहारस्त्रियुग्मीतां किंभूतां त्रियुग्मीं साजेति । अजो ब्रह्मा रोहिणी इंद्रो ज्येष्ठा वनेशः जलेशो वरुणस्तस्य तारा शतभिषक् आभिः सहवर्तमानां इति नवभानि मध्ययात्रेयाणि ॥ २४ ॥

मिते समे वापि विमिश्रभावास्तारावरात्यत्र सदापकामाः ॥
निरैंद्रतीक्ष्णांतकमिश्रचित्राप्राभंजनादिप्रभवेंदुवामाः ॥ २५ ॥

मितेऽतिमिते लघुनि समे वा प्रयाणे हि युक्तार्थे विमिश्रभावास्तारा: रोहिण्यादि नव मध्ययात्रेयतारा वराः स्युः । पुनरत्र त्रिविधे प्रयाणे सदा निरैंद्रतीक्ष्णादितारा अपकामाः निर्गतकामा नेष्टा इत्यर्थः । निरैंद्रतीक्ष्णानि ज्येष्ठावर्जिततीक्ष्णसंज्ञानि आर्द्राश्लेषामूलं अंतको

भरणी मिश्रे द्वे विशाखा कृत्तिकाश्चेति चित्रा प्राभंजनं प्रभंजनस्य इदं स्वाती आदित्यभवाः अग्रजाः पितरः मघा एता इंदुवामाः नक्षत्राणि इति नव भानि अयात्रेयाणि ॥ २५ ॥

**प्रयाणभं क्ष्मा७द्रि१गुणे३षु५तारं वारं गमेहस्य किमंगिनश्चेत्॥**
**जाताडलं तच्च हि यामघंटं घटं स्वमुज्झ्यासव उत्पतंति॥२६॥**

अथ प्रथमताराादियुक्तं प्रयाणनक्षत्रं नेष्टमाह—प्रयाणेति ॥ चेद्यदि अंगिनः प्रयाणभं यात्रानक्षत्रमेवंविधं स्यात्तदा गमेहस्य गमे गमने ईहा इच्छा यस्य स तस्य इच्छावतो नरस्य किं गमने इच्छा व्यर्थेत्यर्थः ॥ किंशब्दो निषेधार्थस्तेन साभिप्रायविशेषणं निषिद्धं तदाह । किंभूतं प्रयाणं क्ष्मा १ द्रि ७ गुणे ३ षु ५ तारं प्रथमा सप्तमी तृतीया पंचमी च वा तारा यस्मिंस्तत् । पुनः किंभूतं प्रयाणं जाताडलं उत्पन्न आडलो यस्मिंस्तत् । पुनस्तत्प्रयाणभं यामघंटं यमघंटे भवमिति हि यस्मात्कारणात् अरं शीघ्रं अंगिनोऽसवः प्राणाः स्वं घटं निजं शरीरं उज्झ्य विहाय उत्पतंति ऊर्ध्वं गच्छंति यात्रिकनरो मृत्युमेतीत्यर्थः ॥ यतः 'यमघंटे गते मृत्युः कुलच्छेदः करग्रहे' इत्यादि उक्तप्रयोगश्चित्यः ॥ २६ ॥

**सभूषणे दूषणवर्जिते भे स्फुरत्प्रभादीपितमंडलेऽस्मिन् ॥**
**यात्रागमित्राणसहायिनी स्याद्गोशुद्धिता चेद्दिनभादिभूता॥२७**

अथ दिगादिशुद्धौ प्रयाणमाह—सभूषण इति ॥ चेद्यदि दिनभादिभूता दिननक्षत्रादिजा गोशुद्धिता गोशब्दोऽत्र दिग्वाची दिक्शुद्धिता स्यात्तदास्मिन् दूषणवर्जिते भे नक्षत्रे यात्रा प्रयाणं गमित्राणसहायिनी यात्रिकनरस्य रक्षणाय सहचारिणी स्यात् ॥ किंभूते भे सभूषणे सुयोगान्विते पुनः किंभूते स्फुरत्प्रभादीपितमडंले रव्याद्याक्रमणरहिते इत्यर्थः ॥ २७॥

**कु१नंद९नेत्री३श११म अक्ष५विश्व१३मे युगे४नमें१२ऽ-**
**गेंद्र६१४मितेऽचल७द्यु१५मे ॥ द्वि२दिक् १०समे**
**त्रिंश३०दहि८प्रमे क्रमादैंद्र्यास्तिथी स्तो नु च योगिनीवहे ॥२८**

अथ योगिनीचक्रमाह—कुनंदेति ॥ नु वितर्के च समुच्चये ऐंद्र्याः पूर्वदिशातः क्रमात् योगिनीवहे योगिनीधारिण्यौ तिथी स्तः द्वे द्वे तिथी भवत इत्यर्थः ॥ विशेषणद्वारेणाह । किंभूते तिथी कुनंदमे कु१नंदा९भ्यां प्रतिपन्नवमीभ्यां मिमीते इति मा स्त्रीलिंगे प्रथमाद्विवचने मे इति सर्वत्रैवं ज्ञेयं । प्रतिपदि नवम्यां च पूर्वस्यां योगिनीत्यर्थः ॥ एवं किंभूते तिथी त्री३शमे११ त्रयश्च ईशाश्चेति तृतीयायामेकादश्यामाग्नेय्यां योगिनी । पुनः किंभूते तिथी अक्ष५विश्व१३मे पंचम्यां त्रयोदश्यां याम्यां योगिनी । पुनः किंभूते तिथी युगे४न१२मे युगानि च इनाः सूर्याश्च चतुर्थ्यां द्वादश्यां च नैर्ऋत्यां योगिनी । पुनः किंभूते तिथौ अंगेंद्र६१४मिते षष्ठ्यां चतुर्दश्यां च वारुण्यां योगिनी । पुनः किंभूते तिथी अचल७द्यु१५मे अचलाः पर्वताश्च द्यूनि दिवसाश्चेति सप्तम्यां पूर्णिमायां वायव्यां योगिनी । पुनः किंभूते तिथी द्वि२दिक् १० समे

द्वितीयायां दशम्यां च उत्तरस्यां योगिनी। पुनः किंभूते तिथी त्रिंशद् ३० हि८अमे अमावास्यायामष्टम्यां ऐशान्यां योगिनी तिष्ठति। अत्र काव्ये ऋकारांतद्विवचने सांधिकार्थे मतांतराश्रितं ज्ञेयम् ॥ २८ ॥ *

मंदो हि राजा च हरेरिहाशामाशामहेरंगभुवो गुरुः स्यात् ॥
शूरःकविःपाशकरस्य शूली भौमो बुधश्चैलविलस्य यातुः॥२९॥

अथ वारादिक्शूलमाह—मंद इति ॥ हीत्यवधारणे हरेरिंद्रस्य आशां पूर्वां प्रति इह गमने यातुर्यात्रिकनरस्य मंदः शनिः राजा चंद्रश्च शूली शूलयुक्तः स्यात् ॥ एवमहेः सूर्यस्यांगभुवो यमस्याशां दक्षिणां प्रति गुरुः शूली स्यात्॥ पुनः पाशकरः पाशः करे यस्य स पाशपाणिर्वरुणस्तस्याशां पश्चिमां सूर्यः कविश्च शूली स्यात् ॥ ऐलविलस्य धनदस्याशामुत्तरां प्रति भौमो बुधश्च शूली स्यात् ॥'अहिर्दैत्यविशेषः स्यात् सूर्योऽहिरहिरध्वग' इत्यनेकार्थध्वनिमंजर्यां ॥ २९ ॥ *

वरोपलब्धिर्यदि यानयोगिनी न योगिनी सन्मुखचारिणी तदा ॥
तच्छूलिकाष्ठं गमनं शरीरिणः सशूलिकांगं गमिनं सृजत्यरम्॥३०

अथ योगिनीं शूलं सन्मुखं त्यजन्नाह—वर इति ॥ यदि सन्मुखचारिणी योगिनी यानयोगिनी न स्यात्तदा शरीरिणः उपलब्धिर्मतिः शुद्धिर्वा वरा प्रधाना स्यात्। अरं शीघ्रं शूलिकाष्ठं मंदादिवारशूलिनः काष्ठा दिग् यस्मिंस्तदेवंविधं गमनं कर्तृपदं गमिनं यात्रिकनरं सशूलिकांगं शूलरोगयुक्तदेहं सृजति करोति ॥ यथा शूलिकाष्ठं शूलिदारु चौरादिदेहे प्रपीडां करोति इत्यत्रैव श्लिष्टार्थेन प्रोक्तं ॥ ३० ॥

द्युदिनादिदिनानि पूर्वतो निखिलाशासु सदेहकालवान् ॥
हरिभूः कलितस्तु पाशवान्विधुभूस्तावहितौ हि सन्मुखौ॥३१

अथ वैतालीयेन शनिबुधौ कालपाशवंतौ दर्शयति—द्युदिनेति॥ द्युदिनादिदिनानि द्युशब्देन यः उदयप्राप्तवारस्तस्य दिनमादौ एषां तानि एवंविधानि दिनानि पूर्वतो निखिलाशासु सर्वदिक्षु न्यसेत्। यत्र हरिभूःशनिः कलितः संख्याप्राप्तस्तत्र शनिः कालवान् स्यात्। यतः 'जेऊगइते पूरविदी जइ सृष्टिसंहारगणी जइ सातवार इंणी परिसंभालिः जिहां शनि तिहां निश्चयकालः' ॥१॥ च पुनरेवं विधुभूर्बुधः पाशवान् स्यात्॥ तु इत्यवधारणे हि युक्तार्थे तौ शनिबुधौ सन्मुखावहितावनिष्टकारकौ स्यातां ॥ ३१ ॥ *

अवि१गो२जितुमा३ब्धि४राशिभिः शरमैभैर्नव९मैस्तु संयुतैः ॥
हरिदिङ्मुखदिक्चतुष्टये क्रमतः कल्पितमिंदुमंडलम् ॥ ३२ ॥

अथ पूर्वादिदिक्षु मेषादिराशिस्थचंद्रगृहाणि कल्पयति—अवीति ॥ बुधैः हरिदिङ्मुखदिक्चतुष्टये पूर्वादिदिक्चतुष्के क्रमत इंदुमंडलं कल्पितं कथितं। कैः कृत्वाऽविर्मेषराशिः

---

* नं. १२. * नं. १३।१४. * नं. १५.

गौर्वृषः जितुमो मिथुनं अंबिरराशिः कर्कः एषां द्वंद्वे एभिः किंभूतैरेभिः शरमैः शरैर्बाणैर्मीतीति शरमाः तैः पंचमेन पंचमेन राशिना संयुतैः । यथा मेषात् पंचमो राशिः सिंहः एवं वृषमिथुनकर्केभ्यः । तु पुनः किंभूतैरेभिर्नवमैर्नवमप्रमाणैर्नवमेन नवमेन संयुतैः यथा मेषान्नवमो धनुराशिरेवं वृषमिथुनकर्केभ्यः । कोऽर्थः मेषे वृषे धनुषि च चंद्रगृहं पूर्वस्यां एवं वृषकन्यामकरेषु याम्यां मिथुनतुलाकुंभेषु पश्चिमायां कर्कवृश्चिकमीनेषु उत्तरस्यां ॥ यथा 'मेषे च सिंहे' इत्यादि ॥ ३२ ॥ *

**वनितावदनेंदुमंडलं विदुरभ्याननमिंदुमंडलं ॥**
**गमनार्थिनि दत्तवांछितं गमनेऽपीव च दक्षिणाशगम् ॥ ३३ ॥**

अथ सन्मुखदक्षिणगं चंद्रगृहं लाभदं विशिनष्टि—वनितेति ॥ बुधा अभ्याननं सन्मुखमिंदुमंडलंइव कर्मपदं वनितावदनेंदुमंडलं स्त्रीमुख गमनार्थिनि यातरि नरि दत्तवांछितं पूरितेच्छं विदुः । च पुनर्गमनेऽपि दक्षिणाशगं दक्षिणदिग्गतं चंद्रमंडलमिव स्त्रीमुखं दत्तवांछितं विदुः ॥ ३३ ॥

**गतचांद्रदिने चतुःस्थिते खयमाब्ध्यंगयुते २।४।६ हृते गजैः ॥**
**स्वदिशि त्यज पाशघातकेऽभिमुखे कालनिपातने गमिन् ॥ ३४ ॥**

अथ तिथिपाशघातकालनिपातान्सन्मुखास्त्यजन्नाह—गतेति ॥ गतचांद्रदिने किंभूते चतुःस्थिते पृथक् चतुःस्थानस्थापिते पुनः किंभूते खयमाब्ध्यंगयुते शून्यद्विचतुष्पड्युक्ते० २।४।६ पुनः किंभूते गजैरष्टाभिर्हृते भाजिते सति हे गमिन् हे यात्रिंस्त्वं स्वदिशि निजगमनकाष्ठायां पाशघातने कालनिपातने अभिमुखे सन्मुखे त्यज विजहीहि । पाशघातने इत्यत्र द्वितीयाद्विवचनमेवमन्यदपि । स्वदिशीति । शेषांकप्रमितपूर्वादिदिग्गणनया क्रमेण तिथिपाशघातनकालनिपातनानि भवंतीत्यर्थः ॥ ३४ ॥ *

**बहुलादिभचक्रपद्धतीष्विह काष्ठासु विचिंतयेद्ग्रहान् ॥**
**उत यानविलग्नदिक्स्थितानुदयाशास्थितिगांश्च सन्मुखान् ॥ ३५ ॥**

अथ कृत्तिकादिषु स्थितान् ग्रहान् सन्मुखांस्तर्कयति—बहुलेति ॥ सुधीर्ग्रहान् सन्मुखान् विचिंतयेत् । कासु इह काष्ठासु दिक्षु किंभूतासु बहुलादिभचक्रपद्धतीषु कृत्तिकादिनक्षत्रश्रेणीषु किंभूतान् ग्रहान उत यानविलग्नदिक्स्थितीन् प्रयाणलग्नस्य दिशि स्थितिर्येषां ते तान् उत पुनः किंभूतान् उदयाशास्थितिमान् पूर्वदिक्स्थानगतान् वामविलग्नदिक्स्थितीनिति । कोऽर्थः प्राच्याद्यष्टदिक्षु क्रमेण विलग्नसदनादिषु भावेषु सूर्यादिग्रहाः स्थिताः लालटिकाः स्युः । यथा लग्नस्थः सूर्यः प्राच्यां गंतुर्नरस्य लालटिकः स्यात् । एवं लाभ११व्यय१२स्थः शुक्र आग्नेयां कर्मस्थो १०भौमो दक्षिणस्यां नवा९ष्टम८भावस्थो राहुर्नैर्ऋत्यां सप्तमभावस्थः शनिः पश्चिमायां षष्ठपंचम ६।५भावस्थश्चंद्रो वायव्यां चतुर्थभावस्थो बुध

---

* नं. १६. * नं. १७।१८.

उत्तरस्या द्वितीयतृतीयभावगो गुरुरीशान्यां । अत्र ललाटव्यतिरिक्ते कंटके स्थाने यदि दिगधीशस्तिष्ठति तदा यात्रा शुभान्यथाऽशोभनेति तत्वमिति ॥ ३९ ॥

न सितेऽभिमुखे समागते रुचिरं यानमलंघ्यपत्तनं ॥
वनिताऽऽमिथुनाऽऽलये तथा खरदीप्तावपि बोभवीति हि ॥ ३६ ॥

अथ काव्यद्वारेण तदेव विस्तारयति—न सित इति ॥ हि निश्चितं अलंघ्यपत्तनमेकनगरांतरगतं यानं प्रयाणं रुचिरं मनोहरं न बोभवीतितरां कस्मिन् सिते शुक्रेऽभिमुखे समागते सति अपि पुनः कस्मिन् तथा वनितामिथुनालये कन्यामिथुने आलयौ गृहे यस्य स बुधस्तस्मिन् बुधे सन्मुखे सति तथा पुनः खरदीप्तौ सूर्ये सन्मुखे सति ॥ ३६ ॥

प्रधने जनकस्थितौ सितस्तुपसर्गे नरमेकपत्तने ॥
न हि दौर्ग्रहपूर्वमंगले गमिनं दुष्यति सन्मुखोऽपि वित् ॥ ३७ ॥

अथ संग्रामादौ शुक्रबुधसन्मुखत्वानवलोकनमाह—प्रधन इति ॥ सन्मुखः सितः शुक्रोऽपि पुनर्वित् बुधोऽपि गमिनं नरं नहि दुष्यति न दुःखाय करोति कस्मिन् प्रधने संग्रामे पुनर्जनकस्थितौ पितृगृहे पुनरुपसर्गे दुर्भिक्षादौ पुनरेकपत्तने एकग्रामे पुनर्दौर्ग्रहपूर्वमंगले पाणिग्रहणादिमंगले ॥ ३७ ॥

भृगुवत्सवसिष्ठकश्यपात्रिभरद्वाजकुला जना भृगुं ॥
गणयंति न सन्मुखं त्वमी विदमप्यांगिरसान्वयान्विताः ॥ ३८ ॥

अथ भृग्वादिगोत्रोत्पन्नजनानां मते शुक्रादिसन्मुखत्वमवगणयति—भृग्विति । अमी जनाः भृगुं शुक्रं सन्मुखं न गणयंति न मन्यंते किंभूता जनाः भृगुवत्सादि भृग्वादीनां कुलानि गोत्राणि येषां ते तु पुनरांगिरसान्वयान्विताः आंगिरसवंशयुक्ताः जना विदं बुधमपि सन्मुखं न गणयंति ॥ ३८ ॥

कुरुभोजकटांध्रहूणकानरिमीणद्रविडांगनान्वितान् ॥
न च दुष्यति सन्मुखोशनाः सुमुखोऽर्को विदतोऽन्यनीवृतः ॥ ३९ ॥

अथ देशविशेषेण शुक्रादिसन्मुखत्वमवगणयति—कुर्विति ॥ सन्मुखोशनाः सन्मुखशुक्रः कुर्वादीन् देशान् न दुष्यति किंभूतान् अरिमीणाद्यन्वितान् तत्रांगनान्वितः स्त्रीराज्यदेशविशेषः प्रतीतः । पुनः सन्मुखोऽर्कोऽप्येवं पुनर्विद् बुधोऽतराभ्योन्यनीवृतोऽन्यदेशान् दुष्यति ॥ ३९

बृहतीहामिते समे गमे न समीयात्प्रतिशुक्रमंगभृत ॥
हिमरोचिषि पौष्णमेषभेऽभिमुखोऽधोऽस्ति कविर्न दोषकृत ॥ ४०

बृहतीति ॥ इह बृहति १ मिते २ समे ३ त्रिविधे गमे प्रयाणेऽगभृत् पुरुषः प्रतिशुक्रं सन्मुखं शुक्रं न समीयात् नोगच्छेत् । पुनर्हिमरोचिषि चंद्रे पौष्णमेषभे रेवतिमेषराशिस्थिते सति तदा कविः शुक्रोऽधोऽस्ति अंधः सन् दोषकृन्न भवेत् ॥ ४० ॥

पविपाणिदिशं त्यजैंद्रभेऽजपदृक्षे दिशमांतिकीं जनः ॥
वननेतुरिहाजभे गामिन्फलबुद्धेऽर्यमभे च गौह्यकीम् ॥ ४१ ॥

अथ सन्मुखां नक्षत्रकीलां त्यजन्नाह—पवीति ॥ हे गामिन् जन हे फलबुद्धे फले फलाय बुद्धिर्यस्य स तत्संबुद्धौ त्वं इंद्रभे ज्येष्ठायां पविपाणिरिंद्रस्तस्य दिशं पूर्वां त्यज। एवमजपदृक्षे पूर्वभाद्रपदायामांतिकीं दिशं दक्षिणां त्यज । पुनरजभे रोहिण्यां वननेतुर्वरुणस्य दिशं पश्चिमां त्यज । पुनरर्यमभे उत्तरफाल्गुन्यां गौह्यकीं कौबेरीं उत्तरां त्यज ॥ ४१ ॥

दिनकृत्सितमंगलागवो यमशीतच्छविसौम्यमंत्रिणः ॥
हरितामधिपाश्च दिग्विभौ गमलग्ने न ललाटगे गमः ॥ ४२ ॥

अथ ललाटयोगं प्रयाणं निषेधति—दिनकृदिति ॥ सूर्यशुक्रभौमराहवः शनिचंद्रबुधगुरवश्चैते हरितां काष्ठानामधिपाः स्वामिनः संति तत्र गमलग्ने गमलग्नविषये ललाटगे ललाटगते दिग्विभौ सति गमो न स्यादनिष्टत्वाल्ललाटगतमूर्धादीनां । स्पष्टार्थस्तु पूर्वं दिग्द्वारकाव्ये प्रोक्तोऽस्ति ॥ ४२ ॥

कृपीटयोनेरुडुतः कुमंडले भचक्रवेदांश ४ समेतदिङ्मुखे ॥
जनो हुताशश्वसनाशमत्र तत्सूत्रं समुल्लंघ्य न पारिघं व्रजेत् ॥४३

अथोपमात्या परिघयोगचक्रमाह—कृपीटेति ॥ कृपीटयोनेरुडुतः कृत्तिकानक्षत्रात् कुमंडले भूमीतले भचक्रस्य नक्षत्रगणस्य वेदांशाश्चतुर्भागाः सप्तानां चतुष्केणाष्टाविंशतिनक्षत्राणि तेषां समेतानि सहितानि दिङ्मुखानि यस्मिंस्तस्मिन् विषयेऽत्र तत् पारिघं परिघभवं सूत्रमुल्लंघ्य जनो हुताशश्वसनाशमग्निवायुदिशं न व्रजेत् ॥ यतः प्राच्यादिदिक्चतुष्केषु क्रमाच्छुभो ऽन्यादिसप्तकचतुष्के प्रागुत्तरयोः प्रत्यग्याम्योर्मध्ये मध्योऽन्यथा परिघः 'अग्निमारुतयोर्मध्ये परिघस्तिष्ठते मही । देवा अपि न लंघंति न दैत्या न च मानवाः' ॥ ४३ ॥

अयोगिनीशूलककालपाशां नाशां यदा पारिघसूत्रमस्मिन् ॥
तदापि यायादुपसर्गलब्धावियात्तदुल्लंघ्यतु शुद्धकाष्ठाम् ॥ ४४ ॥

अथावश्यके परिघोल्लंघनमाह—अयोगिनीति ॥ यदा योगिनीशूलककालपाशरहिता आशाः संति पुनरस्मिन्दिग्विभागे पारिघसूत्रमस्ति तदापि जनो न यायान्नो गच्छेत् । पुनरुपसर्गलब्धौ आवश्यके तु तदुल्लंघ्य पारिघं भित्त्वा शुद्धकाष्ठां दूषणरहितदिशामियाद्व्रजेत् ॥ ४४ ॥

आशाविरुद्धे यदि सन्मुखः स्याद्राजा तदा मानफलाय यानं ॥
स नीचगो हीनकरावलब्धो न चेद्विशूलादिकुदिग्गुणाप्त्यै ॥४५॥

अथोपसंहारेण प्रयाणशुद्धिं निश्चिनोति—आशेति ॥ यदि चेत् आशाविरुद्धे दिशूलविरुद्धे राजा चंद्रः सन्मुखोऽस्ति तदा यानं मानफलाय विजोन्नतिफलाय स्यात् । चेत् स

लग्नो नीचगो न स्यात् । पुनः इनकरावलुप्तः सूर्यकिरणव्याकुलो न स्यात् । पुनर्विशूला दिक् दिक्शूलादिदोषवर्जिता दिगस्ति तदा याने गुणाप्त्यै गुणप्राप्त्यै स्यात् ॥४५॥

**याने समेऽल्पे च विलोक्यमेतच्छूलादिनीतित्वमतिप्रयाणं ॥**
**शस्तं तु शूलादिकृते विरुद्धे न राजवत्यां हरितीति सत्यम् ॥४६**

यान इति ॥ समेऽल्पे च याने प्रयाणे एतच्छूलादिनीतित्वं शूलादिनिर्णयत्वं विलोक्यं निभर्तना कर्तव्या इत्यर्थः ॥ तु पुनरतिप्रयाणं बृहत्प्रयाणं न शस्तं कस्मिन् शूलादिकृते विरुद्धे सति पुनर्हरिति दिशि राजवत्यां चंद्रयुक्तायां सत्यां सन्मुखचंद्रेऽपीत्यर्थः ॥इति सत्यं॥४६

**व्यवहृतिफलयानं मंजु पंचांगशुद्ध्या समुदयजययानं**
**लग्नादिक्शुद्धिवामं ॥ त्रिविधमलमनेहःशुद्धिमत्तीर्थ-**
**यानं त्वखिलगमनभेदः शाकुनोत्साहदृष्टः ॥ ४७ ॥**

अथ मालिन्या त्रिविधप्रयाणे व्यवहारादित्रिविधफलशुद्धिं दर्शयति--व्यवेति ॥ पंचांगशुद्ध्या कृत्वा व्यवहृतेर्व्यवहारस्य फलाय यानं व्यवहृतिफलयानं मंजु श्रेष्ठं स्यात् ॥ पुनः समुदयस्य शत्रुग्रामस्य जयस्तस्मै यानं प्रयाणं लग्नदिक्शुद्धिवामं लग्नस्य दिशश्च शुद्ध्या मनोहरं स्यात् ॥ पुनस्तीर्थयानमनेहःशुद्धिमत् कालशुद्धियुक्तं मनोहरं स्यात् ॥ इति त्रिविधं प्रयाणं अलमित्यवधारणे ॥ अथ तु पुनः अखिलगमनभेदः शाकुनोत्साहेन दृष्टः विलोकितः शाकुनोत्साहदृष्टः । अखिलगमनभेदे शाकुनोत्साहदृष्ट इत्यपि पाठः । एतेन शकुनविचारोऽपि भृशं चिंत्यः ॥ ४७ ॥

**भवति तदनु मुख्या सोमपां भशुद्धिः खचरश्रुति-**
**विशुद्धिर्भूभुजां च क्षणाद्या ॥ इतरजनगणानां शुद्धि-**
**रातस्कराणां शकुननयभवातः शेषशुद्धिर्विचिंत्या ॥ ४८॥**

अथ विप्रादीनां मुख्यामुख्यप्रयाणशुद्धिं दर्शयति—भवतीति ॥ सोमपां ब्राह्मणानां भशुद्धिर्नक्षत्रादिनशुद्धिर्मुख्या भवति । तदनु पश्चात् भूभुजां क्षत्रियाणां खचरश्रुतिविशुद्धिर्मुख्या भवति । इतरजनगणानां शूद्राणां क्षणाद्या मुहूर्ताद्या शुद्धिर्मुख्या भवति। आतस्कराणां नीचचौरपर्यंतानां शकुननयभवा शुद्धिर्मुख्या भवति। तदनु तस्या मुख्यायाः पश्चाच्छेषशुद्धिर्गौणी चिंत्या इति ॥ ४८ ॥

**जनीशराशीशदशेशलग्नपाः स्फुरत्प्रभाः सारभृतो गमे नृणां ॥**
**ददंत्यलं चारुफलं तु दिक्पतिः सकंटको भूरिमहा महार्थकृत् ॥ ४९ ॥**

अथ प्रयाणे जन्मादिस्वामिनो वर्णयति—जनीशेति ॥ जनीशो जन्मेशः राशीशो राशिस्वामी दशेशो दशास्वामी लग्नपो लग्नस्वामी एषां द्वंद्वे एते नृणां गमे गमनेऽ-

क्षमत्यर्थं चारु मनोहरं फलं ददति। किंभूता एते स्फुरत्प्रभाः अस्तरहिता इत्यर्थः ॥ पुनः किंभूताः सारभूता बलयुक्ताः तु पुनः सकंटकः केंद्रसहितः भूरिमहाः भूरि बहु महस्तेजो यस्य स एवंविधो दिक्पतिर्महार्थकृत्स्यात् ॥ ४९ ॥

**चरे चरांशे च गमं गुरुं विदो विदुः सतद्विप्रकृतौ समं वरं ॥**
**मितं समस्तेषु गृहेषु लग्नगैर्गमत्रयं नालि८कुलीर४शङ्खि१२भिः॥५०**

अथात्र लग्नशुद्धिमाह—चरइति ॥ विदः पंडिताः गुरुं गमं बृहत्प्रयाणं वरं विदुः कस्मिन् चरे चरलग्ने चरांशे चरनवांशे च पुनरेवं सतद्विप्रकृतौ द्विस्वभावराश्यंशयुक्तद्विस्वभावराशौ समं प्रयाणं वरं विदुः। पुनः समस्तेऽपि उदये लग्ने मितं प्रयाणं वरं विदुः। पुनरलिकुलीरशङ्खिभिः वृश्चिककर्कमीनराशिभिर्लग्नगैः कृत्वा गमत्रयं न विदुरिति ॥ ५० ॥

**स्वोदीरितै राशिभिरंगगैर्गमे शीर्षोदयो यातुरभीष्टसिद्धिकृत् ॥**
**पृष्ठोदयो यानफलापकृद्यथा तथा कचिचार्यमलोलभोदयः ॥५१॥**

स्वोदीरितैरिति ॥ शीर्षोदयो मिथुनसिंहकन्यातुलावृश्चिककुंभ इति गमे गमने यातुर्नरस्याभीष्टसिद्धिकृत् स्यात्। कैः स्वोदीरितैर्जन्मोद्भवै राशिभिः किंभूतैरंगगैः प्रथमभावगतैः कृत्वा पुनः पृष्ठोदयो मेषवृषधनुःकर्कमकरमीना इति पृष्ठोदयसंज्ञो यथा यातुर्यानफलापकृत् प्रयाणफलनाशकृत्स्यात् ॥ तथाच पुनः कचिदलोलभोदयः स्थिरलग्नोदयोऽयं तथा यानफलापकृत्स्यात् ॥ ५१ ॥

**यदाष्टमं संभवराशिलग्नतो गमांगमंगापकरं तु यायिनः ॥**
**तच्छासितारविनगौ तदामृतौ षष्ठं ६ समिष्टापदमातनोति ॥ ५२**

अथ प्रयाणे निषिद्धलग्नं दर्शयति—यदेति ॥ यदा संभवराशिलग्नतो गमांगं गमनलग्नमष्टमं स्यात्तदा यायिनो नरस्यांगापकरं शरीरनाशकरं स्यात् ॥ तु पुनस्तच्छासितारौ जन्मलग्नगमनलग्नस्वामिनौ इनगौ सूर्यमंडलगतौ तदाऽमृतौ मरणदायकौ स्यातां। पुनर्वाथवा जन्मलग्नतो गमनलग्नं षष्ठं तत् समिष्टापदं सम्यक् वांछितपदार्थेषु व्यापदं तनोति ॥ ५२ ॥

**समुद्यतो जेतुमरिव्रजं व्रजेल्लग्ने जनुष्पार्थिवयोगयोजिते ॥**
**जनेश्वरो यः स हि सर्वसंपदो जिताहितव्रातमुपैत्यसंशयम् ॥ ५३**

अथात्र जन्मराजयोगान्वर्णयति—समुद्यत इति ॥ यो जनेश्वरो नृपतिररिव्रजं रिपुसमूहं जेतुं समुद्यतः सन् व्रजेत् गच्छेत् कस्मिन् जनुष्पार्थिवयोगयोजिते जन्मराजयोगयुक्ते एवंविधे लग्ने हि युक्तार्थे स नृपोऽसंशयं निश्चितं अहितव्रातं रिपुसमूहं जित्वा सर्वसंपदः क्रमेपदं उपैति प्राप्नोति। अथवा स नृपोऽहितव्रातं जित्वा सर्वाः संपदो यस्य स सर्वसंपदः सन् उपैति स्वस्थानं समायाति ॥ ५३ ॥

यदा हि ते राशितनूनिमीलने प्रयाणलग्नेऽरिजनेरथावुत ॥
उत प्रयाणोदयगैस्तदीश्वरैर्यायी जनो याति यमालयं तदा ॥ ५४

यदेति ॥ हीत्यवधारणे यदा ते राशितनूजन्मराशिर्जन्मलग्नं च ताभ्यां निमीलनेऽष्टमराशी उत वितर्के अरिजनेः शत्रोर्जन्मराशिजन्मलग्नाभ्यामरौ षष्ठराशौ प्रयाणलग्ने चेद्यायी जनो यमालयं मृत्युं याति । उत यदा तदीश्वरैर्जन्मराशिजन्मलग्नादष्टमराशिस्वामिभिः शत्रोर्जन्मलग्नराशिभ्यां षष्ठभवनस्वामिभिर्वा प्रयाणोदयगैः प्रयाणलग्नगतैः प्रयाणं भवति तदा यायी गमनशीलो जनो यमालयं मृत्युं याति प्राप्नोति ॥ ९४ ॥

सारी सूतौ व्योमचारी सलग्नो राशिर्योऽसौ वेशराशिश्च राशेः ॥
स्वस्यादोषः पर्यवस्थातुरुच्चैः कालो यातुः संपदं संदधाति ॥ ५५॥

अथ मालिन्याह—सारीति ॥ सूतौ जन्मलग्ने सारी बलयुक्तो व्योमचारी ग्रहः सलग्नः प्रयाणलग्नमूर्तिस्थः च पुनः स्वस्य राशेः सकाशात् योऽसौ वेशिराशिः स निर्दोषो भवति तदा उच्चैरत्यर्थं पर्यवस्थातुः शत्रोः कालः स्यात् । यातुर्गमिनः संपदं दधाति पुष्णाति ॥ ९९ ॥

देह१काम७बल३गेह४वैरिगैः६ काव्यजीवयमराजमंगलैः ॥
यो जनो व्रजति योजनायुतं याति सोऽपि खलु तज्जयश्रियम् ॥५६॥

अथ रथोद्धतया प्रयाणलग्ने ग्रहभावशुद्धिमाह—देहेति ॥ यो जनो योजनायुतं योजनानां दशसहस्रं व्रजति गच्छति कैः कृत्वा काव्येन शुक्रगुरुचंद्रभौमैः किंभूतैरेभिः देहस्तनुभवनं १ कामः सप्तमं ७ बलं तृतीयं ३ गेहं चतुर्थं ४ वैरिः षष्ठं ६ एषु गतैः खलु निश्चितं सोऽपि जनस्तज्जयश्रियं रिपुजयलक्ष्मीं याति प्राप्नोति ॥ ९६ ॥

शूराहित६च्छिद्र८विदार्यविग्रहो१गमोदयोऽसौ प्रतिपक्षहा भवेत् ॥
अनीककामस्य हि नुस्तथोदयो विमानभावोपचयैर्निमंगलः ॥५७

अथोपजात्याह—शूरेति ॥ तदा नुः पुरुषस्य असौ गमः प्रयाणं प्रतिपक्षहा वैरिघातको भवेद्यदा गमोदयः प्रयाणलग्नमस्ति किंभूतोऽसौ गमोदयः शूरः सूर्योऽहिते षष्ठे यस्मिन् स शूराहितः पुनः किंभूतश्छिद्रेऽष्टमे विद्बुधो यस्मिन् स छिद्रवित् पुनः किंभूतः आर्यो गुरुर्विग्रहे तनुभावे यस्य स आर्यविग्रहः तथा पुनः किंभूतः विमानभावेषु दशमभावरहितेषु उपचयेषु त्रिषडेकादशमभावेषु ३।६।११ एभिः शनिर्मंगलश्च यस्य स इति । किंभूतस्य नुः अनीककामस्य संग्रामाभिलाषिणः हि युक्तार्थे ॥ ९७ ॥

घना१रिक्ष्मा१०नि हरीनजेंदवो घनारिमानानि समेत्य यायिनः ॥
ददत्युतेज्येऽगगतेऽर्थरलाभ११गाः परे यियासोरलमर्थलाभदाः ॥ ५८॥

घनेति ॥ हरिःसूर्यः इनजः शनिः इंदुश्चन्द्र एषां द्वंद्वे रविशनिचंद्राः यायिनो नरस्य घनारिमानानि स्वदारिपुसन्मानानि इइति सर्वेऽपि स्वशत्रवो नमंतीत्यर्थः ॥ किंकृत्वा घनारिमानानि घनं प्रथमं भवनं १ अरिः षष्ठं ६ मानं दशमं १० एतानि समेत्य प्राप्य एते गताः संत इत्यर्थः ॥ उताथवा इज्ये गुरौ अंगगते लग्नगते सति अपरे ग्रहा अर्थ२लाभ११गाः संतोऽलमत्यर्थमर्थलाभदाः स्युः कस्य यियासोर्गमनाभिलाषिणः ॥ ५८ ॥

कौशे४भवेत्कमलिनीपरिणायकश्चेत्स्मारः७
सवित्कविरिहाहवयानकाले ॥ यो ना प्रयात्यरि-
चमूभटकुंभिकुंभकंठीरवो भवति भूतलगीतकीर्तिः ॥ ५९ ॥

अथ वसंततिलकेनाह—कौशेति ॥ चेद्यदि कमलिनीपरिणायकः अब्जिनीपतिः सूर्यः कुशं जलं तत्र भवः कौशस्तस्मिंश्चतुर्थभावे भवेत् । पुनःसवित्कविः बुधयुक्तशुक्रः स्मारः सप्तमभावगतो भवेत्तदा इहास्मिन् आहवयानकाले संग्रामप्रयाणकाले यो ना पुमान् प्रयाति गच्छति स पुमान् अरिचमूभटा रिपुसैन्यसुभटा एव कुंभिनो गजास्तेषां कुंभेषु कंठीरवः सिंहसमो भवति । किंभूतः स भूतले गीता प्रसिद्धा कीर्तिर्यशो यस्य सः ॥ ५९ ॥

मित्रोदयं१राजमदं७स्वराज्यं राज्यं रिपोरिच्छति यो जनेशः ॥
नेतुं समेत्योदयमेवमीयात्तमादराद्वैरिजनेरितार्थः ॥ ६० ॥

अथोपजात्याह—मित्रेति ॥ यो जनेशो नृपो रिपोः शात्रवस्य राज्यं नेतुं गृहीतुमिच्छति स नृपो मित्रोदयं लग्नस्थसूर्यं पुना राजमदं सप्तमभावस्थचंद्रं पुनः स्वराज्यं स्वे धनभावे राज्यो बुधो यस्मिन् स तं एवंविधमुदयं लग्नं समेत्य प्राप्य ईयाद्गच्छेत् । नृपः किंभूतः आदरान् वैरिजनेन ईरिता अर्पिता अर्था यस्मै सः ॥ ६० ॥

क्ष्मापत्यपूर्वैरपि पंचभिर्ग्रहैरमित्रवामार७घनो१द्यमा३नुगैः ॥
नृपः स यो दिग्विजयोद्यमं चरेत्सर्वंसहानायकनीतमो भवेत् ॥ ६१ ॥

क्ष्मापत्येति ॥ यो नृपो दिग्विजयोद्यमं चरेत् गच्छेत् कैः क्ष्माया भूमेरपत्यं मंगलः क्ष्मापत्यपूर्वैर्भौमादिभिः पंचभिर्ग्रहैः कृत्वा किंभूतैर्भौमादिभिः अमित्रं षष्ठं ६ वार्जलं चतुर्थं मारः कंदर्पः सप्तमं ७ घनः शरीरं प्रथमं १ उद्यमस्तृतीयं ३ एषु गतैः स नृप इह लोके सर्वसहा भूमिस्तस्याः नायका राजानस्तेभ्यो नीता गृहीता मा लक्ष्मीः येन स एवंविधो भवेत् ॥ ६१ ॥

सराजमंत्रिमंगलार्कियो१दयो जयाय वा ॥
ग्रहत्रयं यियासतः सकंटका १।४।७।१०ऽऽ गमे ११शुभम्॥६२॥

अथ प्रमाणिकाछंदसाह—सराजेति ।। यियासतो गमनाभिलाषिणो नरस्य सह राजमंत्रिमंगलैश्चंद्रगुरुभौमैर्वर्तते यः स एवंविधः क्रियोदयो मेषलग्नं जयाय भवेत् । वा पुनर्ग्रहत्रयं चंद्रगुरुभौमत्रयं सह कंटकेन प्रथमचतुर्थसप्तमदशमभावेन वर्तते यः स चासौ आगमो लाभ एकादशभावश्च तस्मिन् शुभं शुभकारकं स्यात ।। ६२ ।।

**भवंति जातकोदिता महीशयोगसंचयाः ।।**
**त एव यानलग्नगा यियासतां जयप्रदाः ।। ६३ ।।**

अथ राजयोगानभिष्टौति—भवंतीति ।। त एव महीशयोगसंचयाः राजयोगसमूहा यियासतां गमनाभिलाषिनराणां जयप्रदा विजयदायकाः स्युः ।। किंभूताः जातके जन्मजातकशास्त्रे उदिता उक्ताः । पुनः किंभूताः यानलग्नगाः प्रयाणलग्ने आयाताः ।। ६३ ।।

**यथाबलं महीशयुक् तथा बलं धराधवे ।।**
**प्रयच्छति प्रयाणगं तदेव दर्शयाम्यहम् ।। ६४ ।।**

यथेति ।। यथा महीशयुग् राजयोगो यद् बलं धराधवे नृपे प्रयच्छति ददाति तथाहं तदेव प्रयाणगं प्रयाणवेलाप्राप्तं बलं दर्शयामि प्रकटीकरोमि ।। ६४ ।।

**शशिनि मंदवति स्मरगे७ऽश्वभे ९ऽमरपूरोधसि पूष्णयजभे भवेत् ।।**
**उदयगे जनितोऽवनिपो गमे निखिलनिर्जितभूतलभूमिपः ।। ६५।।**

अथ द्रुतविलंबितेन राजयोगानाह—शशिनीति ।। अवनिपो भूपः निखिलनिर्जितभूतलभूमिपः समस्तविजितभूमंडलनृपो भवेत् । कस्मिन् सति गमे प्रयाणे जनितो जन्मनः स्मरभे सप्तमभावे शशिनि चंद्रे किंभूते मंदवति शनियुक्ते पुनः कस्मिन् अश्वभे धनूराशौ अमरपुरोधसि गुरौ सति पुनः क अजभे मेषराशौ पूष्णि सूर्ये किंभूते सूर्ये उदयगे मूर्तिस्थे सति ।। ६५ ।।

**मकर१०मंगलमंगलसच्छ्रियं रविजभाजमुपेत्य न नेति ना ।।**
**धनुषि९राजविकर्तनयोः स वै नरपतित्वमुपेत्यखिलेंदिरम् ।। ६६ ।।**

मकरेति ।। वै इति हेतौ स ना पुमान्नरपतित्वं भूपत्वं न उपैति इति न द्वौ नकारौ प्रकृत्यर्थं सूचयतः प्राप्नोतीत्यर्थः । किंकृत्वा मकरमंगलं मकरराशिस्थमंगलं उपेत्य प्राप्य किंभूतं मकरमंगलं रविजभाजं शनियुक्तं पुनः किंभूतं अंगे लग्ने सती श्रीर्यस्य स तं अंगलसच्छ्रियं पुनः कयोः सतोः धनुषि धनूराशौ राजविकर्तनयोः चंद्रार्कयोः सतोः ' द्युपतिर्विकर्तन ' इति हैमः ।। किंभूतं नरपतित्वं अखिला समस्ता इंदिरा लक्ष्मीर्यस्मिंस्तत् अखिलेंदिरं ।। ६६ ।।

**धवलभासि मृगो१०दयशालिनि श्रितरसासुवि भूविसुरश्व९भे ।।**
**भवति भास्वति पौरुषपावकज्वलितवैरिकुलोऽरिकुलो नरः ।। ६७ ।।**

धवलेति ॥ नरो भूविभुर्भूपो भवति गमे प्रयाणे इति शेषः ॥ कस्मिन् मृगोदयशालिनि मकरलग्नशोभायुक्ते धवलभासि चंद्रे किंभूते धवलभासि श्रितरसाभुवि आश्रितभौमे पुनः क सति अस्त्रभे धनूराशौ भास्वति सूर्ये सति किंभूतो नरः पौरुषे प्रतापे एव पावके ज्वलितानि दग्धानि वैरिकुलानि रिपुसमूहा येन सः । पुनः किंभूतो नरः अरीणां शात्रवानां कुं भूमिं लाति गृण्हाति इति डप्रत्ययेऽरिकुल इति ॥ ६७ ॥

**यदि समेत्य विनेतुमरिश्रियं सविधुतावुरिभोदयमीहते ॥**
**गुरुमदं७हरिशं४हरिजांबरं१०वसुमतीपतिराशु समाव्रजेत् ॥ ६८**

यदीति ॥ यदि चेत् वसुमतीपतिर्भूपोऽरिश्रियं विनेतुं विनाशीकर्तुं गृहीतुं वा ईहते इच्छति तदा आशु शीघ्रं समाव्रजेत् गच्छेत् । किंकृत्वा सविधुतावुरिभोदयं चंद्रसहितवृषलग्नमेत्य प्राप्य किंभूतं तावुरिभोदयं गुरुर्मदे सप्तमे यस्य स तं गुरुमदं पुनः किंभूतं हरिः सूर्यः शे चतुर्थे भावे यस्य स तं हरिशं पुनः किंभूतं हरिजः शनिरंबरे दशमभावे यस्य स तं हरिजांबरं ॥ ६८ ॥

**मिहिरजन्मनि ना मकरो१०दये व्रजति राजगुरुज्ञरसाभवैः ॥ सहज३ रिःफ१२नभो१०ऽहित६चारिभिर्नयति योऽर्जुनवीर्यविरोधिगाम् ॥६९॥**

मिहिरेति ॥ मिहिरजन्मनि शनौ मकरोदये मकरलग्नविषये सति यो ना पुमान् व्रजति गच्छेत् कैः कृत्वा राजा चंद्रः गुरुः ज्ञो बुधः रसाभवो भौमः एषां द्वंद्वे तैः किंभूतैः तैः सहजस्तृतीयं ३ रिःफं द्वादशं १२ नभो दशमं १० अहितः षष्ठं ६ एषु भावेषु चारिभिर्गमनशीलैः स जनः अर्जुनवीर्यविरोधिगा नयति प्राप्नोति अर्जुनस्य पार्थस्य वीर्यं पराक्रम इव पराक्रमो येषां ते च ते विरोधिनो रिपवश्च तेषां गा भूमिं नयति ॥ योऽर्जुनवीर्यविरोधिनामित्यपि पाठे स्पष्टं । यथा कश्चित् बलिष्ठोऽर्जुनवीर्येण पराक्रमेण विरोधिनीं गोवशीलां गां सौरभेयीं वा नयति इत्युक्तिलेशः ॥ ६९ ॥

**झष१२विशेषभुजा सयमासृजा धिषणधिष्ण्यमृगांकवहं धनुः ॥**
**विदि वशोदय६भाजि यदा गमे हरिबलारिबलापकरो नरः ॥ ७० ॥**

झषेति ॥ यदा गमे प्रयाणे धिषणो गुरुः धिष्ण्यः शुक्रः मृगांकश्चंद्र एषां द्वंद्वे एतान् वहति बिभर्ति एतद्ग्रहयुक्तं धनुः स्यात् ॥ किंभूतं धनुः यमेन शनिना सह वर्तते यः स सयमः स चासौ असृग् भौमश्च तेन उपलक्षितं । किंभूतेन सयमासृजा झषेषु मीनेषु विशेषः श्रेष्ठः झषविशेषो मकरस्तं भुनक्ति इति भुक् तेन भुजा मकरराशियुक्तेन तदा नरः पुमान् हरिबलारिबलापकरो भवेत् हरेः सिंहस्य बलमिव बलं एषां ते च तेऽरयश्च तेषां बलं वीर्यं बलां लक्ष्मीं वाऽपकरोति हरतीति कस्मिन् सति वशोदयभाजि कन्यालग्नयुक्ते विदि बुधे सति ॥ ७० ॥

---

१ विजेतुमिति कुत्रचित्पाठः ।

अनिमिषोदय१२गेऽमृतदीधितौ करिकरे१०ऽसृजि पूष्णि सलेयभे५ ॥
कलशवर्तिनि११ योंऽशुभुवि व्रजेदखिलमैलविलस्वमिहानयेत ॥ ७१ ॥

अनिमिषेति ॥ यः पुमान् व्रजेत् कस्मिन् सति अमृतदीधितौ चंद्रेऽनिमिषोदयगे मीनलग्नगते पुनः क असृजि भौमे करिकरे मकरे सति पुनः क पूष्णि सूर्ये लेयभे सिंहराशौ सति पुनः क अंशुभुवि शनौ कलशवर्तिनि कुंभराशियुक्ते सति स इह जगति अखिलं संपूर्णं ऐलविलस्य कुबेरस्य स्वं धनमिव धनं नयेत् प्राप्नुयात् ॥ ७१ ॥

मतिसखः श्रिततुंगपदोंऽगगो गवि२ कवींदुविदो मिहिरोऽज१गः ॥
यदि गमी लभते परसंपदं नरवरो रवरोधितशात्रवः ॥ ७२ ॥

मतिसखेति ॥ यदि अंगगो लग्नगतः श्रिततुंगपदः उच्चस्थानगत एवंविधो मतिसखा गुरुः स्यात् । पुनः कवींदुविदः शुक्रचंद्रबुधाः गवि वृषराशौ स्युः । पुनरजगो मेषराशिगतो मिहिरः सूर्यः स्यात्तदा गमी पुमान् परसंपदं शत्रुलक्ष्मीं लभते प्राप्नोति । किंभूतो गमी नरवरः पुरुषश्रेष्ठः पुनः किंभूतः रवेण शब्देन रोधिताः क्षुभिताः शात्रवा येन स रवरोधितशात्रवः ॥७२॥

अवि१कुलीर४तुला७जितुमानि३चेद्विभुयुतानि समंदमृगो१०दये ॥
शयगतैव गतस्य नुरिंदिरा क्षितिभुजोऽतिभुजोत्कटतावतः ॥ ७३ ॥

अवीति ॥ चेद्यदि समंदमृगोदये शनियुक्तमकरलग्ने विभुयुतानि निजस्वामिभिर्युक्तानि अविकुलीरतुलाजितुमानि मेषकर्कतुलामिथुनानि स्युस्तदा गतस्य प्रयाणकारस्य नुः पुंसः शयगता एव हस्तगता एव इंदिरा लक्ष्मीर्भवति। किंभूतस्य नुः क्षितिभुजो भूमिभोक्तुः पुनः किंभूतस्य अतिभुजोत्कटतावतः प्रलंबभुजयोरुत्कटता तद्वतस्तद्युक्तस्य ॥ ७३ ॥

संविदि भीरुधने १ कविमानभे१० ऽनु मद७राजगुरौ मति५मंगले ॥
गमनमाशु विधाय मतीन५जे वृणु नृवीर१० विरोधिजयश्रियम् ॥७४ ॥

सविदीति ॥ हे नृवीर नृणां मध्ये शूर त्वं विरोधिजयश्रियं शत्रुजयलक्ष्मीं वृणु प्राप्नुयाः किंकृत्वा आशु शीघ्रं गमनं विधाय कस्मिन् भीरुधने कन्यालग्ने संविदि बुधयुक्ते पुनः किंभूते कविमानभे दशमभावे शुक्रे पुनः किंभूते अनु पश्चात् मदराजगुरौ सप्तमभावे चंद्रे गुरौ च पुनः मतिमंगले पंचमभावे भौमे पुनः मतीनजे पंचमभावे शनौ सति सर्वाणि भीरुधनेत्यस्य विशेषणानि ॥ ७४ ॥

---

१ क्वचित् सविद्युरितिपाठः

सुखमगोगतयः क्रतु९केंद्रगाः १।४।७।१०। श्रितवि-
खोपचय ३।६।१०।११खला ग्रहाः ॥ यदि भवंति
तदा गमकृज्जनोऽसहनसंचितरायमिहाश्नुते ॥ ७५ ॥

सुखेति ॥ यदि सुखेन मीयंते इति सुखमाः 'सुखमाः सुखमानि शोभनं' इति हैमः ॥ अथवा सुखमाः सौम्याश्च ते गोगतयो ग्रहाश्च ते सौम्यग्रहाः क्रतुर्नवमं ९ केंद्राणि १।४।७।१० एषु गता भवंति च पुनः खला ग्रहाः श्रितविखोपचचर्क्षाः दशमवर्जितेषु उपचयेषु गता भवंति विगतं खं दशमं येभ्य ३।६।११। इति तदा गमकृत् गमनकारको जनः पुमान् इह जगति असहनैः शत्रुभिः संचितां मौलिकीं रायं लक्ष्मीं अश्नुते प्राप्नोति ॥ ७५ ॥

योगाः कियंतो नृपनामभूताः प्रकीर्तिता ये भुवि हौरिकेयैः ॥
मयोदितास्ते त्वपरे विलोक्या जयाय यातुः खलु जातकोक्ताः ॥७६॥

योगा इति ॥ हौरिकेयैः होराज्ञानविद्भिर्भुवि पृथ्व्यां ये नृपनामभृता राजसंज्ञका योगाः प्रकीर्तिताः मया ते कियंतो योगाः खलु निश्चितं यातुः प्रयाणकारकस्य जयाय उदिता उक्ताः तु पुनरपरे योगा जातकोक्ता विलोक्याः ॥ ७६ ॥

महत्प्रयाणेऽखिलवर्णलोकैरमी प्रदृश्याः पृथुराजयोगाः ॥
तथा त्रिधाभ्यागमयानकाले सर्वत्र भावस्थितिखेटयोगाः ॥७७॥

अथ राजयोगानामुपसंहारमाह—महदिति ॥ अखिलवर्णलोकैः चतुर्वर्णजनैरमी एते पृथुराजयोगाः महत्प्रयाणे प्रदृश्या विलोकनीयाः । तथा त्रिधाभ्यागमयानकाले त्रिविधसंग्रामप्रयाणसमये भावस्थितिखेटयोगाः द्वादशभावस्थग्रहयोगाः सर्वत्र विलोक्याः ॥ ७७ ॥

कलेवरं १ कोशभ२मस्त्र३वाहने ४मंत्रो५ऽहितः ६
पद्धति७रायु८र्मानसे ९ ॥ व्यापारभं १० लब्धि११
रलब्धि१२रित्यमी भावा विचिंत्या विबुधैर्गमोदयात् ॥ ७८ ॥

अथ प्रयाणलग्ने द्वादशभावनामान्याह—कलेवरमिति ॥ विबुधैरिति ॥ अमी गमोदयाः प्रयाणोदया भावाः विचिंत्या इति किं तानाह ॥ कलेवरं शरीरं १ कोशभं भांडारगेहं २ धनभवनं अस्त्रं धानुष्कं ३ वाहनं ४ अनयोर्द्वंद्वः मंत्र आलोचनं ५ अहितः शत्रुः ६ पद्धतिर्मार्गः ७ आयुः ८ मानसं चित्तं ९ अनयोर्द्वंद्वः व्यापारः १० लब्धिः ११ अलब्धिर्व्ययः १२ ॥ ७८ ॥

सराजराजग्रहमंदराहवो गमोदयस्था विसृजंति चापदं ॥
विराजमंतोऽखिलसंपदं नृणामशेषयाने सततं यियासताम् ॥७९ ॥

अथ द्वादशभावेषु प्रयाणलग्ने प्रथमभावफलमाह—सराजेति ॥ सह राज्ञा चंद्रेण वर्तेते सराजौ च ते राजग्रहौ रविभौमौ च मंदः शनिश्चरः राहुश्च द्वंद्वे

चंद्रयुक्तरविभौमशनिराहवो गमोदयस्थाः सततं निरंतर यियासतां गमनाभिलाषिणां नृपाणामापदं विसृजंति कुर्वंति कस्मिन्नशेषयाने समस्तप्रयाणे चपुनर्विराजः संतः शुभग्रहाः अखिलसंपदं विसृजंति शेषं योज्यं इति प्रयाणलग्नप्रथमभावफलं !! ७९ ॥

**शुभा गमर्द्धिं ददतीह सारगाः सारं हरंत्यन्यखगामिनो गमे ॥**
**सहोत्थगाः सर्वसमृद्धिदायिनोऽनिलाध्ववेगा निखिला उदीरिताः॥८०**

अथ द्वितीयभावफलमाह—शुभेति ॥ सारगाः धनभावस्थाः शुभाः शुभग्रहाः गमर्द्धिं प्रयाणलक्ष्मीं ददति कस्मिन्निह गमे प्रयाणे पुनरन्यखगामिनः पापग्रहाः धनस्थाः सारं द्रव्यं हरंति ॥ अथ प्रयाणे तृतीयभावफलमाह ॥ हि निश्चितं निखिलाः सर्वे अनिलाध्वनि मरुत्पथे आकाशे वेगो गमनं एषां ते ग्रहाः सहोत्थगाः सहजभावस्थाः सर्वसमृद्धिदायिन उदीरिता उक्ताः ॥ ८० ॥

**संतो वने ४ शं वितरंत्यशं परेऽपरे कवीज्येंदुज-**
**तोऽपसिद्धये ॥ भवंत्यपत्ये५ गमिनोऽभ्रगामिनो**
**विरोहिणीशा निखिला रिपौ ६ हिताः ॥ ८१ ॥**

अथ प्रयाणे चतुर्थभावफलमाह—संत इति ॥ वने जले चतुर्थभावे संतः शुभग्रहाः शं सुखं वितरंति ददति परे अपरेऽशुभग्रहाः अशं दुःखं वितरंति॥ अथ प्रयाणे पंचमभावफलमाह ॥ अपत्ये पंचमभावे कवीज्येंदुजतः शुक्रगुरुबुधेभ्यः सकाशात् अपरेऽन्ये रविचंद्रभौमशनयोऽपगता सिद्धिर्येभ्यस्तेऽपसिद्धयो निष्फला भवंति । अर्थात् शुक्रगुरुबुधाः सिद्धिकारका भवंति॥ अथ प्रयाणे षष्ठभावफलमाह ॥ रिपौ षष्ठभावे विरोहिणीशाश्चंद्ररहिता अखिला अभ्रगामिनो ग्रहाः हिता हितकारिणो भवंति गमिनः पुंस इति सर्वत्रापि योज्यं ॥ ८१ ॥

**जयं दधत्यार्यविदिंदवो मदे७ मदं परे पालयितुं सुशक्तयः ॥**
**न यानजं चात्तरि८वित्सितोऽगिरा गिराप्तये चात्तृकृतोऽपरे ग्रहाः॥८२**

अथ प्रयाणलग्ने सप्तमभावफलमाह—जयमिति ॥ मदे सप्तमभावे आर्यविदिंदवो गुरुबुधचंद्राः जयं दधति पुष्णंति पुनर्मदे सप्तमेऽपरे रविभौमशुक्रशनयो यानजं प्रयाणप्राप्तं पुमांसं पालयितुं रक्षणाय न सुशक्तयो न समर्था भवंति गंता नरः क्षयं यातीत्यर्थः ॥ अथ प्रयाणे ऽष्टमभावफलमाह ॥ अत्तरि मृत्यौ अष्टमभावे विद् बुधः सितः शुक्रः च पुनरंगिरा गुरुश्चैते गिराप्तये वाणीप्राप्तये देशलब्धये वा भवंति 'गीस्तु वाचि सरस्वत्यां दुर्गायां ककुभि स्मृता' इति महीपः॥ च पुनरष्टमे भावेऽपरे ग्रहा अतृकृतो मृत्युकारकाः स्युः ॥ ८२ ॥

**नेनेनिराजारतमांसि भाग्यं भाग्याश्रिता९नीह दिशंति यातुः ॥**
**सिद्ध्यै परेऽकार्यमा नभ१०स्थास्त्वपाटवायाशुभाःशुभाः स्युः ॥८३॥**

अथ प्रयाणे नवमभावफलमाह—नेनैनीति ॥ इनः सूर्यः ऐनिः शनिः राजा चंद्रः आरो भौमः तमो राहुः एषां द्वंद्वे एतानि तमःशब्दस्य राहौ पुंनपुंसकत्वादत्र नपुंसकत्वमिति। एते ग्रहा यातुर्नरस्य इह गमने भाग्यं पुण्योदयं न दिशंति न ददतीत्यर्थः ॥ किंभूतानि इनैनि-राजारतमांसि भाग्याश्रितानि नवमभावगतानि ॥ अपरे बुधगुरुशुक्राः सिद्धचै स्युः ॥ अथ प्रयाणे दशमभावफलमाह ॥ नभस्थाः दशमभावस्था अर्कारयमा रविभौमशनयोऽपाटवाय रोगाय स्युः 'मांद्यं व्याधिरपाटवम्'इति हैमः ॥ तु पुनः अगुश्च शुभाश्चेति द्वंद्वेऽगुशुभाः राहुशुभग्रहाः शुभाः समीचीनाः स्युः ॥ ८३ ॥

**सर्वे समीरायनचारिणो गमे फलागमर्ध्यै च फलागमा११श्रयाः ॥**
**व्यया१२श्रया राजखलाः खलव्ययं तन्वंति गामार्यकवींदुजा नृणाम्॥८४**

अथ प्रयाणे एकादशभावफलमाह—सर्वइति ॥ इति समीरायने आकाशे चारिणो ग्रहाः सर्वे नृणां फलागमर्ध्यै फललाभसंपदे स्युः ॥ किंभूता ग्रहाः फलागमाश्रया एकादशभावस्थिताः कस्मिन् गमे प्रयाणे। अथ प्रयाणे द्वादशभावफलमाह ॥ खलु निश्चितं व्ययाश्रयाः व्ययभवन-गता राजखलाश्चंद्रपापग्रहा व्ययं तन्वंति पुनर्व्ययगता आर्यकवींदुजाः गुरुशुक्रबुधाः गां दीप्तिं सुखं वा तन्वंति ॥ ८९ ॥

**त्रिकोण५।९।केंद्र१।४।७।१०द्युसितज्ञमंत्रिणामेकेन यो-**
**गोऽल्पफलोऽधियोगकः ॥ द्वाभ्यां तथा मध्यफलस्त्रि-**
**भिर्भवेद्योगाधियोगोऽतिफलो यियासताम् ॥ ८५ ॥**

अथ न्यूनाधिकयोगे न्यूनाधिकफलमाह—त्रिकोणेति ॥ त्रिकोण९।५ केंद्रेषु १।४।७१० सितज्ञमंत्रिणां शुक्रबुधगुरूणां मध्ये एकेन सह योग उच्यते सोऽल्पफलोऽल्पं फलं यस्मात् स तथा द्वाभ्यामधियोगकोऽधिकयोगो मध्यफलो भवेत्तथा त्रिभिर्योगाधियोगो योगाधि-कयोगोऽधिफलोऽधिकफलदायको भवेत् । यियासतां गमनाभिलाषिणां ॥ ८९ ॥

**उदीरितानेहसि योगयात्रा यात्रा विधेयोक्तमुहूर्तकाला ॥**
**सैवोत्तमा स्याच्छकुनैरतोऽहं ब्रुवे मुहूर्ताच्छकुनाननेकान् ॥ ८६॥**

अथ शकुनसंधानमाह—उदीरितेति ॥ उदीरितानेहसि कथितकाले यात्रा प्रयाणं विधेया कार्या पुंभिरिति शेषः ॥ किंभूता यात्रा योगयात्रा शुभयोगान्विता पुनः किंभूता उक्तमुहूर्तकाला उक्तो मुहूर्तकालो यस्याः सेति सा यात्रा शकुनैरुत्तमा श्रेष्ठा स्यादतः-कारणादहमनेकाञ्छशकुनान् ब्रुवे कथयामि ॥ ८६ ॥

**अहीं८दु१बाण५द्वि२भवा११नुमं हरेर्हरेरिभ८द्वीं२दु१दि-**
**नां१५क९मं दिने॥ रामा३गमा४भूधर७नंद९भानु१२**
**दिक्१०नृप१६प्रमं यामदलं वरं कुजे ॥ ८७ ॥**

अथात्र काव्यद्वयेन सप्तवाराणां यामार्द्धान्याह—अहीति ॥ हरेः सूर्यस्य दिनेऽहिरष्टमं ८ इंदुः प्रथमं १ बाणः पंचमं ५ द्वौ द्वितीयं २ भव एकादशं ११ एषां द्वंद्वे एभिरनुमीयते तत् एतत्प्रमाणं यामार्द्धं वरं शुभं स्यात् ॥ एवं हरेश्चंद्रस्य दिने इभोऽष्टमं ८ द्वौ द्वितीयं २ इंदुः प्रथमं १ दिनः पंचदश १५ अंको नवमं ९ एभिर्माः प्रमाणं यस्य तत् एतद्यामार्द्धं वरं स्यात् । कुजे भौमवारे रामास्तृतीयं ३ आगमाश्चतुर्थं ४ भूधराः सप्तमं ७ नंदाः नवमं ९ भानवो द्वादशं १२ दिग् दशमं १० नृपाः षोडशं १६ एभिः प्रमा प्रमाणं यस्या तद्यामार्द्धं वरं स्यात् ॥ ८७ ॥

**दृ२गंग६दिङ्१०मं विदि गो९ऽष्ट८दृ२ग्द्यु१५दिक्१०बाणा५नुमं मंत्रिणि वोशनोऽहनि ॥ तिथीं१५द्र१४ विश्वा१३हि८दिग१०क्ष ५तर्क६मं यमेऽक्ष५गो९रुद्र ११ दि१०गिंद्र१४भूप१६मम् ॥ ८८ ॥**

दृगमिति ॥ विदि बुधवारे दृग् द्वितीयं २ अंगानि षष्ठं ६ दिग् दशमं १० एतत्प्रमं यामार्द्धं वरं स्यात् ॥ मंत्रिणि गुरुवारे गौर्नवमं ९ अष्टौ अष्टमं ८ दृग् द्वितीयं २ द्यु पंचदशं १५ दिग् दशमं १० बाणाः पंचमं ५ एभिरनुमीयते तदनुमं यामार्द्धं वरं स्यात् ॥ उशनोऽहनि शुक्रवारे तिथिः पंचदशं १५ इंद्रश्चतुर्दशं १४ विश्वे त्रयोदशं १३ अहिरष्टमं ८ दिग् दशमं १० अक्षाणि पंचमं ५ तर्काः षष्ठं ६ एभिर्मा प्रमाणं यस्य तत् यामार्द्धं वरं स्यात् ॥ यमे शनिवारे अक्षाणि पंच ५ गौर्नवमं ९ रुद्र एकादशं ११ दिग् दशमं १० इंद्रश्चतुर्दशं १४ भूपः षोडशं १६ एभिः प्रमं यामार्द्धं वरं स्यात् ॥ ८८ ॥

**भवाहिमित्रादिभुवो वसूदके विश्वे विधिः को हरिरिंद्रपावकौ ॥
रक्षोंऽबुपालार्यमयोनयो दिने भवंत्यमी पंचदश१५क्षणाधिपाः ॥८९**

अथैकस्मिन्नेव दिने पंचदशमुहूर्ताधिपानाह—भवेति ॥ भव ईशः आर्द्रा १ भुजगः सर्पोऽश्लेषा २ मित्रः सूर्योऽनुराधा ३ आदिभुवः पूर्वजा मघा ४ एषां द्वंद्वे बहुवचनं वसवो धनिष्ठा ५ उदकं जल पूर्वाषाढा अनयोर्द्वंद्वे द्विवचनं विश्वे उत्तराषाढा ७ विधिरभिजित् ८ को ब्रह्मा रोहिणी ९ हरिरिंद्रो ज्येष्ठा १० इंद्रपावकौ शक्राग्नी विशाखा ११ रक्षो मूलं १२ अंबुपालो वरुणः शतभिषक् १३ अर्यमा उत्तराफाल्गुनी १४ योनिः पूर्वाफाल्गुनी १५ अमी पंचदश क्षणाधिपा मुहूर्तनायकाः दिने वासरे भवंति ॥ स्वामित्व संबंधात् नक्षत्राणि लिखितानि तानि च मुहूर्तसंज्ञानि अग्रे कार्यत्वात् ॥ ८९ ॥

**शार्जांघ्र्यहिर्बुध्न्यकपूषदस्रायमानलाजेंद्रदितींद्रवंद्याः ॥
जिनो रविस्त्वष्टमहाबलाख्या निशि क्षणेशास्तिथि१५माःसदा स्युः ॥ ९०**

अथ शार्दूलविक्रीडितेन रात्रौ पंचदशमुहूर्ताधिपानाह—शाजेति ॥ शः शिवः १ अजांघ्रिरजपादः २ अहिर्बुध्न्यकः ३ पूषा ४ दस्रो ५ यमः ६ अनलोऽग्निः ७ अजो ब्रह्मा ८ इंदुः ९ अदितिः १० इनवंद्यो गुरुः ११ जिनो विष्णुः १२ रविः १३ त्वष्टा १४ महाबलाख्यो वायुः १५ 'पृषदश्वो महाबलः' इति हैमः । एषां द्वंद्वे बहुवचनं सदा निशि रात्रौ एते क्षणेशाः मुहूर्तनायकास्तिथिमाः पंचदशसंख्याः स्युरत्रापि नक्षत्राणि ग्राह्याणि ॥ ९० ॥

आर्यम्णस्तरणौ विधौ विधिलवो रक्षोलवःक्ष्माजनौ पैत्र्यो
धौमनिकेतनः क्षण इमेऽसद्रौहिणेयेऽष्टमः॥ जीवे यातुज-
लक्षणावुशनसि ब्राम्ह्याग्रजौ भास्करौ शार्वौ वैषधरौ
गमे बुधवरैर्हेयास्तथा मंगले ॥ ९१ ॥

अथ रव्यादिवारेषु त्याज्यमुहूर्तानाह—आर्येति ॥ तरणौ रविवारे अर्यम्णः सूर्यस्यायं आर्यम्णो लवो मुहूर्तो हेयस्त्याज्य एवं विधौ चंद्रवारे विधिलवो रक्षोलवश्च द्वौ पुनः क्ष्माजनौ भौमवारे पैत्र्यःपूर्वजलवः १ धौमनिकेतनोऽग्निसंबंधिलव इमौ द्वौ पुना रौहिणेये बुधवारेऽष्टममभिजिदसद्दुष्टं पुनर्जीवे गुरुदिने यातु राक्षसो जलं च तौ क्षणौ लवौ पुनरुशनसि शुक्रवारे ब्राम्ह्याग्रजौ ब्रह्मपूर्वजसंबंधिलवौ पुनर्भास्करौ शनिवारे शार्वौ रुद्रसंबंधिलवश्च बुधवरैरिमे लवा गमे प्रयाणे तथा मंगले विवाहादौ हेयास्त्याज्याः ॥ ९१ ॥

यद्धिष्ण्यं हि यथा गतौ विकलितं तस्मिंस्तदीये क्षणे
यानं मानपरं गमे भवति नो मध्ये क्षणे दक्षिणां ॥
यायाच्चापरादिक्षु तत्र गमनं सिद्ध्यै सदा या क्रिया
यस्मिन्भे गदिता तदृक्षविरहे स्यात्तत्क्षणेऽपीष्टदा ॥ ९२ ॥

अथैषां व्यवहारमाह—यद्धिष्ण्यमिति ॥ हि निश्चितं यद्धिष्ण्यं नक्षत्रं यथा गतौ गमने निगदितं तथा तस्मिन् नक्षत्रे तदीये क्षणे तस्य नक्षत्रस्य लवे यानं प्रयाणं मानपरं श्रेष्ठं भवेत् । कस्मिन् गमे पुनः पुमान् मध्ये क्षणेऽभिजिन्मुहूर्ते दक्षिणां दिशं नो यायात् । च पुनस्तत्राभिजिन्मुहूर्तेऽपरदिक्षु दक्षिणावार्जितदिक्षु गमनं सिद्ध्यै स्यात् । पुनर्यस्मिन् भे नक्षत्रे सदा या क्रिया गदिता प्रोक्ता पुनस्तदृक्षविरहे तत्क्रियोक्तनक्षत्राभावे तत्क्षणे तस्य नक्षत्रस्य मुहूर्तेऽपि सा क्रिया इष्टदा स्यात् ॥ ९३ ॥

मिश्रैरलोलैः प्रथमान्हि भैः क्षणैर्न दारुणैर्म-
ध्यादिनेऽपराण्हके ॥ क्षिप्रैः प्रदोषे मृदुभि-
स्तमीदले क्रूरैर्निशांते च चलैर्गमो भवेत् ॥ ९३ ॥

अथोपजात्या प्रयाणे क्षणनक्षत्रैः कालनिर्णयमाह—मिश्रैरिति ॥ प्रथमान्हि पूर्वाह्णकाले मिश्रैरलोलैःस्थिरैर्भैर्नक्षत्रैर्गमो गमनं न मध्यदिने दारुणैः क्षणैर्भैर्गमो न पुनरपराण्हके

क्षिप्रैः क्षणैर्भैर्गमो न पुनः प्रदोषे यामिनीमुखे मृदुभिर्गमो न स्यात् । च पुनस्तमीदले ऽर्द्धरात्रे क्रूरैर्गमो न पुनर्निशांते चरैर्गमो न भवेत् ॥ ९३ ॥

इति प्रसन्नास्तु विशेषकालतस्ताराः समस्ता गमने बभाण यः॥
अतोऽन्यकालानुगतास्तदन्वयान्मतं तदीयं यदनुद्धतं बत ॥ ९४॥

अथात्र कस्यचिन्मतमाह—इति प्रसन्नेति ॥ यः कश्चित् गमने प्रयाणे तुरित्य-वधारणे विशेषकालतः समस्तास्तारा नक्षत्राणि बभाण जगौ किंभूतास्तारा इति प्रकारेण प्रसन्ना निर्दोषाः अतःकारणात् पुनः किंभूतास्तारास्तदन्वयात्तत्सद्भावात् अन्यका-लानुगता अन्यसमयप्राप्ताः बत वितर्के यतः कारणात्त्वदीयं मतमनुद्धतं नीतिगतं ॥९४ ॥

दधिघृतफलमीनक्षौद्रगोरोचनाब्जध्वजमुकुरपयोऽन्नोष्णी-
षभृंगारवीणाः ॥ कुसुमधवलधान्यछत्रशंखांजनास्त्र-
ज्वलदनलनृयानेभाश्वशुक्लोऽक्षकन्याः ॥ ९५ ॥

अथ मालिन्या काव्यत्रयेण दक्षिणगान् शुभसूचकशकुनानाह—दधीति ॥ दधि घृतं फलानि मीनो मत्स्यः क्षौद्रं मधु गोरोचना गोपित्तं ओषधिश्च अब्जं कमलं ध्वजः पताका मुकुरो दर्पणः पयो दुग्धं अन्नं उष्णीषं मुकुटः ' भृंगारः कनकालुका ' इति हैमः ॥ शुक्लकुंभ इति रत्नमाला ॥ वीणा घोषवती कुसुमानि पुष्पाणि धवलधान्यं छत्रं शंखः अंजनं कज्जलं अस्त्रं धनुरादि ज्वलदनलो निर्धूमोऽग्निः नृयानं शिबिका इभो हस्ती अनुन्मत्तः अश्वो घोटकः शुक्लोऽक्षः श्वेतवृषभः अबद्धः कन्या कुमारी एषां द्वंद्वे ॥ ९५ ॥

फलकुशवसुसिद्धार्थाक्षतछागमृत्स्नाः सजलकलशवेश्या-
रत्नभद्रासनानि ॥ नकुलसुरभिभूषाव्यालभक्ष्याखु-
विप्राः सतनयवनिता व्याघ्राटकीरेक्षुभूपाः ॥ ९६ ॥

फलेति ॥ फलानि मदनफलानि कुशो दर्भः वसु द्रव्यं सिद्धार्थः श्वेतसर्षपः अक्षता लाजाः छागोऽजः मृत्स्ना शुभमृत्तिका सजलकलशो जलपूर्णकुंभः वेश्या गणिका रत्नानि भद्रासनं सिंहासनं नकुलः सुरभिर्धेनुः भूषालंकारः व्यालभक्ष्या मयूराः आखुः मूषकः विप्रौ द्वौ बहवो वा नत्वेकः सतनयवनिता पुत्रसहितस्त्री व्याघ्राटो भारद्वाजपक्षी कीरः शुकः इक्षुः अखंडितदंडः भूपो राजा एषां द्वंद्वे ॥ ९६ ॥

दूर्वाकरीषांकुशदीपकौषधीःसमिच्च धौतांबरवर्धमानकौ॥
दृष्ट्वेह बद्धैकपशुर्गमे नयेदेतान्यभीष्टान्यथ सव्यगानि तु ॥९७॥

अथोपजात्याह—दूर्वेति ॥ दूर्वा करीषः गोमयं अंकुशः दीपकः ओषधिः आसां समाहारद्वंद्वे एकत्वं च पुनः समित् एधः तु पुनः धौतांबरः प्रक्षालितवस्त्ररंजकः वर्द्धमानकः शरावः । यदुक्तं

श्रीहर्षकविना ' भ्रमयत्यमितं विदर्भजाननी राजनवर्द्धमानकं ' इति ॥ अथवा बहुपुत्रादि-परिवारयुतः पुरुषः बद्धैकपशुः रज्ज्वादिना बद्ध एकादिश्छागः इह गमे प्रयाणे पुमान् एतानि शकुनानि अभीष्टानि दृष्ट्वापसव्यगानि दक्षिणगतानि नयेत् कुर्यात् ॥ ९७ ॥

**मृदंगभेरीमृदुशंखनादान्वेदध्वनिं मंगलगीतघोषान् ॥**
**श्रीवाद्यवीणानकवेणुशब्दान् श्रुत्वा च याता लभते गमर्द्धिम् ॥९८॥**

अथ वाद्यशकुनान्याह—मृदंगेति ॥ याता पुमान् गमर्द्धिं प्रयाणलक्ष्मीं लभते प्राप्नोति किंकृत्वा मृदंगः मुरजः भेरी दुंदुभिः मृदुर्मर्दलमृत्यादिवादित्रं शंखः कंबुः एषां द्वंद्वे एषां शब्दान् च पुनर्वेदध्वनिं पुनर्मंगलगीतघोषान् पुनः श्रीवाद्यं वीणा घोषवती आनकः पटहः वेणुर्वंशः एषां द्वंद्वे एषां शब्दान् श्रुत्वा । वाद्यभेदो बहुधा यतो मृदंगो मृण्मयः काष्ठमयश्चे-त्यादौ तेन सुधिया विचार्य पुनरुक्तदूषणा एका शंका हेया ॥ ९८ ॥

**रलाबला शूकरिका शिवा पिका कपोतकी क्रौंच्यनुगंधमूषिका ॥**
**स्यात्पिंगला वासकगोधिका सदा यियासतां वामविभागगा वरा ॥९९॥**

अथ वामभागगतशकुनान्याह—रलेति ॥ रलाबला आरे काशंकाषी लोडी अथवा जंतु-विशेषः शूकरिका 'सूघरी' इति भाषा । शिवा सृगाली पिका कोकिला कपोतकी पारावती क्रौंची अनु पश्चात् गंधमूषिका 'छुछुंदरी गंधमुख्या' इति हैमः । पिंगला भैरवी चीवरी भाषा आवासकगोधिका गृहगोधिका यियासतां पुंसां वामविभागगा एषा सदा वरा स्यात् ॥ ९९ ॥

**भासो मृगश्छिक्करपिप्पलाख्याः श्रीकंठशाखामृगपुष्कराख्याः ॥**
**शुभा यियासोरपसव्यगाः स्युर्वशाभिधा ये पतगास्तथा ते॥१००॥**

अथ दक्षिणगतशुभशकुनान्याह—भासेति ॥ भासः शकुंतपक्षिविशेषः ' भासे शकुंतको यष्टौ ' इति हैमः ॥ मृगः छिक्करो मृगविशेषः पिप्पलश्चटकविशेषः ऋक्षो भल्लूकः श्रीकंठः चाषः शाखामृगो वानरः पुष्कराख्यः सारसः 'पुष्कराख्यः कुरंकर' इति हैमः ॥ यियासो-र्गमिष्यतः पुंस एते अपसव्यगा दक्षिणगताः शुभाः स्युः । तथा पुनर्ये वशाभिधाः स्त्रीसंज्ञकाः पतंगाः पक्षिणस्तेऽपि दक्षिणगाः शुभाः ॥ १०० ॥

**निशाटनारिष्टकपोतदुर्गागोमायुवाध्रीणसरासभाख्याः ॥**
**विनिर्गमे वामगता वराः स्युः प्रवेशने दक्षिणभागसंस्थाः ॥ १०१**

अथ निर्गमे प्रवेशे च शकुनविवेकतामाह—निशेति ॥ निशाटो वृकः अरिष्टः काकः कपोतो रक्तलोचनः दुर्गा देवसंज्ञिका गोमायुः सृगालः वाध्रीणसः खड्गी रासभाख्य एते विनिर्गमे वामगता वराः स्युः । पुनः प्रवेशने दक्षिणभागसंस्था वराः स्युः ॥ १०१ ॥

**शस्ता यदा यांति वनौकसो मृगास्तदौजसंख्यानुमिताः प्रदक्षिणं ॥**
**गमे गमो यानकृतासुतांगिनामशेषयानाखिलभेदसिद्धये ॥ २ ॥**

अथ विषमसंख्यया शकुनान्याह—शस्तेति ॥ यदा वनौकसो वानरा मृगाश्च ओजसंख्याप्रमाणा यानकृतां नराणां गमे प्रयाणे दक्षिणभागं यांति तदा शस्ताः स्युः । उत वितर्के यानकृतामंगिनां गमोऽशेषयानाखिलभेदसिद्धये स्यात् ॥ २ ॥

**असिद्धये यानकृतां गुडौषधिक्लीबाहितैलास्थिवसोपलाहिताः ॥**
**पिचव्यजंबालतुषामयिश्रमिप्रभ्रष्टचर्मप्रतिरूपभूतयः ॥ ३ ॥**

अथ काव्यद्वयेनाशुभशकुनान्याह—असिद्धेति ॥ यानकृतां पुंसामसिद्धये निष्फलाय एते स्युस्तानाह ॥ गुडः इक्षुरसः औषधं क्लीवो नपुंसको अहिः सर्पः तैलं अस्थिवसा मेदः 'तेजोजे गौतमं वसा' इति हैमः ॥ उपलः पाषाणः अहितः शत्रुः एषां द्वंद्वः पिचव्यः कार्पासः 'कार्पासस्तु बादरः स्यात्पिचव्य' इति हैमः ॥ जंबालः पंकः तुषो धान्यकोशः 'तुषो बुधासे कडंगर' इति हैमः ॥ आमयी रोगी श्रमी क्लमयुक्तः प्रभ्रष्टो विकलः चर्मप्रतिरूपभूतिः चर्मकारः ॥ ३ ॥

**आम्लं कटुक्षारतृणांधभस्मभृत्प्ररोषिनग्नांगविमुक्तकेशिनः ॥**
**क्षुधालुवंध्यारजका रजस्वला विण्मूत्रगोधाशशदारुजाहकाः॥४॥**

आम्लमिति ॥ आम्लं कटु क्षारः तृणानि घासः अंधो गताक्षः भस्मभृत् भस्मधारी प्ररोषी क्रोधी प्ररोधी इति पाठांतरं नग्नांगो वस्त्ररहितः विमुक्तकेशिनोऽसंयतकेशाः क्षुधालुः क्षुधितः वंध्या रजको निर्णेजकः रजस्वला ऋतुयुक्तास्त्री विट् विष्ठा मूत्रं गोधा निहाका गोधिका शशः दारु काष्ठं जाहको गात्रसंकोची ॥ ४ ॥

**इहासितान्नाजिनलोहतस्करा विनासिकांगारखरोष्ट्रवाहनाः ॥**
**कुब्जस्त्वयोजीवनफांटमाहिषा मुंडो भुगेतानि भवंत्यसंपदे ॥ ५ ॥**

इहेति ॥ असितान्नं कृष्णधान्यं अजिनं चर्म लोहं तस्कराः विनासिकः छिन्ननासिकः अंगाराः अग्निनार्द्धदग्धाः खरवाहनः उष्ट्रवाहनः कुब्जो हीनांगः तु पुनरयोजीवनो लोहकारः फांटं तक्रं माहिषः कासारः महिषारूढो वा मुंडः केशरहितः भुक् भक्षकः एतानि शकुनान्यसंपदे दुःखाय भवंति ॥ ५ ॥

**आवासदाहं स्खलितं च रोषतां कुटुंबवादं धनहानिमार्तवं ॥**
**भुगाहवं कासरसंगरं गमे ह्यवाप्य कष्टं नखिदष्टमेति ना ॥ ६ ॥**

अथाशुभसूचकशकुनान्याह—आवासेति ॥ ना पुमान् गमे प्रयाणे कष्टमेति प्राप्नोति किंकृत्वा आवासदाहं गृहज्वलनं स्खलितं वाहनादीनां स्खलनं रोषतां क्रोधत्वकुटुंबवादं

१ भवंत्यसंत्यपि इति पाठभेदः क्वचित् दृश्यते ।

कुटुंबे परस्परकलहं धनहानिं आर्तवं स्त्रीधर्मं भुगाहवं भक्षकयुद्धं कासरसंगर महिषयुद्धं नखिदष्टं सारमेयादिदंष्ट्राविदीर्णं चावाप्य प्राप्य हीत्यवधारणे ॥ ६ ॥

**नखिध्वनिं च क्षुतभङ्ग रोदनं भस्त्रास्वनं दारुविदारणस्वनं ॥**
**अयःशिलाताडनमोतुकुद्रवं श्रुत्वेति याता परिपंथिविग्रहम् ॥ ७॥**

अथाशुभशकुनान्याह—नखीति ॥ अत्र याता पुमान् परिपंथिविग्रहं शत्रुकलहमेति 'दुर्हृत् परिपंथिकपंथिनौ' इति हैमः ॥ किं कृत्वा नखिध्वनिं नखरायुधानां शब्दं च पुनः क्षुतं छिक्कां रोदनं भस्त्रास्वनं चर्मप्रसेविकायाः शब्दं दारुविदारणस्वनं भिद्यमानकाष्ठशब्दमयः शिलाताडनं लोहशिलाकुट्टनं ओतुकुद्रवं बिडालविहितशब्दं च श्रुत्वा ॥ ७ ॥

**समुद्यते गंतुमरं नरे स्यात्स्वप्नो विरुद्धो यदि दुष्टभाषणं ॥**
**गुरोरनाज्ञान्यविरोधवार्ता तदा गमो नागमहेतुरंगिनः ॥ ८ ॥**

अथ विरुद्धस्वप्नादीनशुभशकुनान्याह—समुद्यतइति ॥ अरं शीघ्रं यदि चेत् नरे पुंसि गंतु समुद्यतेऽत्युद्यमवति विरुद्धो दुष्टः स्वप्नः स्यादथवा दुष्टभाषणं वा गुरोः पित्रादेरनाज्ञा मा व्रज इति लक्षणा वा अन्यविरोधवार्ताऽन्यैः सह विद्वेषवार्ता स्यात्तदा गमः प्रयाणमंगिनः पुंसोऽनागमहेतुः पुनरावर्तनहेतुः अलाभहेतुर्वा स्यात् ॥ ८ ॥

**यांगारगाशा ज्वलिता च धूमिता तदाश्रिता ये शकुनाः शकुंतजाः ॥**
**कुर्युस्तदाशाभ्रमवारवर्णतो विवर्णभावं गमनं यियासुषु ॥ ९ ॥**

अथांगारादिदिगाश्रितान् शकुनान्निष्फलान् दर्शयति—यांगारेति ॥ या आशा दिग् अंगारगा १ज्वलिता२ धूमिता ३ चास्ति तदाश्रिताः तया दिशा आश्रिता ये शकुनाः शकुंतजाः पक्षिजाता भवेयुस्ते शकुना यियासुषु पुंसु गमनं विवर्णभावं श्यामभावं कुर्युः ॥ कस्मात्तदाशाभ्रमवारवर्णतः सा च आशा तदाशा तस्यां भ्रमो यस्य स चासौ वारश्च तस्य वर्णतो रागात् 'वैवर्ण्यं कालिकाथाश्रु' इति हैमः ॥ पुनरमुनैवोक्तं 'रघुवंशे विवर्णभावं स स भूमिपालः' इति ॥ अथ ग्रंथांतरादंगारादिलक्षणानि लिख्यंते 'रानन्वंतार्द्धयामादि यावद्यामार्द्धकं दिने । एवं यामोदयो भानुः पूर्वाद्यष्टदिशो भ्रमेत् ॥ १ ॥ दिनरात्रिप्रमाणेन याममानं तु तद्भवेत् । तन्मानेन भ्रमेद्भानुर्दिशोऽष्टौ प्रहराष्टके॥२ स्याज्ज्वालिनी सूर्ययुक्ता दग्धा च रविणोज्झिता । गम्या धूमवती ज्ञेया तिस्रो दीप्ता इमा दिशः ॥ ३ ॥ ताभ्यः पंचमिका यास्ताः शांतास्तिस्रः प्रकीर्तिताः । शेषं दिशाद्वयं मिश्रं यथासन्नस्वभावकं ॥४॥ विषुवत्संस्थिते सूर्ये ज्वालिनी वासवी दिशा । दग्धाशा शांकरी ज्ञेया धूमिता पावकी मता ॥ ५ ॥ कर्कायंशगते सूर्ये ज्वालिनी शूलभृद्दिशा । दग्धा सोमदिशा ज्ञेया शक्राशा धूमिता तदा ॥ ६ ॥ मकराद्यंशके सूर्ये पावकी ज्वालिनी भवेत् । सहस्राक्षदिशा दग्धा यमाशा धूमिता भवेत् ॥ ७ ॥ वासरांताष्टभागे च निशाद्यप्रहरार्द्धके । ज्वलत्यपि गता गम्या दग्धा धूमवती दिशा ॥ ८ ॥ अशुभाः स्युर्दिशो दीप्ताः शुभाः शांताः प्रकीर्तिताः । यद्दिशां द्वितयं मिश्रं यथासन्नफलं च

यत् ॥ ९ ॥ ज्वलिताद्यष्टकाष्ठानां प्रमाणार्थं भणाम्यहं । सूर्यवारवशाच्चक्रं दिग्विशेषकदंबकं ॥ १० ॥ चतुरस्रं भवेच्चक्रं मध्येऽष्टदिग्विभेदनं । सप्त सप्त लिखेद्रेखास्तद्बाह्ये दिक्चतुष्टये ॥ ११ ॥ चक्रे बाह्ये भवत्येवं समास्तत्र समन्विताः । भागा रेखांतरालस्थाश्चतुर्विंशतिसंख्यकाः ॥ १२ ॥ दिक्प्राच्यां सप्तरेखासु स्थाप्या द्वादश राशयः । कर्कादिमिथुनांतास्ता दक्षिणोत्तरमार्गगाः ॥ १३ ॥ विषुः स्यान्मध्यरेखायां तुलामेषाद्यवासरे । भवेद्दीशानरेखातः कर्काद्यं दक्षिणायनं ॥ १४ ॥ भवत्याग्नेयरेखातो मकराद्युत्तरायणं । एवं तच्चेपरेखासु राशीनां स्याद् द्विकं द्विकं ॥ १५ ॥ रेखारेखांतराले च त्रिंशद्भागान् प्रकल्पयेत् । राशित्रिंशद्द्विभागास्ते चक्रदिशांगभोजकाः ॥ १६ ॥ भागैर्नवतिसंख्यैस्तैर्दिगेकैका भवेदिह । तदर्द्धांशैर्दिशार्द्धे स्यात्त्रिभागं त्रिंशदंशकैः ॥ १७ ॥ कुंभार्द्धे पश्चिमं मीनमेषवृषादिमंडलं । एवं प्राची नवत्यंशैर्भानावुत्तरचारिणि ॥ १८ ॥ वृषार्द्धे पश्चिमं कामकर्कसिंहादिमंडलं । एतैर्नवतिसंख्यांशैर्जायते शांकरी दिशा ॥ १९ ॥ सिंहार्द्धे पश्चिमं कन्या तुले वृश्चिकभागदिशं । पुनः प्राची भवत्येतैः सूर्ये दक्षिणचारिणि ॥ २० ॥ वृश्चिकांत्यदलं चाथ मृगे कुंभादिमंडलं । दिगाग्नेयी भवत्येतैर्भागैर्नवतिसंख्यकैः ॥ २१ ॥ एवं राशिवशाद्भानुर्यत्र स्यात् त्रिंशदंशकैः । ततः पूर्वांशपृष्ठांशान् दहेत् पंचाब्धिसंख्यया ॥ २२ ॥ ज्वलत्पृष्ठांशपृष्ठस्था दग्धांशाः खांकसंख्यया । ज्वलत्पूर्वांशकाग्रस्था नवत्यंशाश्च धूमिताः ॥ २३ ॥ यद्दिने यत्र राश्यंशे विषुवादौ स्थितो भवेत् । उदयादि तदंशादि याति सव्येन भास्करः ॥ २४ ॥ द्युरश्मिना तथा वामः कृत्वा पलमयं च तत् । नवत्यात्तपलैर्भुक्तिरेकैकांशस्य जायते ॥ २५ ॥ एवं यामवशाद् भानुर्यत्र काष्ठांशके स्थितः । तत्रोक्तांशकमानेन दिग् ज्वाला दग्धधूमिता ॥ २६ ॥ चक्रमध्ये भवेन्मेरुः सूर्यस्तस्य प्रदक्षिणं । भूमावहर्निशं भुंक्ते दिशौऽष्टौ प्रहराष्टके ॥ २७ ॥ अन्योन्यमार्गचारेण भानुर्याति दिने दिने । एवं भवति मार्गाणामशीत्या संयुतं युतं ॥ २८ ॥ तद्दिने मार्गतो गत्वा रविर्यस्यां दिशि स्थितः । ततःप्रभृति नामानि विज्ञेयानि दिशाष्टके ॥ २९ ॥ ज्वलिता धूमिता छाया जला कर्दमिता धरा । भस्मांगारवती ज्ञेया सूर्ययुक्ता दिशा क्रमात् ॥ ३० ॥ वधो बंधः सुखं राज्यं लाभः क्षेमं भयं रुजः । ज्वलिताद्यासु काष्ठासु फलं स्याच्छकुनोदये ॥ ३१ ॥ ज्वलितादिदिशैकैका त्रिधा ज्ञेया क्रमेण तु । तासां नामानि वक्ष्येऽहं चतुर्विंशतिसंख्यया ॥ ३२ ॥ ज्वलिता ज्वालिनी ज्वाला चैवं प्राज्वालिनी त्रिधा । संधुक्षिता च धूमांधा धूमिनी च त्रिधा परा ॥ ३३ ॥ छाया मिश्रा च शुभ्रा च त्रिधा छाया दिशा मता । शीतला हैमकी चैव तुषारी च जला त्रिधा ॥ ३४ ॥ गङ्गुला च कला पंका चेति कर्दमितात्रयं । सस्नेहा शाद्वला शेषा चैवं च त्रिविधा धरा ॥ ३५ ॥ रेणुश्च भस्म तापः स्यादिति भस्मान्वितात्रिकं । दग्धा दाहा निदाघी च चैवमंगारिणी त्रिधा ॥ ३६ ॥ चतुर्विंशति नामानि प्रोक्तानि च क्रमेण तु । पृथक् पृथक् फलं चासां वक्ष्यते शकुनोदये ॥३७॥ घातं मृत्युं रुजं चैव बंधनं हानिविभ्रमौ । मोहं चैव सुखं लोभं धनार्तिं राज्यमुन्नतिं ॥ ३८ ॥ अभिषेकं तथा राजप्रसादं

पुत्रसंपदं । स्त्रीलाभं भोगवृद्धिं च विदंशं निग्रहं तथा ॥ ३९ ॥ भगं चैव तथा काष्ठं संतापं शोकमेव च । प्राप्नुवंति क्रमादेवं शकुनान्मानवाः फलं ॥ ४० ॥ प्रोक्तं यत्प्रहराष्टके रवि-दशादग्धादिकाकाष्ठकं तस्यैकैकदशास्त्रिधा क्रमवशाद्वेदाश्चतुर्विंशतिः । तेषां नामनिदान-भावजफलं विंदंति ये शाकुने ते जानंति फलस्य तस्य विवरं हालाहलं चामृतं ॥ ४१ ॥ इति दिशाप्रकरणं ग्रंथांतरादवसेयं ॥ ९ ॥

**छायोरजध्वजसुभूरुहतोरणेषु क्षीरद्रुमांबुनिकटेषु मनोहरोर्व्यां ॥**
**प्राप्ताः प्रसन्नकलशाः शकुना यियासोरारामशालसुरभूकुलशांतदिक्षु १०**

अथ वसंततिलकेन शुभस्थानेषु प्राप्तशकुनान् दर्शयति—छायेति ॥ छायाऽनातपः उरजं गृहं ध्वजः पताका सुभूरुहः शुभवृक्षः तोरणं एषां द्वंद्वे एषु पुनः क्षीरद्रुमो राजा-दनादिः अंबु जलं निकटं समीपदेशः एषु पुनर्मनोहरोर्व्यां शुभभूमौ पुनः आराम उपवनं शालो वृक्षः प्राकारश्च सुरकुलं चैत्यं भूकुलं नद्यादितटं शांतदिशो ज्वलितादित्रयात् अन्य-दिशः शांता आसां द्वंद्वे तासु एतत्स्थानेषु प्राप्ता लब्धाः शकुना यियासोर्नरस्य प्रसन्नेन हर्षेण कलेन मनोहरशब्देन शं सुखं येभ्यस्ते प्रसन्नकलशाः स्युः ॥ १० ॥

**भस्मास्थिशुष्कपतितद्रुमदग्धभिन्नक्षोणीरुहावकरकंटकिविड्रसासु ॥**
**आहुः सदा शकुनमार्यवरा निरर्थं व्यर्थं तथाप्यशकुना गमनं प्रकुर्युः॥११**

अथाशुभस्थानेषु लब्धशकुनं व्यर्थं दर्शयति—भस्मेति ॥ आर्यवराः शाकुनिका बुधाः सदा शाकुनं निरर्थं निष्फलमाहुः कासु भस्म रक्षा अस्थि शुष्कः पतितश्च द्रुमः दग्धो भिन्नो विदारितश्च क्षोणीरुहो वृक्षः अवकरः कंटकी बदर्यादिवृक्षः विड् विष्ठा रसा भूमिः एतासु तथाऽशकुना अपि गमनं व्यर्थं प्रकुर्युः ॥ ११ ॥

**शांताश्रयो मिथुनतांडवभक्ष्यचंचुतारप्रयाणयम-**
**दिग्रववार्विलासाः ॥ वामस्वनच्छदविलाससुशाल-**
**रोहाः श्यामाविचेष्टितमिहाभिमुखीति रम्यम् ॥ १२ ॥**

अथ पोतकीशकुनमाह—शांतेति ॥ इह प्रयाणेऽभिमुखी श्यामा पोतकी दुर्गादेवी इति नामांतराणि इति विचेष्टितं रम्यं सिद्धं कार्यं गमिन इति शेषः । किंभूता श्यामा शांताश्रया शांताः शुभा आश्रयाः स्थानानि यस्याः सा । यथोक्तं ग्रंथांतरे ' प्रासादः पर्वतो हर्म्यं प्राकारो मंदिरं मठः । यंत्रिकाद्यलकं यंत्रं प्रतोली विद्या वेश्मकी ॥ सत्रागारं प्रपा गोष्ठं गोगृहं नवगोमयं ॥ कोष्ठागारं गृहं कोशं टंकशाला घटीगृहं ' । इत्यादि श्लोकैरष्टाविंशत्यधिकशतं मितानि शांतस्थानानि उक्तानि । शुभस्थानमिता इत्यर्थः । अथवा शांतदिगाश्रिता श्लिष्टार्थेनेत्यपिश-ब्दार्थः । पुनः किंभूतं श्यामाविचेष्टितं मिथुनेति मिथुनं दंपत्योर्द्वंद्वं तांडवं नर्तनं भक्ष्ये चंचुर्भ-क्ष्यचंचुः तारः शुभनादः ' तारोत्युच्चैर्ध्वनिः ' इति हैमः । प्रयाणयमादिग्रवः प्रयाणात्

दक्षिणदिशि शब्दः वार्षु जलेषु विलासः क्रीडनं एताः चेष्टा यस्याः सा समासे समग्रपदं पुनः किंभूतं । श्यामाचेष्टितं वामेति वामे भागे स्वनः अथवा वामो मनोहरः स्वनः शब्दः यस्याः छदेषु पर्णेषु विलासः क्रीडा यस्याः सा सुशाले शुभवृक्षे रोहः आरोहणं यस्याः सा समासे समग्रपदं । अथवा इति श्यामाचेष्टितं शुभमितीति किं शांताश्रयमित्यादि शांताश्रयो मिथुनेति वामस्वन इति च पाठोपि शुभः । यतः ' उत्साहसन्मुखत्वं च सन्मुखं शुभवीक्षणं । उत्फुल्लास्यप्रसन्नत्वं रोमांचोन्नर्तनं धृतिः ॥ १ ॥ औदार्यं स्थिरता धैर्यं प्रकटत्वं सकामता । उद्यमः खेलनं प्रीतिरुच्चाश्रयसुनादता ॥ २ ॥ एभिरष्टादशैर्भेदैर्भावः शांतोऽभिधीयते ' इति ग्रंथांतरेप्युक्तं ॥ १२ ॥

अतोऽन्यथा चेष्टितमीप्सितापहं दुर्गाकृतं यायिनि पुंसि संततं ॥
समस्तयानेष्वपि शाकुनं नयं प्रद्रष्टुमर्हं गमकामसिद्धये ॥ १३ ॥

अथ श्यामादुश्चेष्टितमशुभं दर्शयति—अतइति ॥ उक्तचेष्टितात् अन्यथा विपरीतचेष्टितं दुर्गाकृतं सततं सदा ईप्सितापहमभिलाषितघातकं भवति कस्मिन् यायिनि गमनशीले पुंसि यतः ' पराङ्मुखत्वं संकोचो मुखबंधोऽध ईक्षणं । वैकल्यं सैन्यता निद्रानाशश्वासौ विचेष्टिता ॥१॥ वियोगो विस्वरत्वं च नीचस्थानाश्रमस्थिता । अधःपातोऽगभंगश्च कंपनं धुननं त्रयं ॥ २ ॥ एभिरष्टादशैर्भेदैर्भावो दीप्तोऽभिधीयते । दुष्टोऽसौ शौभने कार्ये दीप्ते दीप्तविनाशकः ॥ ३ ॥ इति शाकुननिर्णयं शाकुनं नयं समस्तयाने सर्वप्रयाणे प्रद्रष्टुमर्हं योग्यं स्यात् । किमर्थं गमकामसिद्धये गमनकार्यफलाप्तये ॥ १३ ॥

प्राणायामानत्र पंच५स्मरन्ना यायादाप्ते शाकुने
वै विरुद्धे ॥ दि१०ङ्मान्कृत्वैवं द्वितिये तृतीये
घस्र १५ प्रख्यान्नो चतुर्थे गमः स्यात् ॥ १४ ॥

अथ शालिन्या गमनसमये दुष्टे शकुने जाते यत्कर्तव्यं तदाह—प्राणेति ॥ वै पादपूर्तौ तत्र गमने ना पुमान् विरुद्धे दुष्टे शाकुने आप्ते जाते सति पंचप्राणायामान् श्वासोच्छ्वासरोधनानि स्मरन् यायात् गच्छेत । प्राणायामस्तु यतः ' दक्षिणे रेचयेद् वायुं वामेन पूरितोदरं । कुंभेन धारयेन्नित्यं प्राणायामं विदुर्बुधाः ' ॥ १ ॥ इति ॥ अंतर्गतेष्टदेवभावना इत्यर्थः ॥ एवं द्वितीये वारे गमने विरुद्धे शकुने सति दिङ्मान् दशसंख्यान् प्राणायामान् कृत्वा गच्छेत् । एवं तृतीये वारे घस्रप्रख्यान् पंचदशसंख्यान् कृत्वा गच्छेत् । एवं चतुर्थे वारे विरुद्धे शकुने गमः प्रयाणं न स्यात् ॥ १४ ॥

उल्कापातोपप्लवस्फूर्जथुस्त्वे धाराकंपे गर्जितेऽकालजेऽब्दे ॥
शंपापाते वैकृतेऽगादिभूते पक्षं हित्वाऽतो महद्यानमाहुः ॥ १५ ॥

अथोत्पातादौ प्रयाणविलंबं दर्शयति—उल्केति ॥ आर्याः अत उत्पतात् पक्षं हित्वा त्यक्त्वा मह्यानं वृद्धप्रयाणमाहुः कथयंति । कस्मिन् सति उल्कापात आकाशात् ज्वालापतनं उपप्लव उपरागः स्फूर्जथुर्वज्रनिर्घोषः 'अतिभीः स्फूर्जथुर्ध्वनिः' इति हैमः ॥ अकस्मात् खे महाशब्दो जायते स स्फूर्जथुः स्मृतः एषां भावे त्वप्रत्ययस्तस्मिन् पुनर्धराकंपे भूकंपने पुनरकालजेऽब्दे मेघे गर्जिते सति पुनः शंपापाते विद्युत्पाते 'चलाशंपाऽचिरप्रभा इति ' हैमः । पुनरगादिभूते वृक्षादिभूते वैकृते विकृतिभावं प्राप्ते सति ॥ १९ ॥

गमो विवाहाननमंगलागमे न स्यात्समाशोचनकालसंभवे ॥
समागतैः श्रोत्रियमित्रराजभिर्वा तन्निवृत्तौ क्रियते गमोद्यमः ॥१६॥

अथोपजात्या इष्टादिवस्तुनि समागते प्रयाणविलंबं दर्शयति—गमइति ॥ गमः प्रयाणं न स्यात् कस्मिन् विवाहाननमंगलागमे उद्वाहमुखमंगलकार्ये समागते पुनः समाशोचनकालसंभवे सूतकसमये प्राप्ते सति पुनः कैः श्रोत्रियमित्रराजभिः छांदसमित्रनृपैः समागतैरायातैर्वा कृत्वेति तन्निवृत्तौ मंगलादिसंपूर्णे श्रोत्रियादिस्वस्थानगते गमोद्यमः क्रियते पुंसेति शेषः ॥ १६ ॥

हरित्यसौ केतुरुदेति यस्यामियादिलार्योऽरिजयाय तस्यां ॥
न तूदयद्वादशधिष्ण्यकाले पुच्छभ्रमाशं गमनं तथैव ॥ १७ ॥

अथोदितकेतुदिशि प्रयाणविलंबं दर्शयति—हरितीति ॥ यस्या हरिति दिशि असौ केतुरुदेति तस्यां दिशि असौ इलार्यो भूपो न इयान्न गच्छेत् । कस्मै अरिजयाय कस्मिन् सति उदयद्वादशधिष्ण्यकाले केतोरुदयादारभ्य द्वादशधिष्ण्यकालः द्वादशराशिकालः कोऽर्थः केतुर्भुक्तराशितः सप्तविंशतिनक्षत्रचक्रे चंद्रपरिवर्तनं यावत्तस्मिन् तु पुनः पुच्छभ्रमाशं पुच्छभ्रमणदिग्गतं गमनं तथैव तावत्कालं न स्यात् ॥ १७ ॥

सुशुद्धिलब्धिर्गमवासरे यदा गंतुं न शक्नोति यथादशावशात् ॥
प्रस्थानयानं प्रवसेद्विधाय राड् मध्यभद्रं फलसिद्धिहेतुमत् ॥ १८ ॥

अथ प्रस्थानमोचनं दर्शयति—सुशुद्धीति ॥ यदा स राट् नृपः शुद्धिलब्धौ सत्यां गमवासरे प्रयाणदिने गंतु न शक्नोति कस्मात् यथादशावशात् यथावस्थावशात्तदा नृपः प्रस्थानयानं प्रयाणं विधाय प्रस्थानयानं विधाय प्रस्थानं कृत्वा प्रवसेत् पथिकभावेन गृहे तिष्ठेदित्यर्थः । किंभूतं प्रस्थानयानं मध्यभद्रं मध्ये भद्रं कल्याणं यस्य तत् पुनः किंभूतं फलसिद्धिहेतुमत् वतुप्प्रत्ययः ॥ १८ ॥

बृहद्गमे चापशतावधेर्विदुर्धनुःशतार्धात्तु समे निजास्थितेः ॥
प्रस्थानमूर्ध्वं विबुधा वरं मितेऽल्पपंचविंशत्यवधेःस्वयं कृतम् ॥ १९ ॥

अथ प्रस्थानमोचने मर्यादामाह—बृहद्गमइति ॥ विबुधाः पंडिताः बृहद्गमे चापशतावधेर्धनुषां शतादूर्ध्वमग्रे प्रस्थानं वरं विदुः । एवं तु पुनः समे प्रयाणे शतार्द्धात् पंचाशद्धनुष-

ऊर्ध्वं पुनर्मिते लघुप्रयाणेऽस्त्रपंचविंशत्यवधेः पंचविंशतिधनुषोऽग्रे किंभूतं प्रस्थानं स्वयं कृतं आत्मना विहितं कस्याः सकाशात् निजास्थितेर्निजस्थानाद्गृहादित्यर्थः ॥ १९ ॥

**प्रस्थानयेद्वाहमिलाधिपोऽथवा हेतिं सपूगांबरपुस्तकं द्विजः ॥**
**विडर्थयुक्तांबरमन्यविट् सदा सशालिचैलं त्वपरेंबरादिकम् ॥ २० ॥**

अथ नृपादीनां भिन्नप्रस्थानविधिं दर्शयति—**प्रस्थानेति** ॥ सदा इलाधिपो भूपो वाहं घोटकमथवा हेतिं शस्त्रं प्रस्थानयेत् प्रस्थानं कुर्यात् । करणे णिप्रत्ययांतः । द्विजो विप्रः सपूगांबरपुस्तकं पूगफलयुक्तवस्त्रं पुस्तकं च प्रस्थानयेत् । विट् वैश्यः अर्थयुक्तांबरं द्रव्ययुक्तं वस्त्रं प्रस्थानयेत् । अन्यविट् शूद्रः सशालियुक्तवस्त्रं प्रस्थानयेत् । तु पुनरपरे कारुकादयोंऽबरादिकं वस्त्रादिकं प्रस्थानयेत् ॥ २० ॥

**प्रभूतभूपालकिरीटघृष्टपद्धराधिभूरश्वगजौ तु शैबिरौ ॥**
**शालाधिपालः शिबिरं बहिर्नयेद्यात्राद्युपादावधिगा शुभा स्थितिः ॥२१॥**

अथ नृपादीनां प्रयाणविधिमाह—**प्रभूतेति** ॥ प्रभूतानां बहूनां भूपालानां किरीटैर्मुकुटैर्घृष्टौ उत्तेजितौ पूजितौ पादौ यस्य स चासौ धराधिभूश्चक्रवर्ती अश्वगजौ बहिर्नयेत् किंभूतौ अश्वगजौ शैबिरौ शिबिरे पटमंडपादौ भवौ तु पुनः शालाधिपाले दुर्गाधिपः शिबिरं पटमंडपादिकं बहिर्नयेत् ॥ यात्रायाः प्रयाणस्य यु दिनं तस्य पादश्चतुर्थांशस्तदवधिगा तत्प्रमाणा स्थितिः शुभा स्यात् एकप्रहरमात्रमित्यर्थः ॥ २१ ॥

**याता यायादालकाशां पुरोऽन्हि मध्यान्हे कामर्द्धये पौरुहूतीं ॥**
**कैनाशीमत्रापराण्हे निशीथे पाथोनाथाशामिवाशाधिनाथः ॥२२॥**

अथ शालिन्योत्तरादिषु प्रयाणवेलां दर्शयति—**यातेति** ॥ यत्र प्रयाणे याता पुमान् पुरोऽन्हि पूर्वाण्हे कामर्द्धये कार्यसिद्धये अलकाशां उत्तरां यायात् ॥ एवं मध्यान्हे पौरुहूतीं पुरुहूतस्येंद्रस्येयं तां दिशं पुनरपराण्हे कैनाशीं कीनाशस्य यमस्येयं दिक् तां पुनर्निशीथे पाथोनाथो जलपतिर्वरुणस्तस्याशां पश्चिमां क इव आशाधिनाथ इव यथा निजनिजाशाधिनाथो निजां दिशं कार्यसिद्धये व्रजति ॥ २२ ॥

**याने येन प्राश्यमुक्तं न मुक्तं तारावाराशोदितं यत्तदुग्रः ॥ तत्तत्प्राश्याशागते नुर्विरोधस्तस्मात्सम्यग्वारादिक् प्राश्यमर्हम् ॥ २३ ॥**

अथ प्रयाणे नक्षत्रप्राश्यं दूषयन् वारादिक्प्राश्यं द्रढयति—**यान इति** ॥ याने प्रयाणे येनाचार्येण यत् तारावाराशोदितं नक्षत्रवारकाष्ठासु कथितं प्राश्यं भक्ष्यमुक्तं प्रोक्तं तत्

न युक्तं यतो नुः पुरुषस्य उग्रो महान् विरोधः स्यात् । किंभूतस्य नुः तत्तन्नक्षत्रोक्तं वारादिप्रोक्तं च प्राश्यं भुक्त्वा आशायां गतिर्गमनं यस्य स तस्येति। कथं विरोध उच्यते यतो नक्षत्रप्राश्यमन्यदिति तस्मात् कारणात् सम्यग् वारादिक् प्राश्यमर्हं योग्यं स्यात् ॥ २३॥

**मज्जिकाधारयुक् पायसं कांजिकं संभृतक्षीरमुस्राभवं सद्दधि ॥**
**द्रागपक्वं पयः प्राश्य तैलोदनं गम्यतेऽर्कादिवारेषु धाराभृता ॥ २४ ॥**

अथ स्रग्विण्यार्कादिवारेषु प्राश्यमाह—मज्जिकेति ॥ धाराभृता भूपेन द्राक् शीघ्रं गम्यते गमनं क्रियते किंकृत्वाऽर्कादिवारेषु मज्जिकाद्यं प्राश्य भुक्त्वा यथा रविवारे मज्जिकां शिखरीणीं ' शर्करादधिमरीचकर्पूरैलामिश्रितां रसालायां तु मार्ज्जिता ' इति हैमः ॥ मर्जिता इति शब्दप्रभेदः । मज्जिका तु वैद्यामरश्चेति ॥ सोमवारे आधारयुक् पायसं घृतयुक्तपरमान्नं एषां समाहारैकत्वं भौमवारे कांजिकामारनालं बुधवारे संभृतक्षीरं पक्वं पयः शृतशब्दोऽत्र श्राक् पाके इति धातोरदादेः। किंभूतं पयः उस्राभवं गव्यं ' उस्राध्मारोहिणी ' इति हैमः । गुरुवारे सद्दधि गव्यं शुक्रवारेऽपक्वं पयः शनिवारे तैलोदनं तिलान्नं ॥ २४ ॥

**कौशिकाशागमे प्राश्यमाज्यं भवेन्मंजु तैलोदनं शामिनीदिश्यनु ॥**
**मीनविस्रं पयःपालकाष्ठागमे सौरभेयीपयो राजराजस्य हि ॥ २५ ॥**

अथ दिक्प्राश्यमाह—कौशिकेति ॥ कौशिक इंद्रः कौशिकाशागमे पूर्वस्यां गमने आज्यं घृतं प्राश्यं भक्ष्यं मंजु भवेत्। अनु पश्चात् शमनस्य यमस्येयं दिक् शामनी तस्यां दक्षिणस्यां तैलोदनं प्राश्यं पुनः पयःपालो जलपतिर्वरुणस्तस्य काष्ठा तद्गमने मीनविस्रं मत्स्यरुधिरं प्राश्यं पुना राजा गुह्यकः ' यक्षः पुण्यजनो राजा ' इति हैमः ॥ तस्य राजा स्वामी कुबेरस्तस्य दिशि उत्तरस्या सौरभेयीपयो गोक्षीरं प्राश्यं भवेदिति हि युक्तार्थः ॥ २५ ॥

**ऐंद्रीं समारुह्य गजं नराधिभूर्यादरं स्यंदनमांतिकीमिह ॥**
**तुरंगमं दिग्विजयाय वारुणीं नृयानकं हि प्रति नारवाहिनिम् ॥२६॥**

अथोपजात्या दिग्योग्यानि वाहनान्याह—ऐंद्रीमिति ॥ अरं शीघ्रमिह गमे नराधिभूर्नृपो गजं समारुह्य ऐंद्रीं दिशं पूर्वामियात् गच्छेत् । एवं स्यंदनं रथं समारुह्य आंतिकीं दिशं दक्षिणां गच्छेत् । तुरंगममश्वं समारुह्य वारुणीं पश्चिमां दिशं गच्छेत् । नृयानकं शिबिकां समारुह्य नरवाहनस्य कुबेरस्य इयं दिग् नारवाहनी तामुत्तरा प्राति गच्छेत् ॥ २६ ॥

**बृहद्भमोक्ते समयेऽबुभोदये सितेंदुमंत्र्यन्हि विदूषणे भवेत् ॥**
**यानोत्तमर्क्षैश्च सवातवारुणैर्ग्रहैरभीष्टैर्जलयानमुत्तमम् ॥ २७ ॥**

अथ जलयात्राशुद्धिमाह—बृहदिति ॥ बृहद्भमोक्ते समये बृहत्प्रयाणोक्तकाले जलयानं जलप्रयाणमुत्तमं भवेत् । क अंबुभोदये जलराशिलग्ने पुनः सितः शुक्रः इंदुः मंत्री गुरु

रेषामन्हि दिने किंभूते विदूषणे दूषणरहिते च पुनः कैर्यानोत्तमर्क्षैः प्रयाणश्रेष्ठनक्षत्रैः किंभूतैः यानोत्तमर्क्षैः सवातवारुणैः वातः स्वाती वरुणस्येदं शतभिषक् आभ्यां सहवर्तमानैः पुनः कैरभीष्टैर्ग्रहैर्जलस्येदं यानं उत्तमं श्रेष्ठं भवेत् ॥ २७ ॥

**राजा नरः प्राकृतकोऽपि वा यो मानानुगो त्दृष्टमनाः प्रयायात् ॥**
**शुभांबरो भूषितभूषणांगो नयेदसौ याननयेन लक्ष्मीम् ॥ २८ ॥**

अथ प्रयाणौत्सुक्येन सफलतां दर्शयति—राजेति ॥ यो राजा नरो वा प्राकृतकोऽपि हृष्टमनाः प्रमोदितचित्तो मानानुगः सन्मानप्राप्तः सन् प्रयायाद्गच्छेत् सोऽसौ राजा याननयेन प्रयाणकरणेन नीत्या वा लक्ष्मीं संपदं नयेत् प्राप्नुयात् । किंभूतो राजा शुभांबरः पुनः किंभूतो राजा भूषणभूषितांगः ॥ २८ ॥

**गमं विमृश्येति करोति यो नरो दिगीश्वरानिष्टसुरान्नभश्चरान् ॥**
**स्मरन्प्रणम्यादिभुवो वरीकृतानुपैति राजाखिलयानसंपदम् ॥ २९ ॥**

अथोपसंहारेण गमनसमयव्यवहारमाह—गममिति ॥ यो राजा इति पूर्वोक्तप्रयाणनीत्या विमृश्य विचार्य गमं गमनं करोति किं कुर्वन् दिगीश्वरान् दिक्पालान् इष्टसुरान् निजेष्टदेवान् नभश्चरान् ग्रहांश्च स्मरन् किंकृत्वा आदिभुवो विप्रान् वरीकृतान् दत्तदक्षिणान् प्रणम्य स राजाऽखिलयानसंपदमुपैति प्राप्नोति ॥ २९ ॥

**गुरूशनोज्ञेंदुदिनेषु वारुणानिलश्रविष्ठेज्यमृदुस्थिरोडुभिः ॥**
**याता विरिक्तान्यकुयोगविष्टिभैर्नृभाजि लग्ने गमनस्थलं विशेत् ॥३०॥**

अथ प्रथमप्रयाणवासस्थानक्रमाह—गुर्विति ॥ गुरुः उशनाः शुक्रः ज्ञो बुधः इंदुः एषा दिनेषु याता पुमान् नृभानलग्ने नरराशौ गमनस्थलं स्थेयस्थानं विशेत् प्रविशेत् । कैः कृत्वा वारुणं शतभिषक् अनिलं स्वाती श्रविष्ठा धनिष्ठा इज्यः पुष्यः मृदुसंज्ञभानि स्थिरसंज्ञोडूनि एषां द्वंद्वे एतैः किंभूतैर्विरिक्तास्तिथयः अन्यकुयोगाः विष्टिः अमावासी विगता येभ्यस्तानि तैः ॥ ३० ॥

**स्थानं प्रविश्य क्रियते प्रवासिना ततोऽन्ययानं च चरोदये वरं ॥**
**सदन्हि चेद्दिक्समयेंदुभोरुगे प्रवेकदिग्राशितमीशमंडले ॥ ३१ ॥**

अथ गमनस्थलादग्रे अन्यप्रयाणशुद्धिमाह—स्थानमिति ॥ प्रवासिना पथिकेन पुंसा स्थानं प्रविश्य ततः स्थानादवरं श्रेष्ठमन्ययानं इतरप्रयाणं क्रियते कस्मिंश्चेद्यदि चरोदये चरलग्ने च पुनः सदन्हि शुभग्रहदिने किंभूते सदन्हि दिक् च समयश्च इंदुभोरुर्नक्षत्रं च एतानि गच्छतीति डप्रत्यये तस्मिन् पुनः किंभूते सदन्हि प्रवेकं प्रधानं दिग्राशिभ्यां तमीशमंडलं चंद्रबिंबं यस्मिंस्तत् सन्मुखोऽर्थस्तद्भावायेत्यादि ' अनुत्तरं प्राग्रहरं प्रवेकं ' इति हैमः ॥ ३१ ॥

**निजं पुरं यानिनिवर्तितो नरो जीवादिपंचद्युषु संविशेदसौ ॥**
**सवासवक्षिप्रमृदुध्रुवेष्वथ स्थिरोदये शुद्धलयांत्यकंटके ॥ ३२ ॥**

अथ पुनरायाते निजपुरप्रवेशमुहूर्तमाह - ... ॥ यानिनिवर्तितः प्रयाणं कृत्वा आयातो नरोऽसौ निजं पुरं संविशेत् प्रविशेत्। केषु जीवादिपंचद्युषु गुरुशुक्रशनिरविचंद्रवारेषु किंभूतेषु सवासवेत्यादि वासवं धनिष्ठा क्षिप्रमृदुध्रुवसंज्ञानि एभिः सहितेषु पुनः स्थिरोदये स्थिरलग्ने किंभूते स्थिरोदये शुद्धलयांत्यकंटके कूरग्रहरहिता अष्टम ८ द्वादश १२ कंटकभावा १।४।७।१०। यस्मिन् स तस्मिन् ॥ ३२ ॥

**न द्वादशी पक्षतिदर्श३०सप्तमी७रिक्ता४।९।१४तिरि-**
**क्ताब्जदिनेष्वनंत्रकृत ॥ विविष्टियोगेषु पुरप्रवेशनं**
**त्ववामवामैः शकुनैर्विलोमगैः ॥ ३३ ॥**

अथ पुरप्रवेशे दुष्टतिथ्यादीन् वर्जयन्नाह—न द्वादशीति ॥ पुरप्रवेशनं अतंत्रकृत् दुःखकृन्न स्यात् शुभकादित्यर्थः ॥ केषु द्वादशी पक्षतिः प्रतिपत् दर्शोऽमावास्या सप्तमी रिक्तास्तिथयः एताभ्योऽतिरिक्तेषु वर्जितेषु अब्जदिनेषु चान्द्रदिनेषु किंभूतेष्वब्जदिनेषु विविष्टियोगेषु विष्टिवर्जितयोगेषु तु पुनरवामवामैरपसव्यसव्यैः शकुनैर्विलोमगैः कृत्वा अथवा वामे दक्षिणभागे वामैः शुभैर्विलोमगैः शकुनैः ' तंत्रं शास्त्रं कुलं तंत्रं तंत्रं सिद्धौषधक्रिया । तंत्रं सुखं बलं तंत्रं तंत्रं पवनसाधनं ' ॥ १ ॥ इत्यनेकार्थः ॥ ३३ ॥

**विधाय वामं द्युमणिं निवेशयेदवाममिंदुं हरिदाननर्क्षं ॥**
**उतोदयर्क्षभ्रमगं तथा गमी सूर्यान्वयोऽस्तोदयशैलगं पुरा ॥३४॥**

अथ सूर्यवंशोद्भवनृपस्य प्रवेशविधानमाह—विधायेति ॥ उत चेत् गमी सूर्यान्वयः सूर्यवंश्यो राजाऽस्ति तदाऽसौ पुरं निवेशयेत् प्रविशेत् । किंकृत्वा वामं द्युमणिं सूर्यं विधाय तथाऽवामं दक्षिणभागगमिंदुं विधाय। किंभूतं सूर्यं हरिदाननर्क्षं पूर्वादिदिक्षु राशिगं तथा उदयर्क्षभ्रमगं उदयो लग्नराशिस्तस्य भ्रमणगतं कोऽर्थोऽष्टमराशित आरभ्य पंचसु राशिषु वर्तमानोऽर्कः पूर्वाभिमुखगृहे प्रविशतां वामो भवति। एवं पंचमराशित आरभ्य पंचसु राशिषु गतोऽर्को दक्षिणाभिमुखे गृहे प्रविशतां वामो भवति । द्वितीयात् पंचसु गतः पश्चिमाभिमुखे गृहे वामो भवति। एकादशात् पंचसु गत उत्तराभिमुखे गृहे वामो भवतीत्यर्थः। तथास्तोदयशैलगमस्ताचलोदयाचलगतं पुरमपि प्रविधाय प्रविशेदित्यर्थः ॥ ३४ ॥

**भवत्यसौ चेदिति चंद्रवंशजः पुरस्तदावेशनकेऽन्यथोदितं ॥**
**दिने दिनेशान्वयभूरुपैति सद्म निशींदुवंशी च निवेशनाद्भवम् ॥ ३५ ॥**

अथ चंद्रवंशोद्भवनृपस्य प्रवेशविधिमाह—भवतीति ॥ चेद्यदि असौ चंद्रवंशजो राड् भवति तदासौ राजा ... निवेशनके प्रवेशेऽन्यथोदितं पूर्वोक्तं विपरीतेन विशेत् । द्युमणिं

दक्षिणगं विधायेत्यादि ॥ अथ दिनेशान्वयभूः सूर्यवंशजातो राड् दिने निवेशनाद्वरं शुभमुपैति च पुनरिंदुवंशी राड् निशि रात्रौ निवेशनात्प्रवेशात् वरमुपैति ॥ ३६ ॥

**विशालसाधारणयानतो नरे समागते प्राकृतके निवेशनं ॥**
**उदीरितं यत्तदतीष्टदं नृपे विलोकनीयं त्वखिलप्रयाणतः ॥ ३७ ॥**

अथ सामान्यविशेषपुरुषयोः सामान्यविशेषप्रवेशविधिमाह- विशालेति ॥ विशालसाधारणयानतो महन्मध्यप्रयाणात् समागते आयाते नरे प्राकृते सामान्ये मांडलिकादौ यन्निवेशनमभीष्टदमुदितं प्रोक्तं तत्त्वखिलप्रयाणतस्त्रिविधप्रयाणतः आयाते नृपे विलोकनीयम् ॥ ३७ ॥

**यानं मितं द्वादशयोजनैः समं तदूर्ध्वगैस्तत्त्व२५मयोजनैर्बृहत् ॥**
**ततस्तु खंडावधि दूरयानवज्जलप्रयाणं मृधयानमादृतम् ॥ ३८ ॥**

अथ त्रिविधप्रयाणानां प्रमाणमाह---यानमिति ॥ द्वादशयोजनैर्मितं लघुयानं प्रयाणं १ तदूर्ध्वगैर्द्वादशयोजनादग्रगतैस्तत्त्वमयोजनैः पंचविंशतिप्रमितयोजनैर्मितं समं मध्यं प्रयाणं ततस्तु पुनः खंडावधि समुद्रांतं बृहत्तरं जलप्रयाणं मृधयानं संग्रामप्रयाणं च दूरयानवत् बृहत्प्रयाणवत् आदृतं कथितं विबुधैरिति शेषः ॥ ३८ ॥

**स्वकालशुद्ध्येति गमं करोति यो वरोत्तमो वर्णविशेषनीतिगं ॥**
**तथा यथाकालदशावशानुगं लभेदशेषामपि यानसंपदम् ॥ ३९ ॥**

**इति श्रीकविकालिदासोदिते ज्योतिर्विदाभरणे त्रिविधयात्राध्यायः ॥ ११ ॥**

अथ प्रयाणाध्यायोपसंहारमाह---स्वकालेति ॥ यो नरोत्तमो भूपः इति पूर्वोक्तप्रकारेण स्वकालशुद्ध्या गमं गमनं करोति किंभूतं गमं वर्णविशेषनीतिगं क्षत्रियादिवर्णविशेषनीतिप्राप्तं पुनः किंभूतं यथाकालदशावशानुगं यादृगवस्थावशानुगतं तथा स नृपोऽशेषमपि यानसंपदं लभेत् समस्तप्रयाणलक्ष्मीं प्राप्नुयात् ॥ ३९ ॥

इतिश्री पौर्णिमीयगच्छाधिराजभट्टारकपुरंदरश्री महिमाप्रभसूरीश्वरचरणसरोरुह-
चंचरीकायमानशिष्यभावरत्नविरचितया श्रीकालिदासकृत-
ज्योतिर्विदाभरणस्य सुखबोधिकायां त्रिविधयात्रा-
वर्णनामाध्याय एकादशः ॥ ११ ॥

---

गच्छे श्रीमहिमाप्रभाख्यसुगुरोः श्रीपौर्णिमीयाभिधः
शिष्यः सूरिवरस्य मंडणसुतो यो भावरत्नाह्वयः ।
वाल्हांकुक्षिसमुद्भवः स कृतवान् श्रीवाणिगोत्रान्वित-
श्छंदोव्याकरणाभिधास्मरणतोऽलंकारयुक्तामिमाम् ॥ १ ॥

## विवाहप्रकरणम् १२ ।

**अथ वदामि विवाहविनिर्णयं गृहिपदं व्यवहारवृषप्रियं ॥**
**सकलवर्णविवर्णितविग्रहामिह विनम्य हि वागधिदेवताम् ॥ १ ॥**

अथ दिग्विजयानंतरं विवाहः क्रियतेऽतो द्रुतविलंबितेन विवाहाध्यायसंधानमाह—अथेति ॥ अथानंतरमहं श्रीकालिदासो विवाहविनिर्णयं पाणिपीडननिश्चयं वदामि कथयामि कस्मिन्निह द्वादशाध्याये किंभूतं विवाहं गृहिपदं गृहस्थाश्रमस्तस्य पदं स्थानं पुनः किंभूतं व्यवहारवृषो व्यवहारधर्मस्तस्य प्रिय इष्टस्तं किंकृत्वा वागधिदेवतां वागीश्वरीं विनम्य प्रणम्य किंभूतां वागधिदेवतां सकलवर्णैर्द्विजादिभिरक्षरैर्वा स्तुतिभिर्वा विवर्णितः संस्तुतो विग्रहः शरीरं यस्याः सा तां हीति विशेषार्थः ॥ १ ॥

**परिणतिं निखिलाश्रमचारिणामखिलसाधनसिद्धिरुरुर्गृही ॥**
**श्रितशयांबुजसद्ग्रहसंग्रहोऽहमिति वर्णयितुं हि समुद्यतः ॥ २ ॥**

अथ गृहधर्मप्राधान्यकथनेन विवाहवर्णनमंगीकरोति—परिणतिमिति ॥ हीत्यवधारणेऽहं इति हेतोः परिणतिं विवाहं वर्णयितुं समुद्यतः उद्यमयुक्तोऽस्मि इतीति किं निखिलाश्रमचारिणां च पुनराश्रमसेविनां मनुष्याणां मध्ये गृही गृहस्थ उरुः श्रेष्ठः किंभूतो गृही अखिलसाधनसिद्धिः धर्मार्थकाममोक्षाणां सिद्धिर्निष्पत्तिर्यस्मात्स पुनः किंभूतो गृही श्रित आश्रितः शयांबुजसद्ग्रहः करपीडनसत्प्रसादो येन स इति ॥ २ ॥

**कृतमुखैस्त्रियुगैर्निजवर्णजं वरमहीनकवर्णजमादरात् ॥**
**वरयितुं तु मतिं कुरु कन्यके वृणु कलौ निजजातिजमेव हि ॥३॥**

अथ कृतादियुगेषु विवाहयोग्यवरमाह—कृतेति ॥ हे कन्यके त्वं वरं पतिं वरयितुमादरादादरेण मतिमिच्छां कुरु 'मतिर्बुद्धिरिच्छयोः' इति हैमः । कैः कृतमुखैस्त्रियुगैः कृतादियुगत्रये किंभूतं निजवर्णजं चतुर्षु वर्णेषु निजनिजवर्णजातं पुनः किंभूतं वरं अहीनकवर्णजमुत्तमवर्णजातं तु पुनः हीति युक्तार्थे हे कन्यके त्वं कलियुगे निजजातिजं स्वज्ञातिजातमेव वरं वृणु अंगीकुरु ॥ ३ ॥

**परिणयेत्प्रमदादिमपूरुषात्सपदि पंचनरापरपुंभवा ॥**
**अगणमपंचजनापरजं नरं प्रवरगोत्रविभिन्नकुलं तथा ॥ ४ ॥**

अथ विवाहे षष्ठाष्टमपुरुषोत्पन्नवधूवरयोर्योग्यतामाह—परिणयेदिति ॥ प्रमदा सुंदरी नरं परिणयेत् उद्वहेत् सपदि शीघ्रं किंभूता प्रमदा आदिमपूरुषात् प्रथमपुरुषतः पंचनरापर-

पुंभवा पंचनरेभ्योऽपरे षष्ठे पुंसि जातां किंभूतं नरं अगमपंचजनापरजं अगमः सप्तमश्चौसा पंचजनो मनुष्यश्च तस्मादन्यपुरुषजातं अष्टमपुरुषजातामित्यर्थः । 'पंचजनो भूस्पृक्' इति हैमः । तथा पुनः किंभूतं नरं प्रवरगोत्रविभिन्नकुलं आर्षेयप्रवरगोत्रार्षिभ्यां पृथक् कुलं यस्य स तं यतः 'पंचमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा' इति मातृपक्षे पंचमात्पितृपक्षे सप्तमात्पुरुषादूर्ध्वं सापिंड्यं निवर्तत इति याज्ञवल्क्यः ॥ अत्र विस्तरः स्मृत्यंतराज्ज्ञेयः ग्रंथभूयस्त्वभयान्न विस्तरः कृतः ॥ ४ ॥

वृणु वरं नृवरं वयसस्तु ते द्विगुणवर्षवयोऽनाधिकं ततः ॥
दशसमावधिमप्यनु मध्यमं तदधिकं हि जहीहि वराधमम् ॥ ५ ॥

अथ वयसा त्रिविधवरमाह—वृण्विति ॥ हे कन्यके त्वं वरं पतिं वृणु किंभूतं वरं ते तव वयसः सकाशात् द्विगुणवर्षवयोऽनधिकं द्विगुणवर्षवयःपर्यंतं नृवरमुत्तमं तु पुनरनु पश्चात् उत्तमवराभावे त्वं मध्यममपि वरं वृणु किंभूतं वरं ततो द्विगुणवर्षवयसः सकाशात् दशसमावधिं दशवर्षपर्यंतं पुनर्हे कन्यके त्वं हीति युक्तार्थे तदधिकं मध्यमवरप्रमाणादधिकं वराधमं जहीहि त्यज । यतः 'अंधो मूकः क्रियाहीनश्चापस्मारी नपुंसकः । दूरस्थः पतितः कुष्ठी दीर्घरोगी वरो न सन् ॥ मूर्खनिर्धनदूरस्थशूरमोक्षाभिलाषिणां । त्रिगुणाधिकवर्षाणां तेषां कन्या न दीयते' ॥ ५ ॥

विभुभवार्च्यभवानुचरांगजाऽपरिचितान्वयजा किल याऽबला ॥
पतिततंत्रवती कुलटोद्या त्वनवरा न वराय वरस्य सा ॥ ६ ॥

अथ विवाहे त्याज्यकन्यामाह—विभ्विति ॥ सा अबला कन्या वरस्य धवस्य वराय शुभाय न स्यात् । सा का या विभुभवा स्वामिपुत्री तु पुनरर्च्यभवा पूज्यपुत्री पुनः अनुचरांगजा सेवकपुत्री पुनरपरिचितान्वयजा अज्ञातकुलपुत्री पुनः पतितस्य भ्रष्टस्य पुत्री पुनस्तंत्रवती शाकिन्यादिदोषसहिता कामर्णसंवननादिज्ञा वा तस्याः पुत्री कुलटोद्या पुनः अनवरा दुर्भगा किलेत्यवधृतौ ॥ ६ ॥

जननचारुमहाबलवर्त्मगौ धिषणभाषितलक्षणलक्षितौ ॥
समकुलद्रविणौ सुवयोभुजौ परिणतौ यशसे भवतोऽपि तौ ॥ ७ ॥

अथ शुभवधूवरसंयोगं कीर्तयति—जननेति ॥ तौ वधूवरौ परिणतौ विवाहितौ यशसे कीर्तये भवतस्तः । किंभूतौ जनने जन्मकाले चारव उत्तमाः महाबलवर्त्मगाः मरुत्पथचारिणो ग्रहा ययोस्तौ पुनः किंभूतौ धिषणेन गुरुणा भाषितलक्षणैः सामुद्रिकैर्लक्षितौ युक्तौ तौ पुनः किंभूतौ समकुलद्रविणौ सदृशवंशजौ ईभ्यौ पुनः किंभूतौ सुवयोभुजौ शुभवयोभाजौ ॥ ७ ॥

समासमाया वरलोचनाया वरं कराब्जग्रहणान्न नैति ॥
समासमाया वरलोचनाया वरं कराब्जग्रहणान्न नैति ॥ ८ ॥

अथ विवाहे गर्भाधानकालग्रहणाय कन्यायाः समविषमवर्षं दूषयति—समेति ॥ ना पुमान् वरं शुभं नैति न प्राप्नोति कस्मात् वरे श्रेष्ठे लोचने यस्याः सा तस्याः कराब्जग्रहणात् पाणिपीडनात् किंभूताया वरलोनायाः समाभिर्वर्षैः समा समसंख्यवर्षवयोमिता तस्याः समासमायाः । पुनरुत्तरार्द्धमाह ना पुमान् वरं श्रेष्ठं नैति न प्राप्नोति कस्माद् वरलोचनायाः कराब्जग्रहणात् किंभूताया वरलोचनायाः समाभिर्वर्षैरसमा विषमसंख्यवर्षवयोमिता तस्याः। यदुक्तं ' अयुग्मे दुर्भगा नारी युग्मे तु विधवा भवेत् । तस्माद्गर्भान्विते युग्मे विवाहे सा पतिव्रता ॥ १ ॥ मासत्रयादूर्ध्वमयुग्मवर्षे युग्मेऽपि मासत्रयमेव यावत् । विवाहशुद्धिं प्रवदंति संत ' इत्यग्रे वक्ष्यति ॥ ८ ॥

**भूत५प्रमाणे समये कलभ्रुवो भूतप्रमाणो नु**
**भुजांबुजग्रहः ॥ श्रुतिप्रमाणः श्रुतिमे ४ तृती-**
**यके ३ षष्ठे ६ च नाभीष्टफलाप्तिकृत्स्मृतः ॥ ९ ॥**

अथ मतांतरं दर्शयन्निषेधयति—भूतेति ॥ नु इति वितर्के भूतप्रमाणे समये पंचवर्षमिते काले कलभ्रुवः कन्याया भुजांबुजग्रह उद्वाहो भूतप्रमाणो व्यंतरदयः । प्रमाणं च पुनः श्रुतिमे चतुर्वर्षमिते काले कन्यायाः पाणिग्रहः श्रुतिप्रमाणो वेदाः प्रमाणं यस्य स इति सर्वत्र विवाहविशेषणं ज्ञेयं नतु मनुष्ये प्रमाणमिति । पुनस्तृतीये षष्ठे च वर्षे कन्याया उद्वाहोऽभीष्टफलाप्तिकृन् न स्मृतः दुःखकृदित्यर्थः ॥ ९ ॥

**ना दीर्घनिद्रामरमेति हायने पुरोऽष्टमे ७ पाणिविषोदयग्रहात् ॥**
**ना दीर्घनिद्रामरमेति हायने पुरोऽष्टमे पाणिविषोदयग्रहात् ॥१०॥**

अथ विवाहे कन्यायां सप्तमाष्टमवर्षं निषेधति—नेति ॥ अरं शीघ्रं ना पुरुषो दीर्घनिद्रां मरणमेति प्राप्नोति कस्मात् पुरोऽष्टमे पुरोऽग्रेऽष्टमं यस्य स सप्तमस्तस्मिन् हायने सप्तमे वर्षे पाणिविषोदयग्रहात् विषं जलं तस्मादुदयो जन्म यस्य तत् कमलं पाणिरेव विषोदयं तस्य ग्रहणादित्यर्थः ॥ अथोत्तरार्धमाह । अरं शीघ्रं ना पुमान् दीर्घनिद्रामेति मृत्युं प्राप्नोति कस्मिन् पाणिविषोदयग्रहात् विवाहात् पुरोऽग्रेऽष्टमे हायने वर्षे हस्तन्यस्तक्ष्वेडोत्पन्नग्रस्तात् इवेत्युक्तिलेशः अष्टमे वर्षे विवाहात् मृत्युमेति पुरोऽग्रे इत्यत्राष्टममपि वर्षं निषिद्धमिति ॥ १० ॥

**सुधांशुगंधर्वकृपीटयोनिभिः सखंडसप्ताब्द७।६वयोवतीमिमां ।**
**भुक्त्वेति मुक्तां नियतं पतिंवरां जगाद वेदो जगदेकसन्नयः॥११॥**

अथ चंद्रादिभिर्भुक्तकन्याकालमाह—सुधेति ॥ वेदो वेदव्यासः इति जगाद कथयामास किंभूतो वेदः जगदेकसन्नयः जगति एको मुख्यः सन्नयो यस्य स इतीति किं तदाह नियतं निश्चितं सुधांशुश्चंद्रः गंधर्वो व्यंतरः कृपीटयोनिर्हुताशन एषां द्वंद्वे एभि-

रिमां कन्या। भुक्त्वा मुक्तां त्यक्तां किंभूतां सखंडसप्ताद्ववयोवर्तीं सार्द्धसप्तवर्षप्रमितवयोयुक्तां। उक्तंच 'षडष्टमध्ये नोद्वाह्या कन्या वर्षद्वयं यतः। सोमो भुंक्ते ततस्तद्वद्गंधर्वश्च तथानलः।१' पाठांतरेप्युक्तं ' भुनक्ति सोमः प्रथमं समाद्वयं कन्यां च गंधर्वपतिर्द्वितीयं। अग्निस्तृतीयं मनुजश्चतुर्थं विवाह इष्टो न षडष्टमध्ये ' ॥ ११ ॥

सर्वत्र शश्वन्नवमत्रिवर्षं ९।१०।११।वामावयो वामतरं विवाहे ॥
वाहेषु७५माब्दानुवहं कलौ स्यात् कलं विहायोयनशुद्धिवच्चेत्॥१२

अथ कृतादियुगे विवाहयोग्यं कन्याया वय आह—सर्वत्रेति ॥ शश्वन्निरंतरं सर्वत्र कृतप्रमुख-युगेषु वामावयः कन्यावयो विवाहे करपीडने वामतरं चारुतरं स्यात्। किंभूतं वामावयः नवमत्रिवर्षं नवमात् त्रीणि वर्षाणि यस्मिंस्तत्। पुनः कलौ युगे वामावयः कलं मनोहरं स्यात् किंभूतं वामावयः वाहेषुमाब्दानुवहं सप्तमपंचमवर्षयुक्तं चेद्यदि विहाय आकाशं तस्मिन्नयनं येषां ते इति विहायोयनशुद्धिवत् ग्रहशुद्धियुक्तं वामावयः स्यात्तदेति ॥ १२ ॥

धिषणधिष्ण्यपधिष्ण्यबलाचितं जनिभमेणदृशो यदि हायने ॥
शयकुशेशयमर्दनमष्टमे८जगदुरत्रिपराशरदेवलाः ॥ १३ ॥

अथ द्रुतविलंबितेनाष्टमवर्षकन्याविवाहे ऋषिमतमाह—धिषणेति ॥ यदि अष्टमे हायने वर्षे एणदृशो मृगाक्ष्याः जनिभं जन्मनक्षत्रं धिषणादिबलयुक्तं भवेत्। धिषणो गुरुः धिष्ण्य-पश्चंद्रः धिष्ण्यः शुक्रश्चैषां बलेनाचितं व्याप्तमिति तदाष्टमे वर्षेऽत्रिपराशरदेवला ऋषयः शयकुशेशयमर्दनं पाणिपीडनं जगदुरूचुः। शयः कर एव कुशेशयं तस्य मर्दनं पीडन-मिति निरुक्तिः ॥ १३ ॥

जनिभमंबरपांथबलोज्झितं कलदृशः करवारिजसंग्रहे ॥
यदि च पंचम५मष्टम८मद्रि७मं समयमाह कलौ नहि पेशलम्॥१४॥

अथ विवाहे हीनबलग्रहैः कन्यायाः पंचमादिवर्षं निषेधति—जनिभेति ॥ यदि करवारिजसंग्रहे करकमलपीडने कलदृशः सुलोचनाया जनिभं जन्मनक्षत्रमंबरपांथानां ग्रहाणां बलैरुज्झितं त्यक्तं स्यात्तदा कलौ युगे पंचमं पुनरष्टमं पुनरद्रिमं सप्तमं समयं वर्षं पेशलं मनोरमं न आह न कथयति बुध इति शेषः ॥ १४ ॥

नवमपूर्वसपादशरत्त्रयेऽखिलयुगेषु खगैस्तु यथाबलैः ॥
शर५समेऽष्टम८सप्तमयोः७कलौ बलिभिरिष्टकरश्च करग्रहः ॥ १५ ॥

अथोद्वाहे ग्राह्यवर्षविवेकतामाह—नवमेति ॥ तुरवधारणेऽखिलयुगेषु यथाप्राप्तबलै-र्बलयुक्तैः खगैः कृत्वा करग्रह उद्वाह इष्टकरः सुखकृत् स्यात्। कस्मिन् नवमपूर्वेति नवमं पूर्वं आदौ यस्य तत् तच्च सपादं मासत्रयसहितं तच्च शरत्त्रयं वर्षत्रयं च तस्मिन्

मासत्रययुक्तनवमदशमैकादशवर्षेष्विति च पुनः कलौ युगे बालिभिर्ग्रहैः करग्रह इष्टकरः स्यात्। कस्मिन् शरसमे पंचमवर्षेऽष्टमसप्तमवर्षयोश्च ॥ १९ ॥

**विषमवर्षपदूर्ध्वसमादिपन्नियममादृतमत्र तु हायनं ॥**
**परिणतावृषिभिर्विधुमानतो न परतोऽपरतोऽपरतोषकृत् ॥ १६ ॥**

अथ चंद्रमानात् वर्षग्रहणविवेकमाह—**विषमेति** ॥ तु पुनरत्र परिणतौ विवाहे ऋषिभिर्हायनं 'हायनं पुन्नपुंसकं' वर्षमादृतमंगीकृतं किंभूतं विषमवर्षस्य यः पादश्चतुर्थभागस्तस्मादूर्ध्वमग्रे समवर्षस्य आदिर्यः प्रथमचतुर्थभागस्तेन नियमो निश्चयो यस्मिंस्तत् समासे समग्रपदं । कोऽर्थः । विषमे वर्षे मासत्रयपर्यंतमिति कस्मात् परतः अग्रतः अपरतः अहितो विधुमानतश्चंद्रमानात् अपरास्मिंस्तोषकृत् अपरतोषकृत् न उक्तकालतोऽन्यकाले दुःखकृदित्यर्थः ॥ १६ ॥

**भवति सांघ्रिमहेश११समाधिका सपदि या सततं हि कुमारिका ॥ गलितदानफलानु यथागुणे न तदनेहसि तामिति नोद्वहेत् ॥ १७ ॥**

अथ गलितदानफलां कन्यां परिहरन्नाह—**भवतीति** ॥ हि युक्तार्थे सपदि शीघ्रं या कुमारिका सांघ्रिमहेश ११ समाधिका मासत्रयाधिकैकादशवर्षमिता सती अनु पश्चात् सततं गलितदानफला गलितं दानफलं यस्याः सकाशात् सा कस्मिन् तदनेहासि स एव अनेहा तदनेहा तस्मिन् यथागुणे सति इति हेतोर्ना पुमान् तां कुमारिकां नोद्वहेत् ॥१७॥

**इति नयोऽस्ति बलामरराड्विशामनुजपज्जननेऽपि युगत्रये ॥**
**अनिशमेषु सुधर्मवतां कलौ मनुभुवामपरेषु यथातथा ॥ १८ ॥**

अथ विप्रादिपूक्तकालनयं दृढयति—**इति नय इति** ॥ अनिशं सदा युगत्रये बलामरराड्विशां 'बला लक्ष्मीर्बला मही' इत्यनेकार्थोक्तेः ॥ बलामराः भूदेवाः राजः क्षत्रियाः विशो वैश्या एषां अपि पुनः अनुजपज्जनने अनुजः कनिष्ठश्चासौ पज्जननः शूद्रश्च तस्मिन्नपि इति नयोऽस्ति कलौ एषु मनुष्येषु सुधर्मवतां शुभधर्मयुक्तानां मनुभुवां मानवानामिति नयोऽस्ति अपरेषु मानवेषु यथातथाऽस्ति सामान्यमित्यर्थः ॥ १८ ॥

**भरतबल्लवधीवरचर्मकृच्छ्वपचनाहलसंकरजातिषु ॥**
**पतितकारुकविंदजने यथा समयशुद्धिरियं च तथेष्यते ॥ १९ ॥**

अथ शैलूषादिजातिषु सामान्यशुद्धिं दर्शयति—**भरतेति** ॥ यथा समयशुद्धिरियमस्ति तथा इष्यते कथ्यते केषु भरतेति भरतः शैलूषः बल्लवो गोपः धीवरः कैवर्तः चर्मकृत् पादुकाकृत् श्वपचश्चांडालः नाहलः पुलिंदः संकरजातिर्वर्णसंकरः एषु पुनः कस्मिन् पतितो

जातिभ्रष्टः कारुः शिल्पी कुविंदननस्तुवायः पतितादीनां समाहारैकत्वमिति लोकेऽपि यतः 'गाढं उढीपुनइ लोहारः मोचीचर्मकरइंथवहारविहुन्यातिकुपारिजाणउसईपंचन्यातिएकारुकही ॥ १ ॥ कंदोईकाडीउकुंभारभोइसाईतमर्दनीउमूत्रधारमालीतंबोलीपाणिमारन्नुसुन्नारुसुणी सोनार' ॥ २ ॥ १९ ॥

परिमनंत्यरिमीणककगौडगास्तदनु गोचरशुद्धमहस्करं ॥
द्रविडमालवदक्षिणकांध्रगा बलिसुराज्यकुजा मनुजा गुरुम् ॥२०॥

अथ सूर्यादिग्रहशुद्धौ बहुदेशमतांतरमाह—परिमनंतीति ॥ अरिमीणककगौडेषु गच्छंतीति एतद्देशगा मनुजा मनुष्या अहस्करं गोचरशुद्धं परिमनंति कथयंति तदनु पश्चात् द्रविड-मालवदक्षिणकांध्रगाः बलिः सुराज्यः सुराष्ट्रदेशः एतत्कुजाः एतद्भूमिभवा मनुजा गुरुं गोचरशुद्धं कथयंति ॥ २० ॥

मगधसिंधुमरुप्रतिगोचरेऽसुरसुरार्चितशुद्धिमति ग्रहः ॥
करतलस्य हिमाद्रितटाश्रयान् खशमुखान्रुचिरः सितसंपदि ॥२१॥

मगधेति ॥ मगधादिदेशान् प्रति असुरसुरार्चितशुद्धिमति शुक्रगुरुशुद्धियुक्ते गोचरे सति करतलस्य ग्रहो रुचिरः उद्वाहः शुभः स्यात् । पुनर्हिमाद्रितटाश्रयान् खशमुखान् देशान् प्रति सितस्य शुक्रस्य संपद् शुद्धिर्यस्मिंस्तस्मिन् एवंविधे गोचरे उद्वाहः शुभः स्यात् ॥ २१ ॥

जनपदेष्वपरेषु रवीज्ययोः कुरुमुखेषु च गोचरचारिणोः ॥
सकलदेशरसासु तुषारगोः करनिपीडनशुद्धिरितीक्ष्यते ॥२२॥

जनपदेष्विति ॥ अपरेषु कुरुमुखेषु जनपदेषु देशेषु रवीज्ययोर्गोचरचारिणोः करनिपीडनशु-द्धिरीक्ष्यते कथ्यते पुनः सकलदेशरसासु समस्तदेशभूमिषु तुषारगोश्चंद्रस्य गोचरचारिणः करनिपीडनशुद्धिरीक्ष्यते ॥ २२ ॥

ध्वनिगुणायनगामिनि गोचरे वरतरे वरमेति पतिंवरा ॥
समयसंपदि वै विषमेऽधमं समफलं समलं समलक्षिते ॥ २३ ॥

अथ ग्रहगोचरशुद्धौ कन्यायाः शुभफलं दर्शयति—ध्वनीति ॥ वै इति हेतौ ध्वनिगुणं शब्दगुणमाकाशमिति तार्किकाः तत्रायनगामिनि ग्रहे गोचरे वरतरे शुभतरे सति पतिंवरा स्वयंवरा कन्या वरमुत्तमं फलमेति प्राप्नोति कस्यां समयसंपदि कालशुद्धौ सत्यां । एवं विषमे क्रूरे ग्रहे गोचरेऽधमं फलं एवं समलक्षिते समाश्चंद्रबुधशुक्रास्तैर्लक्षिते युक्ते गोचरे सति समफलं किंभूतं समलं सह मलेन वर्तते यत्तत् मध्यफलमित्यर्थः ॥ २३ ॥

समबलो विषमो ग्रहगोचरो विमलयत्यमुमत्र तदर्चया ॥
समयमेव तथापि यथार्हया न शिवकृद्व्यय१२वंधु४लयें८गिराः॥२४

मासत्रययुक्तनवमदशमैकादशवर्षेष्विति च पुनः कलौ युगे बलिभिर्ग्रहैः करग्रह इष्टकरः स्यात् । कस्मिन् शरसमे पंचमवर्षेऽष्टमसप्तमवर्षयोश्च ॥ १५ ॥

**विषमवर्षपदूर्ध्वसमादिपन्नियममादृतमत्र तु हायनं ॥**
**परिणतावृषिभिर्विधुमानतो न परतोऽपरतोऽपरतोषकृत् ॥ १६ ॥**

अथ चंद्रमानात् वर्षग्रहणविवेकमाह—विषमेति ॥ तु पुनरत्र परिणतौ विवाहे ऋषिभिर्हायनं ' हायनं पुन्नपुंसकं ' वर्षमादृतमंगीकृतं किंभूतं विषमवर्षस्य यः पादश्चतुर्थभागस्तस्मादूर्ध्वमग्रे समवर्षस्य आदिर्यः प्रथमचतुर्थभागस्तेन नियमो निश्चयो यस्मिंस्तत् समासे समग्रपदं । कोऽर्थः । विषमे वर्षे मासत्रयपर्यंतावधिति कस्मात् परतः अग्रतः अपरतः अहितो विधुमानतश्चंद्रमानात् अपरास्मिंस्तोषकृत अपरतोषकृत न उक्तकालतोऽन्यकाले दुःखकृदित्यर्थः ॥ १६ ॥

**भवति सांघ्रिमहेश११ समाधिका सपदि या सततं हि कुमारिका ॥ गलितदानफलानु यथागुणे न तदने-हसि तामिति नोद्वहेत् ॥ १७ ॥**

अथ गलितदानफलां कन्यां परिहरन्नाह—भवतीति ॥ हि युक्तार्थे सपदि शीघ्रं या कुमारिका सांघ्रिमहेश ११ समाधिका मासत्रयाधिकैकादशवर्षमिता सती अनु पश्चात् सततं गलितदानफला गलितं दानफलं यस्याः सकाशात् सा कस्मिन् तदनेहसि स एव अनेहा तदनेहा तस्मिन् यथागुणे सति इति हेतोर्ना पुमान् तां कुमारिकां नोद्वहेत् ॥१७॥

**इति नयोऽस्ति बलामरराड्विशामनुजपज्जननेऽपि युगत्रये ॥**
**अनिशमेषु सुधर्मवतां कलौ मनुभुवामपरेषु यथातथा ॥ १८ ॥**

अथ विप्रादिषूक्तकालनयं द्रढयति—इति नय इति ॥ अनिशं सदा युगत्रये बलामरराड्विशां ' बला लक्ष्मीर्बला मही ' इत्यनेकार्थोक्तेः ॥ बलामराः भूदेवाः राजः क्षत्रियाः विशो वैश्या एषां अपि पुनः अनुजपज्जनने अनुजः कनिष्ठश्चासौ पज्जननः शूद्रश्च तस्मिन्नपि इति नयोऽस्ति कलौ एषु मनुष्येषु सुधर्मवतां शुभधर्मयुक्तानां मनुभुवां मानवानामिति नयोऽस्ति अपरेषु मानवेषु यथातथाऽस्ति सामान्यमित्यर्थः ॥ १८ ॥

**भरतबल्लवधीवरचर्मकृच्छ्वपचनाहलसंकरजातिषु ॥**
**पतितकारुकविंदजने यथा समयशुद्धिरियं च तथेष्यते ॥ १९ ॥**

अथ शैलूषादिजातिषु सामान्यशुद्धिं दर्शयति—भरतेति ॥ यथा समयशुद्धिरियमास्ति तथा इष्यते कथ्यते केषु भरतेति भरतः शैलूषः बल्लवो गोपः धीवरः कैवर्तः चर्मकृत् पादुकाकृत् श्वपचश्चांडालः नाहलः पुलिंदः संकरजातिर्वर्णसंकरः एषु पुनः कस्मिन् पतितो

जातिभ्रष्टः कारुः शिल्पी कुविद् तन्तुवायः पतितादीनां समाहारैकत्वमिति लोकेऽपि यतः 'गाढं उढीपुनइ लोहारः मोचीचर्मकरइव्यवहारविहुन्यातिकुपारेजाणउसई पंचन्यातिएकारुकही ॥ १ ॥ कंदोईकाडीउकुंभारमोइसाईतमर्दनीउसूत्रधारमालीतंबोलीपणिसारन्नुसुन्नारुसुणी सोनार' ॥ २ ॥ १९ ॥

परिमनंत्यरिमीणकगौडगास्तदनु गोचरशुद्धमहस्करं ॥
द्रविडमालवदक्षिणकाध्रगा बलिसुराज्यकुजा मनुजा गुरुम् ॥२०॥

अथ सूर्यादिग्रहशुद्धौ बहुदेशमतांतरमाह—परिमनंतीति ॥ अरिमीणकगौडेषु गच्छंतीति एतद्देशगा मनुजा मनुष्या अहस्करं गोचरशुद्धं परिमनंति कथयंति तदनु पश्चात् द्रविड-मालवदक्षिणकाध्रगाः बलिः सुराज्यः सुराष्ट्रदेशः एतत्कुजाः एतद्भूमिभवा मनुजा गुरुं गोचरशुद्धं कथयंति ॥ २० ॥

मगधसिंधुमरुत्प्रतिगोचरेऽसुरसुरार्चितशुद्धिमति ग्रहः ॥
करतलस्य हिमाद्रितटाश्रयान् खशमुखान्रुचिरः सितसंपदि ॥२१॥

मगधेति ॥ मगधादिदेशान् प्रति असुरसुरार्चितशुद्धिमति शुक्रगुरुशुद्धियुक्ते गोचरे सति करतलस्य ग्रहो रुचिरः उद्वाहः शुभः स्यात् । पुनर्हिमाद्रितटाश्रयान् खशमुखान् देशान् प्रति सितस्य शुक्रस्य संपद् शुद्धिर्यस्मिंस्तस्मिन् एवंविधे गोचरे उद्वाहः शुभः स्यात् ॥ २१ ॥

जनपदेष्वपरेषु रवीज्ययोः कुरुमुखेषु च गोचरचारिणोः ॥
सकलदेशरसासु तुषारगोः करनिपीडनशुद्धिरितीक्ष्यते ॥२२॥

जनपदेष्विति ॥ अपरेषु कुरुमुखेषु जनपदेषु देशेषु रवीज्ययोर्गोचरचारिणोः करनिपीडनशु-द्धिरीक्ष्यते कथ्यते पुनः सकलदेशरसासु समस्तदेशभूमिषु तुषारगोश्चंद्रस्य गोचरचारिणः करनिपीडनशुद्धिरीक्ष्यते ॥ २२ ॥

ध्वनिगुणायनगामिनि गोचरे वरतरे वरमेति पतिंवरा ॥
समयसंपदि वै विषमेऽधमं समफलं समलं समलक्षिते ॥ २३ ॥

अथ ग्रहगोचरशुद्धौ कन्यायाः शुभफलं दर्शयति—ध्वनीति ॥ वै इति हेतौ ध्वनिगुणं शब्दगुणमाकाशमिति तार्किकाः तत्रायनगामिनि ग्रहे गोचरे वरतरे शुभतरे सति पतिंवरा स्वयंवरा कन्या वरमुत्तमं फलमेति प्राप्नोति कस्यां समयसंपदि कालशुद्धौ सत्यां । एवं विषमे क्रूरे ग्रहे गोचरेऽधमं फलं एवं समलक्षिते समाश्चंद्रबुधशुक्रास्तैर्लक्षिते युक्ते गोचरे सति समफलं किंभूतं समलं सह मलेन वर्तते यत्तत् मध्यफलमित्यर्थः ॥ २३ ॥

समबलो विषमो ग्रहगोचरो विमलपत्यसुमत्र तदर्चया ॥
समयमेव तथापि यथार्हया न शिवकृद्व्रय१२बंधु४लयें८गिराः॥२४

अथानिष्टग्रहे पूजां दर्शयति—समेति ॥ समबलो मध्यमफलो विषमोऽधमफलो ग्रहगोचरोऽत्र विवाहे तदर्चया तस्य ग्रहस्य पूजयामुं विवाहसमयमेव विमलयति निर्मलं करोति । अंगिरा गुरुर्यथार्हया यथायोग्यपूजयापि तथा न शिवकृत् कस्मिन् व्यय१२ बंधु४लये ८द्वादशचतुर्थाष्टमभावे इति ॥ २४ ॥

**जिनपदायनहायनजा शुभा भवति शुद्धिरिहैकभवा समा ॥**
**उभयतो न यदा त्वधमोढयोः शुभसमाधमवत्फलदा इमाः ॥२५॥**

अथ यादृशी ग्रहशुद्धिस्तादृक् फलं दर्शयति—जिनेति ॥ इह विवाहे शुद्धिर्जिनपदायनहायनजा शुभा भवति जिनपदं विष्णुपदं गगनं 'जिनौ कुमोदक इति विष्णुपदं वियन्नभ ' इति च हैमः । तत्रायनं मार्गो एषां ते ग्रहा हायनं च आभ्यां जातेति तु पुनरत्रैकभवा ग्रहजाता वर्षजाता वा शुद्धिः समा पुनरुभयतो ग्रहगोचरवशाभ्यां जाता शुद्धिर्यदा न भवति तदाधमा भवति । इमा उत्तमसममध्यमाः शुद्धयः क्रमेण ऊढयोः परिणतयोर्दंपत्योः शुभसमाधमवत्फलदाः स्युः ॥ २५ ॥

**नगमपास्य यमाशमनुष्णगो रविरुषागतिजक्लमथुव्यथः ॥**
**किमिव कारयितुं भुवि मंगलं वसुपदिग्गतिमान्विनिवर्तते ॥२६॥**

अथोद्वाहे उत्तरायणं विशिनष्टि—नगमिति ॥ रविः सूर्य इति हेलौ वसुपो धनदस्तस्य दिग् उत्तरा तस्यां गतिवान् वर्तते किंकृत्वा यमाशं नगमपास्य दक्षिणोदयाचलं हित्वा किंभूतो रविरनुष्णं शीतलं मंदं वा गच्छति प्राप्नोतीति अनुष्णगः शीतकालत्वात् अत एव पुनः किंभूतो रविः उषेति उषायां रात्रौ गतिर्गमनं तस्याः जाता क्लमथुव्यथा परिश्रमपीडा यस्य स देवानां दक्षिणायनरात्रित्वात् इति किं किमिति वितर्के रवावुत्प्रेक्ष्यते भुवि भूमौ मंगलं विवाहादिकार्यं कारयितुमिव यतोऽहं कष्टात् निर्गतो यूयं मंगलं कुरुत यथान्योऽपि यो विषमस्थानात्कष्टेनागच्छति तस्य वर्द्धापनादिमंगलं क्रियते इत्युक्तिलेशः । उत्तरायणे विवाहः शुभ इति हार्दम् ॥ २६ ॥

**इति विवस्वदुदग्गतिबोधवान्मुनिगणोऽकलयन्नवमंगलं ॥**
**स्फुरदनेकविलासविलासिनीरतिकलोदयमार्यसितोदयम् ॥ २७ ॥**

अथ गुरुशुक्रोदये विवाहं दर्शयति—इति विवस्वदिति ॥ विवस्वतः सूर्यस्य उदग्गतिरुत्तरायणं तस्य बोधवान् ज्ञानज्ञश्चासौ मुनिगणो ऋषिसमूहश्चार्यं नवमंगलं नवीनोद्वाहमकलयत् कथयामासेत्यर्थः ॥ किंभूतं नवमंगलं स्फुरंतो दीप्यमाना अनेकविलासा अस्य अस्तीति स्फुरदनेकविलासी पुरुषो विलासिनी स्त्री च तयो रतिकलायाः कामक्रीडाया उदयः प्रादुर्भावो यस्मिंस्तत् पुनः किंभूतं आर्यसितोदयं गुरुशुक्रयोरुदयो यस्मिंस्तत् ॥२७॥

नुरविसारदिनैर्मुनिसंहतिः स्फुटतरामरवासरवासरैः ॥
वरणमाह पतिंवरया पुरा सुतिथियोगशुभाहइनावहैः ॥२८॥

अथ वस्त्रभूषणादिमोचनकालशुद्धिमाह—नुरिति ॥ पुरा प्रथमं मुनिसंहतिर्ऋषिगणो नुः पुंसः पतिंवरया कन्यया सह वरणं विवाहसंयोजनमतः पश्चात् वस्त्रभूषणादिमोचनं वरणसंज्ञमाह ब्रूते। वरणं इति लोकभाषा। कैः कृत्वा स्फुटेति स्फुटतरा अयनांशसहिता अमरवासरवासरा उत्तरायणदिवसास्तैः किंभूतैः अविसारदिनैः विसारो मीनसंक्रांतिस्तस्य दिनरहितैरित्यर्थः। 'विसारः शकुली शल्को' इति हैमः ॥ पुनः किंभूतैः सुतिथियोगाः शुभातिथयः सुयोगाः शुभाहः शुभदिनं इनः सूर्यवार एतान् आवहंति ददतीति तैरेभिर्युक्तैरित्यर्थः ॥ २८ ॥

त्रिदशसुप्तिदिनापरवासरैर्व्ययनभागदिनास्त्र१२तिमिद्यु१२भिः ॥
कचिददो वरणं समुदीरितं यदि न संपदमर्त्यदिनस्य च ॥ २९ ॥

अथात्र मतमाह—त्रिदशेति ॥ वा इति पक्षांतरे यदि अमर्त्यदिनस्य अमरदिनस्योत्तरायणस्य संपद् शुद्धकालप्राप्तिर्न स्यात्तयाप्यदो वरणं पाणिपीडनमुदीरितं कथितं कैः कृत्वा त्रिदशसुप्तिर्देवशयनं चातुर्मास्यकं तस्याः दिनानि तेभ्योऽपरवासरैरन्यदिनैः किंभूतैरन्यवासरैः विगतानि अयनभागदिनानि अयनांशवासराणि एभ्य एवंविधानि अस्त्रतिमिद्यूनि धनुर्मीनसंक्रांतिदिनानि एषु तानि तैः धनुर्मीनयोरयनांशदिनवर्जितैरित्यर्थः ॥ २९ ॥

वसुभजैनशयानिलपूर्विकानलमघांत्यशिफाध्रुवमैत्रभैः ॥
सुरचिकित्सकवार्द्धकिभान्वितैरपि भराजबला वृणुते वरम् ॥३०

अथात्र भशुद्धिं दर्शयति—वसुभेति ॥ स्त्री अपि वरं पतिं वृणुते किंभूता भराजबला भानां नक्षत्राणां राजा चंद्रस्तस्य बलं यस्याः सा कैः कृत्वा वसुभादिनक्षत्रैः वसु धनिष्ठा जिनो विष्णुर्देवतास्य जैनं श्रवणः शयो हस्तः अनिलः स्वाती पूर्विकाः पूर्वात्रयं अनलः कृत्तिका मघा अंत्यं रेवती शिफा मूलं ध्रुवसंज्ञानि मित्रभमनुराधा एतैः किंभूतैः सुरचिकित्सकोऽश्विनी वर्द्धकिभं चित्रा एतैरन्वितैर्युक्तैः 'शिफा मातरि मांस्यां च जटायां च सरित्यपि' इति हैमः ॥ ३० ॥

व्यशुभकंटकरंध्र१।४।७।१०।८नृभोदये वरणमातनुते हि वरश्रियं ॥
त्र्युपचये३।६।१०तदिनं च विवाहतोऽगकृतिमादिममाशु निकृंतति॥३१

अथात्र भावशुद्धिं दर्शयति—व्यशुभेति ॥ हि युक्तार्थे वरणं कर्तृपदं वरश्रियं श्रेष्ठलक्ष्मीं भर्तुः श्रियं वा आतनुते विस्तारयति कस्मिन् व्यशुभेति विगता अशुभाः क्रूरग्रहा येभ्यस्ते एवंविधेषु कंटक १।४।७।१०। रंध्र ८ भावेषु नृभोदयो नरराश्युदयस्तस्मिन् च पुनर्विवाहत आदिमं पूर्वं त्र्युपचयेतदिनं त्रयाणां उपचयो वृद्धिस्तेन इतं प्राप्तं दिनं यत्तत् कर्तृपदमा-

शु शीघ्रमंगकार्तिं विवाहोपयोगि कंडनादिकार्यं निकृंतति छिनत्ति विनाशयतीत्यर्थः । कोऽर्थो विवाहात् पूर्वं तृतीयं षष्ठं नवमं च दिनं त्याज्यमित्यर्थः ॥ यतः ' दलनं कंडनं चैव व्यंजनं मोदकानि च । यवारमंडपौ वेदी कुंकुमं वर्णकं तथा ' इति ॥ ३१ ॥

**प्रथममन्यदपि व्रतचौलजं परिणतेर्विदधीत विधानकं ॥**
**वरणभद्युषु मंडपवर्णकाभरणगीतयवारककर्म च ॥ ३२ ॥**

अथ विवाहात्प्रथमं कृत्यं दर्शयति—प्रथममिति ॥ पुरुष इति शेषः । अन्यदपि व्रतचौलजं विधानकं मौंजीबंधनादिकार्यं परिणतेर्विवाहात् प्रथमं विदधीत कुर्यात् च पुनः पुरुषो मंडपेति मंडपकर्म मंडपरचना वर्णकाकर्म खंडिकादिना गृहस्य धवलीकरणं आभरणकर्म गीतकर्म यवारककर्म 'जवारा' इति भाषा । एतच्छदेवीस्थापनं तदुपरि सर्वतो यवारकवपनमिति लोकप्रसिद्धिः । एषां द्वंद्वे एषां कर्म करोति केषु वरणभद्युषु विवाहपूर्वकृत्यनक्षत्रदिनेषु ॥ ३२॥

**रमणिका सवितानकमंडपा भवति तिर्यगुडुष्वपि वा यमे ॥**
**अवटमाहुरधोलपनैः क्षणैर्बलिविरोपणमेवमुदाननैः ॥ ३३ ॥**

अथ वेदिकादिरचनां दर्शयति—रमणिकेति ॥ तिर्यगुडुषु वाथवा यमे शनिवारेऽपि रमणिका वेदी एवंविधा भवति ' महिला रमणी ज्ञेया रमणी वेदिका मता ' इत्यनेकार्थध्वनिमंजरी । किंभूता रमणिका सवितानकमंडपा चंद्रोदयमंडपयुक्ता पुनर्बुधा अवटं खातकरणमाहुः कैरधोलपनैरधोमुखनक्षत्रैः क्षणैस्तन्नक्षत्रमुहूर्तैर्वा पुनर्बुधाः बलिविरोपणं माणवकस्तंभरोपणमाहुः । कैरुदाननैरूर्ध्वमुखनक्षत्रैः खातं कृत्वा तत्र खातविषये पूगफलाक्षतान्मंत्रसंस्कारपूर्वान् निधाय ततस्तत्र स्तंभारोपणमिति ॥ ३३ ॥

**अवटकोणमहीततलं त्यजेच्छरणमंडपवेद्यनुगं सदा ॥**
**स्फुरदलंकृतिचीवरधारणेऽनुदितमप्युपयामदिनं श्रियै ॥ ३४॥**

अथ गृहादिप्राप्तं खातकोणतलं त्यजति—अवटेति ॥ सदा विचक्षणोऽवटकोणमहीततलं अवटो गर्तकोणोऽस्रस्तस्य महीं भूमिं इतं प्राप्तं एवं यत् तलं स्थानं त्यजेत् किंभूतं तलं शरणं गृहं मंडपः वेदी एता अनुगं प्राप्तं खाते वेवस्त्याज्य इत्यर्थः । अथात्र प्रस्तावात् भूषणचीवरधारणशुद्धिमाह उपयामदिनं विवाहदिवसमनुदितमपि अनुक्तमपि श्रियै लक्ष्म्यै स्यात् कस्मिन् स्फुरदलंकृतिचीवरधारणे दीप्यमानभूषणवस्त्रधृतौ ॥ ३४ ॥

**वर्णराशिगणखेटतारकानाडिकाभभगवर्गवश्यता ॥**
**दूरमेभिरुदितं विशारदैर्मित्रमत्र दशभिश्च युक् क्वचित् ॥३५॥**

अथ रथोद्धतया दशधा मेलापकदायि काव्यमाह—वर्णेति ॥ वर्णो विप्रादिः राशिर्मेषादिः गणो देवगणादिः खेटो रव्यादिः तारकाश्विन्यादिः नाडिका फणिचक्रस्थाः भभगो नक्षत्रयोनिः वर्गाः अकचटतपाद्योऽष्टौ वश्यता राशिवश्यता यथा नृराशीनां सर्वे वश्या

सिंहं विनेति समासे समग्रपदं दूरं विशारदैः पंडितैरत्रोद्गाहं एभिर्वर्णादिभिर्दशभिः कृत्वा मित्रं मेलापकं उदित प्रोक्तं च पुनः क्वचित् युग्युजिरपि ॥ ३९ ॥

**पंचमांकमितमैथुताः क्रमान्मीनमेषवृषवैणिका ३ गृहाः ॥**
**सोमपावनिपवैश्यपद्भुवां नोचजां परिणयेद्वशां नरः ॥ ३६ ॥**

अथैषु प्रथमं वर्णविवेकं प्रथयति—पंचमांकेति ॥ सोमपा विप्रा अवनिपाः क्षत्रियाः वैश्याः पद्भुवः शूद्राः एषां द्वंद्वे एषां क्रमात् क्रमेण मीनादिराशयः स्युः किंभूता मीनादिराशयः पंचमांकमितमैथुताः पंचमनवमराशियुक्ताः । विप्राणां मीनराशिस्तस्मात् पंचमः कर्कश्च वृश्चिकश्च एवं क्षत्रियाणां मेषः सिंहो धनुश्च वैश्यानां वृषः कन्या मकरश्च शूद्राणां वैणिको मिथुनराशिस्तुला कुंभश्च 'वीणावादस्तु वैणिकः' इति हैमः ॥ मीनादयो गृहा राशयश्चेति समासः अन्योन्यसंबंधात् मीनकर्कवृश्चिका विप्रवर्ण इत्यादि ज्ञेयं । वशे वशां स्त्रीं न परिणयेत् किंभूतां स्त्रीं उच्चजां वर्णाधिकजातां । यतः कर्कटालिझषा विप्रा मेषसिंहधनुर्नृपाः । मृगगोकन्यका वैश्याः शूद्रा द्वंद्वतुलाघटाः ॥१॥ एकवर्णो भवेच्छ्रेष्ठो मध्यमौ विप्रक्षत्रियौ । अधमौ विप्रवैश्यौ च विप्रशूद्रौ विवर्जयेत् ॥ २ ॥ वर्णाधिका यदा नारी तस्या भर्ता न जीवति । अथवा जीवते तस्या अपुत्रो धनवर्जितः ॥ ३ ॥ ३६ ॥

**यौ परस्परमदानुगौ सदा बंधु४राज्य१०समितौ बला३प्ति११गौ ॥**
**एक१भौ यदि हि जंपती स्मृतौ तौ विराजितकुलौ न चान्यगौ॥३७॥**

अथ काव्यद्वयेन राशिविवेकं दर्शयति—याविति ॥ यदि चेत् यौ दंपती वधूवरौ एवंविधौ भवतस्तदाह किंभूतौ परस्परमदानुगौ उभयतः सप्तमराशिगतौ पुनः बंधुराज्यसमितौ चतुर्थदशमराशिगतौ पुनर्बलाप्तिगौ तृतीयैकादशराशिगतौ पुनरेकभौ एकं भं राशिर्ययोस्तौ एकराशिगतौ च पुनरन्यराशिगतौ न स्तस्तदा तौ जंपती सदा विराजितकुलौ विराजितं अलंकृतं कुलं याभ्या तौ कुलोद्योतकरौ स्मृतौ कथितौ ॥ ३७ ॥

**शत्रुमार१२परिबर्ह२गं नरं प्राप्य पुण्य९मति५गं हि कन्यका ॥**
**शत्रु६नाशग८मिह स्वभात्तु किं खेटसख्यविधिना शमश्नुते ॥ ३८ ॥**

शत्रिवति ॥ तुरवधारणे इह राशिमैत्र्या कन्यका नरं प्राप्य किं यदि खेटसख्यविधिनान्योन्यग्रहमैत्रीविधिना शं सुखमश्नुते प्राप्नोति किंभूतं नरं स्वभात् निजराशितः शत्रुमारपरिबर्हगं शत्रोः सकाशात् षष्ठभावात् मारः सप्तमः कोऽर्थः षष्ठसंख्यामारभ्य सप्तमितसंख्यागणनया द्वादशो राशिरायातः परिबर्हो परिच्छदो धनभावः द्वितीयो राशिरिति: तौ गच्छतीति तं द्विर्द्वादशराशिगतमित्यर्थः । पुनः किंभूतं नरं पुण्यमतिगं नवमपंचमराशिगतं पुनः किंभूतं नरं शत्रुनाशगं षष्ठाष्टमराशिगतं । यतः 'शत्रुषष्ठाष्टके मृत्युः कलहो नवपंचमे । द्विर्द्वादशे तु दारिद्र्यं शेषेषु प्रीतिरुत्तमा' ॥ १ ॥ ३८ ॥

**पावनैंदवपुनर्वसुश्रवक्षिप्रपौष्णमनुराधयान्वितं ॥**
**दैवमाह गणमैशपूर्विकाशामनंस्थिरमिमं नरे विधिः ॥ ३९ ॥**

अथ काव्यद्वयेन गणविवेकं दर्शयति—पावनेति ॥ विधिर्ब्रह्मासिद्धांतकर्ता दैवज्ञः पावनादिनक्षत्रं दैवं गणं देवगणमाह पवनस्येदं पावनं स्वाती ऐंदवं मृगशिरः पुनर्वसु श्रवः श्रवणः क्षिप्रसंज्ञानि पौष्णं रेवती एषां समाहारैकत्वं किंभूतं अनुराधयान्वितमनुराधायुक्तं इति देवगणः । पुनः ऐशमार्द्रा पूर्विका पूर्वात्रयं शामनं भरणी स्थिरसंज्ञमिमं गणं नरे आह मनुष्यगण इत्यर्थः ॥ ३९ ॥

**व्यैशदारुणसमानवासवत्वाष्ट्रवारुणमघा गणोऽपरः ॥**
**मंजुलैकगणयो रतिस्तयोर्मध्यमा न्नमरयोः पराधमा ॥ ४० ॥**

व्यैशेति ॥ विगतं ऐशं यस्मात् आर्द्रारहितं दारुणसंज्ञं समानं साधारणसंज्ञं वासवं धनिष्ठा त्वाष्ट्रं चित्रा वारुणं शतभिषक् मघा एषामपरो राक्षसो गणः । तयोर्वरवध्वोरेकगणयोर्मंजुला उत्तमा रतिः प्रीतिः तयोर्न्नमरयोर्नरदेवगणयोर्मध्यमा रतिः तयोर्नरराक्षसगणयोः पराधमा रतिः ॥ ४० ॥

**जीवराजमिहिरावनीभुवो मित्रभावनिरता मिथस्त्विह ॥**
**क्रोडकाव्यविधुजागवस्तथा वैरिणोऽनिशममी परस्परम् ॥४१॥**

अथ खेटसख्यविवेकं दर्शयति—जीवेति ॥ इह मेलके जीवो गुरुः राजा चंद्रः मिहिरो रविः अवनीभूर्मंगल एषां द्वंद्वे एते ग्रहा मित्रभावे मित्रतायां निरताः अतिशयेन रक्ता मिथः परस्परं प्रीतियुक्ता इत्यर्थः । तु पुनः क्रोडः शनिः काव्यः शुक्रः विधुजो बुधः अगुः राहुः एते तथा परस्परं मैत्रीयुक्ताः पुनरनिशं निरंतरमेते परस्परं वैरिणः संति यदाह ' राहुरव्योः परं वैरं गुरुभार्गवयोरपि । हिमांशुबुधयोर्वैरं विवस्वन्मंदयोरपि ' इति ॥ ४१ ॥

**अंग१मार७मृति८मंगलं तथा बांधव४व्यय१२कमंगलं जनुः ॥**
**नाधिगम्य सुदृशोऽबलाविशो वै तदेव फलमातनोत्यनु ॥ ४२ ॥**

अथ जन्मभावे भौमफलं दर्शयति—अंगेति ॥ वै इति विशेषार्थे अबला च विट् पुमांश्चानयोः समाहारे एकत्वमबलाविशः स्त्रीपुरुषस्य जनुर्जन्मलग्नं कर्तृपदमनु विवाहात् पश्चात् तदेव फलमातनोति विस्तारयति जनुः किंकृत्वा अंग१मार७मृति८मंगलं अंगे-प्रथमे मारे सप्तमे मृतौ अष्टमे भावे भौममधिगम्य प्राप्य तथा पुनर्बांधवे ४ व्ययके च १२ भावे मंगलं भौममधिगम्य किंभूतस्याबलाविशः सुदृशः सुनेत्रस्य तदेव फलमिति कोऽर्थः यथा उक्तं तन्वादिभावे १।४।७।८।१२। मंगलो भौमः प्राप्तोऽस्ति तथा तेषु भावेषु मंगलं निरुपद्रवं नकरोति अर्थात्तान् हंतीत्यर्थः ॥ यतः 'लग्ने व्यये च पाताले जामित्रे चाष्टमे कुजे । भर्ता भार्याविनाशाय भार्या भर्तृविनाशिनी ' इत्यत्र ग्रहसख्यं न विलोक्यं ॥ ४२ ॥

**कामवर्तिनि ७विकर्तने भवेच्चेटिकेनभुवि निष्कलाबला ॥**
**एतदेव युगिलाजयुग्मिथो बाधते न तु तयोर्गुरोर्दृशा ॥ ४३ ॥**

अथ सप्तमभावे रव्यादिसंयोगफलं दर्शयति---कामेति ॥ कामवर्तिनि सप्तमभावे वि-कर्तने रवौ सति अबला स्त्री चेटिका स्थिरंगना ? श्रेटीवद्भवेत । पुनः सप्तमे इनभुवि शनौ साति अबला निष्कला भवेत 'पुष्पहीना तु निष्कला' इति हैमः ॥ पुनरेतदेव युक् सप्तमभावे रविशनियुग्मं कर्तृपदं तयोर्वधूवरयोर्मिथः परस्परं बाधेन पीडयति किंभू-मेतदेव युग् इलाजयुग् भौमयुक्तं यदि गुरोर्दृशा न । नाद्युक्तं न तु तदेति खेटसख्यविवेकः ॥ ४३ ॥

**भीरुजन्मभनृभावधेर्गणाज्ज्योतिषां नव९वितष्टतारकाः ॥**
**देवमावचल७राम३बाण५माः पातयंत्यपि वशावरौ हि ताः ॥४४॥**

अथ तारकामेलापकमाह—भीरुजेति ॥ भीरुजन्मभं कन्याजन्मनक्षत्रं तस्मान्नृभं नरनक्षत्रं तस्यावाधिर्मर्यादा यस्य स तस्मादेवंविधात् ज्योतिषां नक्षत्राणा गणात् नववि-तष्टतारका नवभिर्भागैस्तष्टाः हृतास्तारकास्ताः शेषास्ताराः कर्तृपदं हि निश्चितं वशा-वरौ स्त्रीनरौ पातयंति घ्नंतीत्यर्थः । किंभूतौ वशावरौ देवगौ गुरमदृशावपि किंभूताः शेषास्ताराः अचलरामबाणैर्भायेते इति एतन्माः ... तृतीया पंचमी पक्षांतरेण रलयोर्ड-लयोश्चैक्यमित्यन्योन्यसंबंधात् रकारत्यागात् डकारनिक्षेपात् ताडकानामराक्षसी यथा दे-वान् पातयति स्म तथा इमास्तिस्र इति छायार्थः ॥ ४४ ॥

**दीर्घपृष्ठवलये त्रिनाडिके न्यस्तधिष्ण्यपटले विचिंतयेत् ॥**
**आदिनाडिकमुडु प्रियापहं माध्यमर्थनुदुभापदे परम् ॥ ४५ ॥**

अथ नाडीवेधे फणिचक्रं दर्शयति—दीर्घेति ॥ सुधीस्त्रिनाडिके दीर्घपृष्ठवलये फणिचक्रे इति चिंतयेत् विचारं कुर्यात् किंभूते दीर्घपृष्ठवलये न्यस्तधिष्ण्यपटले स्थापितनक्षत्रसमूहे तत्रा-दिनाडिकं प्रथमनाडीस्थमुडु प्रियापहं भर्तृघातकं स्यात् । माध्यं मध्यनाडीस्थं नक्षत्रमर्थनुत् द्रव्यविनाशकं स्यात् । अपरमंत्यनाडीस्थं भं नक्षत्रमुभापदे उभयोर्वधूवरयोः कष्टाय स्यात् । अथात्र ग्रंथांतराल्लिख्यते ॥ अश्विन्यादि लिखेच्चक्रं सर्पाकारं त्रिनाडिकं । तत्र वेधवशाज्ज्ञेयं विवाहादिशुभाशुभं ॥१॥ त्वष्ट्रनाडीवेधनक्षत्रमाश्विरौद्रपुनर्भम् । उत्तराहस्तेंद्रमूलवारुण्यपूर्वभद्रपदा नव ॥२॥ इत्यादिनाडिका ॥ याम्यं सौम्यं गुरुर्योनिचित्रामैत्रजलाव्हयं । धनिष्ठा चोत्तराभद्रा मध्यनाडी व्यवस्थिता ॥ ३ ॥ इति मध्यनाडी ॥ कृत्तिकारोहिणीसार्पमघास्वातीविशा-खिकाः । उषा च श्रवणः पौष्णं पृष्ठनाडीव्यवस्थिताः ॥ ३ ॥ इत्यंतनाडी ॥ अश्व्यादिनाडी-वेधर्क्षे षष्ठं द्वितियकं क्रमात् । याम्यादितुर्यं तुर्यं च कृत्तिकादिद्विसप्तकं ॥ ५ ॥ एवं निरी-क्षयेद्वेधं कन्यामंत्रे गुरौ सुरे । पुण्यस्त्रीस्वामिमित्रेषु देशे ग्रामे पुरे गृहे ॥६॥ एकनाडीस्थित-

क्षाणि यदा स्युर्वरकन्ययोः । तदा वेधं विजानीयाद्दुर्वादिषु तथैव च ॥ ७ ॥ नक्षत्रं यस्य जन्मर्क्षं तस्य जन्मर्क्षतो व्यधः । प्रनष्टं जन्मभं यस्य तस्य नामर्क्षतो व्यधः ॥ ८ ॥ द्वयोर्जन्मभयोर्वेधो द्वयोर्नामभयोस्तथा । जन्मनामर्क्षयोर्वेधो न कर्तव्यः कदाचन ॥ ९ ॥ एकनाडीस्थिता दुष्टा भर्तुश्चैव कुलांगना । तस्मान्नाडीव्यधो वीक्ष्यो विवाहे शुभमिच्छता ॥ १० ॥ त्वन्नाडीवेधतो भर्ता मध्यनाडी व्यधे द्वयोः । पृष्ठनाडीव्यधे कन्या म्रियते नात्र संशयः ॥ ११ ॥ समासन्ने व्यधे शीघ्रं दूरवेधाच्चिरेण तु । वर्षांतरमानेन वर्षे दुष्टं प्रजायते ॥ १२ ॥ एकराशौ धनापत्यसौभाग्यजननं स्मृतं । एकर्क्षद्वितयैकांशैर्विवाहं नैव कारयेत् ॥ १ ॥ एकनक्षत्रजातानां परेषां प्रीतिरुत्तमा । दंपत्योः कलहो ज्ञेयः पुत्रो जातो रिपुर्भवेत् ॥ २ ॥ ग्रामे वा नगरे वापि राजसेवकयोस्तथा । एकऋक्षे भवेत् प्रीतिर्विवाहे दुःखमादिशेत् ॥ ३ ॥ इति ॥ ४९ ॥ *

**एकराशिरुभयोर्हि भिन्नभं चेदभिन्नभमुतान्यराशिता ॥**
**पुंस्त्रियो रतिरतीव नो यदा रोहिणीशुचिभनाडिकोडुवत् ॥ ४६ ॥**

अथ राशिनक्षत्रयोर्भिन्नाभिन्ने फलमाह—एकेति ॥ हि निश्चितं चेत् उभयोः पुंस्त्रियोरेकराशिर्भिन्नभं पृथक् नक्षत्रं स्यात् । उत अभिन्नभं एकनक्षत्रं अन्यराशिता भिन्नराशित्वं स्यात्तदा वरवध्वो रतिः प्रीतिः स्यात् । यदा रोहिणी शुचिभं कृत्तिका तयोर्नाडिकोडुवत् नाडिकानक्षत्रेण युक्तं न स्यात्तदेति । यतः 'एकनक्षत्रजातानां नाडीवेधो न विद्यते । भिन्नांशश्चैकराशीनां दंपत्योः प्रीतिहेतवे' इति ॥ ४६ ॥

**आह कश्चिदिह नैकभे व्यधं मूलवेधविधिबोधमंदधीः ॥**
**मूलवेधघटशक्तिवद्भवेन्मूलवेध इति पुंनिषेधकृत् ॥ ४७ ॥**

अथ मूलवेधे कस्यचिन्मतं दूषयन्नाह—आहेति ॥ कश्चिदिह चक्रे एकभे एकनक्षत्रे यत एकभे वेधः कथं एकेन इतरस्य ताडनं वेध इत्यत्राभावात् व्यधं वेधं नाह न वदति इति हेतोः समूलवेधविधेर्बोधे ज्ञाने मंदा धीर्यस्य स एवंविधोऽस्ति इति किं मूलवेधः मूलवेधघटशक्तिवत् पुंनिषेधकृद्भवेत् कोऽर्थः एकनाडौ उत्तरोत्तरनक्षत्रवेधापेक्षया एकस्मिन् नक्षत्रेऽयं मूलवेधः पाति रक्षतीति पुमान् रक्षक इत्यस्यान्वर्थस्य निषेधकृत् रक्षको न भवेदित्यर्थः ॥ दृष्टांतमाह यथा मूलेऽधस्तले वेधो यस्य स चासौ घटश्च तस्य शक्तिः भग्नतलघटत्वं याति जलाद्याधेयवस्तूनि रक्षतीति पुमान् घट इत्यस्य फलितार्थस्य निषेधकृत् जलादिरक्षको न स्यात् विनाशकृदित्यर्थः ॥ अतो मूलवेधभं शक्तिहीनत्वात् दूषणाय यथा लोकोक्तिः 'रंकस्य कन्यारोपणं पुरीषायेति' ॥ उक्तं 'एकर्क्षे जायते यत्र विवाहे वरकन्ययोः । मूलवेधो भवेत्तत्र महद्दुष्टफलप्रदः' ॥ १ ॥ इति ॥ ४७ ॥

---

* आकृति नंबर १९।२०।२१

पादवेधमहिमंडले त्यजेदादिमांत्यचरणं हि दारुणं ॥
द्व२ग३गुणां३ध्रिगतमंगनाविशो वर्णपूर्वगुणसंपदत्रचेत् ॥ ४८ ॥

अथ पादवेधं दर्शयति—पादेति ॥ हि युक्तार्थे सुधीरहिमंडले फणिचक्रे पादवेधं त्यजेत् किंभूतं पादवेधमादिमांत्यचरणं प्रथमं चतुर्थं यस्मिंस्तत् किंभूतं दारुणं क्रूरं पुनः किंभूतं द्वग्गुणांघ्रिगतं द्वितीयतृतीयपादमार्गं वेधादि अंगनाविशोः स्त्रीनरयोः वर्णपूर्वगुणसंपद् वर्णप्रमुखगुणशुद्धिरत्र मेलापकेऽस्ति तदापीति उक्तं च । एतच्चक्रं समालेख्यमश्विन्याद्यंध्रिपंक्तिनः ॥ रेखा द्वादशनाडीभिः कर्तव्यः पन्नगाकृतिः ॥ १ ॥ आद्यांशेन चतुर्थांशं चतुर्थांशेन चादिमं ॥ द्वितीयेन तृतीयं तु तृतीयेन द्वितीयकं ॥ २ ॥ एवमंशव्यधो यत्र जायते वरकन्ययोः ॥ तयोर्मृत्युर्न संदेह अंशांशाः स्वल्पदोषजाः ॥ ३ ॥ इति ॥ ४८ ॥

अंघ्रिभाद्विचरणोद्भवा कन्यका गदितपक्षरोधिनी ॥
स्याद्यदागम४समीर५नाडिका पक्ष एव किल लक्षणं त्विति ॥ ४९ ॥

अथ कलौ पक्षं दर्शयति—अंघ्रीति ॥ तु अवधृतौ यदा आगमस४मीर ५ नाडिका पक्षे चतुर्थपंचमी नाडिका पक्षे द्व्यंघ्रिभत्रिचरणोद्भवा द्विचरणकं त्रिचरणकं च जाता कन्या स्यात्तदा गदितपक्षरोधिनी उक्तपक्षनिवारिणी स्यात् ॥ इति कलिलक्षणमेवेति ॥ ४९ ॥

देवराजगुरुमंत्रभामिनीवस्तुदेशपुरमंदिराण्यपि ॥
ना विहाय फणिभृद्विनाडिकावेधमर्थधिषणः समाश्रयेत् ॥ ५० ॥

अथ येषु नाडीवेधो न द्रष्टव्यस्तानाह—देवेति ॥ ना पुमान् फणभृद्विनाडिकावेधं फणिचक्रवेधं विहाय परिवर्ज्य देवादिपदार्थान् समाश्रयेत् । देवः सुरः राजा नृपः गुरुर्धर्मोपदेशकः मंत्रः भामिनी वस्तु देशः पुरं मंदिरं एतानि किंभूतो ना पुमान् अर्थेन तत्वविचारेण धिषणो गुरुतुल्यः ॥ ५० ॥

वाहकुंभ्यजभुजंगमाहयः श्वोतुजो तु खनकोंदुराश्च गौः ॥
सैरिभी हरिणहा तु कासरी पुंडरीकहरिणैणककुराः ॥ ५१ ॥
कीशबभ्रुयुगकीशनागहाः समिसिंहपशुसिंधुराः क्रमात् ॥
योनयोऽमरचिकित्सकोडुतो ज्योतिषाम्पिवरैरुदाहृताः ॥ ५२ ॥

अथ भानां योनीराह—वाहेति ॥ अश्विन्याः वाहोऽश्वः१ भ. कुंभी हस्ती२ कृ. अजः ३ रो. भुजंगमः ४ मृ. अहिः ५ आ. श्वा ६ पु. ओतुर्बिडालः ७ पु. अजः ८ आ. ओतुः९ म. खनक उंदुरः१० पू. उंदुरः११ उ. गौर्धेनुः१२ ह. सैरिभी महिषी१३ चि. हरिणहा व्याघ्रः १४ स्वा. कासरी महिषी१५ वि. पुंडरीको व्याघ्रः१६ अ. हरिणो मृगः१७ ज्ये.

एणो मृगः१८ मू. कुक्कुरः श्वा१९ पू. कीशः कपिः२० उ. बभ्रुर्नकुलः२१ अभिजित् नकुलः २२ श्र. वानरः२३ ध. नागहा इभारिः सिंहः२४ श. सप्तिरश्वः २५पू. सिंहः २६ उ. पशुर्गौर्धेनुः२७ रे. सिंधुरो हस्ती२८ मतिवरैः सुधीभिर्ज्योतिषां भानां योनय उदाहृता उक्ताः कस्मात् क्रमात् अमरचिकित्सकोद्भुतोऽश्विनीनक्षत्रात् ॥ ५२ ॥

नागसिंहमजकीशमाहितं वाहकासरजमुंदिरौतुजं ॥
व्यालबभ्रु रुरुकुक्कुरं त्यजन्मेलकर्मणि मृगारिगोभवम् ॥ ५३ ॥

अथ योनिवैरमाह—नागेति ॥ सुधीर्मेलकर्म्मणि स्त्रीनरमेलककार्ये आहितं अहितयोर्वैरिणोर्जातवैरं त्यजेत्तदाह । नागसिंहं नागसिंहयोर्वैरं हस्तिसिंहं नित्यवैरे समाहारैकत्वमिति हेमबृहद्वृत्तौ । अजकीशं मेषवानरं वाहकासरजं अश्वमहिषं उंदिरौतुजं उंदिरबिडालं व्यालबभ्रु सर्पनकुलं रुरुकुक्कुरं मृगमारमेयं मृगारिगोभवं सिंहगवं ॥ ५३ ॥

अवीश्वरः कौ वृषदंशकश्चौ नखायुधस्तावहिरुंदुरः पौ ॥
टावेणदंशः कलितो मृगो य्यासुरभ्रकः श्यामिह वर्गभावः ॥ ५४ ॥

अथोपजात्या वर्गाधिपानाह—अवीति ॥ अआरम्य अंयावत् चतुर्दश स्वरा अ इत्यत्र लुप्तसप्तमी अ इत्यस्मिन् वर्गे वीनां पक्षिणामीश्वरो गरुडः १ कौ इति कवर्गे वृषदंशको बिडालः २ चौ इति चवर्गे नखायुधः सिंहः ३ तौ इति तवर्गेऽहिः सर्पः ४ पौ इति पवर्गे उंदुरः ५ टौ इति टवर्गे एणदंशः श्वानः ६ ' शालावृको मृगदंश ' इति हैमः । य्यां इति यी अत्र यूकारमध्ये चतुर्थस्वरग्रहणं यकारादिचतुर्वर्णपरिहरणार्थं कुचुटुतुपुवर्गा इत्यादिवत् 'स्यादीदूदेकस्वरं कृत' इति लिंगानुशासनोक्त्या ईकारांतं उकारांतं च एकस्वरं नाम स्त्रीलिंगं स्यात्तेन नदीवद्रूपसिद्धिः तस्यां य्यां इति यरलवेषु मृगः ७ शी यीवत् तस्यां श्यां शषसहेषु उरभ्रको मेषः ८ इति इह मेलके वर्गभावो वर्गाधिपः कलितः कथितः कविभिरिति शेषः ॥ इति अकचटतपयशवर्गाः स्वामिनश्च ॥ ५४ ॥

कुरंगसिंहावहिवैनतेयौ कौलेयकावी खनकौतुकौ स्तः ॥
विरोधिनौ ताविह दंपती तत्कृतोपयामौ व्यवहारवाहौ ॥ ५५ ॥

अथैषां परस्परं वैरत्वमाह—कुरंगेति ॥ कुरंगसिंहौ हरिणव्याघ्रौ अहिवैनतेयौ सर्पगरुडौ कौलेयकावी श्वानमेषौ " सारमेयः कौलेयकः शुन " इति हैमः । खनकौतुकौ उंदिरबिडालौ विरोधिनौ परस्परवैरकारकौ स्तः ॥ तत्कृतोपयामौ वर्गवैरविषये विहितोद्वाहौ दंपती स्त्रीनरौ व्यवहारवाहौ विरोधकारकौ भवतः काविव ताविव वर्गविरोधिवत् । अत्र दृष्टांतविवक्षारूपेण कुरंगसिंहाविति समाहारैकत्वेन यदुक्तं बृहद्वृत्तौ अन्ये तु वैर एवाभिधेये समाहारमिच्छंति श्ववराहं वैरमिति वैरिषु यथाप्राप्तं दक्षिणाद्वामगमनं प्रशस्तं श्वशृगालयोर्विद्यते लोके आत्यंतिको विरोधो यथा मार्जारमूषिकयोरिति गाथा । गरुडे बिडाले सिंहे साणे सप्पेयमुसगमिगयमेंढेयअठवग्गापंचमठाणेरिउहोइ ॥ १ ॥ ५५ ॥

**सास्त्रादिखंडा मिथुना३ऽबला ६ तुला ७ नृराशयो गो२**
**ऽज१ गजा५ऽरिशास्त्रिणः९ ॥ सैणा १० दिखंडाश्चतु-**
**रंघ्रयः सदा कीटोऽस्ति कीटो भ्रमरः सरीसृपः ॥ ५६ ॥**

अथ राशिस्वरूपवश्यावश्यमाह—सास्त्रेति ॥ मिथुनावलातुला इति सार्द्धत्रयो नृराशयः संति किंभूताः मिथुनाबलातुलाः अस्त्रस्य धनूराशेरादिखंडेन पूर्वार्द्धेन सहवर्तमानाः सास्त्रादि-खंडाः पुनः गोजगजारिशास्त्रिणः गौर्वृषः अजो मेषः गजारिः सिंहः शास्त्री उत्तरार्द्ध-धनुरिति चत्वारश्चतुरंघ्रयश्चतुष्पदः स्मृताः किंभूताः एणस्य मृगस्य आदिखंडं पूर्वार्द्धं तेन सहवर्तमानाः इति कीटः कर्कः कीटः कीटस्वरूपोस्ति भ्रमरो वृश्चिकः सरीसृप-सर्पस्वरूपोऽस्ति ॥ ५६ ॥

**सैणा १० वशेषौ घट ११ नीर १२ चारिणौ नृराशयो**
**ऽदंति हि नीरचारिणौ ॥ तौ स्तोऽपरान्घ्नंति विना द्वि-**
**पा ५ हितं त्वलिं विना भीषयति द्विपाहितम् ॥ ५७ ॥**

सैणेति ॥ घटनीरचारिणौ कुंभमीनौ नीरचारिणौ जलराशिकौ स्तः भवतः किंभूतौ सैणवशेषौ मृगस्योत्तरार्द्धसहितौ इति नृराशयस्तौ जलचारिणौ राशी अदंति भक्षंति तु पुनर्नृराशयो द्विपाहितं. सिंहं विनाऽपरान् सर्वान् घ्नंति निःकृंतति । पुनर्द्विपाहितः सिंहोऽलिं विना वृश्चिकं हित्वा सर्वान् भीषयति त्रासयति । स्पष्टार्थः सुमनुष्यस्य जलजा भक्ष्याः सिंहं विना सर्वे वशाश्च सिंहस्य वृश्चिकं विना सर्वे वशा इति सिंहस्य वृश्चिको वैरी मनुष्यस्य जलचरासिंहा नेष्टा मेलनं न कर्तव्यमित्यर्थः ॥ ५७ ॥

**नराद्दूरे यदि धिष्ण्यमंडले स्थिरा पुरंध्री किमु धिष्ण्यमंडले ॥**
**दूरे हि सा सीदति संस्थितान्यथा स्यादेतदुक्तेर्नययुक्तितान्यथा ॥५८॥**

अथ नृदूरलक्षणमाह—नरादिति ॥ यदि चेत् नरात् नरनक्षत्रात् धिष्ण्यमंडले नक्षत्रबिंबे दूरे समीपे पुरंध्री स्त्री स्थिता स्त्रीनक्षत्रं स्थितं स्यात्तदा सा स्त्री धिष्ण्यमंडले गेहभूमौ संस्थिता किमु सीदति अपि तु न सीदति सुखं प्राप्नोतीत्यर्थः ॥ यदा नरात् दूरे स्थिता पुरंध्री स्यात्तदा सा सीदति दुःखं प्राप्नोति हीत्यवधारणे एतदुक्तेरन्यथा स्यात्तदा नययुक्तिनाऽन्यथा स्यात् । कोऽर्थः नरात् समीपदूरयोरभावे सामान्यफलं वाच्यमित्यर्थः ॥ ५८ ॥

**षडंत्यभाद्द्वादश १२ वामदेवभात् पूर्वांतरंत्या नव देवदेवभात् ॥**
**योगाः स्युराद्ये दयितप्रियाला मध्ये रतिर्नुश्चरमे प्रियाबला ॥ ५९ ॥**

अथ युजिमाह—षडमिति ॥ पूर्वश्चांतश्चांत्यश्च पूर्वांतरंत्याः पूर्वमध्यांत्यभागाः योगाः युजयः स्युः कस्मात् अंत्यभात् रेवतीनक्षत्रात् षड् नक्षत्राणि पूर्वभागयुजिः पुनर्वामदेवभात्

‘ वामदेवो वृषांक ’ इति हैमः । आर्द्रातो द्वादशभानि मध्य गयुञ्जिः पुरुदेवस्य देव इंद्रस्तस्य भात् ज्येष्ठातो नव भानि अंत्यभागयुञ्जारिति ॥ एतत् प्रमाणं । आद्ये प्रथमभागे दयितः पतिः प्रियो यस्याः सा एवंविधा अबला स्यात् । मध्ये मध्यभागे स्त्री पुंसयोः परस्परं रतिः प्रीतिः । च पुनश्चरमंडत्यभागे तुः पतेरबला प्रिया वल्लभा स्यात् । यत ‘पूर्वभागयुञ्जिभे पतिः प्रियो योषितामपरभागवर्तिनि ॥ सा प्रिया भवति च योगिनि प्रेमनूनमुभयोः परस्परम्’ ॥ ५९ ॥

**चतुर्गुणोऽयं गण एव नाडिका गुणास्त्रिकैकैकगुणे सतारके ॥**
**वशित्वदूरे द्विगुणाः १२ परे गुणा गुणैरशेषै रतिरुत्तमोदिता ॥ ६० ॥**

अथ गणादीनां गुणैक्यं करोति—चतुरिति ॥ अयं गणो देवगणादिश्चतुर्गुणः कोऽर्थः यदा गणमेलनमस्ति तदा गणस्य चत्वारो गुणाः इति । एवं गुणास्त्रिकाः नाडिकाया गुणत्रयं पुनर्वशित्वदूरं कर्तृपदं सतारके तारकासहिते एकैकगुण एक एको गुणः तयोस्ते भवतः । वशित्वस्यैको गुणः दूरस्यैको गुणः । पुनः परे गुणाः द्विगुणाः गणादिव्यतिरिक्तानां परेषां द्वौ द्वौ गुणौ भवत इत्यर्थः । अशेषैः समग्रैर्गुणैः रतिः प्रीतिरुत्तमा श्रेष्ठा उदिता प्रोक्ता ॥६०॥

**उक्तैर्गुणैर्निःशकलैरभीष्टता समानसख्यं दशभिस्त्वनिष्टता ॥**
**दशावरार्धैरिह मुख्यमादिजान्मित्रं च ताराग्रहपुंजनाडिका॥६१॥**

अथ गुणानां न्यूनाधिकत्वे तारतम्यं दर्शयति—उक्तैरिति ॥ इह मेलके निःशकलैः समग्रैरुक्तैरिष्टता उत्तमा प्रीतिः । एवं दशभिर्गुणैः समानसख्यं समप्रीतिः तु पुनर्दशावरार्धैर्दशभ्योऽवरार्द्धं हीनं न्यूनं येषु तैर्गुणैरनिष्टता दुःखत्वं च पुनः ताराग्रहपुंजनाडिकाः आदिजात् विप्रात् मुख्यं प्रकृष्टं मित्रं सख्यं यथा विप्राणां तारामैत्री मुख्या क्षत्रियाणां ग्रहमैत्री मुख्या वैश्यानां पुंजस्य गणस्य मैत्री मुख्या शूद्राणां नाडिकामैत्री मुख्या ॥ ६१ ॥

**गणस्य नाड्या ग्रहसदो विरोधिता वयस्यभावेऽन्यगुणैर्विरोधिता ॥**
**यदीति तेष्वाह कविः पराशरो दशाधिकैः सौहृदता पराशरः ॥ ६२॥**

अथात्र ऋषिमतमाह—गणस्येति ॥ यदि गणस्य देवगणादेर्नाड्या ग्रहसदो ग्रहस्याविरोधिता एषां परस्परं विरोधो नास्ति अन्यगुणैर्वयस्यभावे मित्रभावे विरोधितास्ति तदा कविः प्राचेतसः ‘ वल्मीकप्रभवः कविः ’ इति हैमः । पराशरश्चेति आह इति किं दशाधिकैर्गुणैः सौहृदता मैत्री किंभूतः कविः पराशरश्च पराशरः परासु कर्मारिषु आशरः राक्षसतुल्यः ॥ ६२ ॥

**कलश११गोरजितुला६७३स्त्रीणां स्य१०गा कुरु करांबुरुहग्रहणं भगे ॥**
**भयविवर्ज्यवुरुज्झितमंडले नरनराशिलवर्गगुणोदयम् ॥ ६३ ॥**

अथ द्रुतविलंबितेन कुंभसंक्रांत्यादौ विवाहं दर्शयति—कलशेति ॥ हे नरवर त्वं करांबुरुहग्रहणं करकमलपीडनं कुरु विधेहि कस्मिन् भगे सूर्ये कलशः कुंभराशिः गौर्वृषः जितुमं मिथुनं अजो मेषः मृगो मकर एषामास्यगे मुखगते सति किंभूते भगे मघवश्चंद्रः धिष्ण्यः शुक्रः गुरुः एभिर्ग्रहैरुज्झितं त्यक्तं मंडलं येन स तस्मिन् किंभूतं करांबुरुहग्रहणं अखिलवर्गगुणानामुदयः प्राप्तिर्यस्मिंस्तत् ॥ ६३ ॥

**समयमन्वधिकं क्षयमेणपं सधिषणं धिषणं सजरं शिशुं ॥**
**भृगुसुवं च विहाय विवाहयेच्छकशताब्दमिहैव कुमारिकाम्॥६४**

अथाधिककालादिकं त्यजन् विवाहमाह—समयेति ॥ पुमान् कन्यां विवाहयेत् किंकृत्वाधिकक्षयसमयं कालं विहाय अनु पश्चात् सधिषणं गुरुसहितमेणपं सिंहराशिं सिंहस्थं गुरुं विहायेति च पुनः सजरं वृद्धं शिशुं बालं एवंविधं धिषणं गुरुं विहाय पुनर्वृद्धं शिशुं भृगुभुवं शुक्रं विहाय पुनः शकशताब्दं संवत्सरस्य शततमं वर्षं विहाय इहैव शुद्धौ इति ॥ ६४ ॥

**उडुनि मासि दिने ह्युदये प्रियापरिणतिं परितास्यति जन्मनः ।**
**तिथितमीद्युविपर्ययके क्वचिन्नु भवेदिति पक्षविपर्यये ॥ ६५ ॥**

अथ जन्मनक्षत्रादौ विवाहं सापवादमाह—उडुनि इति ॥ हि अवधारणे प्रियापरिणतिं विवाहं परितास्यति ग्लानितां प्राप्नोति कस्मिन् जन्मन उडुनि मासि दिने उदये लग्ने सति क्वचित् पाणिपीडनं तिथितमीद्युविपर्ययके तिथिरात्रिदिनानां विपर्ययात् कृष्णात् शुक्ले शुक्लात् कृष्णे पक्षे न स्यात् । तु पुनः क्वचित् पक्षविपर्यये पाणिपीडनं स्यात् जन्मनक्षत्रादौ सति ॥ ६५ ॥

**यदाद्यगर्भप्रभवौ सवौ तयोर्ज्येष्ठे विवाहस्त्विति शुक्रपंचता ॥**
**वशानरौ त तत्समभावतः शुभं तदोजभावेन तदूढपंचता ॥६६॥**

अथोपजात्या ज्येष्ठपंचके विवाहविवेकमाह—यदेति ॥ यदा वशानरौ वधूवरौ आद्यगर्भप्रभवौ प्रथमगर्भजातौ भवतः तु पुनः तथा ज्येष्ठे मासे सवौ जातौ स्तः तथा तयोर्वधूवरयोर्ज्येष्ठे मासे विवाह इति शुक्रपंचता ज्येष्ठपंचकं स्यात् । स्पष्टार्थस्त्वयं ज्येष्ठमासजातो भर्ता १ ज्येष्ठमासजाता कन्या २ तथा ज्येष्ठगर्भजातो भर्ता ३ ज्येष्ठगर्भजाता कन्या ४ ज्येष्ठमासे विवाह ५ इति तदा तत्समभावतः तयोर्ज्येष्ठजातभर्तुर्ज्येष्ठजातकन्यायाः साम्यं शुभं तदोजभावेन तयोर्मध्य एकतरज्येष्ठत्वाभावेन तदूढपंचता तस्मिन् विवाहे मरणं स्यात् ॥ ६६ ॥

**एकांबया संभवयोर्वशाविशोः समैकतायामशुभःशयग्रहः ॥**
**क्वचिच्छुभोऽसौ नरयोर्द्वयोः कलौ सदैव भिन्नोदरजन्मनोः शुभः ॥६७**

अथैकवर्षे एकोदरोत्पन्नभगिनीभ्रात्रोर्विवाहविवेकं दर्शयति—एकाब्देति ॥ वशाद्वि-शेषेभगिनीभ्रात्रोः समैकतायां एकस्मिन्नेव वर्षे ग्रहः पाणिग्रहोऽशुभः स्यात् । किंभूत-योरेकाङ्कयोः संभवयोरेकमातरि जातयोः क्वचित् कलौ नरयोर्द्वयोरसौ पाणिग्रहः शुभः स्यात् । सदैव सर्वस्मिन् काले भिन्नोदरजन्मनोः पृथक्मातृजातयोर्भ्रात्रोः पाणिग्रहः शुभः स्यात् ॥ ६७ ॥

**द्विजामिपाणिग्रहणं द्विजन्मनां सदैव नो भूमिभुजां कृतद्वये ॥**
**विशां कृते नेति विदुः पुराविदः सर्वत्र नो पज्जने निषेधता ॥६८॥**

अथ विप्रादीनां भगिनीयुग्मोद्वाहविवेकमाह—द्विजामीति ॥ द्विजन्मनां विप्राणां सदैव काले द्विजामिपाणिग्रहणं 'जामिस्तु भगिनी स्वसा' इति हैमः । भगिनीद्वयपाणिपीडनं न स्यात् । भूमिभुजां क्षत्रियाणां भगिनीद्वयवरणं कृतद्वये न स्यात् । विशां वैश्यानां कृते युगे भगिनीद्वयवरणं न स्यात् । सर्वत्र सर्वयुगे पज्जने शूद्रजने निषेधता नास्ति इति पुराविदो विदुः ॥ ६८ ॥

**अपेक्षते दैववशाद्विशा कलौ द्वित्रादिजामीरितदोर्ग्रहक्रिया ॥**
**एकाह्नि चेन्मंडपभेदवेदिकाप्रतिक्रियापक्षविवाहलक्षणा ॥ ६९ ॥**

अथ भिन्नवेदिकायां द्वित्रादिजामिविवाहं दर्शयति—अपेक्षतइति ॥ कलौ दैववशात् विशा नरेण कर्तृपदं द्वित्रादिजामीरितदोर्ग्रहक्रिया द्वे च तिस्रश्च द्वित्रा आदयो जामयो भगिन्यश्च ताभिरीरिता प्रेरिता दोर्ग्रहक्रिया पाणिपीडनविधिरपेक्षते इच्छा क्रियते कस्मिन् एकाह्नि एकदिने किंभूता मंडपेति मंडपभेदवेदिकायां पृथग्मंडपवेदिकायाः प्रतिक्रिया पक्षविवाहस्य भिन्नविवाहस्य लक्षणं यस्यां सा यदुक्तं ' अभिन्ने वत्सरेऽपि स्यात्तदहस्तत्र भेदयेत् । अभेदे दिवसस्यापि न कुर्यादेकमंडपे' ॥ १ ॥ अन्यच्च ' एकोदरयोर्द्वयोरेकदिनोद्वहने भवेन्नाशः ॥ नक्षत्रांतरे एकदिनेप्याहुः संकटे चेच्छुभं न प्रतिषिद्धं लग्नं संप्राप्ते संकटे मनुः इति एकोदरसंभवयोरेकाह्ने भिन्नमंडपे' इति ॥ ६९ ॥

**षण्मासमर्यादमिहोपयामं भ्रातुर्विवाहात्परतस्तु नान्यं ॥**
**बुधाः स्वसुर्भ्रातृविवाहमूचुः करग्रहादूर्ध्वमशेषपत्सु ॥ ७० ॥**

अथ कृतविवाहादन्यविवाहकरणविवेकमाह—षण्मासेति ॥ बुधाः भ्रातुर्विवाहात् परतः षण्मासमर्यादं यावत् अन्यमुपयामं विवाहं न ऊचुः । तु पुनर्बुधाः स्वसुर्भगिन्याः करग्रहात् ऊर्ध्वं भ्रातृविवाहमूचुः कथयामासुः । केषु इह अशेषपत्सु सर्वयुगेषु ॥ ७० ॥

**ज्येष्ठं विवाहं प्रविधाय शश्वच्छंसंति संतोऽवरजोपयामं ॥**
**भ्रात्रोर्भगिन्योश्च कलौ विवाहं कश्चिज्जगादांशुसमांतरेण ॥७१॥**

अथ ज्येष्ठकनिष्ठयोर्विवाहविवेकमाह—ज्येष्ठमिति ॥ शश्वन्निरंतरं संत उत्तमाः ज्येष्ठं विवाहं प्रविधाय अवरजोपयामं कनिष्ठविवाहं शंसंति कथयंति । कश्चित् अंशुसमांतरेण

सूर्यवर्षांतरेण अनेनकाब्योक्तलक्षणप्रकारेण भ्रात्रोर्भगिन्योश्च विवाहं जगाद उवाच कस्मिन् कलाविति । अन्योक्तिर्यथा 'न चैकजन्मनोः पुंसोरेकजन्मे तु कन्यके । नूनं कदाचिदुद्वाहे नैकदा मंडनद्वयं' ॥१॥ अन्यच्च 'न पुत्रीद्वयमेकस्मै प्रदद्यात्तु कदाचन' इति ॥७१॥

मधोः सितादावुदये दिनेंऽशोस्त्वजानने व्योमचरैरशेषैः ॥
कालप्रकृत्येति जगत्प्रवृत्तिर्बभूव मासाब्दयुगादिका हि ॥७२॥

अथ जगत्प्रवृत्तिकालं स्पष्टयति—मधोरिति ॥ इति कालप्रकृत्या समयस्वभावेन जगत्प्रवृत्तिर्बभूव जगत्सृष्टिर्जातेत्यर्थः । कस्मिन् मधोश्चैत्रस्य सितादौ शुक्लप्रतिपदायामंशोः सूर्यस्योदये प्रभातकाले तु पुनरंशोर्दिने रविवारेऽशेषैः समस्तैर्ग्रहैर्व्योमचरैरजानने मेषसंक्रांतिमुखे सति किंभूता जगत्प्रवृत्तिः मासाब्दयुगादिका मासः वर्षं कृतयुगादय एषां आदिर्यस्यां सा इति ॥ ७२ ॥

समांतरं चैत्रसितादितोऽतो ज्ञेयं सदा सृष्टिसवाख्यमासः ॥
लोके मधुश्चाथममा३०वधि स्यान्मासे प्रमाणं रविराजमध्यात् ॥७३॥

अथ सूर्यवर्षांतरं स्पष्टयति—समांतरमिति ॥ च पुनर्लोकेऽतः कारणात् जगत्प्रवृत्तिकारणात् अयं जगत्प्रसवाख्यमासो मधुश्चैत्रश्चैत्रसितादितश्चैत्रशुक्लप्रतिपद्दिनात् अमामधिरमावास्यामितः स्यात् । कस्मिन् समांतरे वर्षविचाले गतागामिनो [illegible] इत्यर्थः । तस्य मासस्य किं प्रमाणं तदाह रविराजमध्यात् सूर्यचंद्रसाम्यात् मासे प्रमाणं ज्ञेयं रवींद्वयोर्दर्शांतश्चांद्रमासः प्राप्यते इति ॥ ७३ ॥

सौराज्यके मालवभेददेशे वक्रातिचारावशुभौ विवाहे ॥
न स्तो गुरोः सिंधुमरुव्रजेषु नीवृत्स्वतोऽन्येषु च वर्जनीयौ ॥७४॥

अथ सौराष्ट्रादिदेशेषु [illegible] वर्ज्यावर्ज्यगुरुदोषमाह—सौरेति ॥ गुरोर्गीष्पतेर्वक्रातिचारौ विवाहेऽशुभौ न स्तः कस्मिन् सौराज्यके सौराष्ट्रदेशे मालवभेददेशे विक्रमार्कविभक्तो मालवभेददेशो गुर्जरः प्रसिद्धोयमिति पुराणे इति पुनः सिंधुमरुव्रजेषु नीवृत्सु देशेषु अतोऽन्येषु देशेषु तौ वर्जनीयौ ॥ ७४ ॥

इष्टातिचाराऽनृजुता विवाहे विवाहतोऽन्येषु न मंगलेषु ॥
गुरोरुवाचेत्यनु गालवोऽसत्सर्वत्र जीवोद्गतवैकृतं स्यात् ॥ ७५॥

अथ ऋषिमतं दूषयति—इष्टेति ॥ विवाहे गुरोर्गीष्पतेरतिचारानृजुता अतिचारवक्रता इष्टा शुभा स्यात् । विवाहतोऽन्येषु मंगलेषु सा इष्टा न स्यात् इति गालवऋषिरुवाच तदसत् यतः सर्वत्र शुभकार्येषु जीवोद्गतवैकृतं गुरोरुत्पन्नविकारःस्यात ॥ ७५ ॥

गोदावरीसौम्यतटप्रवेशाद्भागीरथीयाम्यतटं च यावत् ॥
सिंधुप्रपातं सचिवे सलेये ५ नोद्वाहमाहुः परतो मघायाम् ॥७६॥

अथ मघाक्रांतगुरौ गोदावर्यादिस्थले विवाहं निषेधति—गोदेति ॥ गोदावर्याः सौम्यतटप्रदेशात् उत्तरदिक्तटप्रदेशादारभ्य भागीरथ्या गंगाया याम्यतटं दक्षिणदिक्तटं सिंधुप्रपातं सिंधुनदीतटं च यावत् पर्यंतं सकले सिंहराशिगते सचिवे गुरौ सति बुधा उद्वाहं नाहुः न कथयंति । कस्यां परतोऽर्थे मघायां सत्या गोऽर्थः सिंहराशौ मघानक्षत्रं याभ्येऽत्राहः अग्रे सिंहराशौ विवाहः शुभः स्यात् ॥ उक्तं च मघां त्यक्त्वा यदा गच्छेत् फाल्गुनीं च बृहस्पतिः । पुत्रिणी धनिनी कन्या सौभाग्यं सुखमश्नुते ॥१॥ अन्यच्च 'सिंहराशौ तु सिंहांशे यदा भवति वाक्पतिः । सर्वदेशेष्वयं त्याज्यो दंपत्योर्निधनप्रदः' इति राजमार्तंडोक्तेः ॥ ७६ ॥

विहाय गौडं किल गौर्जरे च कलिंगसौराष्ट्रककच्छदेशान् ॥
सरिद्वरागौतमिकांतरेऽपि मेलाञ्जोऽत्येऽथ गुरुर्न दुष्टः ॥७७॥ *

घटो७क्ष२योरिंद्रगुरौ समत्ता विवाहकर्तुर्भृगुजप्रदेशे ॥
चापे ९ झषे१२ वास्फुजिति प्रदेशे गुरोस्तथैवं न परत्र देशे ॥७८॥

अथ देशविशेषे गुरुशुक्रदोषमाह—घटेति ॥ विवाहकर्तुः पाणिग्रहणकारकस्य सम अत्ता समत्ता मरणं स्यात् । कस्मिन् घटोक्षयोस्तुलावृषयोरिंद्रगुरौ गीष्पतौ सति कस्मिन् भृगुजप्रदेशे शुक्रजन्मत्वात् सुभोननाम्नि देशे तथा पुनश्चापे झषे धनुषि मीने वा आस्फुजिति शुक्रे सति विवाहकर्तुर्मृत्युः स्यात कस्मिन् गुरोर्बृहस्पतेः प्रदेशे सौराज्यनाम्नि देशे गीष्पतेस्तत्र जन्मत्वात् एवं परत्र देशेऽन्यदेशे न ॥ ७८ ॥

तिमा१२विने फाल्गुननाम्नि शुद्धे विदर्भकंबूकुरुकार्णवेषु ॥
न मंगलं निंद्यफलं परेषु नीवृत्स्वशेषेषु भवेदरम्यम् ॥ ७९ ॥

अथ विदर्भादिदेशेषु फाल्गुनादिगतरविदोषं निषेधति—तिमाविनेति ॥ फाल्गुननाम्नि शुद्धे शुक्लपक्षे इने सूर्ये सति तिमौ मीने सति मंगलं शुभकार्यं निंद्यफलं न स्यात् शुभफलं स्यादित्यर्थः । केषु विदर्भकंबूकुरुकार्णवेषु देशेषु अथ परेषु नीवृत्सु देशेषु अरम्यं दुष्टं भवेत् । नीवृच्छब्दः पुंस्त्रीलिंगत्वादत्र पुल्लिंगविषयः पुंस्त्रि नीवृदिति शब्दप्रभेदे साधुसुंदरगणयः ॥ ७९ ॥

उदन्वतो रोधसि कापिलाख्यं भूमंडलं योजनषट्कमानं ।
रेवामहीमध्यगमार्थराश्यो१२।९र्के विवाहो विहितोऽतिभद्रः॥८०॥

अथ कापिलक्षेत्रे धनुर्मीनार्कदोषं निषेधति—उदन्वत इति ॥ उदन्वतो रोधसि समुद्रतटे कापिलाख्यं कापिलसंज्ञं भूमंडलं क्षेत्रं योजनषट्कमानं तत्पर्यंतं विवाहो विहितः प्रसिद्धमतिभद्रं यस्मिन्स विहितोऽतिभद्रः स्यात् । किंभूतं भूमंडलं रेवामहीमध्यगं रेवामहीनाम्न्योर्नद्यौ तयोर्मध्यगं कस्मिन् आर्थराश्योः बृहस्पतेर्धनुर्मीनगृहेऽर्के सूर्ये सति ॥ ८० ॥

---

* क्षेपकोयं श्लोको नान्यपुस्तकेषूपलभ्यते.

**पर्जन्यपूज्ये शुभमंगलं नो मृगानने १०विश्वमभाग१३संस्थे ॥**
**क्ष्मामध्यसूत्रादपरप्रदेशे प्राच्यां च पंचांश५गते तथा स्यात् ॥ ८१ ॥**

अथ भूमध्यादपरदेशे मकरसंक्रांतिमुखगतगीष्पतिदोषमाह—पर्जन्येति ॥ क्ष्मामध्यसूत्रात् ततः ' लंका चावंतिका कन्या पर्यली हिमभूधरः । कांतिर्वत्सं च गुल्मं च मध्यरेखा भुवः स्मृता ' ॥ १ ॥ इति पृथिवीमध्यरेखातोऽपरप्रदेशेषु शुभं मंगलं न स्यात् कस्मिन् विश्वमभागसंस्थे अभिजिद्वर्जिते उत्तराषाढाया द्वितीयतृतीयपादसंस्थे ६।४० एतावत्प्रमाणकाले एवंविधे मृगानने मकरसंक्रांतिमुखे पर्जन्यपूज्ये गीष्पतौ सति तथाच प्राच्यां पूर्वदिशि पंचांशगते किंचिन्न्यूनतृतीयपादस्थे पंचांशप्रमिते एवंविधे मकरसंक्रांतिमुखे गुरौ सति शुभमंगलं नो स्यात् ॥ ८१ ॥

**नक्रो१०त्तरार्द्धेऽमरराडमात्ये गौडारिसीणार्बुदसिंधुदेशान् ॥**
**शयग्रहो दुष्यति नापरेषु न दोषकृन्नीचलवान्यभागे ॥ ८२ ॥**

अथ गौडादिदेशेषु मकरार्द्धस्थितगुरुदोषमाह—नक्रोत्तरेति ॥ नक्रोत्तरार्द्धे मकरस्योत्तरार्द्धेऽमरराडमात्ये गुरौ सति शयग्रहः पाणिग्रहो गौडादिदेशान् दुष्यति गौडः अरिसीणः अर्बुदः सिंधुदेश इत्यादि च पुनरपरेषु देशेषु शयग्रहो दोषकृत् न स्यात् कस्मिन् नीचलवान्यभागे मकरस्य नीचांशाः पंच तेभ्योऽन्यांशस्थिते गुरौ सति ॥ ८२ ॥

**मिथिले मलयाचलक्ष्मायां शक१२ली शर्महरो न हंसयुक्तः ॥**
**उपयामविधेर्नुरंशुकूप्यौ युजि मार्गे च तथांध्रमागधोर्व्याम् ॥८३॥**

अथ मालभारिण्या मलयाचलादिभूमौ मीनार्कादिदोषं निषेधति—मिथिलइति ॥ मिथिले नाम्नि देशे मलयाचलक्ष्मायां मलयाचलभूमौ हंसयुक्तः सूर्यान्वितः शकली मीनो मीनार्कः शर्महरः सुखहर्ता न स्यात् कस्य नुः पुरुषस्य किंभूतस्य नुः उपयामविधेः कृतोपयामस्य तथाच पुनः आंध्रमागधोर्व्यां आंध्रदेशमागधदेशभूमौ अंशुकूप्यौ वृश्चिकार्कः शर्महरो न स्यात् कस्मिन् मार्गे युजि मार्गमासयोगे ॥ ८३ ॥

**समिषे नृमिषाबला विवाहेऽनु नभोगे हि न भोगमेति धिष्ण्यं ॥**
**शुचिगे शुचमूर्जहानिमूर्जे मधुपा सा च मधौ सहस्यसस्या ॥८४॥**

अथ विवाहेऽशुभमासानाह—समिष इति ॥ समिषे सम्यग् इषो मासो यस्मिन् स तस्मिन्नेवंविधे विवाहे इषमासकृतविवाहेऽबला स्त्री भोगं न एति न प्राप्नोति किंभूताऽबला नृमिषा नरि नरे मिषं कैतवं यस्याः सा अनु विवाहात् पश्चादिति नभोगे श्रावणगते विवाहेऽबला धिष्ण्यं गृहं न एति । पुनः शुचिगे आषाढगते विवाहे सा शुचं शोकमेति पुनरूर्जे कार्त्तिके विवाहे सा ऊर्जहानिं बलनाशमेति पुनर्मधौ चैत्रे विवाहे सा मधुपा मद्यपाना स्यात् । पुनः सहसि मार्गशीर्षे विवाहे साऽसस्या न विद्यते सस्यं धान्यं यस्याः सकाशात् एतादृशी स्यात् ॥ ८४॥

इति भाद्रपदोपयाममासा न वशा भद्रपदं भजेदपाशा ॥
अपहस्तितदोर्ग्रहाः सहस्यः श्यति शंभोक्तुरमी स्युरेव मासाः ॥८५॥

इतीति ॥ भाद्रपद उपयाममासो यस्याः सा वशा स्त्री भद्रपदं सुखस्थानं न भजेत् न प्राप्नुयात् । किंभूता वशा अपाशा अपगता आशा इच्छा यस्याः सकाशात् । पुनः सहस्यः पौषमासो विवाहे भोक्तुर्वरस्य शं सुखं श्यति तनूकरोति इति अमी मासाः अपहस्तितदोर्ग्रहा एव स्युः अपहस्तितोऽनादृतोऽनंगीकृतो दोर्ग्रहो विवाहो येषु ते ॥ ८५ ॥

इति सत्यपि सन्मधूत्तरार्द्धं मिहिरेऽजे१ च सहस्यकृष्णपक्षः ॥
मकरे१०जितुमे३दशद्युकालः शुचिगः सर्वजनेषु पूर्व इष्टः ॥८६॥

अथात्र विशेषमाह—इतीति ॥ इति पूर्वोक्ते सत्यपि मधूत्तरार्द्धं चैत्रस्योतरार्द्धं सत् शुभं स्यात् । कस्मिन् मिहिरेऽजे मेषे रवौ सति च पुनर्मकरे रवौ सति सहस्यस्य पौषस्य कृष्णपक्षः शुभः स्यात् । पुनर्जितुमे मिथुने रवौ सति पूर्वं आद्यो दशद्युकालः शुचिग इष्टः । कोऽर्थः आषाढमासस्य दशदिनानि शुक्लपक्षगतानि इष्टानि स्युः सर्वजनेषु इति ॥ ८६ ॥

भृगुकच्छगमत्स्यदेशगानां दशमी भाद्रपदस्य भार्गवानां ॥
शयसंग्रहसंशया सिता सा मरुभेदेंऽघ्रिभुवामिषस्य च स्यात् ॥८७॥

अथात्र भृग्वादिगोत्राणां विशेषमाह—भृग्विति ॥ भार्गवाणां भृगुगोत्रोत्पन्नानां भृग्वादिदेशगानां मनुष्याणां भाद्रपदस्य सिता शुक्ला दशमी शयसंग्रहसंशया विवाहकथका स्यात् । च पुनरिषस्याश्विनमासस्य सा शुक्लदशमी अंघ्रिभुवां शूद्राणां विवाहकथका स्यात् कस्मिन्मरुभेदे मरुदेशे ॥ ८७ ॥

सितपंचदशीद्युमध्यमौर्जे कृतिनोऽहर्दशकं विदुर्विवाहे ॥
रुरुराजगुरुं गुरोः प्रतिष्ठामपहायोशनसश्च लग्नमिष्टम् ॥ ८८ ॥

अथ विवाहे कार्तिकदिनदशकं दर्शयति—सितेति ॥ कृतिनः पंडिता ऊर्जे कार्तिक-मासेऽहर्दशकं विवाहे विदुः कथयंति किंभूतमहर्दशकं सितपंचदशीमध्यं शुक्लपंचदशी पूर्णिमा तस्या अग्रतः पंचदिनानि पश्चाच्च पंचदिनानि एवं दशद्युमध्यं यस्मिंस्तत् पुनर्लग्नमिष्टमिष्टकालघटिकालग्नं शुभं स्यात् किंकृत्वा रुरुराजो मृगाधिपः सिंहस्तस्मिन् गुरुं विहाय पुनर्गुरोर्गीष्पतेः प्रतिष्ठामस्तं विहाय पुनरुशनसः शुक्रास्तं विहाय ॥ ८८ ॥

परिपंथितनू१लयस्थ८मिंदुं परिहायांगविवाहकामभद्रं ॥
उपरागमुखान्यदोषजालं कुरु पाणिग्रहणं च कार्तिकीतम् ॥ ८९ ॥

परीति ॥ अंग इति संबोधने हेविवाहकाम हेविवाहाभिलाषिन् त्वं भद्रं शुभं पाणिग्रहणं कुरु किंभूतं पाणिग्रहणं कार्तिक्या भवदशदिनात्मकमिति कस्मिन् उपरागमुखे संध्यायां किंभूते

उपरागमुखे अन्यदोषजाले इतरदोषयुक्तेऽपि किंकृत्वा परिपंथी षष्ठ ६ तनुः प्रथमं १ लयोऽष्टमं ८ अत्र स्थितमिंदुं चंद्रं विहाय त्यक्त्वा हि अवधारणे ॥ ८९ ॥

इति कृष्टिगणैर्विशेषनोतिर्गदिता या परिणत्यनेहसीष्टा ॥
उदितान्प्रति देशकालभेदानखिलोर्व्यामुदितानु कार्तिकीता॥९०॥

अथोपसंहारेण कार्तिक्या दिनदशकं सर्वत्र प्रमाणयति—इतीति ॥ पूर्वोक्तप्रकारेण परिणत्यनेहसि विवाहकाले कृष्टिगणैः पंडितगणैर्या नीतिर्गदिता प्रोक्ता कान्प्रति उदितान् कथितान् देशकालभेदान् प्रति अनुलक्षीकृत्य तु पुनः सा नीतिरखिलोर्व्यां सर्वत्र देशे इष्टा शुभा उदिता प्रोक्ता किंभूता कार्तिकीता कार्तिकमासभवा भावार्थे इनुप्रत्ययः पूर्वोक्तदिनदशके इति ॥ ९० ॥

शिशिरे च मधौ पतंति मेघात्करका वा वनबिंदवः सशंपाः ॥
कलिशंबरधौ तदा विवाही विपदंभोऽतिविलासमेति लोके ॥९१॥

अथ विवाहे त्याज्यवैकृतमाह—शिशिर इति ॥ शिशिरे मधौ चैत्रे च यदा मेघात् करका पतति वाऽथवा वनानां जलानां बिंदवः पतंति किंभूता बिंदवः सशंपाः विद्युद्युक्तास्तदा लोके विषये विवाही विवाहवान् पुमान् कलिः क्लेशः स एव शंबराणि जलानि धीयंते ऽस्मिन्निति कलिशंबरधौ क्लेशसमुद्रे विपदंभोतिविलासमेति प्राप्नोति विपद् एव अंभो जलं तस्यातिविलासमिति ॥ ९१ ॥

समुदेति शिखी समीरमार्गे दलयन्मंगलकर्म भीष्मभासा ॥
यदि तच्छरदंघ्रिमानकालं परिहायाखिलमंगलं सुसिध्यै ॥ ९२ ॥

समुदेतीति ॥ यदि शिखी केतुः समीरमार्गे व्योम्नि समुदेति उदयं प्राप्नोति किं कुर्वन् भीष्मभासा भयानककांत्या मंगलकर्म शुभकार्यं दलयन् खंडयन् तदा तच्छरदंघ्रिमानकालं तस्य वर्षस्यांघ्रिमानकालं मासत्रयं विहायाखिलमंगलं सुसिध्यै स्यात् ॥ ९२ ॥

सहसावनिकंपनं खदाहस्त्वनृतौ स्फूर्जथुरौपयामतोऽर्वाक् ॥
विदधीत न मंगलं तदा वा तलमुल्कापतनं खतोऽवनेः स्यात्॥९३

सहसेति ॥ यदा सहसा झटिति औपयामतो विवाहदिनादर्वाक् अवनिकंपनं भूकंपनं खदाहो व्योमज्वलनं अनृतौ अकाले स्फूर्जथुर्वज्रनिर्घोषः तथा खत आकाशादवनेर्भूमेः आतलपर्यंतमुल्कापतनं ज्वालापतनं स्यात्तदा सुधीर्मंगलं न विदधीत ॥ ९३ ॥

इतराण्युदितानि यानि यावत्त्रिविधोत्पातदिनानि तैरुपेतं ॥
भमनर्हमशेषमंगलेषु द्विजराजेन तदुज्झितं न भुक्त्वा ॥ ९४ ॥

इतराणीति ॥ उदितानि प्रोक्तानि इतराणि यानि त्रिविधोत्पातादिनानि संति तावत्तैरुत्पा-तैरुपेतं युक्तं तत् भं नक्षत्रमशेषमंगलेषु अनर्हं दुष्टं स्याद्यावत् यत् भं द्विजराजेन चंद्रेण भुक्त्वा न उज्झितं स्यात् ॥ ९४ ॥

**एकार्गलापक्रमसाम्यलत्ता भवेधविष्टी कुलिकास्त्रपातौ ॥**
**पापार्दितोडुग्रहजन्मतारागंडांतयामार्धकपापहोराः ॥ ९५ ॥**

अथ विवाहेऽष्टादशदोषान्दर्शयति—**एकेति** ॥ एकार्गलः १ अपक्रमसाम्यं क्रांतिसाम्यं २ लत्ता ३ भवेधो नक्षत्रवेधः ४ विष्टिर्भद्रा ५ कुलिकः ६ अस्त्रपातः ७ पापार्दितं पापग्रहैः पीडितमुडु नक्षत्रं ८ एवं ग्रहश्च ९ जन्मतारा च १० गंडांतः ११ यामार्द्धकं १२ पापहोरा १३ ॥ ९५ ॥

**दिनर्क्षयोगांतकुयोगभागा द्यु पर्वदग्धं यमघंटयोगः ॥**
**इहाशनिः स्युर्गदिता ग्रहज्ञैरमी सदाष्टादशदोषयोगाः ॥ ९६ ॥**

दिनेति ॥ दिनर्क्षयोगानामंतोऽवसानं १४कुयोगभागाः दुष्टयोगनवांशाः १५ पर्वदग्धं द्यु दिनं १६ यमघंटयोगः १७ अशनिः १८ इह विवाहेऽमी सदाष्टादशदोषयोगाः किंभूताः ग्रहज्ञैरुदिताः प्रोक्ताः ॥ ९६ ॥

**पूर्वोदिता येऽत्र ततो वियोगा ज्ञेयास्त्वनुक्तानधुनाभिधास्ये ॥**
**युगागदोरक्षगजाग्नितर्कैर्मितान्यसद्यामदलानि सूरात् ॥ ९७ ॥**

अथैष्वनुक्तं चिंतयन्नाह—**पूर्वोदिताइति** ॥ ये वियोगाः पूर्वोदिताः प्राक् प्रोक्तास्तेऽत्र ज्ञेयाः गंडांतविष्टियमघंटपातैकार्गलपापपीडितर्क्षपर्वदग्धक्रांतिसाम्यवियोगाः पूर्वं पूर्वाध्याये प्रोक्ताः तस्मात् कारणादहमधुनानुक्तान योगानभिधास्ये कथयिष्ये ततः प्रथमं शुभयामार्द्धमाह । सूरात् सूर्यात् युगादिभिर्मितानि असद्यामदलानि स्युः सूर्यस्य युगानि चतुर्थं यामार्द्धं दुष्टं एवं सोमस्यागाः सप्तमं ७भौमस्य दोर्द्वितीयं २बुधस्याक्षाणि पंचमं ५गुरोर्गजा अष्टमं ८भृगोरग्निस्तृतीयं ३शनेस्तर्काः षष्ठं ६इति ॥ ९७ ॥

**ऋणेन मित्राद्द्विचयेन २भूपतो १६र्दिवाक्षणा ये निशि तैरपक्षमैः ॥**
**क्षणैरशंसत्कुलिकानिदं क्रमादमंगलायोभयमेव मंगले ॥ ९८ ॥**

यामार्द्धकुलिकचक्रम् ।

| सू. | चं. | मं. | बु. | गु. | शु. | श. | वाराः |
|---|---|---|---|---|---|---|---|
| ४ | ७ | २ | ५ | ८ | ३ | ६ | यामदलं |
| १४ | १२ | १० | ८ | ६ | ४ | २ | कुलिकः दिवा |
| १३ | ११ | ९ | ७ | ५ | ३ | १ | कुलिकः रात्रौ |

अथ कुलिकानाह—**ऋणेनेति** ॥ भूपतः षोडशतो द्विचयेन ऋणेन द्वाभ्यां चयनं पुष्टिर्यस्मिंस्तदेवंविधेन ऋणेन षोडशसंख्यातो द्वयेन द्वयेन हानेन कृत्वा मैत्रात् सूर्यसंबंधितो ये दिवाक्षणाः स्युः कोऽर्थः रवेश्चतुर्दशः क्षणः एवं चंद्रस्य १२ भौमस्य १० बुधस्य ८गुरोः ६शुक्रस्य ४ शनेः २अथ तैर्दिवाक्षणैरपक्षमैरपगता क्षमा येभ्यस्ते तैरकैकहीनैर्निशि रात्रौ क्षणाः स्युः। यथा रविरात्रौ त्रयोदशः क्षणः १३ एवं चंद्ररात्रौ ११ मंगलरात्रौ ९ बुधरात्रौ ७ गुरुरात्रौ ५शुक्ररात्रौ ३ शनिरात्रौ

१ पंडितः बुधस्तैर्दिवाक्षणैः रात्रिक्षणैरेव कुलिकान् अशंसत् कथयामास ते क्षणा एव कुलिकसंज्ञा इति क्रमात् ज्ञेयं । इदमुभयं दिवारात्रिक्षणस्वरूपं मंगले विवाहादिकार्येऽमंगलाय दुःखायैव स्यात् ॥ ९८

**इना१गजा७रामा३कृति२२दर्शनै६ र्जिनै२४र्भुजंगमै८रभ्र-**
**यमै२०रुपेतभात् ॥ समेषु भेष्वर्कमुखा नभःसदः संल-**
**त्तयंत्यादिविरामपल्लवात् ॥ ९९ ॥**

अथ लत्तालक्षणमाह—इनेति ॥ अर्कमुखाः नभःसदोऽर्कप्रमुखा ग्रहाः उपेतभात् निजाक्रांतनक्षत्रात् इनादिभिः संख्याभिः समेषु तुल्येषु संलत्तयंति पादप्रसारेण लत्तया घातं ददति कस्मात् आदिविरामपल्लवात् आद्यंतभागात् स्पष्टार्थस्त्वयं सूर्यः स्वाक्रांतनक्षत्रात् द्वादशं नक्षत्रमग्रतो लत्तयति । एवं स्वाक्रांतभात् पूर्णिमासंबंधिचंद्रोऽगः सप्तमं भं स्वपृष्ठतो लत्तयति । एवं भौमो रामास्तृतीयं भमग्रतो लत्तयति ॥ बुधः आकृतिर्द्वाविंशं भं पृष्ठतो लत्तयति । गुरुर्दर्शनानि षष्ठं भमग्रतो लत्तयति । शुक्रो जिनाश्चतुर्विंशं भं पृष्ठतो लत्तयति । शनिर्भुजंगमा अष्टमं भमग्रतो लत्तयति । राहुरभ्रयमा विंशतितमं भं पृष्ठतो लत्तयति । आदिविरामपल्लवादिति कोऽर्थः ग्रहो यन्नक्षत्रं सन्मुखं लत्तयति तन्नक्षत्रं प्रथमचरणतो लत्तां प्राप्नोति ग्रहो यन्नक्षत्रं पश्चाल्लत्तयति तन्नक्षत्रमंत्यचरणतो लत्तां प्राप्नोति । उक्तं च 'ऋक्षं द्वादशमुष्णरश्मिरवनीसूनुस्तृतीयं गुरुः षष्ठं चाष्टममर्कजश्च पुरतो हंति स्फुटं लत्तया । पश्चात्सप्तममिंदुजश्च नवमं राहुः सितः पंचमं द्वाविंशं परिपूर्णमूर्तिरुडुपः संताडयेन्नेतरः' ॥ १ ॥ ९९ ॥

**उदग्रमाद्यं पदमंत्यमंत्यगं तल्लत्तनं मंगलकर्मणि स्मृतं ॥**
**सपापलत्तं भमशेषमिष्टहृत् ससाधुलत्तं चरणं त्यजेद्बुधः ॥१००॥**

अथैवं ग्रहाणामभिलत्तने सति अनुलत्तनमुक्तं तद्दोषः पश्चिमपूर्वविभागयोरल्पाधिकदोषज्ञानार्थमाह—उदग्रमिति ॥ यद् आद्यं अग्रे भवं लत्तनं उदग्रं क्रूरं स्मृतं कस्मिन् मंगलकर्मणि यत् अंत्यं अंत्यप्राप्तलत्तनं उदग्रं क्रूरं स्मृतं कस्मिन् मंगलकर्मणि। यत् अंत्यगं अंत्यप्राप्तं लत्तनं तल्लत्तनभमतन्मंगलकर्मणि स्मृतं । यत्र पूर्वविभागे लत्तनं तस्य नक्षत्रस्य पूर्वविभागे महान् दोषः यत्र पश्चाद्भागे लत्तनं तस्य नक्षत्रस्य पश्चिमविभागे महान् दोषः पूर्वविभागेऽल्पदोष इति तात्पर्यं । पुनः सपापलत्तं पापग्रहलत्तांतर्हितं भं नक्षत्रमशेषं समग्रमिष्टहृत् ईप्सितहरं स्यात् । उडोर्नक्षत्रस्य ससाधुलत्तं शुभग्रहलत्तासहितं चरणं त्यजेत् मंगलकर्माणि सुधीरिति शेषः ॥ १०० ॥

**लत्तावहं भं च सुराज्यकच्छयोर्निपातवत् कच्छवशांगकावनौ॥**
**दुष्टं तदेकार्गलभं समालवे मरौ प्रतानेऽनिशमादिजैः स्मृतम्॥१**

अथ देशविशेषे क्रमेण लत्तादिदुष्टभं सापवादं दर्शयति—लत्तेति ॥ आदिजैः पुरातनैस्तल्लत्तावहं लत्तायुक्तं भं च पुनरेकार्गलभं पुनर्निपातवत् निपातयुक्तनक्षत्रं दुष्टं स्मृतं अनिशं सदा

कस्मिन् सुराज्यकच्छयोर्देशयोः कच्छखशांगकावनौ कच्छादिदेशभूमौ पुनः समालवे मालवदेश-युक्ते मरौ प्रताने देशे सुराज्यादौ लत्ताभं कच्छादौ निपातभं मालवादौ एकार्गलभं दुष्टमिति ॥१

**आशायताः पंच च पंच रेखा द्वे द्वे च रेखे विलिखेद्विदिग्गे ॥**
**प्राङ्मध्यसूत्रादभिजित्समेतं रौद्राद्यमार्क्षं वलयं विदध्यात् ॥२॥**

पंचशलाकाचक्रम् ।

| | कृ | रो | मृ | आ | पु | पु | |
|---|---|---|---|---|---|---|---|

अथपंचशलाकाचक्रमाह—आशेति ॥ आशायताः आशासु दिक्षु आयता दीर्घाः पंच पंच रेखाः पंच पूर्वतः पंच दक्षिणतश्च कार्याः। च पुनः सुधीर्द्वे द्वे रेखे विदिग्गे विदिग्गते लिखेत्। सुधीः प्राङ्मध्यसूत्रात् पूर्वदिग्गतमध्यरेखातो रौद्राद्यं आर्द्रादिकमार्क्षं नक्षत्रयुक्तं वलयं विदध्यात् भ्रमेण विलिखेदित्यर्थः ॥ किंभूतं आर्क्षं अभिजित्समेतं ॥ २ ॥

**सखेटरेखाग्रगतं भमास्मिन्विद्धं विवाहेऽर्थविरोधि विद्धि ॥**
**अदः सदा सप्तशलाकमित्थं चौलव्रताद्याखिलमंगलेषु ॥ ३ ॥**

सप्तशलाकाचक्रम्।

| कृ | रो | मृ | आ | पु | पु | अ |
|---|---|---|---|---|---|---|

अथ चरणत्रयेणास्य फलमाह— सखेटेति ॥ हे सुधीस्त्वं अदो भं नक्षत्रं सदा विवाहेऽर्थविरोधि ईप्सितार्थविरोधकरं विद्धि जानीहि। किंभूतं अदो भं अस्मिंश्चक्रखेटरेखाग्रगतं ग्रहयुक्तरेखाग्रभागास्थितं अतएव किंभूतमदो भं विद्धं वेधितं॥ अथ सप्तशलाकाचक्रमाह॥ हे सुधीस्त्वं इत्थममुना प्रकारेण सप्तशलाकं चक्रं विद्धि केषु चौलव्रताद्याखिलमंगलेषु। यतः 'तिर्यगूर्ध्वगता रेखाः सप्तसंख्या लिखेद्बुधः॥ कृत्तिकादीनि भान्यत्र अभिजित्तत्र दापयेत् ॥ १ ॥ भुक्तं क्रांतं तथा भोग्यं विद्धं पापग्रहेण भं॥ शुभाशुभेषु कार्येषु वर्जनीयं प्रयत्नतः ॥२॥ यस्याभिध्याननक्षत्रं विद्धं क्रूरग्रहेण चेत् ॥ देशो ग्रामः पुरं सैन्यं नरो नारी विनश्यति' ॥३॥ ॥३॥

**असाधुविद्धं भमसिद्धमत्राशेषं च सद्वेधितमंघ्रिगं स्यात् ॥**
**चतुर्गुणैर२८स्तद्वलयोत्थरेखं चक्रं भपादांकितमंघ्रिवेधे ॥ ४ ॥**

अथ सप्तशलाकाचक्रतोऽष्टाविंशतिशलाकाचक्रपादवेधमाह—असाध्विति ॥ अत्र विवाहेऽसाधुविद्धं पापग्रहवेधितं भं नक्षत्रमशेषं समस्तमसिद्धं स्यात्। च पुनः सद्वेधितं शुभग्रहविद्धं भं अंघ्रिगं चरणगतमसिद्धं स्यात् । अंघ्रिवेधे भपादांकितं नक्षत्रचरणांकितं चक्रं स्यात्। किंभूतं चक्रं चतुर्गुणैरिति। एतदेव पंचशलाकमेव वलयं एतद्वलयं चतुर्गुणं च तस्मिन्नुत्था जाता रेखा यस्य तत् कोर्योऽष्टाविंशतिरेखा दिगायतास्तिर्यगाश्च रौद्रादि-

पादांतभपादा देया इति । यतः ' अष्टाविंशोर्ध्वगा रेखा अष्टाविंशति तिर्यगाः ॥ अंशचक्रं भवत्येवं यदुक्तमादियामले ॥ १॥ कृत्तिकादीनि भान्यत्र पादाक्षरक्रमेण च । साभिजिंति न्यसेत्सर्वाण्यष्टाविंशतिसंख्यया ॥ २॥ यो ग्रहो यत्र ऋक्षांशे तं तत्र विन्यसेद् बुधः ॥ वेधयत्सन्मुखं वर्णं क्रूरो वाप्यशुभोऽपि वा ॥३॥ आद्यांशेन चतुर्थांशं चतुर्थांशेन चादिमं ॥ द्वितीयेन तृतीयं तु तृतीयेन द्वितीयकं ॥४॥ यस्य नामाक्षरं विद्धमंशचक्रे ग्रहेण तु । क्रूरे रिष्टं शुभे हानिद्वयोर्द्वौ मृत्युर्न संशयः ॥ ५ ॥ क्रूरोभयस्थिते वेधे मृत्युर्विघ्नं शुभाशुभे । शुभोभयस्थिते वेधे व्याधिपीडा च बंधनं ॥ ६ ॥ इति अंशवेधचक्रं ॥ ४ ॥*

**कश्चित्कविर्मंगलकामबुद्धिःसदंघ्रिवेधर्क्षमसत्तदाह ॥**
**ऋतं न तद्वीक्षणभूषणत्वात्सर्वत्र विद्धं भमनर्हमस्मिन् ॥५॥**

अथात्र कस्यचिन्मतं दूषयति—कश्चिदिति ॥ कश्चित् कविर्मंगलकामबुद्धिः सन् सदंघ्रिवेधर्क्षं शुभग्रहविद्धभपादं समग्रमसदशुभमाह तद् ऋतं सत्यं न स्यात् । कस्मात् तद्वीक्षणभूषणत्वात् शुभग्रहविलोकनभूषणत्वात् ततः सर्वत्र समग्रं विद्धं भमस्मिन् मंगलकर्मणि अनर्हमयोग्यं स्यात् ॥ ५ ॥

**न शामनं शंसति मंगलेंऽशौ चित्रां विधौ वानमसृज्यनु ज्ञे ॥**
**वसूडु जीवे शयमांत्यभैनौ शुद्धं सितैंद्रं कृतिनो जनुस्त्वात् ॥६॥**

अथ सूर्यादीनां जन्मनक्षत्राणि दर्शयन् मंगलकार्ये निषेधयति—नशेति ॥ मंगले मंगलकर्मणि कृतिनो बुधा अंशौ सूर्यवारे शामनं शमनो यमो देवतास्येति भरणीभं शुद्धं निर्दोषं न शंसति न कथयंति शास्त्रेर्घातोर्यक्षादिगणत्वादंतेरन् । एवं विधौ चंद्रे चित्रा असृजि भौमे वानं वनस्य जलस्येदं पूर्वाषाढां बुधे वसूडु धनिष्ठां जीवे गुरौ शयं हस्तं एनौ शनौ आंत्यं रेवती सितैंद्रं शुक्रवारे ज्येष्ठां न शंसति न कथयंति कस्मात् जनुस्त्वात् एषां जन्मनक्षत्रत्वात् एषु एते जाता अतो निजवारे त्याज्यानीति ॥ ६ ॥

**कलिंगनामा यमुनांशमालवौ न मागधः सिंधुसुभोजसौनृपाः ॥**
**अमी स्युरंशोग्रहजन्मदेशकाः स्वसूतिभं मंगलकृत् स्वनीवृति ॥७॥**

अथ सूर्यादिग्रहाणां जन्मदेशानाह—कलिंगेति ॥ क्रमेणांशोः सूर्यात् अमी देशा ग्रहजन्मदेशकाः स्युः । यथा सूर्यस्य कलिंगनामा देशो जन्मदेशस्तत्र सूर्यजन्मत्वात् एवं सोमस्य यमुनांशो यमुनातटः भौमस्य मालवः बुधस्य मागधः गुरोः सिंधुदेशः शुक्रस्य सुभोजः शनेः सौनृपः सौराष्ट्रदेशः इति स्वनीवृति स्वकीयदेशे स्वसूतिभं स्वकीयजन्मनक्षत्रं मंगलकृन्न स्यात् । यथा सूर्यस्य कालिंगो जन्मदेशस्तत्र सदैव सूर्यस्य जन्मभं भरणीभं त्याज्यमिति सर्वेषामपि ज्ञेयं ॥ ७ ॥

---

आकृति नंबर २२।२३

लंकोज्जयिन्यचलराजविलंबि सूत्रं याम्योत्तरं विपद्-
तत्स्वपुरांतरं यत् ॥ देशांतरं पलमुखं स्वमृणं क्रमात्
स्यात्प्राक्पश्चिमे चरमह१५र्द्युदलावशिष्टम् ॥ ८ ॥

अथ देशांतरं साधयति—लंकेति ॥ लंकोज्जयिन्यचलराजविलंबि लंका उज्जयिनी अचलराजो मरुस्तेषु विलंबितं याम्योत्तरं दक्षिणोत्तरस्थं विपदतश्चतुर्थांशवर्जनेन स्वपुरांतरं निजनगरांतरं एवंविधं यत् सूत्रं स्यात्तत् देशांतरमिति संज्ञा स्यात् । किंभूतं देशांतरं पलमुखं पुनः किंभूतं क्रमात् प्राक्पश्चिमे स्वमृणं प्राक् धनं पश्चिमे ऋणमिति । अथ चरं साधयति । अहर्द्यु१५दलावशिष्टमन्हो दिवसस्य द्युभिः पंचदशघटिकाभिर्दलावशिष्ट दिनार्द्धावशेषं पंचदशघटिकाभिः कृतदिनार्द्धांतरं ततोऽवशेषं चरं इति संज्ञा स्यात् ॥ ८ ॥

अर्कोदयादूर्ध्वमधः प्रवृत्तिर्वारस्य देशांतरनाडिकाभिः ॥
प्राक्प्रपश्चिमे तच्चरनाडिकाभिः क्रमेण सौम्यातकगोलगेऽर्के ॥९॥

अथ वारप्रवृत्तिमाह—अर्कोदयादिति ॥ क्रमेण सौम्यांतकगोलगेऽर्के हंसोदयादूर्ध्वमधो वारस्य प्रवृत्तिः स्यात् । उत्तरगोलेऽर्के सूर्योदयादूर्ध्वं वारप्रवर्तनं दक्षिणगोलेऽर्के सूर्योदयादर्वाग् वारप्रवर्तनं स्यात् । तस्मिन् प्राक् धने पश्चिमे रुणे सति काभिः देशांतरनाडिकाभिस्तच्चरनाडिकाभिः ॥ ९ ॥

वारादितः स्युर्घटिका द्विनिघ्नाः शिलीमुखा५प्ता ननु कालहोरा ॥
दिनेश्वराद्यांशुसितैंदवेंदुक्रोडांगिरोभूमिभुवां क्रमेण ॥ १० ॥

अथ कालहोरा आह—वारेति ॥ वारादितो वारप्रवृत्तित आरभ्य यावत्संख्या घटिका गताः यमघ्नाः द्विगुणीकृताः पुनस्ताः शिलीमुखाप्ताः पंचभिर्ह्रता यावत्संख्या लब्धास्ता गतहोराः स्युः । ननु वितर्केण ताः कालहोराः स्युरित्यर्थः ॥ क्रमेण दिनेश्वराद्या यस्मिन् दिने यो वारः सूर्यादिरुदितस्तस्य वारस्य प्रथमा होरा तदनंतरं अंशोः सूर्यस्य सितस्य शुक्रस्य ऐंदवस्य बुधस्य इंदोश्चंद्रस्य क्रोडस्य शनेः अंगिरसो गुरोः भूमिभुवो भौमस्य प्रत्येकं होरा योज्या समासे द्वन्द्वपदं ॥ १० ॥

सन्मंगले मंगलहंत्र्यसाध्वी साध्वी सदा कर्मसहायिनी स्यात् ॥
होरा यथा क्षीणपुरस्य राज्ञोऽहो रा तथाऽक्षीणपुरस्य राज्ञः ॥ ११ ॥

अथ होरायाः फलमाह—सन्मंगेति ॥ यथा असाध्वी पापग्रहसंबंधिनी होरा सदा मंगलहंत्री स्यात् कस्मिन् सन्मंगले उद्वाहादिकार्ये एवं तथा साध्वी शुभग्रहसंबंधिनी होरा कर्मसहायिनी कार्यसाहाय्यकारिणी स्यात् । यथा दृष्टांतेन द्रढयति अहो इति आश्चर्ये क्षीणपुरस्य क्षीणं पुरं शरीरं वप्रादिना भग्ननगरं वा यस्य स तस्य

राज्ञो भूपस्य सा लक्ष्मीर्मंगलहंत्री स्यात् । पुनर्यथा अक्षीणपुरस्य बलिष्ठदेहस्य समृद्धनगरस्य वा राज्ञो सा लक्ष्मीः कर्मसहायिनी स्यात् ॥ ११ ॥

**आदिस्तथांतो हि तिथेर्वियत्कृतैः४०पलैर्मितो भस्य तुरंगवन्हिभिः३७॥**
**युजोऽब्धिरामैः३४श्च झषालिकर्किणां५मक्षैः५परेषां सदलद्रिभैरिह१२**

अथ तिथ्यादीनां किंचिदाद्यंतौ वर्जयति—आदिरिति ॥ हि अवधारणे तिथेरादिस्तथांत इति वर्ज्यः किंभूत आदिरंतश्च वियत्कृतैश्चत्वारिंशत्पलैः ४० मित इति । एवं भस्य नक्षत्रस्य तुरंगवन्हिभिः सप्तत्रिंशत्पलैः ३७ मित आदिरंतश्चेति । युजो योगस्यादिरंतोऽब्धिरामैश्चतुस्त्रिंश ३४ त्पलैर्मित इति । झषालिकर्किणां मीनवृश्चिककर्काणामादिरंतोऽक्षैः पंचभिः पलैर्मित इति परेषामपरराशीनामादिरंतः सदलद्रिभैः सार्द्धद्वयेन मित इति ॥ १२ ॥

**अत्ता नुरंते नु तिथेरपप्रजा वधूरुडोंशेऽकुलनायका युजः ॥**
**अतो विलग्नस्य कुलांतकृद्भवेदादौ तथा पाणिपयोजपीडने॥१३॥**

अथाद्यंतयोः फलमाह—अत्तेति ॥ नु वितर्के तिथेरंते पाणिपयोजपीडने विवाहे कृते सति नुः पतेरत्ता मरणं स्यात् । एवं उडोर्भस्यांते वधूः स्त्री अपप्रजा संतानरहिता स्यात् । युजो योगस्यांते अकुलनायका व्यग्रचित्ता स्त्री स्यात् । विलग्नस्य मेषादेरंते स्त्री कुलांतकृत् भवेत्तथादौ विषयेऽपि एतदेव फलं स्यात् ॥ १३ ॥

**अधिष्ठिताद्भाच्च सहस्ररश्मिना भमिंद्रभं१४स्यादशनिर्दश१०प्रमं॥**
**तदाश्रितं मंगलमंगधारिणो न मंगलायाखिलखंडमंडले ॥१४॥**

अथाशनियोगमाह—अधिष्ठितादिति ॥ सहस्ररश्मिना सूर्येणाधिष्ठिताद्भात् इंद्रभं चतुर्दशं नक्षत्रं च पुनर्दशप्रमं दशमं नक्षत्रमशनिरिति संज्ञा स्यात् । तदाश्रितं चतुर्दशं दशमभाश्रितं च मंगलं विवाहेंऽगधारिणो नरस्य मंगलाय न स्यात् कस्मिन् अखिलखंडमंडले समस्तदेशे ॥ १४ ॥

**समस्तवर्णैः स्युरमी विरोधिनो योगा विवाहे विषयानुवर्तिनः ॥**
**गोधूलिके चेष्टघटीप्रतिष्ठिते तुरुष्ककैवर्तमुखैर्जनैर्न तु ॥ १५ ॥**

**इति श्रीकविकालिदासोदिते ज्योतिर्विदाभरणे विवाहकर्मणि वर्णगोत्राब्दग्रहचरणमेलापकाद्यष्टादशदोषांतयोगकथनाध्यायः ॥ १२ ॥**

अथोपसंहारमाह—समस्तेति ॥ अमी विरोधिनो योगा विवाहे समस्तवर्णैः सह विषयानुवर्तिनः पदार्थानुयायिनः स्युः कस्मिन् गोधूलिके लग्ने च पुनरिष्टघटीप्रतिष्ठिते तु पुनस्तुरुष्ककैवर्तमुखैर्म्लेच्छधीवरप्रभृतिभिर्जनैः सह एते योगा न संति ॥ ११९ ॥

इति श्रीपौर्णिमीयशिष्यभावरत्नविरचितायां श्रीकालिदासकृतज्योतिर्विदाभरणस्य सुखबोधिकायां विवाहकर्मणि वर्णगोत्राब्दग्रहवर्णमेलापकाद्यष्टादशदोषांतयोगकथनाध्यायो द्वादशः ॥ १२ ॥

॥ श्रीपाटवंशभवसाहिशिरोमणिश्रीवेलाभिधानविशदव्यवहारिसूनुः ॥
जीयात्सदा प्रविनयप्रभपत्रपद्मालंकारपूज्यमहिमाप्रभसूरिराजः ॥ १ ॥

---

## विवाहप्रकरणोत्तरार्द्धम् १२ ।

यतस्तदष्टादशदोषवर्जितं पंचांगशुद्ध्यादि समीरितं यदि ॥
लग्नं विवाहोत्सवसिद्धिकृद्भवेदतो मयैतद्भवशुद्धिरुच्यते ॥ १ ॥

अथ विवाहकालनिर्णयाध्यायानंतरं लग्नशुद्धिर्घटतेऽतः पंचांगशुद्धलग्नादिपदार्थाध्यायसं-यानमाह—यत इति ॥ यदि चेत् यतो यस्मात्कारणात्तल्लग्नं विवाहोत्सवसिद्धिकृत् भवेत् किंभूतं लग्नं अष्टादशदोषवर्जितं पुनः किंभूतं लग्नं पंचांगशुद्ध्यादिसमीरितं तिथिवार-नक्षत्रयोगकरणप्रमुखैरीरितं प्रोक्तं अतः कारणात् मया एतद्भवशुद्धिः एतस्माल्लग्नाज्जाता शुद्धिरुच्यते ॥ १ ॥

अमा३०तिथिः ३०सोभयपार्श्वघस्रा १४।१ घस्रानु-
मानर्हविवाहकृत्या ॥ विवाहसारा निखिलास्तु
वारा नक्तंदिवा साधुगुणा गुणाढ्याः ॥ २ ॥

अथ विवाहे वर्ज्यावर्ज्यदिनानि दर्शयति—अमेति ॥ अमातिथिः अमावास्या अनर्हम-योग्यं विवाहकृत्यं यस्यां सा एवंविधा स्यात् । किंभूता अमातिथिः सोभयपार्श्वघस्रा उभयतश्च-तुर्दशीप्रतिपद्भ्यां युक्ता । वर्ज्येति पुनः घस्रानुमा घस्रैर्दिनैर्मिता पूर्णिमासी इत्यर्थः सापि अनर्हा तु पुनर्नक्तंदिवा रात्रौ दिने च निखिलाः समस्ता वाराः विवाहसारा उद्वाहे बलिष्ठाःस्युः किंभूता वाराः साधवो गुणा येषां ते साधुगुणाः सद्गुणयुक्ता इति पुनः किंभूता गुणाढ्याः गुणान्विताः ॥ २ ॥

तमस्विनीलग्नसमद्यु लग्नं वरं वराणीह विकर्तनास्ते ॥
सर्वत्र लग्नान्यनु सन्न लग्नं क्वचिद्विभातद्युदलांतरस्थम् ॥ ३ ॥*

अथ गोधूलिकादिलग्नशुद्धिं तर्कयन्नाह—तमस्विनीति ॥ तमस्विनीलग्नं रात्रिसंगतं एवंविधं समद्यु लग्नं साधुवारलग्नं वरं स्यात् 'समं साध्वखिलं सदृग्' इति हेमोनेकार्थः । अनु पश्चात् विकर्तनास्तेऽस्तंगते सूर्ये सति सर्वत्र लग्नानि वराणि श्रेष्ठानि स्युः कस्मिन् इह विवाहे क्वचित् विभातद्युदलांतरस्थं सूर्योदयादारभ्य मध्यान्हपर्यंतं लग्नं न सत् न शुभं स्यात् क्वचिदिति मतांतरमुक्तं ॥ ३ ॥

* अत्रान्यपुस्तकेष्वेतस्माद्विपरीतः पाठ उपलभ्यते । यथा तमस्विनीलग्नमसद्युलग्न वर वराणीह विकर्तनास्ते । सर्वत्र लग्नान्यनुसन्नलग्नं क्वचिन्निशास्यद्युदलांतरस्थम् ॥ इति ॥ तत्रायमन्वयः इह विकर्तनास्ते असद्युलग्न तथा तमस्विनीलग्नं वरं श्रेष्ठ तथा सर्वत्र विकर्तनास्ते लग्नानि वराणि क्वचित् निशास्यद्युदलांतरस्थं लग्नं नसत् ॥ अत्रासद्युलग्नमित्यस्य पाणिग्रहदिनगतलग्नमित्यर्थः । विकर्तनास्ते सर्वत्र लग्नानीत्यस्य गोरजलग्नमित्यर्थः प्रतिभाति परमेतन्मतद्वयमपि न सर्वसम्मतमिति ॥

समाहता पंचदशी न पक्षतिः सितासिता केनचिदप्यसद्युतिः ॥
तिथिद्युजाते न समीक्ष्य कार्तिकीमुक्तोपयामामिति तन्न सन्मतम् ॥ ४ ॥

अथ कार्तिकीमाश्रयन् ऋषिमतं दूषयति—समेति ॥ केनचित् तिथिद्युजाते तिथिदिनसमूहे सितासिता शुक्लकृष्णा पंचदशी पूर्णिमा अमा इत्यर्थः पुनः पक्षतिः प्रतिपत् समाहता सम्यक्प्रकारेणाहता ताडिता निषेधिता इत्यर्थः ॥ किंभूता एषा असद्युतिः असती अशुभा युतिः संयोगो यस्याः सा किंकृत्वा निषेधिता कार्तिकीं कार्तिकसंबंधिपूर्णिमां न समीक्ष्य अनालोक्येत्यर्थः । किंभूतां कार्तिकीं उक्त उपयामो यस्यां सा पूर्वे विवाहे कार्तिकी उक्तास्ति इति हेतोस्तन्मतं न सत् अशुभमित्यर्थः ॥ ४ ॥

केचिद्यमाहोऽसृगहो हरेरहो वरं वदंतीति न युक्तिमन्मतं ॥
तत्कालहोराकृतदूषणं कथं चेद्वारकृद्दूषणमेकशक्तितः ॥ ५ ॥

अथ शन्यादिवारांस्त्यजन् केषांचिन्मतं दूषयति—केचिदिति ॥ केचित् यमाहः शनिदिनं असृगहो भौमदिनं हरेः सूर्यस्याहो दिनं वरं श्रेष्ठं वदंति इति मतं न युक्तिमत् चेत्तर्हि तत्कालहोराकृतदूषणं तेषां ग्रहाणां कालहोराभिः कृतदूषणं कथं स्यात् । यतः क्रूरग्रहाणां कालहोरा दुष्टा इति । यत एकशक्तितो मुख्यबलात् वारकृद्दूषणमस्ति वारस्याष्टगुणं प्रोक्तं फलमिति वचनात् ॥ ५ ॥

अतो द्विजातिर्न तु दोर्ग्रहं चरेदसद्दिनेऽहर्मितिगे कथंचन ॥
असद्युदोषायुजि नेत्यहो मया महद्विरोधातिभयादृतं स्मृतम् ॥ ६

अत इति ॥ अतः कारणात् द्विजातिर्विप्रो दोर्ग्रहं पाणिग्रहणं नाचरेत् नो कुर्यात् कस्मिन् अहर्मितिगे दिनप्रमाणगतेऽसद्दिनेऽशुभवारविषये तु पुनः कथंचन महता कष्टेनापि असद्द्युदोषायुजि पापवाररात्रियोगे दोर्ग्रहं नाचरेत् । इतिहेतोरहो इति आश्चर्ये मया ऋतं सत्यं स्मृतं कथितं कस्मात् महद्विरोधातिभयात् प्रौढविरोधभीतेः ॥ ६ ॥

मघाशिफासौम्यशयानुराधावातोत्तराद्रौहिणपौष्णताराः ॥
साराः विवाहे स्फुरदंशुजालाः खलद्युगावेधितमंडलाः स्युः ॥ ७ ॥

अथोद्वाहनक्षत्राण्याह—मघेति ॥ मघादिताराः विवाहे साराः श्रेष्ठाः स्युः मघा शिफा मूलं सौम्यं मृगशिरः शयो हस्तः अनुराधा वातः स्वाती उत्तरात्रयं द्रुहिणस्य ब्रह्मण इदं द्रौहिणं रोहिणी पौष्णतारा रेवती किंभूता इमास्ताराः स्फुरदंशुजालाः उत्कटकांतियुक्ताः सूर्यसंक्रमणरहिता इत्यर्थः । पुनः किंभूतास्ताराः खलेति खलाभ्रगैः क्रूरग्रहैरवेधितमभिन्नं मंडलं स्ववपुर्यासां ताः ॥ ७ ॥

काचिज्जगाद श्रुतिरुत्तराद्यैर्विवाहभृक्षैस्त्रिभिरत्र लोके ॥
तदृक्षसिद्धिव्यतिरेकभावात्तदंगिकारो नहि लोकमान्यः ॥ ८ ॥

अथोद्वाहे कलियुगे उत्तरात्रयं श्रयन् कांचिच्छ्रुतिं दूषयति—कांचिदिति ॥ कांचित् श्रुतिः शास्त्रमत्र कलौ लोके त्रिभिरुत्तराद्यैर्ऋक्षैर्विवाहं जगाद तद्वक्षसिद्धिव्यतिरेकभावात् उत्तरात्रयेषु सिद्धेरभावात् इति हेतोर्निष्फलं जगाद इत्यर्थः । हि यस्मात् कारणा तदंगिकारस्तच्छ्रुत्यभ्युपगमो लोकमान्यो न स्यात् ॥ ८ ॥

समस्तकर्मोचितकालपुष्यो दुष्यो विवाहे मदमूर्छितत्वात् ॥
सहस्रपत्रप्रसवेन तस्मादिहापि मुक्तो भुवि लोकसंघैः ॥ ९ ॥*

अथोद्वाहे पुष्यं निषेधति—समस्तेति ॥ सहस्रपत्रप्रसवेन कमलोद्भवेन ब्रह्मणा विवाहे एवंविधः पुष्यो दुष्यः दोषीकृतः कस्मात् मदमूर्छितत्वात् सर्वत्र सिद्धिकार्योत्पन्नमदेन मोहितत्वात् । समस्तकर्मणि उचितो योग्यः कालः समयो यस्य स चासौ इति समासः ॥ तस्मात् कारणात् भुवि भूमौ लोकसंघैर्जनगणैरिहापि विवाहे पुष्यो मुक्तो वर्जितः ॥ ९ ॥

भगोडु वाल्मीकिरिहाह सौम्यं सीता सिषेवे न सुखं तदूढा ॥
भैमी तथैवाभिजिदृक्षमात्रिस्तच्छापमापोडु तदीयमस्मात् ॥ १० ॥

अथोद्वाहे भद्वयं शापेन सापवादमाह—भगोडु इति ॥ इह विवाहे वाल्मीकिर्ऋषिर्भगोडु पूर्वाफाल्गुनीं सौम्यं शुभमाह ब्रवीति तदूढा पूर्वाफाल्गुनीकृतोद्वाहा सीता वैदेही सुखं न सिषेवे न भजतिस्म अस्मात् कारणादप्राप्तसुखत्वात्तदुडु पूर्वाफाल्गुनी कर्तृपदं तदीयं शापं जनकपुत्रीसंबंधिनं शापमाप प्राप । तथैवात्रिर्ऋषिरभिजिदृक्षं विवाहेऽशुभमाह तदूढाभिजिन्नक्षत्रे कृतोद्वाहा भैमी दमयंती सुखं न सिषेव अस्मात् कारणात्तदुडु अभिजित्तदीयं शापं भीमसुतासंबंधिनं शापमाप ॥ १० ॥

सविश्वकृच्छौरिवसूडुदास्रं बभाण कश्चित्त्विह वेदभेदः ॥
फलान्यभावादपरागमज्ञैर्मुक्तं तदृक्षं त्वनु सर्वलोकैः ॥ ११ ॥

अथाश्विन्यादिमानि फलशून्यत्वाद्वर्जयन्नाह—सविश्वकृदिति ॥ कश्चित् वेदभेद इहोद्वाहे दास्रमश्विनीं बभाण जगौ किंभूतं दास्रं सविश्वेति विश्वकृत् चित्रा शौरिः श्रवणः वसूडु धनिष्ठा एभिः सह वर्तमानं अनु पश्चात् हि यस्मात्कारणात् अपरागमज्ञैर्वेदभेदादन्यशास्त्रमद्भिः सर्वलोकैस्तदृक्षमाश्विन्यादि चतुष्कं मुक्तं वर्जितं कस्मात् फलान्यभावात् फलरहितत्वात् ॥ ११ ॥

न हारि रक्षोभमभूदुदीरितं यद्देवकी तत्र च वासुदेवसूः ॥
ऊढा जगन्मंगलकारिणी ततः प्रगर्हितं मूलमिहोचितं स्मृतम् ॥ १२ ॥

---

* क्वचन पुष्यनक्षत्रोपरि विवाहितो ब्रह्मा स्वयं मदेन मूर्छितोऽभूत्तस्मात्तेनायं दूषित इत्यर्थः कृतोऽस्ति सोऽपि संभाव्यते ॥

अथ पूर्वं निषिद्धमपि मूलमधुनात्रोचितं दर्शयति—न हारीति ॥ इह विवाहे यत् रक्षोभं मूले हारि श्रेष्ठं न ईरितं न प्रोक्तं च पुनस्तत्र मूले ऊढा उद्वाहिता देवकी जगन्मंगलकारिणी अभूज्जाता किंभूता देवकी वासुदेवं विष्णुं सूते इति वासुदेवभूः कृष्णप्रसूत्या जगत्सनाथं कृतमित्यर्थः । ततस्तत्समयादारभ्य तस्मात्कारणाद्वा पूर्वं गर्हितमपि मूलमिह विवाहे उचितं योग्यं स्मृतं प्रोक्तं ॥ १२ ॥

**करग्रहे चेत्पितृकर्म गर्हितं कथं तदृक्षं कथितं कलं बुधैः ॥**
**दाक्षायणी कश्यपलब्धमंगला दृष्टेति सद्वर्गफलादृता मघा ॥१३॥**

अथोद्वाहे मघा फलदायिनीं दर्शयति—करेति ॥ चेदिति वितर्के करग्रहे पितृकर्म पूर्वेषां कार्यं गर्हितं निंदितं चेत् कथं तर्हि बुधैस्तदृक्षं पितृणां नक्षत्रं मघा कलं मनोहरं कथितं सत्यं तदाह दाक्षायणी दक्षप्रजापतिसुता सद्वर्गफला शुभवर्गफला दृष्टा विलोकिता किंभूता दाक्षायणी कश्यपलब्धमंगला कश्यपेन ऋषिणा सह लब्धं प्राप्तं मंगलं विवाहरूपं यया सा इति हेतोर्मघा विवाहे आदृता अंगीकृता ॥ १३ ॥

**सोत्पातदक्षदुहिता न हिता विवाहे यावत्समार्द्धमपि**
**तावदुदीरितेयं ॥ लग्नेंदुभोगसमया च तथान्य-**
**कृत्ये भुक्त्वा सदैव रजनीरमणेन मुक्ता ॥ १४ ॥**

अथ वसंततिलकेनोद्वाहे कियत्कालं सोत्पातभं त्यजन्नाह—सोत्पातेति ॥ तावत्कालं सदैव विवाहे सोत्पातदक्षदुहिता उत्पातयुक्ततारा न हिता न श्रेष्ठा उदीरिता प्रोक्ता अपि निश्चितं किंभूता तारा लग्नेंदुभोगसमया लग्नप्राप्तइंदुभोगस्य चंद्रराशिभोगस्य समयो यस्याः सा यावत् समार्द्धं वर्षार्द्धं षण्मासं रजनीरमणेन चंद्रेण तारा भुक्त्वा च पुनर्न मुक्ता कस्मिन् अन्यकृत्येऽन्यमंगले ॥ १४ ॥

**लोकप्रतीतिकरमुद्धततर्कमेकं दृष्टिप्रमणमिह कालवि-**
**धानशास्त्रं ॥ स्यात्तत्प्रमाणमनु शाब्दिकतार्किकार्था**
**नैवान्यथा विघटयंति सदुक्तिपक्षाः ॥ १५ ॥**

अथात्र मघादिनक्षत्रं पूर्वं निषिद्धं ततः फलावलोकनत्वादादृतमित्यादिप्रत्यक्षप्रमाणत्वादतः काव्यत्रयेण सर्वशास्त्रेभ्यो ज्योतिःशास्त्रं श्रेष्ठमिति दर्शयति—लोकेति ॥ इह कलौ एकमद्वितीयमुद्धततर्कमुत्कटविचारं दृष्टिप्रमाणं लोकप्रतीतिकरं लोकानां विश्वासकारकमेवंविधं कालविधानशास्त्रं ज्योतिःशास्त्रमस्ति तज्ज्योतिषं प्रमाणं स्यादन्यथेति चेद्यदा ज्योतिषं प्रत्यक्षप्रमाणं न स्यात्तदा सतां उक्तिपक्षाः सदुक्तिपक्षा एवंविधा अनुशाब्दिकतार्किकार्थाः वैयाकरणतार्किकाणां पदार्था नैव विघटयंति निश्चितं विघटनां न प्राप्नुवंति एतेन कलौ

प्रत्यक्षप्रमाणज्योतिषत्वात्तार्किकादिपदार्थाः खलतां यांतीत्यर्थः । लोके यादृक् ज्योतिषं चमत्कारकरमस्ति तादृगन्यन्नास्तीति भावार्थः ॥ १९ ॥

लोकोत्कराः परिणमंति कलौ कलाज्ञाः कालप्रियं व्यवहृताविति तत्प्रकृत्या ॥ सर्वागमो भवति किं ननु शब्दसिद्धाः सप्तर्तवोऽत्र निजभंगिवहाः प्रदृष्टाः ॥ १६ ॥

लोकेति ॥ लोकोत्कराः जनगणाः कलौ युगे व्यवहृतौ व्यवहारे कालप्रियं दैवज्ञं परिणमंति नमस्कुर्वंति इति हेतोरिति किं तत्प्रकृत्या कालस्वभावेन सर्वागमो नाम सर्वतः प्रमाणो धर्मो भवति यत् काले यत् प्रोक्तं तत्काले तत् क्रियते तदा सफलमिति। पुनरुष्णकाले उष्णकालानुयायि वस्तु प्रादुःस्यात् प्रकटीभवेत् परं शीतकालानुयायि न स्यात् नेत्याद्यप्यर्थः । अत्र दृष्टांतमाह ननु वितर्के शब्दे सिद्धाः सप्तर्तवो निजभंगिवहाः स्वरचनाभूतः किं प्रदृष्टा अपि तु नो दृष्टाः कोर्थः सप्तर्तवो वंध्यापुत्रवत् शब्दोच्चारणभूताः संति परं वस्तुस्वभावभूता न संतीत्यर्थः । षड्ऋतुरेव कालप्रकृतिरिति ॥ १६ ॥

वेदप्रवृत्तवृषपद्धतिगामिनोऽमी तज्ज्योतिषांबकनिभालनकालशुद्ध्या ॥ लोकाश्चरंति यदिहैव परावराद्यास्तस्मादतो गणितशास्त्रफलानुषंगः ॥ १७ ॥

वेदेति ॥ यदि चेत् अमी लोका इह जगति चरंति गच्छंति कया कृत्वा तज्ज्योतिषमेवांबकं लोचनं तेन निभालनमवलोकनं तेन या कालशुद्धिस्तया किंभूता लोकाः वेदेति वेदात् प्रवृत्ता प्रवर्तिता वृषपद्धतिर्धर्ममार्गस्तां गच्छंतीत्येवंशीलास्ते पुनः किंभूताः लोकाः परावराद्याः परब्रह्मादयः अवरेऽस्मदादयस्ते आद्या येषांते तस्मात् कारणात् गणितशास्त्रफलानुषंगो गणितशास्त्रस्य फलसंयोग ऋतः सत्यः ॥ १७ ॥

ये वारतारकभवाः सदसत्प्रयोगाश्चौलादिसंस्कृतविधौ नहि दर्शनीयाः ॥ यानादिसद्व्यवहृतौ किल चिंतनीयाः सर्वत्र नामफलदाश्च शिलोच्चयोर्व्याम् ॥ १८ ॥

अथ चौलादिकार्ये शुभाशुभयोगांस्तर्कयन्नाह—येवारेति ॥ ये वारतारकभवाः वारनक्षत्रजाताः सदसत्प्रयोगाः शुभाशुभयोगाः संति ते चौलादिसंस्कृतविधौ चौलादिसंस्कारकार्ये नहि विलोकनीयाः न विलोक्याः किलेत्यवधारणे ते योगाः यानादिव्यवहृतौ प्रयाणादिव्यवहारे चिंतनीयाः विचार्याः केषु सर्वत्र देशेषु न पुनः शिलोच्चयोर्व्यां पर्वतभूमौ किंभूतास्ते नामफलदाः ये शुभास्ते शुभफलदाः येऽशुभनामानस्तेऽशुभफलदा इति ॥ १८ ॥

नोदुष्टयोगमुखदुष्टविभागकाले वामं कुलव्रत-
विवाहविधानमाहुः ॥ संतोऽन्यसत्कृतिकृतिश्च
भवेदशेषैः सर्वत्र गर्हितफलौ व्यतिपातकांत्यौ ॥ १९ ॥

अथोद्वाहादौ विष्कुंभादीनां दुष्टविभागं त्यजन्नाह—नो दुष्टेति ॥ संतः पंडिताः कुलेति कुलं गृहं व्रतं मौंज्यादि विवाह एषां विधानं कार्यं वामं मनोहरं नाहुः न कथयंति कस्मिन् दुष्टयोगमुखस्य विष्कुंभादियोगमुखस्य यो दुष्टविभागकालः दुष्टपरिच्छेदकालस्तस्मिन् । यतः ' विष्कुंभे घटिकाः पंच शूले सप्त प्रकीर्तिताः । षड् गंडे चातिगंडे च नव व्याघातवज्रयोः ' इति ॥ १ ॥ पुनर्व्यतिपातकांत्यौ व्यतीपातकः अंत्यो वैधृतश्च इमौ अशेषौ समस्तौ सर्वत्र गर्हितफलौ दुष्टफलकारकौ भवतः । च पुनरत्राशुभयोगकालेऽन्यसत्कृतिदानपुण्यसत्कारे कृतिः कार्यं भवेत् ॥ १९ ॥

ज्योतिर्युगैक्य इह तारक २७ मानगे च योगो
भवेत्तिथियुगंतरके निरुद्धः ॥ सर्वेषु कर्मसु विवाहविधौ
विशेषादुत्सृष्टमंगलफलोऽयमशेषलोके ॥ २० ॥

अथ निरुद्धनामयोगमाह—ज्योतिरिति ॥ निरुद्धनामा योगो भवेत् कस्मिन् ज्योति-र्युगैक्ये नक्षत्रविष्कुंभादियोगानां घटिकानामैक्ये च पुनस्तिथियुगांतरके तिथीनां योगानां च घटिकानामंतरे चेद्यदा तारकमानगे सप्तविंशतिघटिकाप्रमाणशेषे तदा इह निरुद्ध इति अयमनिरुद्धो योगोऽशेषलोके उत्सृष्टमंगलफलस्त्यक्तशुभफलः स्यात् केषु सर्वेषु कर्मसु विशेषाद्विवाहविधौ ॥ २० ॥

भवेदसद्वा करणं बवाख्यं दुष्टक्षणो दुष्टतमो विवाहे ॥
भाभावतो नाहितमस्तदंशस्तारामुहूर्ताख्यफलैक्यतोऽपि ॥२१

अथोद्वाहे बवादिकं दूषयन्नाह—भवेदिति ॥ विवाहे बवाख्यं करणमसद् दुष्टं भवेत् वा पुनर्दुष्टनक्षत्रमुहूर्तो दुष्टतमो भवेत् । पुनर्भाऽभावतो वैवाह्यनक्षत्राभावात्तदंशो वैवाह्य-नक्षत्रक्षणोऽहितमः शुभतमो न भवेदपि चेत्तारामुहूर्ताख्यफलैक्यतात्र हेतौ पंचमी य-त्ताराया: फलं तत्तस्य क्षणस्यापि फलमित्येवं पूर्वं प्रोक्तमपि अत्र विवाहे न स्यादित्यर्थः॥२१

शस्तः समस्तैरुदयैः शयग्रहः सजूककन्याजितुमांशकैरिह ॥
सास्त्रादिखंडैश्च चरोदये चरं लवं विनेतद्धि नयप्रमाणता ॥२२॥

अथोद्वाहे लग्नशुद्धिमाह—शस्त इति ॥ इह शयग्रहो विवाहः शस्तः शुभः स्यात् कैः समस्तैरुदयैर्लग्नैः किंभूतैरुदयैः सजू इति जूकस्तुला कन्या जितुमं मिथुनं एषामंशकै-र्नवांशैः सह वर्तमानैः पुनः किंभूतैः सास्त्रादिखंडैर्धनुरादिखंडयुक्तैश्च पुनश्चरोदये च-

रलग्ने चरं लवं चरांशं विना विवाहः शुभः स्यात् हि युक्तार्थे पुलग्नचरभावांशावस्ति अर्थ नयः शुभ इत्यर्थः ॥ २२ ॥

**अकीटसद्वाश्युदयेषु हारि यद्दिवासुजाऽब्जग्रहणं विशारदैः ॥**
**समग्रलग्नेषु समीरितं निशि प्रमाणमत्रेत्यखिलांघ्रियुक्ष्वपि ॥ २३ ॥**

अथोद्वाहे दिवारात्रिलग्नान्याह—अकीटेति ॥ विशारदैः पंडितैर्यद्दिवा दिवा दिने भुजाब्जग्रहणं करकमलपीडनं हारि शुभमीरितं प्रोक्तं केषु अकीटसद्वाश्युदयेषु कर्कं विना शुभलग्नोदयेषु उक्तंच ' कर्कलग्नेऽथवा मेषे वटांशो यदि दीयते । तुलायां मकरे चैव वैधव्यं निश्चितं भवेत् ' वर्गोत्तमं विनांत्यांशो न ग्राह्य इति । पुनर्विशारदैर्निशि रात्रौ समग्रलग्नेषु भुजाब्जग्रहण शुभमीरितं अत्र लग्नेषु अखिलांघ्रियुक्षु सर्वचरणयुतेषु कन्यादिष्वपि प्रमाणमिति ॥ २३ ॥

**विसारियुग्मोदयवत्यहर्मितिः प्रियाप्रवेष्टोत्पलसंग्रहे क्वचित् ॥**
**सौराज्यवन्मालवमागधाक्षितौ तमीमितिश्चापरभोदयोदिता ॥ २४ ॥**

अथात्र देशविशेषे किंचित् विशेषयति—विसारेति ॥ क्वचित् प्रवेष्टोत्पलसंग्रहे करकमलसंग्रहेऽहर्मितिः प्रिया दिनप्रमाणं श्रेष्ठं स्यात् । किंभूताहर्मितिः विसारो मत्स्यः युग्मं मिथुनं एतदुदयवती मीनमिथुनलग्नयुक्ता विसारयुग्ममेव क्वचिन्मीनो वा मीनमिथुने वा मीनादयुग्मराशयो वा । अत्र लोकोक्तिसंमतसमीक्षणत्वान्मीनमिथुनप्रमाणमिति शंका निरस्ता ' भुजो बाहुः प्रवेष्टो दोः ' इति हैमः । च पुनः तमोमितिः प्रिया रात्रिप्रमाणं वरं स्यात् । किंभूता तमीमितिः अपरभोदयोदिता अन्यलग्नोदयप्रमिता कस्यां सुराज्यवत् कावेरीतीरं मालवमागधौ प्रतीतौ एषा क्षितौ भूमौ ' तमी तमा विभावरी ' इति हैमः ॥ २४ ॥

**सूरः कवी राजविराजमानौ न्नरं जयत्येव वरं वरास्ये ॥**
**मंदः कुजन्मा च तमोगुणोऽपि यदांगिरा विद्धि नु विद्धि शं स्यात्॥२५**

अथात्र चंद्रेण ग्रहयोगमशुभं शुभं च दर्शयति—सूर इति । हि युक्तार्थे नु वितर्के हे वरास्ये हे शुभानने दंतस्तालव्यश्च सूरः सूर्यः कविः शुक्रः मंदः शनिः कुजन्मा भौमः तमोगुणो राहुश्च प्रत्येकं किंभूतो राज्ञा चंद्रेण सह विराजतेऽसौ इति विराजमानः चंद्रयुक्तः सन् वरं भर्तारं न रंजयति न रागीकरोति चंद्रेणयुक्ता विवाहलग्ने एतेऽशुभा इत्यर्थः । यदांगिरा गुरुः विद् बुधश्चंद्रयुक्तः स्यात्तदा हे सुमुखि त्वं शं सुखं विद्धि जानीहि ॥ २५ ॥

**लवांगमंगं च मदंशको मदो जिनाति सा सत्कमितुस्तनुः श्रेयं ॥**
**करार्दने तत्स च बोधनार्थयुक्तदा तदीयः प्रथयत्यधीश्वरः ॥ २६ ॥**

अथात्र निजस्वामीदृष्टिहीनाहीनं लग्नादिफलमाह—लवांगमिति ॥ करार्दने विवाहे यदा लवांगं नवांशलग्नं लग्नं च मदांशकः मदः सप्तमभावश्च अर्थवशाद्विसाक्तिपरिणामस्तेन लवांगं

निजस्वामिदृष्टीत्यादि निजस्वामिदृष्टिहीनं स्यात्तदा विवाहे सा स्त्री सत्कामितुः शुभदर्शितस्य तनुश्रियं शरीरलक्ष्मीं जिनाति विनाशयति । ज्या वयोहानौ इति धातो रूपं तुरित्यवधारणे । यदि तत् नवांशलग्नादि स च मदश्च एष बोधनार्थयुग् बुध्यते ज्ञायतेऽर्थो येनेति बोधनं नवनं तद्वाचार्थः पदार्थस्तेन युग् निजस्वामिदृष्टियुक्तः स्यात्तदा तदीयरतेशां लवग्रहमदांशमदानामयमधीश्वरः स्वामी धवस्यायुर्जीवितं प्रथयति विस्तारयति ॥ २६ ॥

**वरे तनौ गूढपयोधरेंदिरे यमाच्चतुष्कं त्यज राजपंचकं ॥**
**लये रिपौ चांगपराजभार्गवानस्ते त्वशेषानिषिद्धविद्गुरून् ॥२७॥**

अथ तन्वादिभावे शन्यादियोगांस्त्यजति—वर इति ॥ हे वरे श्रेष्ठे हे गूढपयोधरेंदिरे गूढपयोधराभ्यां पुष्टस्तनाभ्यां इंदिरा इव इंदिरा या सा लक्ष्मीतुल्या तस्याः संबोधने त्वं तनौ लग्ने यमात् शनैश्चरात् चतुष्कं त्यज शनिरविचंद्रभौमान् विजहीहि पुनस्त्वं लयेऽष्टमभावे राजपंचकं चंद्रभौमबुधगुरुशुक्रान् जहीहि पुनस्त्वं रिपौ षष्ठेऽगपराजभार्गवान् लग्नपतिचंद्रशुक्रान् त्यज । पुनस्त्वं अस्ते सप्तमेऽशेषान् ग्रहान् त्यज किंभूतान् अशेषग्रहान् अनिषिद्धविद्गुरून् बुधगुरुवर्जितान् हि निश्चितं सदा निरंतरं ॥ २७ ॥

**आया११नुगा विष्णुपदायना रतिं पुष्णंत्यशेषाः कलिमंत्य१२वर्तिनः ॥**
**विवाहलग्ने वरवामनेत्रयोः क्वचित्समो रिःफगनः खलूशना ॥ २८ ॥**

अथ चतुश्चत्वारिंशत्काव्यपर्यंतं भावगतग्रहफलानि तर्कयति—आयेति ॥ विष्णुपदं आकाशं तदयनं मार्गो येषां ते ग्रहा अशेषाः समग्रा आयानुगा एकादशभावगता विवाहे वरवामनेत्रयोः वरवध्वो रतिं प्रीतिं पुष्णंति दधति ॥ पुनरंत्यवर्तिनो द्वादशभावगा ग्रहाः कलिं क्लेशं पुष्णंति क्वचित् खलु निश्चितं उशनाः शुक्रो रिःफगतो द्वादशभावगतः समः साधारणफलदायकः स्यात ॥ २८ ॥

**द्वेषि६विक्रम३विनाशगो८ हरिर्द्वेषिविक्रमविनाशकृद्भवेत् ॥**
**आत्रिभस्थितिरभीष्टदोऽत्रिजो मंगलोऽरि ६ बलगो३ऽतिमंगलः ॥ २९**

अथ श्लोकद्वयमाह—द्वेषीइति ॥ द्वेषी षष्ठः ६ विक्रमस्तृतीयः ३ विनाशोऽष्टमः ८ एतद्भावेषु गतो हरिः सूर्यो द्वेषिविक्रमविनाशकृत् शत्रुपराक्रमक्षयकारको भवेत् ॥ आत्रिभशब्दोऽत्र राशिवाचित्वात् भावः भात् त्रिभावं मर्यादीकृत्य इति प्रथमद्वित्रिभावेषु स्थितिः स्थानं यस्य स एवंविधोऽत्रिजश्चंद्रोऽभीष्टदः स्यात् । 'विधुरत्रिदृग्ज ' इति हैमः । अरि६बल३गः षष्ठत्रिभावस्थो मंगलो भौमोऽतिमंगलो मंगलकारकः स्यात् ॥ २९ ॥

**आतुता१।२।३।४।५। ध्वर९ख१०गोविंदगिरा मंजुलश्च**
**कलितोऽगतः क्वचित् ॥ बंधु४गो धवलवृष्णिरस्त-**
**७वित्प्रत्यनीकदधिषणोऽपसिद्धिकृत् ॥ ३० ॥**

आसुतेति ॥ कश्चित् सुतभवनं मर्यादीकृत्य आसुतात् प्रथम १ द्वि२ त्रि३ तुर्यः ४ पंचम५ भावाः अम्बरो नवमः ९ खं दशमः १० एतद्भावेषु गतो विद् बुधश्च पुनरंगिरा गुरु- मंजुलः शुभः कलितः प्रोक्तः कस्मादंगतो लग्नात् इति । बंधुगश्चतुर्थभावगतो धवलवृष्णि- श्चंद्रोऽपसिद्धिकृत् दोषकृत् अस्तीति । पंचमभावस्थबुधो दोषकृत प्रत्यनीकधिषणः षष्ठभावस्थो गुरुर्दोषकृत् स्यात् ॥ ३० ॥

स्वां २ ग १ धाम ४ मति ५ पुण्य ९ मा १० गः

स्वांगधाममतिपुण्यमानदः ॥ आस्फुजित्यसहन-

६ त्रि ३ काल ८ गौ कालदौ नुरिह राहुमंदगू ॥ ३१ ॥

स्वांगेति ॥ स्वं धनं द्वितीयं २ अंगं प्रथमं १ धाम गृहं चतुर्थं ४ मतिः ५ पंचमं पुण्यं नवमं ९मानो दशमं १० एषु भवनेषु गतः आस्फुजित् शुक्रः स्वांगधाममतिपुण्यमानदः निजांगे तेजोवृद्धिपुण्यसन्मानाना दायकः स्यात् ॥ हि निश्चितं राहुमंदगू राहुशनैश्चरौ नुः पुरुषस्य कालदौ मृत्युभयकृतौ भवतः कालं मृत्युं ददतः इति तौ कालदौ दोऽवखंडने ड प्रत्यये सिद्धं किंभूतौ राहुमंदगू असहनः षष्ठः ६ तृतीयः ३ कालोऽष्टम ८ एतेषु भावेषु गतौ इह विवाहे ॥ ३१ ॥

सांग१मार७रविजार्कराहवो मंगले न हितदायिनोऽहितौ ॥

सांग१मार७मृति८भूजभार्गवाविंदुरंग१रिपु६रंध्र८गोऽशुभः ॥३२॥

सांगेति ॥ सह अंगमाराभ्यां प्रथमसप्तमभावाभ्या वर्तंते ते च रविजश्चार्कश्च राहुश्चेते मंगले विवाहादौ हितदायिनः शुभकारका न संति । सह अंगमारमृतिभिः प्रथमसप्तमाष्टमभावै- वर्तेते ते च भूजभार्गवौ भौमशुक्रौ अहितौ दुष्टौ भवतः । अंगः प्रथमः १ रिपुः षष्ठः ६ रंध्रं अष्टमः ८ एतद्भावगत इंदुरशुभः स्यात् ॥ ३२ ॥

सौम्यजीवविरतौ८ करग्रहे सौम्यजीवविरतिः करग्रहः ॥

सूतिराश्युदयभाष्टमोदये तल्लवांगवति वांगनुत्तयोः॥३३॥

सौम्येति ॥ सौम्यजीवयोर्बुधगुर्वोर्विरतिरष्टमभावो यस्मिन् स तस्मिन् एवंविधे करग्रहे विवाहे सौम्यजीवविरतिर्मनोहरजीवनाशः स्यात् कयोस्तयोर्वरवध्वोः । सूतिराश्युदयभाष्टमोदयो जन्मराशिलग्नाभ्यामष्टमलग्ने तल्लवांगवति तल्लग्ननवांशयुक्ते वा करग्रह उद्वाहस्तयोरंगनुत् वधूवरयोरंगक्षयकारकः स्यात् ॥ ३३ ॥

देवरेण विलसत्यलं बले ३पूर्वदेवसचिवे बलासवे ॥

खे १०पैरनुविकर्तनात्मजे रिःफगे १२ भवति शक्तिरंगना ॥३४॥

देवरेणेति ॥ अलं निश्चितं पूर्वदेवसचिवे शुक्रे बले तृतीयभावस्थे सति अंगना स्त्री देवरेण सह विलसति रमते । अनु विवाहात् पश्चात् बलासवे बला भूमिस्तस्याः सवः प्रसवो यस्य स

भौमस्तस्मिन् खे दशमस्थे स्त्री अपरैर्लोकैः सह विलसति 'बला लक्ष्मीर्बला मही' इत्यनेकार्थः । विकर्तनात्मजे शनौ रिःफगे द्वादशगे सति स्त्री शक्तिः शाकिनी भवति ॥ ३४ ॥

**यत्र सत्फलकरा ग्रहा मया कीर्तिता विगतसत्फलाश्च ये ॥**
**ह्यन्यभावयुतिवर्तिनोऽथ ते दोर्ग्रहे समफला न निंदिताः ॥ ३५॥**

यत्रेति ॥ यत्र विवाहे मया ये ग्रहाः सत्फलकराः विगतसत्फलाः गलितशुभफलाश्च कीर्तिताः प्रोक्ताः तेऽपि ग्रहा अन्यभावयुतिवर्तिनोऽन्यभावयोगयुक्ताः संतोऽतः कारणात् दोर्ग्रहे समफलाः संति परं न निंदिताः न निषेधिताः ॥ ३५ ॥

**मन्मथेऽङ्गपवतीह नुर्मृतिर्मन्मथेऽस्तपवति स्त्रियास्तथा ॥**
**लग्नकामलवराशिपालकौ पालकौ न भवतो नृयोषितोः ॥३६॥**

मन्मथ इति ॥ अंगपवति लग्नस्वामियुक्ते मन्मथे सप्तमभावे सति नुः नरस्य मृतिः स्यात् । तथास्तपवति सप्तमभावाधिपतियुक्ते मन्मथे सप्तमभावे सति स्त्रियः स्त्रियाः मृत्युः स्यात् । स्त्रीशब्दस्यापि क्वचिदडागमवैकल्यं प्रोक्तमस्ति तेन षष्ठ्येकवचनेऽपि स्त्रियः इति रूपं इति धातुरत्नाकरे प्रोक्तं ॥ तथा लग्नकामलवराशिपालकौ सप्तमलग्नस्वामी सप्तमलवस्वामी च तौ सप्तमभावगतौ नृयोषितोर्नरवध्वोः पालकौ रक्षाकरौ न भवत ॥ ३६ ॥

**लग्नपोदयलवेश्वरौ द्विषच्छिद्रगौ तनुत एवमापदं ॥**
**मारनायकमदांशपौ नरे लग्नतश्च मदगस्त्रिभागपः ॥३७ ॥**

लग्नेति ॥ लग्नतो लग्नात् द्विषच्छिद्रगौ षष्ठाष्टमगतौ लग्नपोदयलवेश्वरौ लग्नस्वामिलग्ननवांशनायकौ नरे आपदं तनुतो विस्तारयतः । एवममुना प्रकारेण मारनायकमदांशपौ सप्तभावपतिसप्तमनवांशनायकौ नरे आपदं तनुतः । च पुनर्मदगः सप्तमभावगतस्त्रिभागपो द्रेष्काणपतिर्नरे आपदं तनुते ॥ ३७ ॥

**अमंगले राजनि नो पुरेशे करग्रहः स्यादिति न प्ररूढे ॥**
**प्रत्यर्थिरंध्रानुगते नवांशत्रिभागराशौ हि न याति ना शम् ॥३८**

अमंगलइति ॥ प्ररूढे पूर्णवीर्यदृष्टियुक्ते अमंगले भौमरहिते पुरेशे लग्नाधिपे एवंविधे राजनि चंद्रे सति करग्रहो विवाहो नो स्यादिति न द्वौ नकारौ प्रकृत्यर्थं सूचयतः स्यादेवेत्यर्थः । पूर्वं कर्कलग्नं वर्जितमस्ति तेन एवंविधमाहृतमप्यस्ति । हि अवधारणे नवांशत्रिभागराशौ नवांशे द्रेष्काणे च प्रत्यर्थिरंध्रानुगते षष्ठाष्टमभावगते सति ना पुमान् शं सुखं न याति न प्राप्नोति ॥ ३८ ॥

---

१ अत्र पुरेशे लग्नेशे अमंगले पापयुक्ते सति तथा राजनि चंद्रे अमंगले पापयुक्ते वा न प्ररूढे क्षीणे सति करग्रहो नो स्यादित्यर्थः समीचीनतरो भाति ॥

राज्ञोऽङ्गतस्तल्लवतोऽसदाढ्यः पंचेषुभावो न शुभो विवाहे ॥
उत क्वचित्तारकराजभागाद्धांत्यभागे५४न शुभास्त्वसंतः ॥३९॥

राज्ञ इति ॥ विवाहे राज्ञश्चंद्रस्य अंगतो लग्नात् तल्लवतः नवांशकात् असदाढ्यः पापग्रहयुक्तः पंचेषुभावः सप्तमभावो न शुभः स्यात् । पंच इषवो बाणा यस्य स काम इति । तु पुनः उत वितर्के क्वचित् असंतः पापग्रहाः शुभा न स्युः कस्मिन् तारकराजभागात् चंद्रनवांशात् भार्द्धं षड्राशयस्तस्यांत्यभागे चतुःपंचाशत्तमे ५४ पादे इत्यर्थः ॥ ३९ ॥

पुराधिपः कालगतः ८ पुरांतकृत् पुरागतः १ कालपतिः पुरांतकृत् ॥
रंध्रादमित्रे[2] १ लवपोऽङ्गपो हि चेद्विलग्नेऽङ्गतो वारिहतश्छलैर्नरः ॥४०॥

पुरेति ॥ कालगतोऽष्टमभावगतः पुराधिपो लग्नस्वामी पुरांतकृद्देहनाशकृत् मृत्युकृत् स्यादित्यर्थः। पुरागतो लग्नगतः कालपतिरष्टमभावस्वामी पुरांतकृत् मृत्युकृत् स्यात्। हि अवधारणे चेत् विलग्नेऽङ्गतो लग्नात् अंगपो लग्नस्वामी वाथवा लवपो नवांशस्वामी रंध्रादष्टमभावात् अमित्रे षष्ठे स्यात्तदा इह विवाहे नरोऽरिहतश्छलैः शात्रवेण हतकातिरेवंविधः स्यात् ॥ ४० ॥

तनूविभौ स्याद्व्ययगे नरव्ययो लवप्रभौ वा ललनाव्ययोऽङ्गतः ॥
तत्कर्तरीयुक् फलमेतदेव चेत्फलान्यता तत्कुटिलद्युचारिणः ॥ ४१ ॥

अथ कर्तरीयोगमाह—तन्विति ॥ अंगतो लग्नात् व्ययगे द्वादशभावगे तनूविभौ लग्नस्वामिनि सति नरव्ययो भर्तृनाशः स्यात् । वाथवा द्वादशगे लवप्रभौ नवांशनायके सति ललनाव्ययः स्त्रीक्षयः स्यात् । तत्कर्त्तरीयुक् कर्तरीनामा योग एतदेव फलं स्यात् । चेत् वितर्के तत्कुटिलद्युचारिणस्तस्मिन् व्ययभावे वक्रग्रहस्य फलान्यता पूर्वोक्तफलस्य वैपरीत्यं स्यात् ॥४१॥

असद्युगांतस्थितिरग्रजाधिपः करोत्यनाचारमलं हि मंगलं ॥
तथात्मभू७संहनने १ खलांतरे तदंशकौ शं तनुतो न चेदिह ॥ ४२ ॥

अथ खलांतरगतचंद्रादिफलमाह—असद्युगेति ॥ हि अवधारणे अग्रजाधिपश्चंद्रोऽनाचारेण मलं दोषेण दुष्टं मंगलं पाणिपीडनं करोति किंभूतोऽग्रजाधिपः असद्युगं पापग्रहयुग्मं तस्यांते मध्ये स्थितिः स्थानं यस्यासौ पापग्रहयोर्मध्ये स्थित इत्यर्थः । अत्रैव श्लेषोक्त्या दृष्टांतमाह यथा असद्युगस्य कलियुगस्यांते मध्ये स्थितिः स्थानं यस्य स एवंविधोऽग्रजा-

---

१ अत्र पंचेषुभागा इति पाठभेदस्तस्मिन् कृते राज्ञश्चंद्रादंगतो लग्नात्तल्लवतस्तयोश्चंद्रलग्नयोर्नवांशात्पंचपंचेषुभागः पंचपंचाश ५५ नवांशोऽसदाढ्यः पापग्रहयुक्तश्चेद्विवाहे न शुभः ॥ उत विकल्पे क्वचित् तारकराजभागात् चंद्रनवांशाद्धार्धांत्यभागे चतुःपंचाशन्नवांशेऽसंतः पापग्रहा न शुभा इत्यर्थः संगच्छते बहुग्रन्थसम्मतश्चायमर्थः टीकाकारकृतोऽर्थो न समीचीन इति ॥

२ इह लवपोऽङ्गपश्च रंध्रांदंगतो वा अमित्रे ६ चेन्नरोऽरिहतश्छलैः स्यादित्यन्वयः क्वचित् दृश्यते ।

धिषोऽन्नाचाग्मले अष्टमारेण मलीमसं अंगलं शुभकर्म दोषयुक्तं करोति इत्युक्तिलेशः। तथा चेत् वितर्के ग्रन्थांतरे पापग्रहविचाले आत्मभू७संहनने १ कर्तृपदं सप्तमभावप्रथमभावौ तदंशकौ सप्तमप्रथमभावांशकौ न शं सुखं न तनुत इह विवाहे 'आत्मयोनिः सुन्हन्मधु' इति हैमः॥४२

**राशेः प्रसूतेरुदयस्य वा सदा लयाऽ८नुगाऽत्रीश्वरराशिभागकाः ॥**
**भवंति ये मंगलकार्यवर्तिनस्तन्वंति ते भर्तरि पंचतामरम् ॥ ४३ ॥**

राशेरिति ॥ सदा प्रसूतेर्जन्मनो राशेरुदयस्य लग्नस्य वा लयानुगस्याष्टमभावस्थस्य अत्रीश्वरस्य अत्र मरणं तस्याष्टमभावस्य स्वामिनो राशिभागकाश्चांद्रांशका ये मंगलकार्यवर्तिन उद्वाहलग्नस्थायिनो भवंति अरं अतिति न एवंविधाश्चांद्रांशकाः भर्तरि वरे पंचतां मृत्युं तन्वंति ॥ ४३ ॥

**सवांगराश्यस्तभावे८लग्ने तदीशयोरास्फुजिदारयोर्वा ॥**
**तन्नायकैक्येन तदीयदोषस्तदन्यभावेन तदीयभूषा ॥ ४४ ॥**

सवेति ॥ सवस्य प्रसवस्यांगं लग्नं राशिश्च तयोरस्तभावलग्नेऽष्टमप्रथमभावे तदीशयोर्जन्मलग्नराशिस्वामिनोर्वाऽथवा आस्फुजिदारयोः शुक्रभौमयोः सतोर्वा तन्नायकैक्येन जन्मलग्नराशिस्वामिनोरैक्येन कृत्वा तदीयदोषः स्यात्। तदन्यभावेन तदीयभूषा तस्य विवाहस्यालंकारः ॥ ४४ ॥

**त्रिखे३।१०त्रिकोणे ५।९ शमृती ४।८ शनिर्गुरुः क्ष्माभूरलं पश्यंति चापरे क्रमात् ॥ सदंघ्रिवृद्ध्या त्वखिला नभःसदः पश्यंति पूर्णं स्मर७भे तदीक्षणम् ॥ ४५ ॥**

अथ ग्रहाणां दृष्टिविलोकनमाह—त्रिखइति ॥ क्रमात् क्रमेण शनिस्त्रिखे तृतीये दशमेऽलं संपूर्णं पश्यति एवं गुरुस्त्रिकोणे नवपंचमे पूर्णं पश्यति क्ष्माभूर्भौमः शमृती शं सुखं च मृतिश्चेति चतुरष्टमे पूर्णं पश्यति तु पुनरपरेऽखिला नभःसदो ग्रहाः सदंघ्रिवृद्ध्या एकैकचरणवृद्ध्या कृत्वा पश्यंति। पुनस्तदीक्षणं तेषां सर्वग्रहाणामवलोकनं स्मरभे सप्तमे पूर्णं संपूर्णा दृष्टिः स्यात्। यतः 'पादैकदृष्टिर्दशमे तृतीये द्विपाददृष्टिर्नवपंचमे च। त्रिपाददृष्टिश्चतुरष्टमे च समग्रदृष्टिः समसप्तमे च' इति ॥ ४५ ॥

**विलोकनं व्योमसदामृतं सदा वदंत्यदो जातकशास्त्रभाषितं ॥**
**दैवं हि सर्वत्र तु ताजिकोदितं यदासुरं तन्निजदर्शनप्रभम् ॥ ४६ ॥**

---

१ अत्र सवांगराश्यन्त्यभावलग्ने सवस्य प्रसवस्य अंगं लग्नं राशिश्च तयोरन्त्यभावलग्ने अष्टमभावथौलग्ने तदीशयोस्तेषामीशयोरास्फुजिदारयोः शुक्रभौमयोः सतोस्तन्नायकैक्येन तयोर्जन्मलग्नेशाष्टमेशयोर्वाजन्मराशीशाष्टमेशयोरैक्येन कृत्वा तदीयदोषः अष्टमलग्नदोषो न तदन्यभावेन तयोरन्यत्वेन तदीयभूषा न अपि तु दोष एव एतन्मेषे तुलायांच घटते, यथोक्तं नृणामणौ 'लग्नं व्ययस्थं त्याज्यमष्टमं सर्वकर्मसु ॥ तत्राप्येकेशता स्ये च तत्रतत्रैव दोषकृत्' इति।

अथ दृष्टौ जातकताजकयोर्विशेषाविशेषमाह—विलोकनमिति ॥ हि अवधारणे विदः पंडिता व्योमसदां ग्रहाणामदो विलोकनं जातकशास्त्रभाषितं देवसंबंधि दैवं सदा सर्वत्र ऋतं सत्यं पूजितं वा वदंति ' ऋतं शिलोञ्छे पानीये पूजिते दीप्तसत्ययोः ' इति हैमः । यत्ताजिकोदितं तदासुरं स्यात् । किंभूतं आसुरं निजदर्शनप्रमं असुरदर्शनतुल्यत्वात्सर्वत्र कार्ये नेष्टमिति देवपक्षे देवदर्शनतुल्यत्वाच्छुभं ॥ ४६ ॥

**पुरभागमुपैति भागनेता यदि वा पश्यति चारुलोचनैवं ॥**
**नरभद्रमनंग७भावभागं महिलाभद्रमलं नरः समेति ॥ ४७ ॥**

अथ मालभारिण्या भावे ग्रहविलोकनफलं विस्तारयति—पुरेति ॥ यदि भागनेता नवांशस्वामी पुरभागं लग्नांशं पश्यति तदा चारुलोचना स्त्री नरभद्रं भर्तृसुखमुपैति प्राप्नोति । भदि कल्याणे सुखे च इति धात्वर्थत्वात् पुनर्यदैवं भागनेता अनंगभावभागं सप्तमभावलग्नांशं पश्यति तदा नरो महिलाभद्रं स्त्रीसुखं समेति प्राप्नोति अलमित्यर्थः ॥ ४७ ॥

**घनभागपतीक्षणं मदांशके७चेन्मदभावांशपतीक्षणं घनांशके वा ॥**
**वरवामदृशौ यतो मिथः शं तनुत१न्व्यो७रिति वै तदीक्षणे स्तः ॥४८॥**

घनेति ॥ यतश्चेत् मदांशके सप्तमभावनवांशके घनभागपतीक्षणं लग्ननवांशस्वामीविलोकनं स्यादथवा घनांशके लग्ननवांशके मदभावांशपतीक्षणं सप्तमभावनवांशस्वामिविलोकनं स्याद्वा पुनस्तनुतन्व्योर्लग्नसप्तमभावयोस्तदीक्षणे लग्नांशसप्तमांशस्वामिविलोकने कर्तृपदं स्तः भवतः वै इति हतौ तदा वरवामदृशौ वरवध्वौ मिथः परस्परं शं सुखं लभेयातां प्राप्नुयातां ॥ ४८ ॥

**यमदृष्टिरेणनयनांग७विभागे यदि बोभवीति कुसुतेक्षणमस्मिन् ॥**
**यमदृष्टितः कुसुतदर्शनतो वा वृजिनं विनोदयति किं न पुरंध्री ॥४९॥**

यमेति ॥ यदि एणनयना स्त्री तस्या अंगं लग्नं सप्तमभवनं तस्यांशके नवांशे यमदृष्टिः शनिदृष्टिर्बोभवीति संपूर्णदृष्टिर्भवति भृशार्थे यङ्लुगंतत्वात् वाथवा कुसुतेक्षणं भौमविलोकनं बोभवीति किमिति पुरंध्री स्त्री वृजिनं वक्रमर्थशक्त्या कष्टं न विनोदयति दुःखमेतीत्यर्थः कस्मादस्मिन् विवाहलग्ने यमदृष्टितः शनिविलोकनात् कुसुतदर्शनतो भौमदृष्टितो वा ॥४९॥

**गुरुराजपुत्रकविकंटकयोगो बत दोषदोऽप्युदितदोषद एव ॥**
**गुरुबोधनेक्षणमिहांग१निवृत्त्यो७र्यदि दुष्टदृष्टियुतिदोषनिवृत्तिः ॥५०**

अथ केंद्रयोगमाह—गुरुराजेति ॥ बत आश्चर्ये इह विवाहलग्ने दोषदोऽपि दूषणकारकोऽपि गुरुराजपुत्रकविकंटक१।४।७।१० योगः गुरुबुधशुक्राणां केंद्रयोग उदितदोपद एव पूर्वमुदिताः प्रोक्ता ये ग्रहयोगदोषास्तान् द्यति खंडयति इति स्यात् । यदि चेत् अंगनिवृत्त्योः प्रथमाष्टमभावयोर्गुरुबोधनेक्षणं गुरुर्गीष्पतिः बोधनो बुधोऽनयोरवलोकनं स्यात्तदा दुष्टदृष्टियुतिदोषनिवृत्तिः क्रूरग्रहदृष्टि योगा ( दोषा ) भावः स्यात् ॥ ५० ॥

**विमदे सितेऽमरपुरोधसि केंद्रे१।४।१०धिषणाध्वराश्रयिणि वोदयदोषैः॥**
**बहुभिर्भुजांबुजनिपीडनमिष्टं विदुरिष्टनाडिकमलं त्विति केचित् ॥५१**

विमदइति—अलमित्यर्थः भुजांबुजनिपीडनं करकमलग्रहणमिष्टं शुभं स्यात् कस्मिन् विमदे सप्तमभावरहिते केंद्रे सिते शुक्रे केंद्रे १।४।७।१०ऽमरपुरोधसि गुरौ सति वाऽथवा धिषणा।५ऽध्वरा९ आश्रयिणि पंचमनवमभावभाजि शुक्रे गुरौ सति पुन कैः कृत्वा बहुभिरुदयदोषैरपि लग्नग्रहयोगजदोषैरपि पाणिपीडनं शुभं स्यान्न तु नवांशजयोगदोषैः तुपुनरिष्टनाडिकं घटिकालग्नं शुभं स्यादिति केचिद् बुधा विदुः ॥ ५१ ॥

**इति शुद्धिरिष्टघटिकोदयकाले कलिताखिलाखिलयुगेषु सुधीभिः ॥**
**मनुजन्मनां जगति चानु विलग्नं बहुलारजः कलियुगे हि समूह्यम्॥५२**

अथ भावगतग्रहफलतद्दृष्टिफलघटिकालग्नोपसंहारेण गोधूलिकलग्नं संदधाति—इतीति ॥ सुधीभिरिति पूर्वोक्तप्रकारेण अखिलयुगेषु कृतादिषु जगति लोके मनुजन्मनां मनुष्याणामिष्टघटिकोदयकाले इष्टघटीलग्नसमयेऽखिला समग्रा शुद्धिः कलिता प्रोक्ता वा पुनर्नु वितर्के कलियुगे बहुलारजो बहुलाशब्देन धेनवस्तासिरुपलक्षितं रजः गोधूलिकं विलग्नं समूह्यं सम्यक्प्रकारेण विचारणीयं ॥ ५२ ॥

**कमलाजिनौ सुरभिपादरजोभिर्निचितेऽम्बरे यदि परोचलमूढौ ॥**
**रविरेति लोकजननीजनकौ स्यादिति तत्प्रजासु न हि तज्जविरोधः ॥५३**

अथात्र कमलाकेशवोद्वाहेन गोधूलिकं प्रमाणयति—कमलेति ॥ यदि रविः पराचलमस्ताचलमेति प्राप्नोति सुरभिपादरजोभिर्धेनुचरणरजोभिर्निचिते व्याप्तेऽम्बरे व्योम्नि सति कमलाजिनौ लक्ष्मीकेशवौ ऊढौ परिणीतौ किंभूतौ लोकजननीजनकौ जनानां मातापितरौ हि युक्तार्थे इति हेतोस्तज्जविरोधो गोधूलिकजातविरोधोऽपराण्हे लग्नसिद्धत्वात्तत्प्रजासु विष्णुप्रजासु नहि स्यात् । यतो जनकजननीभ्यां गोधूलिकमादृतं ततस्तत्संतानैरप्यादृतं गोधूलिकलग्नोद्वाहितत्वात् लोकजननीजनकौ भवत इति फलविलोकनत्वादपि ॥ ५३ ॥

**आदेशी वांशुमाली चरमगिरिशिरोऽध्यस्त एतच्च द्रष्टुं**
**हारिद्रारक्तवेषा निखिलदिगबलास्तारकापुष्पमालाः ॥**
**उस्रांघ्र्युत्खातधूलिस्फुरदतिपटलैर्मंडपीभूतमभ्रं राजोपायोषिता किं परिणयनमिषाच्छिक्षितुं चैव लोकान् ॥ ५४ ॥**

अथ स्रग्धरया गोधूलिकलग्नसमयस्वरूपवर्णनेन कविरुत्प्रेक्षते—आदेशीति ॥ अंशुमाली सूर्य एव आदेशी गणकः । अत्र वाशब्द एवार्थे चरमगिरिशिरोऽस्ताचलशिखरमध्यास्तेऽधितिष्ठति गिरिशिर इत्यत्राधियोगादाधारकर्म किं कर्तुं एतद् गोधूलिकं द्रष्टुं विलो-

कथितुं तद्गोधूलिकस्वरूपमाह निखिलदिगंगनाः सर्वा दिश एव स्त्रियो हरिद्राः पीता आरक्ता वेषाः नेपथ्यानि यासां ता एवंविधा दृष्टाः संति च पुनरुस्राणां धेनूनामंघ्रि-भित्खातधूलय उत्कीर्णरेणवस्तासां स्फुरदातिपटलैः संचलदंबरैः मंडपैरभ्रं व्योम भूतं जातं मंडपीभूतमित्यपि पाठः इति दृष्ट्वा च पुनः किमिति उत्प्रेक्षते राजा चंद्र उषायोषिता रात्रि-रमण्या सह परिणयनमिषात् करपीडनकैतवात् लोकानन्यजनान् शिक्षितुं यथाऽहं परिण-यामि तथा यूयमपि कुरुत इति शिक्षां दातुमेव निश्चितं वर्तते किंभूतो राजा तारका एव पुष्पमाला यस्य स इति दृष्टः दिग्वधूः अहस्तपि तारकेति विशेषणं स्यात् ॥ य एवंविधः संध्यासमयस्तद्गोधूलिकामिति हृदयं । यथात्रोत्प्रेक्षा दर्शिता तथान्योऽपि य उद्वाहं करोति स गणकेन गोधूलिकसमयं साधयति पुष्पाद्यलंकारयुक्तः स्यात् । वस्त्रमयमंडपं करोति विवाहो-चितवेषाः सुवासिन्यो भवति इत्युक्तिलेशेन कर्तव्यं दर्शितं ॥ ९८ ॥

जिष्णुवज्रहतपक्षवासिनामंघ्रियोनिमुखलोकसंहतेः ॥
अस्तलग्नमुदितं कलौ बुधैरादिभूनृपविशां न च ॥ ५५ ॥

अथ गोधूलिकग्रहणे विशेषमाह—जिष्णिवति ॥ जिष्णुना इंद्रेण हताः पक्षाः वाजा एषां ते गिरयस्तेषु वसंतीत्येवंशीलास्तेषां पर्वतवासिजनानां अंघ्रियोनयः पादजाताः शुद्रास्त एव मुखलोकास्तेषां संहतेः समूहस्यास्तलग्नं गोधूलिकमुदितं प्रोक्तं बुधैः सुधीभिः कलौ युगे च पुनरादिभूनृपविशां विप्रक्षत्रियवैश्यानामस्तलग्नमित्यर्थं न प्रोक्तमिति साधारणवचनं ॥९९॥

सर्वदेष्टघटिकाप्रतिष्ठितं लग्नमाहुरिह सर्वजातिषु ॥
कोविदाः कलियुगेऽपि वा वरं धेनुधूलिपटलोचितं हि तत् ॥५६॥

अथ घटिकागोधूलिकयोर्विवेकमाह—सर्वदेति ॥ कोविदाः सुधियः सर्वदा सर्वयोगेषु इष्टघटिकाप्रतिष्ठितं लग्नमाहुर्वदंति केषु इह विवाहे सर्वजातिषु विप्रादिसर्ववर्णेषु वा पुनः कलियुगे तत् पूर्वोक्तं धेनुधूलिपटलोचितं गोधूलिकमपि लग्नं वरमाहुः ॥ ९६ ॥

नोर्जमार्गकनभस्यवासरैः कृष्टयो जगुरभीष्टनाडिकं ॥
लग्नमास्त्यमिह भग्नमंगलं नोक्तदेशसमयांशजातिषु ॥ ५७ ॥

अथ कार्तिकादौ घटिकालग्नं त्यजन्नाह—नोर्जेति ॥ कृष्टयः पंडिताः ऊर्जमार्गकनभस्यवा-सरैः कार्तिकमार्गशीर्षभाद्रपदानां दिनैरभीष्टनाडिकं घटिकालग्नं न जगुर्नोचुः इह मासेषु अस्ते भवमास्त्यं गोधूलिकलग्नं भग्नमंगलं भग्नं मंगलकार्यं यस्मात्तत् एवंविधं न स्यात् शुभं स्यादि-त्यर्थः । क उक्तदेशसमयांशजातिषु पूर्वोक्तदेशकालांशवर्णेषु ॥ ९७ ॥

रोहिणीखुररजोभि रंजिते लग्नमंशुमति खंडमंडले ॥
स्यात्सदाखिलतनौ बृहस्पतेर्वासरे रविभुवस्त्वदर्शिते ॥ ५८ ॥

अथ वारविशेषे गोधूलिकलग्नशुद्धिविवेकतामाह—रोहिणीति ॥ सदा अंशुमति सूर्ये खंडमंडलेऽर्द्धबिंबे सति लग्नं स्यात् किंभूते अंशुमति रोहिणीखुररजोभिः रंजिते तु पुनरवधारणे वा बृहस्पतेर्वासरे सूर्येऽदर्शितेऽस्तंगते सति लग्नं स्यात् । बृहस्पतिवारे हि संध्यायां सूर्ययुक्तायां दुष्टाष्टमयामार्द्धनिषेधत्वात् रविभुवः शनेर्वासरेऽखिलतनौ समग्रेऽर्के दृश्ये सति लग्नं स्यात् शनेर्वारे हि सूर्यास्तमने प्रथमयामिनीमुखे कुलिकनिषेधत्वात् ॥ ९८ ॥

**अपमोऽपमसाम्यवान्विवाहः कुलिकाढ्यः कुलिकापदस्त्वकाले ॥**
**खलवेधितधिष्ण्यवानधिष्ण्योऽपयमो यामदलार्द्धवाननृद्धिः ॥ ९९ ॥**

अथ मालभारिण्या दोषयुक्तं गोधूलिकं सापवादमाह—अपमोपमेति ॥ अस्तकाले गोधूलिकलग्नेऽपमसाम्यावान् क्रांतिसाम्ययुक्तो विवाहोऽपमोऽपगता मा लक्ष्मीर्यस्मात् स एवंविधः स्यात् । कुलिकाढ्यः कुलिकयोगयुक्त उद्वाहः कुलिकापदः कुलिके गृहे कुलिकेषु स्वकुटुंबजनेषु वा आपत् कष्टं यस्मात्स एवंविधः स्यात् । खलवेधितधिष्ण्यवान् पापग्रहनक्षत्रयुक्त उद्वाहोऽधिष्ण्यो न विद्यते धिष्ण्यं गृहं बलं वा यस्मात्स एवंविधः स्यात् । यामदलार्द्धवान् दुष्टयामदलार्द्धयुक्त उद्वाहोऽपयमोऽपगतो नियमधर्मो यस्मात्स एवंविधः स्यात् किंभूत उद्वाहः अनृद्धिर्न विद्यते ऋद्धिर्यस्मात् स इति ॥ ९९ ॥

**अहितविग्रहगो हितगोलयो विलयगो लयिगोत्रजनो यदा ॥**
**धवलदीधितिरप्यवरो भवेद्दिनकरोनकरो हि विशेषतः ॥ ६० ॥**

अथ द्रुतविलंबितेन गोधूलिके ग्रहगतदोषान् दर्शयति—अहितेति ॥ यदात्र गोधूलिके धवलदीधितिश्चंद्रोऽहितविग्रहगः षष्ठप्रथमभावगतः स्यात्तदा हितगोलयः हिताहितकारिणी चासौ गौर्बुद्धिश्च तस्या लयो नाशः स्यात् । यदा चंद्रो विलयगोऽष्टमभावगः स्यात्तदा लयिगोत्रजनः लयो नाशोऽस्यास्तीति लयी स चासौ गोत्रजनो स्वकुटुंबजनश्च स्वकुटुंबनाशः स्यात् । अपि पुनर्दिनकरोनकरो दिनकरेण सूर्येण ऊना हीनाः कराः किरणा यस्य स एवंविधश्चंद्रो विशेषतोऽवरो ऽनिष्टो भवेत् । एषोऽवस्थानगतः एतावता चतुर्दश्यमावास्याप्रतिपद्दिनत्रयं क्षीणशशी विशेषतस्त्याज्यः ॥ ६० ॥

**खलपुरं त्यज मंजुललोचने हृतिदुरोदरविद्गुरुमुद्गमं ॥**
**विरतिमंगलमर्जुनिकागमे विगतशुक्रमशुक्रतपोमतिम् ॥ ६१ ॥**

अथ गोधूलिके क्रूरग्रहलग्नादि निषेधति—खलेति ॥ अर्जुनिकागमे धेनुसमागमनकाले गोधूलिके लग्ने हे मंजुललोचने सुनेत्रे त्वं खलपुरं पापग्रहलग्नं त्यज जहिहि एवं उद्गमं प्राप्तोदयं हृति८दुरोदर६विद्गुरुं अष्टमषष्ठभावस्थबुधगुरुं एवंविधं खलपुरं त्यज पुरशब्दस्यात्र पुल्लिंगवा-

१ अन्यपुस्तके हे मंजुललोचने अर्जुनिकागमे धेनुसमागमनकाले गोधूलिकलग्ने खलपुरं पापग्रहलग्नं त्यज । हृतिदुरोदरविद्गुरुं अष्टमषष्ठभावस्थबुधगुरुं उद्गमं लग्नं त्यज । विरतिमंगलं विरतावष्टमभावे मंगलो भौमो यस्मिन् स तं उद्गमं त्यज । विगतशुक्रं विगतं शुक्रं बलं यस्य पुनः अशुक्रतपोमतिं नास्ति शुक्रः तपोमत्योः यस्मिन् स तं उद्गमं त्यज इत्यर्थः कृतो स्ति ॥

चित्वाद् गुरुमितियुक्तः । एवं विरति८मंगलं अष्टमस्थभौमं त्यज विगतशुक्रं अष्टमभावस्थशुक्रं त्यज । अशुक्रतपो९मतिं९नवपंचमभावस्थशनिं त्यज न शुक्रः श्वेतोऽशुक्रः कृष्णवर्णश नित्वात् ' शुक्रस्तु शुक्ले ज्येष्ठमासेऽग्निकाव्ययोः ' इति हैमः ॥ ६१ ॥

**गोधूलिकं गोपतिरुत्तराशामाशांसितं कीर्तितशुद्धिशुद्धं ॥**
**चरन्नपागुक्तशशांकधिष्ण्यैर्यथागतं चास्तु तथा नभस्ये ॥६२॥**

अथ गोधूलिके उत्तरायणादिकालमाह—गोधूलिकमिति ॥ गोपतिः सूर्य उत्तराशां चरन् स्यात्तदा गोधूलिकमाशंसितं प्रोक्तं किंभूतं गोधूलिकं कीर्तिता पूर्वं प्रोक्ता या शुद्धिस्तया शुद्धं निर्दोषं यदाऽपाग् दक्षिणां रविश्चरन् स्यात् अपागिति अव्ययं तदा उक्तशशांकधिष्ण्यैः प्रोक्तः षष्ठाष्टमेतरलग्नगः शशी गोचरशुद्धिः विवाहनक्षत्राणि तैर्यथागतं यथाकालप्राप्तं गोधूलिकमस्तु भवतु तथा च नभस्यमासे यथागतमस्तु ॥ ६२ ॥

**ससिंधुजे सिंधुरवैरिराशौ सितेंऽशुलीने च गुरौ विवाहं ॥**
**नाभस्यमौर्जं न सहोगमाहुस्तथोत्तराशार्कगतीरितं तु ॥६३॥**

अथ सिंहराशिगतगुर्वादिषु विवाहं निषेधति—ससिंधुज इति ॥ पंडिताः विवाहं न आहुः कस्मिन् ससिंधुजे गुरुसहिते सिंधुरवैरिराशौ सिंधुदेशे जन्मत्वात् सिंधुजो बृहस्पतिः पुनः सिते शुक्रे गुरौ च अंशुलीने सूर्यमंडलगतेऽस्तंगते सति किंभूतं विवाहं नाभस्यं नभस्ये भाद्रपदे भवं पुनः किंभूतं और्जं कार्तिके भवं पुनः किंभूतं सहोगं सहसि मार्गशीर्षे गतं एतेषु मासेषु कृतोद्वाहो नेष्ट इत्यर्थः ।तु पुनरेषु सत्सु काश्चिन्मतमाह तथा उत्तराशार्कगतीरितं सौम्यायने प्रोक्तो विवाह इत्यर्थः ॥ ६३ ॥

**ससिंहजीवो धिषणोशनोस्तोऽप्यूर्जे नभस्ये च शयग्रहार्हः ॥**
**इत्याह कश्चिन्मतमुद्धतं नो तदीयमित्यासुरदर्शनोक्तम् ॥६४॥**

अथैतस्य मतं दूषयति—ससिंहेति ॥ ऊर्जे कार्तिके नभस्ये भाद्रपदे च ससिंहजीवः सिंहे गुरुः च पुनर्धिषणोशनोऽस्तः गुरुशुक्रयोरस्तः शयग्रहार्हः उद्वाहयोग्यः स्यादिति कश्चिदाह एतदीयं मतं उद्धतं श्रेष्ठं न स्यात् किंभूतं मतं आसुरदर्शनोक्तं इति हेतोरथवा एतदीयं मतं सत्यं म्लेंछेषु नतु विप्रादिषु ॥ ६४ ॥

**प्रजापतिब्रह्मसुरर्षिनीतिभिस्तन्नामसिद्धोऽतिशुभः करग्रहः ॥**
**गांधर्वसंज्ञो विहितश्च मध्यमः पिशाचरक्षोसुरकर्मणाधमः॥६५॥**

अथाष्टवा विवाहमाह—प्रजेति ॥ प्रजापतिः ब्रह्मा सुरः ऋषिःएषां नीतिभिस्तन्नामसिद्धः स्वनामतुल्योऽतिशुभः करग्रहः स्यात् । चपुनर्गांधर्वसंज्ञो विवाहो मध्यमः स्यात् । पिशाचः रक्षः असुरः एषां कर्मणा कार्येण विहितस्तत उद्वाहोऽधमः स्यात् । यत उक्तं ' तथालंकृत्य कन्यादानं ब्राह्मो विवाहः १ विभवविनियोगेन कन्यादानं प्राजापत्यं २ गोमिथुनदानपूर्व-

कमार्षः ३ यत्र यज्ञार्थमृत्विजः कन्यादानमेव दक्षिणा स दैवः ४ एते चत्वारो धर्म्या मातुः पितुर्बंधूनां प्रामाण्यात् । परस्परानुरागेण मिथः समवायात् गांधर्वः ५ पणबंधेन कन्याप्रदानमासुरः ६ प्रसह्य कन्याग्रहणाद् राक्षसः ७ सुप्तप्रमत्तकन्याग्रहणात् पैशाचः ८ एते चत्वारोऽधर्म्याः यदि वधूवरयोः परस्पर रुचिरस्ति तदाऽधर्म्या अपि धर्म्या इति' ॥ ६५ ॥

**उदीरिता शुद्धिरियं शुभेऽखिला भुजाभ्रपुष्पप्रसवग्रहे सदा ॥**
**मध्ये तदर्धापि विलोकनोचिताधमो विवाहस्तदसंभवेऽपि सन् ॥ ६६**

अथोत्तममध्यमाधमपाणिग्रहे तादृक्शुद्धिं दर्शयति—उदीरितेति ॥ सदा शुभे भुजो बाहुः स एव अभ्रं मेघस्तस्य पुष्पं जलं तस्मिन् प्रसवो यस्य तत्कमलं तस्य ग्रहस्तस्मिन् करकमलग्रहे प्राजापत्यादौ इयमखिला समग्रा शुद्धिरुदीरिता प्रोक्ता अपि पुनर्मध्ये मध्यमविवाहे तदर्द्धा उत्तमविवाहे तस्याः सकाशादर्द्धा शुद्धिर्विलोकनोचिता दर्शनाय योग्या । अथाधमो विवाहः पैशाचादिः सन् शुभः स्यात् कस्मिन् तदसंभवेऽपि शुद्ध्या अभावेऽपि ॥ ६६ ॥

**उदीरिता शुद्धिरियं शुभेऽखिला भुजाभ्रपुष्पप्रसवग्रहे सदा ॥**
**मध्ये तदर्धा पि विलोकनोचिताऽधमो विवाहस्तदसंभवेपि सन् ६६**

अथोत्तममध्यमाधमपाणिग्रहे तादृक्शुद्धिंदर्शयति—उदीरितेति ॥ सदा शुभे भुजो बाहुः स एव अभ्रं पुष्पं जलं तस्मिन् प्रसवो यस्य तत्कमलं तस्य ग्रहस्तस्मिन् करकमलग्रहे उत्तमविवाहे प्राजापत्यादौ इयमखिला समग्रा शुद्धिरुदीरिता प्रोक्ता अपि पुनर्मध्ये मध्यमविवाहे तदर्द्धा तस्याः सकाशादर्द्धा शुद्धिर्विलोकनोचिता दर्शनाय योग्या अथाधमो विवाहः पैशाचादिः सन् शुभः स्यात् कस्मिन् तदसंभवेऽपि शुद्ध्या अभावेऽपि ॥ ६६ ॥

**शास्त्रभाषितनयेरितधर्मादुद्धतोऽस्ति जनसंचयमान्यः ॥**
**देशकालकुललौकिकधर्मो दृश्य इत्यनु तथा हि सुधीभिः॥६७॥**

अथ स्वागतया शास्त्रनीतितो लौकिकधर्म बलवत्तरं दर्शयति—शास्त्रेति ॥ शास्त्रभाषितनयेरितधर्मात् शास्त्रोक्तनीतिप्रेरितधर्मात् जनसंचयमान्यो जनसमूहमान्यो धर्म उद्धत उत्कटोऽस्ति वारयितुं न शक्यत इत्यर्थः । इति हेतोरनु शास्त्रधर्मतः पश्चात् सुधीभिर्देशकालकुललौकिकधर्मो दृश्यो विलोकनीयः तथाहि तद्दर्शयति ॥ ६७ ॥

**कुमारिकामंडलवासिमाथुरा नयंति पाणिग्रहमुत्तमं नराः ॥**
**मध्यं जनस्थानमुखाधमालवाः परेऽधमं दुष्टकलौ निसर्गतः॥६८॥**

अथ प्रथमं देशधर्मानाह—कुमारिकेति ॥ कुमारिकामंडलवासिमाथुरा नराः उत्तमं श्रेष्ठं पाणिग्रहणं नयंति कुर्वंति । यतः 'तापिन्याश्चोत्तरं कूलं सरस्वत्यास्तु दक्षिणं । शांतना नगरी प्राच्या पश्चाद्गोमती नदी ॥ १ ॥ एतदंतरगा भूमिः क्षेत्रं कौमारिकं स्मृतं ' इति जन-

स्थानप्रमुखा गोदावरीतीरप्रदेशप्रमुखा महाराष्ट्रद्रविडादय आंध्रमालवाः एषां जना मध्यं विवाहं नयंति परदेशजना अधमं विवाहं नयंति कस्माद्दुष्टकलौ निसर्गतः स्वभावात् ॥६८॥

**अदंति गौडाः पललं च पंचमान्पांचालकन्या कुरुते धवानपि ॥**
**कर्णाटके गोगमनं च धर्षिणी सिंधौ वशा वाडवहाद्रिखंडवित् ॥६९॥**

अदंतीति ॥ गौडा जनाः पललं मांसमदंति भक्षंति । पांचालकन्या मलबारकुमारिका पंचमान् पंचप्रतिमान् धवान् भर्तृन् कुरुते च पुनः कर्णाटके गोगमनं कुरुते धेनुमुपविश्य गच्छति। पुनः सिंधौ देशे वशा स्त्री धर्षणी असती स्यात् । 'चर्षणी धर्षणी' इति शब्दप्रभेदे 'पुंश्चली चर्षणी' इतिहैमः ॥ द्वितीयवर्गप्रथमादिः चतुर्थवर्गचतुर्थादिः धर्षणं स्यात् 'परिभवे रतेऽसत्यां तु धर्षणी' इत्यनेकार्थे हैमः ॥ पुनरद्रिखंडविद् झाडखंडनरो वाडवहा विप्रघातकः स्यात् 'अद्रिः पर्वते वृक्षे' इत्यनेकार्थः ॥ ६९ ॥

**मृतासुपा देवरचारिणी मरौ सौराज्यके च प्रमदा रजोवती ॥**
**अदोषमान्या मरुकच्छमानवैः कन्यार्थभुग्गुर्जरदेशगो जनः ॥ ७० ॥**

मृतेति ॥ मरौ देशे मृतासुपा मृतोऽसुपो भर्ता यस्याः सा स्त्री देवरचारिणी स्यात् । च पुनः सौराज्यके देशे तथैव पुनर्मरुकच्छमानवैः प्रमदा रजोवती अदोषमान्या आर्तवयुक्ता स्त्री दूषणाय न स्यात् । गुर्जरदेशगो जनः कन्यार्थभुक् कन्याया द्रव्यभोक्ता स्यात् ॥७०॥

**एकागमे दक्षिणवासिनो जना विवाहमिच्छंति कुरौ च शस्त्रिणः ॥**
**सद्राविडांध्राः श्रुतिधर्मचारिणः स्वजामिपुत्रादृतमंगला बुधैः ॥ ७१ ॥**

एकेति ॥ दक्षिणवासिनो जना एकागमे एकवेदे विवाहमिच्छंति च पुनः कुरौ देशे शस्त्रिण आयुधयुक्ता विवाहमिच्छंति । सद्राविडांध्रा जनाः श्रुतिधर्मचारिणः स्युः क्वचित् स्वजामिपुत्रादृतमंगलाः निजभगिनीपुत्रेण सह अंगीकृतविवाहाः स्युः ॥ ७१ ॥

**पुराणवेदस्मृतिधर्मतो बहिर्धर्मोऽयमत्र प्रतिपादनीयः ॥**
**शास्त्रप्रमाणादपि लोकधर्मप्रमाणमेतद्बलवत्तदादरात् ॥ ७२ ॥**

अथ वेदादिधर्मतो बहिर्लोकधर्मं दर्शयति—पुराणेति ॥ पुराणवेदस्मृतिधर्मतोऽयं धर्मो बहिर्बाह्योऽत्र लोके प्रतिपादनीयः कथनीयः शास्त्रप्रमाणादप्येतल्लोकधर्मप्रमाणं बलवत् स्यात्तदादरात्तेषां लोकानां तेषां धर्माणामादरात् ॥ ७२ ॥

**ज्येष्ठेऽप्यनूढेऽवरजोपयामो दहत्यपत्ये कुलधर्ममस्मात् ॥**
**दुष्टः समुलंघ्य वरं सदासौ स्याद्वारणं चान्यनरोपयामः ॥७३॥**

अथ विवाहिते ज्येष्ठपुत्रे लघुपुत्रोद्वाहं निषेधति—ज्येष्ठ इति ॥ अपि अनूढेऽविवाहिते ज्येष्ठेऽपत्ये ज्येष्ठपुत्रे सति अवरजोपयामो लघुपुत्रविवाहः कुलधर्मं दहति भस्मीकरोति

च पुनरस्मात्कारणात् सदा वारणं वरणे भवं कृतत्वसंतं वरं ज्येष्ठपुत्रं समुल्लंघ्य असौ अन्यनरोपयामो दुष्टः स्यात् ॥ ७३ ॥

**यदा नु युग्मप्रसवो विवाहितेऽपत्ये कनिष्ठेऽग्रजदोर्ग्रहोऽपरः ॥**
**न दोषदोऽन्वायवृषे तदा सदा स्यात्त्र्याद्यपत्यैकसवेऽप्ययं नयः ७४**

अथ यमलादिप्रसवे उद्वाहविवेकमाह—यदेति ॥ सदा सर्वदा नु वितर्के यदा युग्मप्रसवः स्यात्तदा कनिष्ठे लघुनि अपत्ये विवाहिते सति अपरोऽग्रजदोर्ग्रहो ज्येष्ठविवाहो दोषदो न स्यात् कस्मिन्नन्वायवृषे स्वकुलधर्मे अपि पुनस्त्र्याद्यपत्यप्रसवे त्रय आदिर्येषां ते त्र्यादिसंतानानां युगपत्प्रसवेऽपि अयं नयो नीतिः स्यात् ॥ ७४ ॥

**पित्रा सवित्र्याप्तजनैरदत्तया नरः कुमार्याः कुरुते करग्रहं ॥**
**सवेदनामत्र परत्र वा सिता प्रयाति लोके तु कुमारिकेव सा॥७५॥**

अथादत्तकुमार्युद्वाहे दोषमाह—पित्रेति ॥ यो नरः पुमान् कुमार्या सह करग्रहं कुरुते किंभूतया कुमार्या पित्रा जनकेन सवित्र्या जनन्या वा आप्तजनैर्बांधवादिजनैर्वाऽदत्तया असमर्पितया स पुमान् वेदनां दुःखापवादं प्रयाति प्राप्नोति कस्मिन्नत्र लोकेऽपरत्र वा तु पुनः सा लोके कुमारिकैव तिष्ठति किंभूता सा सिता स्वधर्मप्रधानयुक्ता सिता स्त्री कथ्यते कुमारीत्वं न त्यजतीत्यर्थः ॥ ७५ ॥

**वरं यथाकालदशावशं कलौ करग्रहं निर्ग्रहणं विदुर्विदः ॥**
**तथा हि राजादृतखंडमंगलं पट्टादिवृद्धापनमंगलं क्वचित् ॥ ७६ ॥**

अथ कालधर्मं दर्शयति—वरमिति ॥ विदः पंडिताः कलौ यथाकालदशावशं करग्रहं वरं विदुः । अथ कुलधर्मं दर्शयति । तथा बुधाः निर्ग्रहणं खंडमंगलादिकं वरं विदुः तथाहि तदेव दर्शयति राजादृतखंडमंगलं राज्ञांगीकृतं खंडमंगलं 'षांडुपरण' इति भाषा पुनः क्वचित् पट्टादिवृद्धापनमंगलं मृतभर्तृकादिस्त्रीपटवृद्धापनविवाहो 'घर्घरणं' खंडमंगलं घर्घरणं च निग्रहणं कथ्यते कोऽर्थः निर्गतः करस्य ग्रहणं यस्मात् कृतनिर्जीवखड्गत्वात् घर्घरणे वेदिकाभावात् ॥ ७६ ॥

**षट्कर्मणामुक्तविधिः शयग्रहः सर्वत्र राज्ञां च कृतत्रये विशां ॥**
**कलौ स्वसत्वादयमंघ्रिजन्मनामेषामतोऽन्यत्र यथारुचिस्तथा ॥७७**

अथ कृतादिषु विप्रादीनां विधीन् दर्शयति—षट्केति ॥ सर्वत्र चतुर्युगेषु षट्कर्मणां विप्राणामुक्तविधिः पूर्वोक्तो विधिर्यस्मिन् स एवंविधः शयग्रह उद्वाहः स्यात् । च पुनः कृतत्रये युगे राज्ञां क्षत्रियाणां विशां वैश्यानामुक्तविधिः शयग्रहः स्यात् । कलौ एषामंघ्रिजन्मनां सर्वजातीनां शूद्राणामुक्तविधिः शयग्रहः स्यात् स्वसत्वात् स्वधर्मप्रधानाचारत्वात् अत एभ्योऽन्यत्र संकरजातिषु यथारुचि तथा स्यात ॥ ७७ ॥

**ब्राह्मप्राजापत्यमरार्षसंज्ञका धीरैर्विधेया भुजवारिजग्रहाः ॥**
**उदीरितेऽनेहसि सर्वकालतो गांधर्वपैशाचकराक्षसासुराः॥७८॥**

अथोचितकाले उचितविवाहमाह—ब्राह्मेति ॥ धीरैः पंडितैर्भुजवारिजग्रहाः करकमलोद्वाहाः ब्राह्मप्राजापत्यमरार्षसंज्ञका विधेयाः कर्तव्याः कस्मिन्नुदीरितेऽनेहसि पूर्वोक्तकाले पुनर्गांधर्वपैशाचकराक्षसासुराः कर्तव्याः कस्मात् सर्वकालतः सर्वस्मिन् काले इति ॥ ७८ ॥

**कृत्स्नेषु वर्णेषु युगेषु चामुना नयेन पाणिग्रहणं प्रशस्यते ॥**
**पूर्वं यदान्यत्क्रियते तु तत्कलौ तथैव विप्रेऽन्त्यजने विकल्पवत्॥७९**

अथ देशधर्माद्युपसंहारेण नीतिं दर्शयति—कृत्स्नेष्विति ॥ पूर्वं कृत्स्नेषु समग्रेषु वर्णेषु च पुनः सर्वेषु युगेषु अमुना पूर्वोक्तेन नयेन पाणिग्रहणं प्रशस्यते शुभमिति यदान्यग्रहीनं पाणिग्रहणं क्रियते तत्तु पाणिग्रहणं कलौ युगे विप्रे तथैव स्यात् अन्त्यजने विकल्पवत् भजना कर्तव्या॥७९

**उक्तेऽयने खड्गविधानमंगलं धराधिभूर्वा चरमांघ्र्यनेहसि ॥**
**पंचांगचंद्रोदयशुद्धिवद्दिने वैवाह्यभे नक्तमुखे समाचरेत् ॥८०**

अथ खड्गमंगलं खड्गचक्रं चाह—उक्त इति ॥ धराधिभूर्भूपतिः खड्गविधानमंगलं खड्गविवाहं समाचरेत् कुर्यात् कस्मिन् चरमांघ्र्यऽनेहासि कलियुगे उक्तेऽयने सौम्यायने वा पंचांगचंद्रोदयशुद्धिवद्दिने तिथिवारनक्षत्रयोगकरणचंद्रलग्नशुद्धियुक्तदिने पुनर्वैवाह्यभे उद्वाहनक्षत्रे पुनर्नक्तमुखे यामिनीमुखे अत्र नक्तशब्दः स्त्रीक्लीबलिंगत्वान्नक्तानक्तामिति नक्तं मांसभव्यवमत्र न ॥ ८० ॥

**खड्गे स्वजन्मर्क्षमुखं भमंडलं नवांशगं यवचक्रमुष्टिगं ॥**
**ध्वंसानुपाशांतरकाग्रगं क्रमात् सिद्ध्यै तदंशावधिगं व्यसद्ग्रहं॥८१***

अथ खड्गमंगले कालशुद्धिमाह—खड्ग इति ॥ खड्गे कृपाणे स्वजन्मर्क्षमुखं निजजन्मनक्षत्रपूर्वं भमंडलं नक्षत्रचक्रं नवांशगं नवभागप्रमितं त्रयं त्रयं देयमित्यर्थः । क्रमात्क्रमेण किंभूतं भमंडलं यवचक्रमुष्टिगतं खड्गस्य यवस्थाने स्थितं नक्षत्रत्रयं एवं चक्रे त्रयं मुष्टौ त्रयं पुनः किंभूतं ध्वंसेति ध्वंसयोः द्विस्कंधयोस्त्रयं त्रयं अनुपाशयोर्द्विपाशयोस्त्रयं त्रयं अंतरके मध्ये त्रयं अग्रे त्रयमिति नवत्रिकं सप्तविंशतिमितं देयं यन्नक्षत्रमंसाधिगं यवस्थानादारभ्य स्कंधपर्यंतगतं तत्सिद्ध्यै शुभाय स्यात् । यव३चक्र३मुष्टि३स्कंधेषु३गतं शुभमित्यर्थः । किंभूतं व्यसद्ग्रहं पापग्रहरहितमिति इतरत् पाशमध्याग्रेषु गतं दुष्टं ॥ ८१ ॥

**विवाहताराश्रुतिवासवाद्यभैः सजैवचित्राभगभैरविघ्नमाः ॥**
**निशीह वाराः पतितांघ्रिभूविशां वा पट्टवृद्धापनमंगले हिताः॥८२**

अथ घर्घरणे वारादिशुद्धिमाह—विवाहेति ॥ पतितांघ्रिभूविशां भ्रष्टशूद्रनराणामिह पट्टवृद्धापनमंगले घर्घरणं 'नातरूं' इति करणे निशि रात्रौ वारा रव्यादयो हिताः शुभाः किंभूता

* आकृति नंबर. २४

वाराः अविद्यमाः न विद्येते विद्यमौ बुधशनी येषां ते कैः सह हिताः विवाहेति विवाहताराः उद्वाहभानि श्रुतिः श्रवणः वासवं धनिष्ठा आद्यं अश्विनीभं एतैः।किंभूतैरेतैः सजैवेति जैवं जीवस्येदं पुष्यः चित्रा भगभं पूर्वाफाल्गुनी एतैः सह वर्तमानैर्वेति ॥ ८२ ॥

**सहंसधिष्ण्यादिह पट्टपेटके त्रयं त्रयं चांतरतो दिशो हरेः ॥**
**क्रमेण भानामपसव्यतो न्यसेन्नृयाम्यात्विद्रभवाशमर्थकृत् ॥८३॥***

अथ वर्वरणे पट्टकचक्रं दर्शयति—सहंसेति ॥ सुधीः हरोर्दिशः पूर्वतः क्रमेण इह पट्टपेटके चक्रेऽतरतो मध्यतश्च सहंसधिष्ण्यात् सूर्याक्रांतभात् भानां त्रयं त्रयं न्यसेत् कस्मादपसव्यतो दक्षिणमार्गेण इह पट्टचक्रे नृयानः कुबेरः यातु राक्षसः इंद्रः भव ईशानः एषां काष्ठाप्राप्तं भमर्थकृत् शुभं स्यात् उत्तरनैर्ऋतपूर्वेशानदिक्षु शुभमिति अन्यगतमशुभं ॥८३ ॥

**इषाद्यपक्षस्य नभोनभस्ययोरीज्योशनोस्तस्य झषा१२ऽस्त्र९भास्वतां ॥**
**युजोऽभिरूपैरपहाय वासरानुदीरितं घर्घरणं क्वचित्कलौ ॥ ८४ ॥**

अथ घर्घरणे त्याज्यदिनादीनाह—इषाद्येति ॥ अभिरूपैः पंडितैः क्वचित् कलौ घर्घरणमुदीरितं प्रोक्तं ।किं कृत्वा वासरान् दिनानि अपहाय त्यक्त्वा कस्य तदाह इषाद्यपक्षस्य आश्विनकृष्णपक्षदिनानि पुनर्नभोनभस्ययोः श्रावणभाद्रपदयोः समग्रदिनानि पुनरिज्योशनोस्तस्य गुरुशुक्रास्तादिनानि पुनर्झषाऽस्त्रभास्वतां युजो योगस्य धनुर्मीनार्कदिनानि ॥ ८४ ॥

**निजागारे कन्यावितरणमलं यद्दशगुणं पवित्रं गोष्ठे तच्छतगुणमतः शंकरकुले ॥ अजारामे तीर्थे घनरसनिधे रोधसि समं भवत्यस्मादन्यद्युवतिनयनं सर्वविषये ॥ ८५ ॥**

अथ शिखरिण्या कन्यादानयोग्यस्थानमाह—निजेति ॥ अलमत्यर्थं निजागारे स्वगृहे कन्यावितरणं कन्यादानं यद् गुणं पवित्रं पुण्यं भवति गोष्ठे गवां स्थाने तद्दशगुणं पुण्यं स्यात्। शंकरकुले शिवालये तच्छतगुणं पुण्यं भवति । अतःपरं अजारामे विष्णुमंदिरे तीर्थे देवस्थाने तद्दशगुणं पुण्यं स्यात् शंकरकुले शिवालये तच्छतगुणं पुण्यं भवति घनरसनिधेः समुद्रस्य रोधसि समं सदृशं शंकरकुलसदृशं अस्मादन्यत् घटिकागोधूलिककालरहितमंगले घर्घरणे इत्यर्थः तदा युवतिनयनं खंडपक्षविवाहस्त्रीनयनं सर्वविषये सर्वत्र स्थाने भवति ॥ ८५ ॥

**प्रविश्य धामाग्रमथैणलोचना पूर्णाजयानंदवतीयुते नरे ॥**
**कवींदुजीवैर्निदिनेऽखिलाः कलाः पुष्णाति चंदाविव षोडशीकलाः॥८६**

अथ गृहे वधूप्रवेशे वारशुद्धिमाह—प्रविश्येति ॥ अथ मांगल्ये एणलोचना मृगाक्षी नरे भर्तरि अखिलाः समग्राः कलाः पुष्णाति पुष्टीकरोति किंकृत्वा कवींदुजीवैर्निदिने शुक्रचंद्रगुरुश-

* आकृति नंबर २५

विदिनेऽग्रं प्रथमं धाम गृहं प्रविश्य किंभूते कवींदुजीवैर्निदिने पूर्णाजयानंदवतीयुते पंचमी: दशमीतृतीयाष्टमीत्रयोदशीप्रतिपत्षष्ठ्येकादशीयुक्ते का इव षोडशीकला इव यथा षोडशी इंदौ चंद्रेऽखिलकला: पुष्णाति पूर्णाति इत्यपि पाठः ॥ ८६ ॥

**श्रव:शिफापौर्वजवासवानिलैर्मृदुध्रुवक्षिप्रयुतैरविष्टयमैः ॥**
**सराजसत्वे नरि सुस्थिरोदये वधूप्रवेशो विदधीत धीमता ॥८७॥**

अथ गृहे वधूप्रवेशनक्षत्राण्याह—श्रव इति ॥ धीमता पंडितेन वधूप्रवेशो विदधीत कैः श्रवणः शिफा मूलं पौर्वजं मघा वासवं धनिष्ठा आनिलं स्वाती एषां द्वंद्वे एतैः किंभूतैः मृदुध्रुवक्षिप्रयुतैः पुनः किंभूतैरविष्टयमैः भद्रामावास्यारहितैः कस्मिन् सुस्थिरोदये स्थिरलग्ने पुनः कस्मिन् नरि सराजसत्वे चंद्रबलसहिते सति विदधीतेत्यत्र उक्तिश्चित्या ॥८७॥

**अगोपती गोपतिवंद्य९।१२राशी विवाहमासे भवतोऽयनांशैः ॥**
**अगोपती गोपतिवंद्यशुक्रौ यदा तदा नव्यवधूप्रवेशः ॥ ८८ ॥**

अथ वधूप्रवेशे धनुरर्कादीन्निषेधति—अगोपतीति ॥ यदायनांशैः सह गोपतिवंद्यराशी गोपतिरिंद्रस्तस्य वंद्यो गुरुस्तस्य राशी धनुर्मीनौ किंभूतौ अगोपती नास्ति गोपतिः सूर्यो ययोस्तौ सूर्याक्रमणरहितौ भवतः धनुषि मीने च सूर्यो न भवतीत्यर्थः। पुनर्यदा गोपतिवंद्यो गुरुः शुक्रश्च तौ किंभूतौ अगोपती नास्ति सूर्यो ययोस्तौ अस्तरहितौ भवतस्तदा विवाहमासे नव्यवधूप्रवेशः स्यात् ॥ ८८ ॥

**विवाहघस्रात्तिथिमा१५तिथिः शुभा स्यान्मंडपोद्वर्धनमंगले स्त्रियः ॥**
**त्रिंश३०न्मिताः पंचजनस्य च क्षणैरुदाननैः पार्श्वमुखैस्तमीमुखे ॥८९॥**

अथ विवाहमंडपोत्थानशुद्धिमाह—विवाहेति ॥ स्त्रियो नार्याः मंडपोद्वर्धनमंगले मंडपोत्थाने तिथिः शुभा स्यात् किंभूता तिथिः विवाहघस्रात् करनिपीडनदिनात्तिथिमा पंचदशदिनमिता च पुनः पंचजनस्य भर्तुस्त्रिंशन्मिता तिथिः ३० शुभा स्यात् कैः कृत्वा उदाननैरूर्ध्वमुखैः पार्श्वमुखैर्भैः क्षणैर्वा पुनः क्व तमीमुखे अस्तमध्यघटीषट्कं प्रदोषो रजनीमुखमिति ॥ ८९ ॥

**भर्त्रोकसः पितृकुले नवोढागमो वरो भैरपदारुणोग्रैः ॥**
**असदग्रहमुक्तैरयुगुज्झितैः स्यादित्थं पुरंध्र्यानयनं समग्रम् ॥९०॥**

अथ भर्तृगृहात् नवोढायाः पितृगृहानयनशुद्धिमाह—भर्त्रोकस इति ॥ भर्त्रोकसो धवधामत सकाशात् पितृगृहे नवोढागमो वरस्तात्कालिकवधूप्रवेशात्पुनः पितृगृहानयनं शुभं स्यात् कैः अपदारुणोग्रैर्भैः अपगतानि दारुणानि उग्राणि भानि येभ्यस्तानि तैः किंभूतैरसद्ग्रहमुक्तैः पापग्रहदिनरहितैः पुनः किंभूतैः अयुगुज्झितैर्दुष्टयोगरहितैः इत्थममुना प्रकारेण पुरंध्र्यानयनं समग्रं स्यात् ॥ ९० ॥

**कृतोपयामोऽथ पुमान् गृहित्वं वृद्धापनाद्दीपदिने समेति ॥**
**यथाप्ततारायुति राजवीर्ये तमीमुखानंदितमेषलग्ने ॥ ९१ ॥**

अथ दीपवृद्धापनमाह—कृत इति ॥ अथ कृतोपयामो विहितविवाहः पुमान् वृद्धापनात् दीपदिने दीपमालिकायां गृहित्वं गृहस्थाश्रमभावं समेति प्राप्नोति कस्मिन् यथाप्ततारायुति राजवीर्ये यथायोगप्राप्तनक्षत्रयोगचंद्रबले तमीमुखानंदितमेषलग्ने रजनीमुखसमृद्धमेषलग्ने प्रभाणाश्विनांतदर्शः दीपोत्सव इति भावः ॥ ९१ ॥

**आदित्यदैत्यार्चितपादपुष्करौ हितौ तु नैत्यादिह हंसलीनगू ॥**
**खगोपरागो हरिभगो हरिप्रियो दीपोत्सवस्त्रीगृहवेशने हितः ॥ ९२ ॥**

अथ दीपोत्सवस्त्रीगृहप्रवेशने गुर्वस्तादिकं निर्दोषमाह—आदित्येति ॥ तुरित्यवधारणे आदित्या देवाः दैत्या असुराः एभिरर्चितं पादपुष्करं पूजितं पादपंकजं ययोस्तौ गुरुशुक्रौ नैत्यान्नित्यत्वादिह दीपदिने हंसलीनगू हंसे सूर्ये लीना गावः किरणा ययोस्तौ अस्तं गतावपि हितौ शुभौ स्यातां । खगोपरागः चंद्रसूर्यग्रहणं हरेरिंद्रस्य प्रियो गुरुर्हरिगः सिंहराशिगो हितः शुभः स्यात् कस्मिन् दीपोत्सवस्त्रीगृहवेशने स्पष्टं ॥ ९२ ॥

**दीपद्युवृद्धापनकृत्यसंभवो दैवाद्यदा स्याद्विषमे विवाहतः ॥**
**उक्तक्षणाद्याखिलकालभूषिते गोधूलिलग्ने समयेऽपि तद्धितम् ॥ ९३ ॥**

इति श्रीकविकालिदासोदिते ज्योतिर्विदाभरणे विवाहाध्यायस्त्रयोदशः ॥ १३ ॥

दैवाद्दीपवृद्धापनाभावे वधूप्रवेशे विवेकमाह—दीपेति ॥ यदा दैवात् दीपद्युवृद्धापनकृत्यसंभवो दीपने वृद्धापनकृतेरसंभवः स्यात्तदा विवाहतो विषमे समये वर्षे तत् वधूप्रवेशनं हितं शुभं स्यात् कस्मिन् उक्तक्षणाद्याखिलकालभूषिते एतादृशे गोधूलिकलग्ने सति कोऽर्थः षोडशदिनानंतरं विषमवर्षे विषममासे विषमदिने च वधूप्रवेशः कार्यः पंचवर्षानंतरं विषमवर्षादिनियमो नास्ति किंतु दोषरहिते काले वधूप्रवेशो विधेय इति ॥ ९३ ॥

इति श्रीपौर्णिमीयशिष्यभावरत्नविरचितायां श्रीकालिदासकृतज्योतिर्विदाभरणस्य सुखबोधिकायां विवाहाध्यायस्त्रयोदशः ॥ १३ ॥

---

## वस्त्रालंकारधारणाध्यायः ॥ १४ ॥

---

**अथोपयामादनयोरनंतरं कालेंऽशुकालंकृतिधारणं ब्रुवे ॥**
**सदूषणे भूषणधारिणी प्रिया नृभूषणे दूषणदायिनी यतः ॥ १ ॥**

अथ विवाहकरणानंतरं वस्त्रादिधारणशुद्धिर्वर्तते अतोऽलंकाराध्यायसंज्ञमयाह—अथो इति ॥ अथानंतरं उपयामाद् विवाहादनंतरमनयोर्वरवध्वोरंशुकालंकृतिधारणं वस्त्रभूषणधारणं

ब्रुवे कथयामि यतो हेतोः सदूषणे दोषयुक्ते काले समये भूषणधारिणी धृतभूषणा सती प्रिया स्त्री दूषणदायिनी स्यात् कस्मिन् नृभूषणे नररत्ने पतौ ॥ १ ॥

**नृयोषितोर्भूषणचीरधारणे विचारणीयं धवलच्छवेर्बलं ॥**
**नरस्य राशौ नियतं च जन्मनो विजन्मबोधस्य हि नामवर्णभे ॥ २ ॥**

अथ वस्त्रभूषणधारणे चंद्रबलं वर्णयति---नृयोषितोरिति ॥ नृयोषितोर्वधूवरयोः धवलच्छवेश्चंद्रस्य बलं विचारणीयं चिन्त्यं कस्मिन् भूषणचीरधारणेऽलंकाराणां वस्त्राणां धारणे च पुनर्नरस्य जन्मनो राशौ नियतं निश्चितं बलं विचारणीयं विजन्मबोधस्याज्ञातजन्मनो नरस्य नामवर्णभे नामाक्षरराशौ बलं नियतं ॥ २ ॥

**सर्वत्र भद्राखिलपातवैधृता विरुद्धयोगास्तिथिवारधिष्ण्यजाः ॥**
**सदर्शरिक्तास्तिथयस्तथोचिता न चीरनेपथ्यधृतौ चरोदयाः ॥३॥**

अथ वस्त्रधृतौ भद्रादियोगांस्त्यजति—सर्वत्रेति ॥ सर्वत्र सर्वदेशेषु भद्रा अखिलपाताःक्रांतिपातः व्यतीपातः ग्रहपातः वैधृतः एषां द्वंद्वे तथा तिथिवारधिष्ण्यजास्तिथिवारनक्षत्रजाता एवंविधा विरुद्धयोगाः तथा सदर्शरिक्तायुक्तास्तिथयस्तथा चरोदयाश्चरलग्नानि एते समस्ताश्चीरनेपथ्यधृतौ वस्त्रवेषधारणे नोचिता न योग्याः स्युः यतः ' नेपथ्यं स्याद्यवनिका रंगभूमिप्रसाधनं । रामादिव्यंजको वेषो नटनेपथ्यमिष्यते ' ॥ ३ ॥

**सितेज्यसोमेनदिनेषु नूतनं स्याच्चीरनिर्माणमलं सुलग्ने ॥**
**कुविंदवेमाख्यतुरीयसंपल्लघ्वानलादित्यमृदुस्वर्यभैः ॥ ४ ॥**

अथ प्रथमं वस्त्रोत्पादनशुद्धिमाह—सितेति ॥ अलमित्यवधारणे नूतनं नवीनं चीरनिर्माणं वस्त्रोत्पादनकर्म स्यात् कस्मिन् सितेज्यसोमेनदिनेषु शुक्रगुरुचंद्रसूर्यदिनेषु पुनः सुलग्ने पुनः कैः कृत्वा लघ्विति लघुनक्षत्राणि आनलं कृत्तिका आदित्यं पुनर्वसु मृदुसंज्ञभानि स्वः स्वर्गस्तस्यार्यः स्वामी इंद्रस्तस्य भं ज्येष्ठा एभिर्नक्षत्रैः किंभूतं चीरनिर्माणं कुविंदस्तंतुवायः वेमाख्यो वायदंडः तुरी ताभ्यः जाता कुविंदवेमाख्यतुरीया तथाभूता संपत् समृद्धिर्यस्य तत् तुरीयेति भवार्थेऽव्ययः ॥ ४ ॥

**कुविंदमुक्तक्रियमंबरं सकृत् धौतं यदर्हं किल कृत्स्नमंगले ॥**
**धर्तुं तदेवाहतमादिकोविदैर्ज्ञेयं कुयोगोत्करदोषभूषितम् ॥ ५ ॥**

अथोद्वाहादौ सकृद्धौतवस्त्रं परिधानयोग्यमाह—कुविंदेति ॥ किलेत्यवधारणे यदंबरं वस्त्रं कुविंदमुक्तक्रियं कुविंदेन मुक्ता क्रिया यस्मिंस्तत् सकृद्धौतमेकवारप्रक्षालितं स्यात् 'निंषासुं' इति भाषा तत् वस्त्रं कृत्स्नमंगले समग्रमंगलकार्ये धर्तुं परिधानाय अर्हं योग्यं स्यात् आदिकोविदैस्तदेव वस्त्रमाहतं द्वितीयादिवारप्रक्षालितं छेदभोगाप्तं वा कुयोगोत्करदोषभूषितं ज्ञेयं ॥ ५ ॥

नरेण सद्वा हरिणीदृशा भवेत् सितांगिरोविद्गुषु सर्वसिद्धिदम् ॥
लघुध्रुवत्वाष्ट्रचतुष्कवासवादितेयपौष्णैर्धवलांशुकं धृतम् ॥ ६ ॥

अथ श्वेतवस्त्रधारणशुद्धिमाह—नरेणेति ॥ नरेण भर्त्रा हरिणीदृशा स्त्रिया वा धवलांशुकं श्वेतवस्त्रं सत् शुभं धृतं सर्वसिद्धिदं भवेत् केषु सितांगिरोवित्दुषु शुक्रगुरुबुधदिनेषु पुनः कैः कृत्वा लघ्विति लघुभानि ध्रुवभानि त्वाष्ट्रचतुष्कं चित्रास्वातीविशाखानुराधाः वासवं धनिष्ठा आदितेयं पुनर्वसु पौष्णं रेवती एभिर्भैरिति ॥ ६ ॥

त्रिदशदोषविदृक्षधनिष्ठयोरिनभपंचभनष्टरदोडुषु ॥
भवति शोणनिभांबरधारणं शुभतरं द्विजराजखगद्युषु ॥ ७ ॥

अथ रक्तवस्त्रधारणशुद्धिमाह—त्रिदशेति ॥ शोणनिभांबरधारणं रक्तवस्त्रधारणं शुभतरं भवति केषु द्विजेति द्विजौ गुरुशुक्रौ राजानौ रविभौमौ ते च ते खगा ग्रहाश्च तेषां द्युषु दिनेषु पुनः केषु त्रिदशानां दोषविदौ वैद्यौ अश्विनीकुमारौ तयो ऋक्षमश्विनी धनिष्ठा च तयोः पुनरिनभपंचकं हस्तपंचकं नष्टरदः पूषा रेवती एषु उडुषु ॥ ७ ॥

ध्रुवलघुव्द्यसुरद्वयरेवतीवसुभनिर्जरवार्द्धकिमंत्रिभिः ॥
विदिनजीवदिनैः परिधानतः कपिलपीतपटस्य शमश्नुते ॥८॥

अथ पीतरक्तपीतवस्त्रधारणशुद्धिमाह—ध्रुवेति ॥ मानवः कपिलपीतपटस्य पीतरक्तवस्त्रस्य पीतवस्त्रस्य च परिधानतो धारणात् शं सुखमश्नुते प्राप्नोति कैः कृत्वा ध्रुवेति ध्रुवाणि लघूनि द्वे असुरभे इति द्व्यसुरं मूलं पूर्वाषाढा 'द्विसुर'मिति पाठे विशाखा इति द्वयं रेवती वसुभं धनिष्ठा निर्जरवार्द्धकिश्चित्रा मंत्री पुष्यः एभिः पुनः विद् बुधः इनः सूर्यः जीवो गुरुः एषां दिनैः ॥ ८ ॥

त्रियमलीवसुभैनचतुष्टयादितिभदस्रयुगोडुषु धारयेत् ॥
अनुपलाशशितिद्युतिचीवरं तरणिजे तरणौ तरुणी नरः ॥ ९ ॥

अथ नीलश्यामवस्त्रधारणे शुद्धिमाह—त्रियमलीति ॥ तरुणी युवतिर्नरः पुमान् वा अनुपलाशशितिद्युतिचीवरं नीलं श्यामं च वस्त्रं धारयेत् केषु त्रियमली त्रयाणां यमलानां समाहारे उत्तरात्रयं पूर्वात्रयमिति वसुभं धनिष्ठा ऐनचतुष्टयं हस्तचतुष्कं हस्तः चित्रा स्वाती विशाखेति अदितिभं पुनर्वसु दस्रयुगं अश्विनी भरणी एतेषु पुनस्तरणिजे शनौ तरणौ सूर्ये च वारे ॥ ९ ॥

धवलचीवरधारणभेंद्रजोडुषु शशीनकवीज्यविदां दिनैः ॥
नयति पट्टकुलस्य कृतिव्रजो धृतिमपापवति स्थिरभोदये ॥ १० ॥

अथ पट्टकूलधारणशुद्धिमाह—धवलेति ॥ कृतिव्रजो बुधसमूहः पट्टकुलस्य धृतिं धारणं नयति करोति केषु धवलेति श्वेतवस्त्रधारणनक्षत्राणि इंदुर्मृगशीर्षः अजो विभुः श्रवणः कैः

कृस्त्रा शशी इनो रविः कविः शुक्रः इज्यो गुरुः विद् बुधः एषां दिनैः पुनः कस्मिन् अपापवति पापग्रहरहिते स्थिरभोदये स्थिरलग्ने ॥ १० ॥

क्वचिददारुणभोग्रभमिश्रभैरुडुभिरेव पटः कृमिजो धृतः ॥
दिनमणीज्यतमीशदिनेषु शं मनुभुवानुभुवामनुलभ्यते? ॥ ११ ॥

अथ कौशेयवस्त्रधारणशुद्धिमाह—क्वचिदिति ॥ नु वितर्के मनुभुवा नरेण कृमिजः कृमिकोशोत्थपटो धृतोऽनु पश्चात् भुवां भूमीनां शं सुखं अनुलभ्यते प्राप्यते कैरुडुभिर्नक्षत्रैः किंभूतैरदारुणेति दारुणसंज्ञानि उग्रभानि मिश्रभे द्वे एभिर्भैः रहितैः पुनः केषु दिनमणिः सूर्यः इज्यो गुरुः तमीशश्चंद्र एषां दिने ॥ ११ ॥

शयचतुष्कवसूडुयुगत्रयीत्रिदशसूडुयुगाश्विनभांत्यभैः ॥
खरकरास्फुजिदैनिदिनेषु वै भवति लोमपटस्य धृतिः श्रियै ॥ १२ ॥

अथ कंबलादिलोमपट्टधारणशुद्धिमाह—शयेति ॥ वै पादपूर्तौ लोमपटस्य धृतिः कंबलधारणं स्थिरमाधारणं वा श्रियै भवति कैः शयचतुष्कं हस्तचतुष्कं वसूडु धनिष्ठा युगत्रयी पूर्वोत्तरत्रयं त्रिदशसूडुयुगं देवमातृयुगं पुनर्वसु पुष्यः अश्विनीभं अंत्यभं रेवती एषां द्वंद्वे एभिः पुनः केषु खरकरः सूर्यः आस्फुजिच्छुक्रः ऐनिः शनिः एषां दिने ॥१२॥

क्षयाधिकेऽनेहसि भार्गवेज्ययोरस्तेंऽशुगुर्वोस्तु मिथस्तदोकसोः ॥
दधाति योषिच्छयने तथामरे करे न दंतोद्भवकौर्मचूडकम् ॥१३॥

अथ क्षयाधिकादिकाले स्त्रीणां दंतादिचूडकधारणं निषेधति—क्षयेति ॥ योषित् स्त्री करे पाणौ दंतोद्भवकौर्मचूडकं दंतसंबंधिचूडकं कच्छपसंबंधिचूडकं न दधाति नो बिभर्ति कस्मिन् क्षयाधिकेऽनेहसि काले तथा भार्गवेज्ययोः शुक्रगुर्वोरस्तेऽस्तं गते तु पुनस्तथांशुगुर्वोः सूर्यगीष्पत्योर्मिथः परस्परं तदोकसोः सतोः धनुर्मीनस्थे सूर्ये सिंहस्थे गुरौ तथा अमरस्येदं आमरं तस्मिन् शयने देवशयने चातुर्मास्ये इत्यर्थः ॥ १३ ॥

अकुप्यभूषांशुमदश्मशंबुका मुक्ताकिकृद्विद्रुमदंतचुडकाः ॥
द्विजातिराजद्युषु पाणिपंचके सवासवांत्याश्विनभे श्रियै धृताः ॥१४

अथ सुवर्णादिभूषणानां धारणशुद्धिमाह—अकुप्येति ॥ अकुप्यभूषादयो धृताः श्रियै स्युः अकुप्यं हेमरूप्याख्यं सौवर्णं रूप्यं तन्मिश्रितं भूषणं अंशुमदश्मा सूर्यकांतमणिः 'सूर्यकांतः सूर्यमणिः सूर्याश्मा दहनोपल' इति। शंबुकाः 'शंबुकास्त्वंबुमात्रजा' इति हैमः। शंखला इति। मुक्ता मुक्ताफलं अकिकृत् अकीक इति भाषा रक्तमणिः विद्रुमः प्रवालं दंतचूडक एषां द्वंद्वे एते केषु द्विजातौ गुरुशुक्रौ राजानौ रविभौमौ एषां दिनेषु पुनः पाणिपंचके हस्तपंचके किंभूते पाणिपंचके वासवं धनिष्ठा अंत्यं रेवती अश्विनिभं एषां द्वंद्वे एभिः सह वर्तमाने ॥१४॥

मघैशमैशेनमृदुद्विनायकानिलांबुनाथाद्यभगर्क्षवासवैः ॥
गुरुद्वयेनद्वयवासरे करे दध्याद्वशा कौर्ममणेरलंकृतिम् ॥ १५ ॥

अथ कौर्मचूडकधारणशुद्धिमाह—मघेशेति ॥ वशा स्त्री करे पाणौ कौर्ममणेः कच्छ० पसंबंधिरत्नचूडकस्यालंकृतिं भूषणं दध्यात् बिभृयात् कैः कृत्वा मघा ऐशं आर्द्रा मैशं माघा लक्ष्म्या ईशो मेशस्तस्येदं श्रवणः इनो हस्तः मृदुभानि द्विनायकं विशाखा आनिलं स्वाती अंबुनाथो वरुणः शततारा आद्यमश्विनी भगर्क्षं पूर्वाफाल्गुनी वासवं धनिष्ठा एषां द्वंद्वे एतैः पुनः कस्मिन् गुरुद्वयेनद्वयवासरे गुरुद्वयं इनद्वयं चेति गुरुशुक्रसूर्यसोमदिने ॥ १५ ॥

वाध्रीणसं पारशवं च माधुकं धीरैरुदाहारि विधानमादरात् ॥
वैडूर्यकं कौर्ममणिक्रियोदिते धिष्ण्ये दिने वा क्वचिदंशुसंभवे ॥ १६ ॥

अथ खड्गपात्रादिकार्यशुद्धिमाह—वाध्रीणसमिति ॥ धीरैः पंडितैर्वाध्रीणसं खड्गपात्रादिकं पारशवं लोहं पिंडं 'पारशवं धन'मिति हैमः। माधुकं त्रपुसंबंधि 'मधुकं त्रपु यष्टिश्चेति' हैमानेकार्थः। वैडूर्यकं च विधानं कृत्यं वाध्रीणसस्येदं विधानं कर्म इत्यण् एवं पारशवं माधुकं च ज्ञेयं उदाहारि कथितमित्यर्थः। कस्मात् आदरात् कस्मिन् धिष्ण्ये नक्षत्रे दिने च किंभूते धिष्ण्ये दिने च कौर्ममणिक्रियोदिते कच्छपसंबंधिवलयरत्नक्रियासु प्रोक्ते पुनः क्वचिदंशुसंभवे शनौ दिने वा इति मतांतरं ॥ १६ ॥

अदारुणोग्रैरुडुभिस्त्वमिश्रैरार्येनराजज्ञुषु संगतेषु ॥
ससीसशुल्बादि च कर्म वामं सपद्मरागादि सिते क्वचित्स्यात् ॥ १७ ॥

अथ ताम्रादिकर्माह—अदारुणेति ॥ ससीसशुल्बादि सीसपत्रकसहितं ताम्रादिकर्म च पुनः सपद्मरागादि रक्तमणिप्रमुखसहितं कर्म वामं श्रेष्ठं स्यात् कैरुडुभिः किंभूतैः अदारुणोग्रैस्तीक्ष्णक्रूरनक्षत्ररहितैः पुनः किंभूतैरमिश्रैः साधारणनक्षत्ररहितैः पुनः केषु आर्येनराजज्ञुषु गुरुरविचंद्रदिनेषु संगतेषु संयुक्तेषु तु पुनः क्वचित् सिते शुक्रे दिनेऽपि स्यात् ॥ १७ ॥

सशुभे द्व्यचरोदयेऽपि केंद्रे वसनं धारितमातनोति धाम ॥
चरचापिवशाविसारलग्ने धृतमंजीरवशा विसारमेति ॥ १८ ॥

अथ मालभारिण्या वस्त्रनूपुरधारणे लग्नशुद्धिं दर्शयति—सशुभइति ॥ धारितं परिहितं वस्त्रं कर्तृपदं धाम तेज आतनोति विस्तारयति कस्मिन् सशुभे शुभग्रहयुक्ते द्व्यचरोदये कन्यास्थिरलग्ने सशुभे केंद्रेऽपि धृतमंजीरवशा चरणधृतनूपुरा स्त्री विसारं शुभतरमेति प्राप्नोति कस्मिन् चरेति चरलग्ने चापिनि धनुषि वशायां कन्यालग्ने विसारे मीनलग्ने ॥ १८ ॥

कटकांगदकर्णिकादिभूषारशनाहारभराद्यलंकृतिः स्यात् ॥
हरिगोलिवशाखिरयुग्मरलग्ने सति के खे च विषे श्रुतौ धृतेष्टा ॥ १९ ॥

अथ कटकाद्यलंकृतिधारणशुद्धिमाह—कटेति ॥ कटकाद्यलंकृतिर्धृता इष्टा स्यात् कटको वलयं अंगदं केयूरं कर्णिका कर्णभूषणं इत्यादि भूषालंकारः रशना मेखला हार-

भरा मुक्ताफलादीनां हारभेदा इत्याद्यलंकृतिरिति ॥ कस्मिन् हरिः सिंहः गौर्वृषः अलिर्वृश्चिकः झषा कन्या स्त्री धनुः युग्मं मिथुनं एषां लग्ने च पुनः के प्रथमभावे खे दशमे विषे जले चतुर्थे श्रुतौ कर्णे तृतीये एकादशे सन् शुभग्रहः तस्मिन् सति शुभग्रहयुक्तप्रथमादिभावे इत्यर्थः ॥ १९ ॥

**गुरुभश्रुतिधीरवासवैशैरधिदोरैंद्रपयोधिधिष्ण्यपौष्णैः ॥**
**रविसत्सु विवित्सु पापमुक्ते मुकुटं मस्तकभोदये विदध्यात् ॥२०॥**

अथ मुकुटधारणमुहूर्तमाह—गुरुभेति ॥ सुधीर्मुकुटं विदध्यात् बिभृयात कैः गुरुभेति गुरुभं पुष्यः श्रुतिः श्रवणः धीरभानि ध्रुवभानि वासवं धनिष्ठा ऐशमार्द्रा एभिः पुनः कैः अधिदोर्हस्तः ऐंद्रं ज्येष्ठा पयोधेर्वरुणस्तस्य धिष्ण्यं शततारा पौष्णं रेवती एभिः पुनः केषु रविसत्सु सूर्यशुभग्रहदिनेषु ।किंभूतेषु विवित्सु बुधरहितेषु पुनः कस्मिन् पापमुक्ते पापग्रहरहिते मस्तकभोदये शीर्षोदयलग्ने ॥ २० ॥

**लघुलोलमृदूग्रधन्ववाभैरलपन्सत्सु लग्नपुंविलग्नैः ॥**
**घनसारकुरंगनाभिवर्णागुरुगोरोचनमालयादिकृत्यम् ॥ २१ ॥**

अथ घनसारादिकृत्यशुद्धिमाह—लघ्विति ॥ सुधियो घनसारादिकृत्यमलपन् अकथयन् घनसारः कर्पूरः कुरंगनाभिः कस्तूरी वर्णो हिंगुलादिः कुंकुमादिर्वा अगुरुः कृष्णागरुगोरोचनं प्रतीतं मलये भवं मालयं चंदनं इत्यादीनां कृत्यं मंडनमिति कैर्लघु इति लघूनि लोलानि च भानि मृदूनि उग्रधन्वा इंद्रो ज्येष्ठा 'पृतनाषाडुग्रधन्वा' इति हैमः । वाः जलं तदृक्षं पूर्वाषाढा एतैः किंभूतैर्लग्नपुंविलग्नैः आश्रितनरलग्नैः पुनः केषु सत्सु शुभग्रहदिनेषु ॥२१॥

**सचिवे दितिजन्मनां मघोनोऽमृतमालिन्यनु च प्रसूनकार्यं ॥**
**मृदुतिष्यमुरारिभत्रये स्याच्छ्वसनर्क्षे न्नुदये च चंद्रदृष्टे ॥ २२ ॥**

अथ कुसुमकार्यशुद्धिमाह—सचिवेति ॥ प्रसूनकार्यं पुष्पकार्यं स्यात् कस्मिन् दितिजन्मनां दैत्यानां सचिवे शुक्रदिने च पुनर्मघोन इंद्रस्य सचिवे गुरुदिनेऽनु पश्चादमृतमालिनि अमृतं मालयति धरति इति मलधारणे धातोः प्रयोगत्वात् तस्मिन् अमृतधारिणि चंद्रे दिने पुनर्मृदूनि तिष्यः पुष्यः मुरारिर्विष्णुस्तन्नक्षत्रत्रयं श्रवणत्रयं पुनः श्वसनर्क्षे स्वातीभे तु नृलग्ने चंद्रदृष्टे चंद्रेण विलोकिते न्नुदये नरलग्ने ॥ २२ ॥

**लघुधीरवसूडुपुष्यपौष्णैः सुरवर्द्धक्यनिलोडुदास्रमैत्रैः ॥**
**सदहस्सु विवित्सु देहदुर्गः परिधेयोऽचरभोदये सुकेंद्रे ॥ २३ ॥**

अथ कवचादिधारणशुद्धिमाह—लघुधीरेति ॥ देहदुर्गः सन्नाहः परिधेयः परिधार्यः सुभटैरिति शेषः कैर्लघूनि धीराणि वसूडु धनिष्ठा पुष्यः पौष्णं रेवती एषां द्वंद्वे एभिः पुनः कैः सुरवर्द्धकिश्चित्रा अनिलोडु स्वाती दास्रमश्विनी मैत्रमनुराधा एषां द्वंद्वे एभिः पुनः केषु

सद्वस्त्रेषु शुभग्रहवासरेषु विविक्तेषु किंभूतेषु बुधरहितेषु पुनः कस्मिन् अचरभोदये स्थिरभोदये किंभूते अचरभोदये सुकेंद्रे शुभग्रहयुक्तकेंद्रे ॥ २३ ॥

**काचकाचमणिकज्जलक्रिया भानुभानुजभृगुप्रसूतिषु**
**वातवासवमृदुद्विदैवतैरादितारकयुतैः प्रशस्यते ॥ २४ ॥**

अथ काचादिकार्यशुद्धिमाह—काचेति ॥ काचः काचमणयः काचमणिकाः कज्जलं एषां क्रिया प्रशस्यते प्रशंसनीया केषु स्यात् भानुः भानुजः शनिः भृगुप्रसूतिः शुक्रः एषां दिनेषु पुनः कैः वातः स्वाती वासवं धनिष्ठा मृदूनि द्विदैवतं विशाखा एषां द्वंद्वे एतैः किंभूतैः आदितारकयुतैः स्पष्टं ॥ २४ ॥

**व्यांतकाग्रमृदुमिश्रदारुणैर्भास्करींदुभवभास्करद्युभिः ॥**
**चर्मकर्म कलितं ह्युपानहौ धारिते विदधतोऽतिशं विशाम् ॥२५॥**

अथ चर्मकर्मशुद्धिमाह—व्यांतेति ॥ हि अवधारणे चर्मकर्म विदधतः कुर्वतः चर्मकारस्य अथवा विदधतः कुर्वाणात् तु पुनः धारिते उपानहौ विशां मनुष्याणां अतिशं महत्सुखं कलितं प्रोक्तं कैर्व्यांतकानि भरणीरहितानि उग्रभानि मृदूनि मिश्रे द्वे दारुणानि एषां द्वंद्वे एतैः पुनः कैः भास्करिः शनिः इंदुभवो बुधः भास्करः सूर्यः एषां दिनैः ॥ २५ ॥

**भूपदत्तमुपयामवासरे स्नेहिलब्धमचलामराज्ञया ॥**
**सिद्धवाक्यवशतः शमंबरं धारितं तु तनुतेऽस्त्रभूषणम् ॥ २६ ॥**

**इति श्रीकविकालिदासोदिते ज्योतिर्विदाभरणे वस्त्रालंकरणपरिधानाध्यायश्चतुर्दशः॥ १४**

अथ भूपादिभ्यो लब्धवस्त्रादीनां तत्कालधारणमाह—भूपेति ॥ हि अवधारणे अंबरं वस्त्रं तु पुनरस्त्रभूषणं शस्त्रं भूषणं च कर्तृपदं शं सुखं तनुते किंभूतं अंबरादिकं अचलामराज्ञया विप्रादेशेन सिद्धवाक्यवशतो महर्ष्यादेशात् धारितं कस्मिन् अभे नक्षत्रादियोगरहितेऽपि सति पुनः किंभूतं अंबरं भूपदत्तं राज्ञा प्रदत्तं पुनः उपयामवासरे लब्धं स्वजनेनार्पितं स्नेहिलब्धमि-त्यपि पाठः स्नेहितः प्राप्तं ॥ २६ ॥

इति श्रीपौर्णिमीयशिष्यभावरत्नविरचितायां श्रीकालिदासकृतज्योतिर्विदाभरणस्य सुखबोधिकायां वस्त्रालंकरणपरिधानाध्यायश्चतुर्दशः ॥ १४ ॥

कस्मिंश्चित्समये नृपस्य सदसि श्रीविक्रमार्कस्य यो
विद्वद्भिः परिपूरिते च सुजनैरुक्तिं सदोषां जगौ ॥
दैवज्ञस्य ततो वराहमिहिरस्यानेन मूर्खीकृतो
न ज्ञोऽस्यामिति कालिदासकविना दुर्बोधशास्त्रं कृतम् ॥ २ ॥

व्याख्या श्रीविक्रमार्कसभायां श्रीकालिदासेन वराहमिहिरकृतशास्त्रे दूषणं दत्तं ततस्तेनासौ त्वं मूर्ख इति भणितः यतोऽस्मदुक्तौ त्वमज्ञोऽसि ज्योतिर्मार्गत्वात् ततः कालिदासेनापि तन्मदापहरणाय इदं शास्त्रं कृतमिति ॥

---

अत्रायमन्वयः प्रतिभाति—व्यांतकाग्रमृदुमिश्रदारुणैः भास्करींदुभास्करद्युभिः चर्मकर्म कलितं हि धारिते उपानहौ विशां अतिशं विदधतः कुर्वत इत्यर्थः ॥

## प्राकाराध्यायः १५

**दुर्गं विना नैव हि निर्भयं पुरं पुरे स्वराशिस्थलगं गृहं वरं ॥**
**क्रमादहं शालपुरौकसामतो वक्ष्यामि तावत् घटनाभिनिर्णयं ॥१॥**

अथालंकाराध्यायकथनानंतरं भूषणादि सुस्थानं विना विनश्यति अतः प्राकाराध्यायसंधानमाह—दुर्गमिति ॥ हि युक्तार्थे दुर्गं कोटं विना दुर्गमं शत्रुभिर्दुष्प्राप्यं पुरं नैव स्यात् ॥ यतः ' यस्याश्रयबलेनैव राज्यं कुर्वंति भूतले । विग्रहं चतुराशायां सीमान्तैः शत्रुभिः सह ॥ १ ॥ विषमं दुर्गमं घोरं वक्रं भीरुभयावहं । कपिशीर्षैश्च शोभाढ्यं रौद्राद्दालकमंडितं ॥ २ ॥ प्रतोली पत्रकालास्यां परिखा कालरूपिणी । रणमंडपकृताटोपं ढिकुलीयंत्रयांत्रितं ॥३॥ मुशलैर्मुद्गरैः पाशैः कुंतखड्गैर्धनुःशरैः ॥ संयुक्तं सुभटैः शूरैरिति दुर्गं निवेशयेत् ॥ ४ ॥ प्रथमं मृण्मयं कोटं जलकोटं द्वितीयकं । तृतीयं ग्रामकोटं च चतुर्थं गिरिगव्हरं ॥ ५ ॥ पंचमं पर्वतारोहं षष्ठं कोटं च डांबरं । सप्तमं वक्रभूमिस्थं विषयाख्यं तथापरं ॥६॥ इति पुरे नगरे स्वराशिस्थलगं निजराश्युचितस्थानमितं गृहं वरं स्यात् । अतो हेतोस्तावत्प्रथमं क्रमात्क्रमेणाहं शालपुरौकसां प्राकारनगरगृहाणां घटनया रचनया अभिनिर्णयं वक्ष्यामि कथयिष्यामि ॥ १ ॥

**नगेंद्रशालोऽस्त्यनुवारिशालो भूशालको गव्हरशाल एषां ॥**
**नगांबुशालावतिदुर्गमौ स्तो मध्याधमौ गव्हरभूमिशालौ ॥२॥**

अथ प्रथमं पर्वतादिस्थानगतशालभेदानाह—नगेति ॥ नगेंद्रशालः पर्वतोपरि वप्रोऽस्ति अनुवारिशालो जलमध्यगतोऽस्ति पुनर्भूशालो भूमिप्रतिष्ठितोऽस्ति पुनर्गव्हरशालो बिलप्रतिष्ठितः कुंजप्रतिष्ठितो वा 'बिले तु गव्हरं गुहा' इति हैमः ॥ इत्यादिति चतुर्धा एषां वप्राणां मध्ये नगांबुशालौ पर्वतजलस्थौ वप्रौ अतिदुर्गमौ गृहीतुमशक्यौ स्तः भवतः गव्हरभूमिशालौ क्रमेण मध्याधमौ भवतः गव्हरशालो गृहीतुं शक्याशक्यः भूमिशालो गृहीतुं शक्य इत्यर्थः ॥ २ ॥

**शिलामयश्चोत्तम इष्टिकामयो मध्योऽधमो मृद्रचितोऽत्र दारवः ॥**
**शालः सुधीभिस्त्वधमाधमाभिधः प्रभाषितः सन् विबलोप्यसौ बली ॥३**

अथैतानेव पाषाणादिनिर्मितानुत्तममध्यमाधमानाह—शिलेति ॥ सुधीभिः शिलामयो दृषद्भिर्निर्मितो वप्र उत्तमः श्रेष्ठः प्रभाषितः । च पुनरिष्टिकामयो मध्यो मध्यमः पुनर्मृद्रचितो मृत्तिकामयोऽधमो नेष्टः पुनर्दारवः काष्ठमयस्त्वधमाधमोऽधमतम इति असौ दारवो विबलोऽपि असमर्थोऽपि सन् बाले बलीष्ठः स्यात्तत्कारणमाह ॥ ३ ॥

**अनेकयंत्रास्त्रनिकायसज्जितो भटाचितो धान्यरसादिपूरितः ॥**
**स दुर्गमस्तुच्छबलोऽपि शालको भवेदसौ मंडलरक्षणक्षमः ॥ ४ ॥**

अनेकेति ॥ सोऽसौ तुच्छबलोऽपि स्तोकसैन्योऽपि शालको दुर्गमः सन् मंडलरक्षणक्षमो देशरक्षणाय समर्थो भवेत् किंभूतोऽनेकेति अनेकयंत्रास्त्रनिकायो नानाविधलोहादियंत्रप्रहरण-

समूहस्तेन सज्जितः उद्भटीकृतः पुनः किंभूतः शालः भटाचितः सुभटैर्व्याप्तः पुनः किंभूतः शालः धान्यरसादिपूरितः धान्यघृततैलतृणकाष्ठादिभिः पूर्णः ॥ ४ ॥

**नृवाहनाशायनवर्तिनीने शालो विधेयोऽश्मभिरिष्टकाभिः**
**इहैव मार्गे त्विषकोर्जयोर्वा मृत्स्नामयोऽन्योऽनु च सर्वकाले ॥५॥**

अथ कोटकरणकालमाह—नृवाहनेति ॥ अश्मभिः पाषाणैः शालो विधेयः कर्तव्यः वाऽथवा इष्टकाभिः शालो विधेयो वा मृत्स्नामयः शुभमृण्मयः शालो विधेयः कस्मिन् इह नृवाहनो धनदस्तस्याशा उत्तरा तस्यामयनवर्तिनि उत्तरायणयुक्ते इने सूर्ये सति पुनः कस्मिन् मार्गशीर्षे तु पुनः कयोरिषकोर्जयोः आश्विनकार्तिकयोः अनु पश्चाच्च पुनरन्यो दार्वादिमयः शालः सर्वकाले विधेयः ॥ ५ ॥

**न द्विस्वभावे ३।६।९।१२। तरणौ प्रतिष्ठामितेऽगिरस्यास्फुजितींदुबिंबे॥**
**दौर्ग्यं समारंभणमाहुरार्या दुष्टैश्च पाकेशकुजांशुसोमैः ॥ ६ ॥**

अथ द्विस्वभावराश्यादौ शालप्रारंभणं निषेधति—न द्विस्वभावेति ॥ आर्या आचार्या दौर्ग्यं दुर्गस्य शालस्येदं समारंभणं उपक्रमणं नाहुःनोचुःकस्मिन् द्विस्वभावे द्विस्वभावराशौ ३।६।९।१२ तरणौ सूर्ये सति पुनः अंगिरसि गुरौ आस्फुजिति शुक्रे चंद्रबिंबे प्रतिष्ठामस्ततामिते गुरुशुक्रचंद्रास्ते सति च पुनः पाकेशो महादशास्वामी कुजो भौमः अंशुःसूर्यः सोम इंदुः एषां द्वंद्वे एतैः किंभूतैर्दुष्टैः दुष्टभावप्राप्तैः ॥ ६ ॥

**मार्गात्तमः शक्रदिशि त्रयेऽतिमाद्याम्यां परस्यामनुशुक्रतोऽस्त्यदिक् ॥**
**नभस्यतःशालविधानकादरो रथ्याभिवक्रे न विधंतुदे भवेत् ॥ ७ ॥**

अथ मार्गादीनां त्रये राहुनिवासस्थानं वदन् सन्मुखं निषेधति—मार्गादिति ॥ मार्गात् मार्गशीर्षात् त्रये मार्गादिमासत्रये शक्रदिशि पूर्वस्यां तमो राहुर्भवति । पुनरतिमात् फाल्गुनात् त्रये याम्यां दक्षिणस्यां तमो भवति । अनु पश्चात् शुक्रतो ज्येष्ठमासात् त्रये परस्यां पश्चिमायां तमो भवति । पुनर्नभस्यतो भाद्रपदात् त्रये उदक् उत्तरस्यां तमोऽस्ति । एतत्कारणमाह शालविधानकादरो वप्रकार्योद्यमो न भवेत् कस्मिन् रथ्याभिवक्रे प्रतोलीसन्मुखे विधुंतुदे राहौ सति ॥ ७ ॥

**भद्रा त्वभद्रातिभयाय रिक्ता ४।९।१४।दर्शःसमारंभितदुर्गकाले ॥**
**सौम्यारवारौ विडलाडलाद्या कुयोगताऽसद्धतशालतारा ॥ ८ ॥**

अथ शालप्रारंभे कुतिथिवारयोगान्निषेधति—भद्रेति ॥ समारंभितशालकाले प्रारंभितवरणसमये भद्रा भद्रासंज्ञा तिथिश्च पुनर्भद्रा विष्टिः पुनः रिक्तातिथिः दर्शोऽमावास्या पुनः सौम्यारवारौ बुधभौमवारौ पुनर्विडलाडलाद्या कुयोगता पुनरसद्धतशालतारा असद्भिः पापग्रहैर्हता विद्धभुक्तभोग्ययुक्ता शालतारा प्राकारप्रारंभनक्षत्रमतिभयाय स्यात् एते नेष्टा इत्यर्थः॥८॥

औमेश मेशेनमृदुध्रुवेज्यप्राभंजनांभोर्यमवासवेषु ॥
नृभोदये पापरिपौ द्युकेंद्रे प्राकारकोपक्रममाहुरार्याः॥ ९ ॥

अथ नक्षत्रादिशुद्धौ प्राकारप्रारंभणमाह—औमेति ॥ आर्याः प्राकारस्य वरणस्य उपक्रमं प्रारंभमाहुः केषु उमायाः पार्वत्या ईश उमेशस्तस्येदमार्द्रा मा या ईशो मेशस्तस्येदं श्रवण इनो हस्तः मृदुनि ध्रुवाणि इज्यः पुष्यः प्राभंजनमानिलं स्वाती अंभोर्यमं जलस्वामिनक्षत्रं शततारा वासवं धनिष्ठा एषां द्वंद्वे एषु पुनः कस्मिन् नृभोदये मिथुनतुलाकन्याधनुराद्यखंडा-नामन्यतमलग्ने पापरिपौ षष्ठभावस्थपापग्रहे द्युकेंद्रे सति ॥ ९ ॥

अथ त्रिरेखे वलये चतुर्भुजे कार्शानवादीशदिशो भपंजरं ॥
कोणांशवेशं दिशि निर्गमं यथा न्यसेत्तथा दुर्गविधानसिद्धये॥१०*

अथ दुर्गचक्रे कृत्तिकादिनक्षत्राणि स्थापयति—अथेति ॥ अथ वप्रप्रारंभे चत्वारो भुजा यस्य स चतुर्भुजः चतुरस्र इत्यर्थः तस्मिन् त्रिरेखेति तिस्रो रेखा यस्य स तस्मिन्नेवंविधे वलये वप्रचक्रे सुधीर्भपंजरं तथा तेन प्रकारेण कृशानोरिदं कार्शानवं तस्मात् कृत्ति-कानक्षत्रात् ईशदिशः ईशानदिशातो न्यसेत् स्थापयेत् यथा येन प्रकारेण कोणांशवेशं चतुष्कोणे वेशः प्रवेशो यस्य तत् स्यात् । पुनर्निर्गमदिशि चतुर्दिक्षु बहिर्गमनं स्यात्तदा दुर्गविधानसिद्धये कोटसाधननिष्पत्त्यै स्यात् ॥ उक्तं च 'कृत्तिकाद्यं मघाद्यं च मैत्राद्यं वासवादिकं ॥ त्रीणि त्रीणि प्रवेशे च द्वादशान्यानि निर्गमे' इति ॥ १० ॥

शालोदितं शालनिवेशगं वरं भमुक्तमार्यैरहिता बहिः खलाः ॥
आरंभणे मंगलमंदमध्ययुग्दुर्गस्य भंगाय विचिंत्यमित्यनु ॥ ११ ॥

अथ शालचक्रगतनक्षत्रादिफलं दर्शयति—शालोदितमिति ॥ आर्यैराचार्यैः शालोदितं वप्रयोग्यकथितं शालनिवेशगं प्राकारप्रवेशगतभं नक्षत्रं वरं श्रेष्ठमुक्तं प्रोक्तं पुनर्बहिः खला-बाह्यस्थाः क्रूराः ग्रहा अहिता नेष्टाः आरंभणे वप्रारंभे पुनर्मंगलमंमध्ययुक् भौमशनियुः क्तमध्यदुर्गभं दुर्गस्य वप्रस्य भंगाय विचिंत्यं ज्ञातव्यं अनुपश्चादिति ॥११॥

आरंभखाते यदि मंगलो यमो ह्यमंगलायेह यमो भवेदयं ॥
एवं पुरे स्यात्पुरनामधिष्ण्यतो विलोकनीया पुरधिष्ण्यशुद्धिता ॥१२

अथात्र खातगतभौमादिफलं दर्शयति—आरंभेति ॥ खाते आरंभ इति आरंभखातः तस्मिन् यदि चेत् मंगलो भौमोऽस्ति तदा सोऽमंगलाय दोषाय स्यात् । इह खाते यदि यमः शनिर्भवेत्तदायं यमो भवेत् यमतुल्यत्वान्मृत्युदः स्यादित्यर्थः। हि युक्तार्थे एवं पूर्वोक्तप्रकारेण पुरे पुरनामधिष्ण्यतो नगरनामनक्षत्रात्पुरधिष्ण्यशुद्धिता नगरनक्षत्रस्य निर्दोषता विलोकनीया ॥१२

* आकृति नंबर. १६।२७

**प्रवेशने मानवकीर्णमध्यकं दुर्गं सदा स्तंभितभे च दुर्गमं ॥**
**शून्यं तदारंभविधौ विनिर्गमे निवृत्तिवृत्तं नृनिविष्टनस्थले ॥ १३ ॥**

अथ प्रवेशादिगतभेषु शालफलमाह—**प्रवेशन इति** ॥ तदारंभविधौ दुर्गप्रारंभणकार्ये प्रवेशने प्रवेशस्थाने भे सति मानवकीर्णमध्यकं मनुष्यपूर्णमध्यभागमेवंविधं सदा दुर्गं स्यात् । च पुनः स्तंभितभे स्तंभनक्षत्रे दुर्गं दुर्गमं स्यात् । पुनर्विनिर्गमे भे दुर्गं शून्यं स्यात् ॥ पुनर्नृनिविष्टनःस्थले दुर्गं निवृत्तिवृत्तमुपरामवृत्तं स्यात् सुखयुक्तमित्यर्थः ॥ १३ ॥

**परिभ्रमोऽसौ समयैकयैकः फणीश्वरस्यापि रसातले स्यात् ॥**
**लांगूलगत्या परिवाममार्गे रौद्र्या दिशो गोरमुखभत्रयेंऽशौ ॥१४॥**

अथात्र सर्पपरिभ्रमणमाह—**परिभ्रमेति** ॥ रसातले भूतले परिवाममार्गे फणीश्वरस्य शेषनागस्यापि असौ एकया समया एकवर्षेण एकः संपूर्णः परिभ्रमः स्यादित्यर्थः॥कुतो लांगूलगत्या पुच्छगमनेन रौद्र्या दिश ईशानकोणात् गोमुखभत्रये वृषादिराशित्रयेंऽशौ सूर्ये सति ॥ १४॥

**यदा फणैश्यामुदरं च वाय्व्यां लूनं तदा यातुहरित्यहेः स्यात् ॥**
**पृदाकुशून्याग्निककुप् च खातं गदंति दर्वीकरशून्यकोणे ॥१५॥**

अथाहिचक्रे खातं दर्शयति—**यदेति** ॥ यदा ऐश्यामीशानकोणेऽहेः सर्पस्य फणा स्यात् फणाशब्दः पुंस्त्रीलिंगः च पुनर्यदा वाय्व्यां वायुकोणेऽहेरुदरं स्यात् पुनर्यदा यातुहरिति नैर्ऋत्यकोणेऽहेर्लूनं पुच्छं स्यात्तदा पृदाकुशून्या सर्परहिताऽग्निककुप् अग्निदिक् स्यात्। 'काकोदरो विषधरः फणभृत्पृदाकुदृक्कर्णकुंडलिबिलेशयदंदशूकाः' इति हैमः । च पुनस्तदा सुधियो दर्वीकरशून्यकोणे सर्पवर्जितकोणे खातं गदंति वदंति ॥ १५ ॥

**एवं भचक्रभ्रमरीतिगत्या भ्रमोऽयमुक्तो मुनिभिः प्रधानैः ॥**
**ईशानतो दक्षिणभागगत्या संतर्कयंति भ्रममस्य जैनाः ॥ १६ ॥**

अथाहिभ्रमे जैनमतं दर्शयति—**एवमिति** ॥पुराणैः पुरातनैर्मुनिभिर्ऋषिभिरयं भ्रम उक्तः कथं एवममुना प्रकारेणाग्निकोणतो वाममार्गेण भचक्रभ्रमरीतिगत्या नक्षत्रचक्रभ्रमरीतिगमनेनेति पुनर्जैनाः श्वेतांबरादयोऽस्य सर्पस्य भ्रमं संतर्कयंति कथयंतीत्यर्थः कया ईशानतो दक्षिणभागगत्या ॥ १६ ॥

**दुर्गे पुरे चौकसि मंडपे हरेः प्रपामठागारकयोः शदिक्तिभेः ॥**
**वेद्यादि सर्वत्र फटेति गोत्रयं जगाद वादाय नु जैनदर्शनम् ॥१७॥**

अथाहिभ्रमे जैनमतविवेकं दर्शयति—**दुर्ग इति** ॥ नु वितर्के जैनदर्शनमिति वादाय जगाद इतीति किं दुर्गे वप्रे पुरे नगरे ओकसि गृहे मंडपे च हरेः सिंहराशितस्त्रयं शदिक् शस्य ईश्वरस्य दिक् यस्याः सा फटा फणा स्यात् ॥ सिंहादिराशित्रये ईशानकोणे सर्पमुखमित्यर्थः॥ एवं

आकृति नं. २८ आकृति नं. २९ आकृति नं. ३०

प्रपामरागारकयोः पानीयशाला देवालयस्तयोर्विषये तिमेर्मीनात् त्रयं शदिक् फणा स्यात् ।
एवं वेद्यादि सर्वत्र स्थाने गोर्वृषात् त्रयं शदिक् फणा स्यात् ॥ १७ ॥

**यदैककाले निखिलावटक्रिया स्याद्दंदशूकभ्रमणैकता तदा ॥**
**भुजंगशून्यं घटतेऽवटं सदा प्रमाणतोऽत्रेति न तन्मतं धृतम् ॥१८॥**

अथ जैनमतं स्वयं नांगीकरोति—यदैकेति ॥ यदा दंदशूकभ्रमणैकता सर्पभ्रमैक्यं स्यात्तदा एककाले निखिलावटक्रिया समस्ता खातक्रिया स्यात्॥ अत्र खाते सदा प्रमाणतो भुजंगशून्यं खातं वरं घटते हि युक्तार्थे इति हेतोस्तन्मतं जैनमतं कृतं सत्यं न स्यात् स्वयं नांगीकृतमित्यर्थः ॥ १८ ॥

**भोगानुगं मंदिरखातमादृतं कुतार्किकः कश्चिदुवाच वेत्यपि ॥**
**निर्ग्रंथपक्षादृतदंभवानसौ वदत्यवेक्ष्येति कुलादिकं हरेः ॥ १९ ॥**

अथ पुनः कस्यचिन्मतं दूषयति—भोगेति ॥ वा इति पक्षांतरे भोगानुगं सर्पकायगतं मंदिरखातमादृतं श्रेष्ठं स्यादित्यपि कश्चित् कुतार्किको दुष्टविचारी उवाच असौ कुतार्किक इति पूर्वोक्तं हरेः सिंहराशितः कुलादिकं गृहादिकमवेक्ष्य विलोक्य वदति किंभूतोऽसौ निर्ग्रंथपक्षादृतदंभवान् वेषधारितोंऽगीकृतकपटवान् 'निर्ग्रंथो निःस्वमूर्खयोः श्रवणे' इति हैमः ॥ १९ ॥

**समीरमार्गाष्टपदांशपेटके चरत्यहिर्वासनयारमंदगः ॥**
**इत्याह कश्चित्किल वास्तुशास्त्रविन्न तेन दृष्टं भ्रमणं तु दृक्श्रुतेः॥२०॥**

अथाहिचक्रेऽष्टपदचक्रं वास्तुशास्त्रोदितं दूषयति—समीरेति ॥ किलेत्यलीके समीरमार्गे व्योम्नि अष्टपदांशपेटकेऽष्टचरणभागचक्रेऽहिः सर्पश्चरति गच्छति कस्मिन् खलांतरे पापग्रहविचाले कया वासनया निषेधान्वये वासनयेति पदप्रयोगः 'वासना भावना संस्कार' इति हैमः । इति कश्चिदाह ब्रूते किंभूतः कश्चित् वास्तुशास्त्रवित् गेहभूशास्त्रज्ञः तेन केनचित् दृक्श्रुतेः सर्पस्य भ्रमणं न दृष्टं ॥ २० ॥

**चतुर्भुजांघ्रिस्तु चतुर्भुजेषु रौद्र्यादिकेष्वत्र फणास्थितिः स्यात् ॥**
**इति प्रमाणं प्रकटं प्रवीणैरुदीरितं वासनया पुराणैः ॥ २१ ॥**

अथ ऋषिमतचक्रमाश्रित्य स्वमतं द्रढयति—चतुर्भुजेति ॥ अत्र व्योम्नि चतुर्भुजांघ्रिः चत्वारो भुजा हस्ता अंघ्रयः पादाश्च यस्याः सा एवंविधा स्थितिः स्यात् । केषु रौद्र्यादिषु ईशानकोणादिषु च पुनश्चतुर्भुजेषु त्रिराशिप्रमिते भचक्रे चत्वारो भुजा एषु तेषु इत्यर्थः । इति प्रकारेण पुराणैः पुरातनैः प्रवीणैः पंडितैः प्रकटं प्रमाणमुदीरितं प्रोक्तं ॥ २१ ॥

**उक्तेषु भेष्वाहुरधोमुखैः क्षणैः कोणे किलाशीविषवर्जितेऽवटं ।**
**चरोदये भूषणभाजि कोविद स्तारानुदास्यैस्तनुयादिह क्षणैः ॥२२॥**

आकृति नं. ३१

अथ खातकरणशुद्धिमाह—उक्तेष्विति॥ किलेत्यवधारणे कोविदाः पण्डिता आशीविषवर्जिते कोणेऽवटखातमाहुः कथयंति केषु उक्तेषु शालकर्मोक्तेषु भेषु पुनः कैरधोमुखैः क्षणैरधोमुखनक्षत्रक्षणैः पुनः कस्मिन् चरोदये चरलग्ने किंभूते चरोदये भूषणभाजि शुभयोगाश्रिते सुधीरिह उक्तेषु भेषु स्तंभान् तनुयात् आरोपयेत् कैरुदास्यैः क्षणैरूर्ध्वमुखनक्षत्रमुहूर्तैः॥२२॥

**आयव्ययांशादिबले बलेंदिरा दुर्गे पुरे सद्मनि वेदिकादिषु ॥**
**भवोदतोऽयं तदुपक्रमोऽधुना यद्वास्तुशास्त्रोदितरीतिरुच्यते ॥२३॥**

अथायव्ययांशादिबलं वर्णयन् वास्तुशास्त्रोदितं संदधाति—आयेति ॥ दुर्गे पुरे सद्मनि-वेदिकादिषु विषये आयव्ययांशादिबले सति इंदिरा लक्ष्मीर्बला बलिष्ठा भवेत् । तत्तस्मात्कारणादयमुपक्रमः प्रारंभः क्रियते यद्वास्तुशास्त्रोदितरीतिरुच्यते स्पष्टं ॥ २३ ॥

**क्षेत्रे भवेत्क्षेत्रफलं चतुर्भुजे तत्कोटिदोराहतिरेवमायते ॥**
**त्र्यस्रेऽपि दोःकोटिहतेर्दलं फलं दोःकोटिलंबैर्विषमे च कल्पितम्॥२४॥**

अथ क्षेत्रफलं साधयति—क्षेत्रे इति ॥ चतुर्भुजे चतुरस्रे क्षेत्रफलं क्षेत्रमानं भवेत् । आयते दीर्घे क्षेत्रे कोटिदोषयोः कोटिभुजयोराहतिर्हननं गुणनमेव क्षेत्रफलं स्यात् । अपि पुन त्र्यस्रे त्रिकोणे क्षेत्रे दोःकोटिहतेर्भुजकोट्योर्हतिर्गुणना तस्या दलमर्धं तत् फलं क्षेत्रमानं स्यात् । पुनर्विषमे क्षेत्रे दोःकोटिलंबैर्भुजकोटिलंबनैः क्षेत्रफलं कल्पितं ॥ २४ ॥

**विष्कंभपादे परिणाहनिघ्ने वृत्ते सदा क्षेत्रफलं च चापे ॥**
**वृत्तार्द्धवत्स्यादिह वृत्तमध्यं वृत्तात्रिभागोऽनियतं यदन्यत् ॥ २५ ॥**

विष्कंभेति—वृत्ते वर्तुलक्षेत्रे परिणाहनिघ्ने परिधिगुणिते सति विष्कंभपादे विस्तृतितुर्यांशे क्षेत्रफलं स्यात् । यदुक्तं लीलावत्यां 'वृत्तक्षेत्रे परिधिगुणितव्यासपादः फलं स्यात्' इति । च पुनश्चापे धनुराकारक्षेत्रे वृत्तार्द्धवत् वर्तुलक्षेत्रार्धतुल्यप्रमाणं स्यात् । वृत्तत्रिभागः वर्तुलत्र्यंशो वृत्तमध्यं स्यात् । यदन्यदुक्तक्षेत्रेभ्यो विपरीतमस्ति तत्क्षेत्रमनियतं नियामकरहितं स्यात् । इह दुर्गादिके सर्वत्र योज्यं ॥ २५ ॥

**षडक्षतै राजमिहांगुलं भवेत्सप्ताक्षतैर्वैष्णवमैशमंगुलं॥**
**यवोदरैरष्टभिरत्र तत्करो जिनांगुलै२४स्तैश्च धनुश्चतुःकरम्॥२६॥**

अथ ब्रह्मादीनामंगुलादिमानं दर्शयति—षडक्षतैरिति ॥ इह प्रासादादिमाने षडक्षतैः षड्यवैः आजं अजस्येदं ब्राम्हमंगुलं भवेत् । सप्ताक्षतैः सप्तयवैर्वैष्णवं विष्णोरिदं कार्ष्ण्यमंगुलं भवेत् । अत्र प्रमाणे तैर्जिनांगुलैश्चतुर्विंशतिमितैस्तत्करस्तेषां करः कोऽर्थः अजांगुलैरजकरः कृष्णांगुलैः कृष्णकर ईशांगुलैरीशकरः स्यात् च पुनश्चतुःकरं धनुः स्यात् ॥२६॥

**प्रासादकुंडादिकपीठवेदिकाद्विजालयेषु स्मृतमाजमंगुलं ॥**
**जलाशयारामविधौ नृपालये निधौ हितं वैष्णवमन्यदन्यगम्॥२७**

अथाजांगुलादीनां ग्राह्यस्थानानि दर्शयति—प्रासादेति ॥ प्रासादो देवालयः कुंडादिकं वेदिका द्विजालयो विप्रगृहं एषां द्वंद्वे एषु आजं ब्रह्मसंबंधि अंगुलं हितं शुभं स्यात् । जलाशयस्तटाकादिः आराम अनयोर्विधौ कार्ये नृपालये राजगृहे निधौ निधाने वैष्णवं विष्णुसंबंधि अंगुलं हितं स्यात् । अन्यत् रौद्रांगुलं अन्यगं क्षेत्रकोष्ठादिके हितं स्यात् ॥ २७ ॥

**ध्वजधूम्रहरिश्वगोखरा द्विरदो ध्वांक्ष इहायकाः क्रमात् ॥**
**ननु चापकरांगुलोन्मिता गदिता मंडलशालधामसु ॥ २८ ॥**

अथ वैतालीयेनात्राष्टौ आयकानाह—ध्वजेति॥ ननु निश्चितं मंडलशालधामसुव सुधेशवप्रगृहेषु इह क्रमात् ध्वजादय आयका गदिताः प्रोक्ताः । ध्वजः १ धूम्रः २ हरिः सिंहः ३ श्वा श्वानः ४ गो वृषः ५ खरो रासभः ६ द्विरदो गजः ७ ध्वांक्षः काकः ८ इति किंभूता एते चापकरांगुलोन्मिताः धनुर्हस्तांगुलप्रमिताः ॥ २८ ॥

**ध्वजपूर्व इहायुरष्टभिर्विहृते क्षेत्रफले समोऽशुभः ॥**
**निखिलासु हरित्स्वलं ध्वजो व्यपराशासु च केसरी वरः ॥२९॥**

अथ यानां ग्राह्यस्थानान्याह— ध्वज इति ॥ इह शालादौ अष्टभिर्विहृते क्षेत्रफले सति ध्वजपूर्वो ध्वजप्रमुख आयः समः समसंख्याक अशुभः स्यात् । अलमित्यवधृतौ निखिलासु हरित्सु दिक्षु ध्वज आयो वरः श्रेष्ठः स्यात् । च पुनर्व्यपराशासु पश्चिमदिशं विना सर्वदिक्षु केसरी सिंहो वरः श्रेष्ठः स्यात् ॥ २९ ॥

**करिजोऽनकदिङ्मुखे शुभोऽनु च सुत्रामदिगानने वृषः ॥**
**ध्वजसिंहगजर्षभा हिताः क्षितिदेवाननजातिषु क्रमात् ॥ ३० ॥**

करिज इति ॥ अंतकदिङ्मुखे करिजो गजायः शुभः स्यात । अनु पश्चाच्च पुनः सुत्रामदिगानने इंद्रदिङ्मुखे वृषः शुभः स्यात् । क्षितिदेवाननजातिषु विप्रप्रमुखजातिषु ध्वजसिंहगजर्षभा हिताः शुभाः स्युः क्रमात्क्रमेण ॥ ३० ॥

**इह ये खलसत्वजीविनो मनुजास्तच्छरणादिकर्मणि ॥**
**खलसत्वगमायुरुत्तमं गदितं गाणितिकैरसंशयम् ॥ ३१ ॥**

इहेति—ये खलसत्वजीविनः क्रूरप्राणिजीविनो मनुजा अंत्यजाः संति असंशयं निश्चितं तच्छरणादिकर्मणि तेषां चांडालानां गृहादिकार्ये गाणितिकैर्ज्योतिर्विद्भिः खलसत्वगमायुः क्रूरजीवाभिधानं आयुः उत्तमं गदितं प्रोक्तं । अत्र आयशब्दस्य आयुष इति पर्यायोऽभिहितः ॥ ३१ ॥

**द्विरदैर्गुणिते फले हृते त्रिघनेनो२७र्वरितं भमुच्यते ॥**
**भगणेऽष्टहृते व्ययस्थलं व्ययहीनं त्वधिकायमुत्तमम् ॥ ३२ ॥**

अथ वास्तुनक्षत्रादिज्ञानं साधयति - द्विघ्नेति ॥ फले क्षेत्रफले द्विघ्ने वसुभिरष्टभिर्गुणिते पुनस्त्रि-
घनेन हृते सप्तविंशतिभाजिते यत् उर्वरितं शेषं तत् भं वास्तुनक्षत्रमुच्यते । सप्तविंशतिभाजिते
यल्लब्धफलं तद्भगणसंज्ञं तस्मिन् भगणेऽष्टहृतेऽष्टाभिर्भाजिते यच्छेषं तत् व्ययः व्ययसंज्ञं
स्यात् । तु पुनर्यत्र वास्तुनि व्ययहीनं व्ययस्वल्पता अधिकायं आयाधिकं एवं यत् स्थलं
तदुत्तमं ॥ ३२ ॥

व्ययान्विते क्षेत्रफले समन्विते ध्रुवादिवर्णैस्त्रिहृतेंऽशका गृहे ॥
हर्यंतकोर्वीपतयो यमोऽशुभःस्वनामवर्णैस्तु परत्र कीर्तिताः ॥३३॥

अथक्षेत्रफलादिभिरंशकान् साधयति—व्ययान्वित इति ॥ क्षेत्रफले व्ययान्विते व्यययुक्ते
पुनः क्षेत्रफले ध्रुवादिवर्णैर्ध्रुवादिषोडशगृहनामाक्षरैश्च समन्विते युक्ते पुनः क्षेत्रफले त्रिहृते
त्रिभिर्भाजिते सति गृहे हर्यंतकोर्वीपतयः इंद्रः यमः राजा अंशका इति संज्ञाः कीर्तिताः एषु
यमोंऽशकोऽशुभः स्यात् । तु पुनः स्वनामवर्णैर्निजनामतुल्यैरेते कीर्तिताः कस्मिन् परत्र पर-
स्मिन् कोऽर्थः सर्वे स्वनामतुल्यफलदा इत्यर्थः ॥ ३३ ॥

सिंहायुरिष्टोऽचलमौलिशाले शाले गजायोऽम्बुवृतौ व्ययोने ॥
ककुद्मदायोऽवनिगह्वरस्थे ध्वजो हि सर्वत्र यथाव्ययःस्यात् ॥ ३४ ॥

अथ पर्वतप्राकारादिषु आययोग्यतामाह—सिंहायुरिति ॥ व्ययेन ऊने हीने व्ययोने
व्ययस्वल्पतायां सत्यामिति सर्वत्र योज्यं अचलमौलिशाले पर्वतमूर्ध्नि प्राकारे सिंहायु इष्टः
स्यात् । आयुःशब्द उकारांतोऽपि शब्दप्रभेदे ॥ अंबुवृतौ जलवेष्टितशाले गजाय इष्टः शुभः
स्यात् । अवनिगह्वरस्थे भूमिस्थे शाले ककुद्मदायो वृषभाय इष्टः स्यात्। 'उक्षानड्वान् ककुद्मान्
गौः' इति हैमः । हि युक्तार्थे सर्वत्र ध्वज इष्टः स्यात् किंभूतो यथाव्ययः
व्ययस्वल्पतेत्यर्थः ॥ ३४ ॥

प्राकारपूर्गेहकभर्तृतारयोः सभाजनं दोर्ग्रहवद्विलोकयेत् ॥
निजोदितेऽनेहसि शस्त्रयंत्रकैः प्रपूरितःपूरितश्री हि शालकः॥३५

अथ वप्रादिनक्षत्रकर्तृनक्षत्रमेलापकेन शालपूरणमाह—प्राकारेति ॥ सुधीः प्राकारो वप्रः पूः
नगरी गेहं एषां भं नक्षत्रं कर्तृतारा तत्कारकपुरुषस्य नक्षत्रं एतयोः सभाजनं परस्परं सख्यलक्षणं
विलोकयेत् किंवत् दोर्गृहवत् पाणिग्रहणतुल्या मैत्री कस्मिन् निजोदिते प्राकारादिषु उक्तेऽ-
नेहसि काले हि युक्तार्थे शस्त्रयंत्रकैः खड्गादिपाषाणादियंत्रकैः प्रपूरितः सन् शालकः प्रा-
कारः पूरितश्रीः स्यात् पूरिता श्री लक्ष्मीर्यस्मिन्निति लक्ष्मीपूर्णदुर्ग इत्यर्थः ॥ ३५ ॥

समीरसुत्रामभदेवमूड्डाभिर्मृदूडुभिः क्षिप्रयुतैः सुकंटके ॥
विदारमंदान्यदिनेषु सत्तिथौ स्थिरोदये संघटयेत्प्रतोलिकाम् ॥ ३६ ॥

अथ प्रतोलिकाकरणशुद्धिमाह—समीरेति ॥ सुधीः प्रतोलिकां संघटयेत् कारयेत्
कैः समीरः स्वाती सुत्रामभं ज्येष्ठा देवमूड्ड पुनर्वसु एषां द्वंद्वे एभिः पुनः कैर्मृदूडुभिः

किंभूतैः क्षिप्रयुतैः चरनक्षत्रयुक्तैः पुनः कस्मिन् स्थिरोदये स्थिरलग्ने किंभूते सुकंटके शुभ-ग्रहयुक्तकेंद्रे पुनः केषु विदारमंदान्यदिनेषु बुधो भौमः शनिरेतान् विहाय अन्यग्रहदिनेषु पुनः कस्मिन् सत्तिथौ ॥ ३६ ॥

**विकर्तनाक्रांतभतो द्विपार्श्वगं तन्मौलितो दिक्षु चतुष्टयं न्यसेत् ॥**
**द्वयं विदिक्षु त्रयमंतरे क्रमादधो विदिक्स्थं न शुभं भमंडलम् ॥३७॥***

प्रतोलिकाचक्रे नक्षत्रस्थापनं तत्फलं च दर्शयति—विकर्तनेति ॥ सुधीर्विकर्तनाक्रांतभतः सूर्यसंक्रमणनक्षत्रात्तन्मौलितः प्रतोलीमस्तकात् द्विपार्श्वगं दिक्षु चतुष्टयं विदिक्षु द्वयं अंतरे विचाले त्रयं क्रमात् न्यसेत् स्थापयेत् । कोऽर्थः प्रतोलीमस्तकात् सव्यापसव्यद्वि-मार्गतश्चतुर्षु दिक्षु चत्वारि२ नक्षत्राणि इति षोडश देयानि चतुर्षु विदिक्षु द्वयं द्वयं अष्टौ इति देयानि मध्ये त्रयं देयमिति सप्तविंशतिभानि देयानि । प्रतोल्या अधो विदिक्स्थं अधोगतं विदिक्स्थितं भमंडलं न शुभं स्यात् ॥ ३७ ॥

**प्राकारदेवायतनाननेऽसौ क्रमो भचक्रभ्रमणस्य चिंत्यः ॥**
**सदैव पार्श्वभ्रमरीतिभेदो गृहादिकद्वार्युदितैश्च भागैः ॥ ३८ ॥**

अथ भचक्रस्य भेदं दर्शयति—प्राकारे ति ॥ प्राकारदेवायतनानने दुर्गदेवालयद्वारेऽसौ भचक्र-भ्रमणस्य क्रमश्चिंत्यः स्यात् कैरुदितैर्भागैः प्रोक्तभागैश्च पुनर्गृहादिकद्वारि पार्श्वतो भचक्रभ्रमणेन भेदश्चिंत्यः स्यात्स निरंतरम् ॥ ३८ ॥

**वशादिभाज्जिष्णुदिशोंऽशुमालिनि त्रये त्रये दिक्ष्वपि वत्ससंस्थितिः ॥**
**वत्से पुरोगे विशिखा च पृष्ठगे ज्वालानिवेशे न हिता भवेदिह॥३९॥***

अथ दिग्वत्सचक्रं दर्शयति—वशेति ॥ वशादिभात् कन्यादिराशितस्त्रये त्रये राशित्रिके त्रिकेंऽशुमालिनि सूर्ये सति जिष्णुदिशः पूर्वतो दिक्षु अपि निश्चितं वत्ससंस्थितिः स्यात् । इह दुर्गे विशिखा प्रतोलिका हिता शुभा न भवेत् कस्मिन् पुरोगेऽग्रगे च वत्से सति किंभूते वत्से ज्वालायाः ज्वालासंज्ञादिशस्तस्या निवेशः प्रवेशो यस्मिन् सः ॥ ३९ ॥

**विधुंतुदे नैव विधौ च संमुखे रथ्याकृतिर्वैकृतिदायिनी भवेत् ॥**
**अदुर्गपुर्या भतमोऽब्जवत्सजां शुद्धिं विना निस्सरणं समादृतम् ॥४०॥**

अथ प्रतोलीकरणे सन्मुखं राहुं चंद्रं च त्यजन्नाह—विधुंतुद इति॥ अत्रैव दुर्गे विधुंतुदे राहौ विधौ चंद्रे च सन्मुखे सति रथ्याकृतिः प्रतोलीकर्म विकृतदायिनी विरूपकारिणी भवेत् 'रथ्या प्रतोली विशिखा समा' इति हैमः। अदुर्गपुर्या दुर्गरहितस्य नगरस्य निस्सरणं मुखं समादृत-मंगीकृतं कां विना भं नक्षत्रं तमो राहुः अब्जश्चंद्रः वत्स एभ्यो जातां शुद्धिं विना निस्सरणं 'मृतौ उपाये गेहादिमुखे' इति हैमः । येन गृहादिषु प्रविश्यते निर्गम्यते तन्निस्सरणं ॥४०॥

---

* आकृति नं. ३२।३३

उदीरितायव्ययतारकाबलो नभोगशुद्धिः स्मृतनीतिसाज्जितः ॥
समुक्तकालादृतसर्वसत्क्रियो विराजते मंडलशासिता स यः॥४१॥

अथ निर्दोषकृतं शालं वर्णयति—उदीरितेति॥ यः शालो वर्तते किंभूतः शालो उदीरिताः प्रोक्ता आयव्ययतारकास्तासां बलं यस्मिन्सः पुनः किंभूतः शालः नभोगानां ग्रहाणां शुद्धिर्निर्दोषता यस्मिन्सः पुनः किंभूतः शालः स्मृता प्रोक्ता या नीतिस्तया साज्जितो निर्मितः पुनः किंभूतः शालः समुक्तः सम्यक् प्रकारेण प्रोक्तो यः कालस्तेन आदृता अंगीकृता सर्वा सत्क्रिया यस्मिन् स इति स शालो मंडलशासिता देशरक्षाकरः सन् विराजिते ॥ ४१ ॥

अरातिमत्तेभनिकायकुंभदो निराग्रहः शस्त्रनखोपघातकृत ॥
निःशाणनादोऽचलमौलिशालको दधात्यसौ केसरिपौरुषश्रियम् ॥ ४२

अथ शैलस्थशालस्य सिंहोपमानं दर्शयति—अरातीति ॥ असौ अचलमौलिशालकः पर्वतशृंगदुर्गः केसरिपौरुषश्रियं सिंहविक्रमशोभां दधाति बिभर्ति किंभूतोऽसौ अरातयः शात्रवा एव मत्तेभा मदगर्भितकुंभिनस्तेषां निकायः समूहस्तस्य कुंभं कुंभस्थलं द्यति खंडयति इति पुनः किंभूतो निराग्रहः निर्गत आग्रहो ग्रहणं यस्य सः पुनः किंभूतः शस्त्राण्येव नखास्तैरुपघातकृत् विनाशकारकः पुनः किंभूतो निःशाणानां नादाः शब्दा यस्मिन्सः सिंहोऽप्येवंविध स्यात् ॥ ४२ ॥

विरोधिवीरद्रुमसंघभंगो गंभीरभेरीध्वनिघोरघोषः ॥
असह्यपार्श्वः परिवारिशालो वहत्यसौ मत्तगजेंद्रलीलाम् ॥ ४३ ॥

अथ जलवेष्टितशालं हस्तितुल्यं वर्णयति—विरोधीति ॥ असौ परिवारिशालः सर्वतो जलवेष्टितदुर्गो मत्तगजेंद्रलीलां वहति दधाति किंभूतोऽसौ विरोधिवीराः शत्रुसुभटा एव द्रुमा वृक्षास्तेषां संगः संगमस्तस्य भंग उन्मूलनं यस्मात् सः पुनः किंभूतो गंभीरभेरीध्वनिभिर्घोर उत्कटो घोषो यस्मिन् सः पुनः किंभूतः असह्यः सोढुं अशक्यं पार्श्वं सामीप्यं यस्य स इत्येवंविधः स्यात् ॥ ४३ ॥

दूराभियातीन्प्रति संक्षतक्षमः पलायनं वांछति वेष्टितोऽवनौ ॥
सुखग्रहाधूतपुरोऽतिगर्जितो दुर्गो वशी स्यात्सगुणो गुणग्रहः ॥ ४४ ॥

अथ भूमिशालं श्वानतुल्यं वर्णयति—दूरेति॥ अवनौ दुर्गोऽतिगर्जितः शब्दायमानः श्वगुणः शुनः श्वानस्य गुण इव गुणो यस्य स श्वानतुल्यः स्यात्। किंभूतो दूराभियातीन् दूररिपून् प्रति संक्षतक्षमः सम्यक् प्रकारेण त्राणाय क्षमः समर्थः। पुनःकिंभूतो वेष्टितः सन् दुर्गः पलायनं वांछति आधारे आधेयोपचारात् तत्रस्थजनः। पुनः किंभूतो सुखग्रहाधूतपुरः सुखस्य निस्सरणस्य ग्रहो ग्रहणं तेन आधूतं कंपितं पुरं नगरं अग्रभागो वा यस्य सः। पुनः किंभूतः गुणग्रहः गुणेन भेदेन ग्रहो ग्रहणं यस्य सः 'कार्यैकदेशे गुणो भेदे' इत्यनेकार्थी हैमः। अतएव किंभूतो वशी स्वायत्तः श्वाप्येवंविधो गुणेन रज्ज्वा बद्धः सन् वशी स्यात् ॥ ४४ ॥

पार्श्वश्रितामित्रविघातसत्वो भीमाननः काहलवाद्यनादः ॥
अंतर्बहिर्धावनवल्गनौजाः स्यात्पुंडरीकप्रतिमोऽन्यदुर्गः ॥ ४५ ॥

अथ गव्हरशालं व्याघ्रतुल्यं वर्णयति—पार्श्वेति ॥ अन्यदुर्गो गव्हरशालः पुंडरीकप्रतिमो व्याघ्रसदृशः स्यात् 'व्याघ्रो द्वीपी पुंडरीकः' इति हलायुधः ॥ पार्श्वाश्रिताः समीपस्था येऽमित्राः शत्रवस्तेषां विघाताय हननाय सत्वं बलं यस्य सः । पुनः किंभूतो भीमाननः भयानकमुखः पुनः किंभूतः काहलवाद्यनादः स्पष्टं पुनः किंभूतः अंतर्बहिर्मध्ये बाह्ये धावने शीघ्रगमने वल्गने उत्पतने ओजो बलं यस्य सः अंतर्बहिर्धावनवल्गनौजा इति ॥ ४५ ॥

अनेकशाला भुवि संति दुर्गमा ये भूरिवीराः स्फुरदस्त्रसंकुलाः ॥
स्वार्यप्रतापोज्ज्वलिता नतीकृताः श्रीविक्रमार्कक्षितिपेन पालिताः ॥ ४६ ॥

अथ दुर्गग्रहणेन श्रीविक्रमार्के बलं वर्णयति—अनेकेति ॥ येऽनेकदुर्गा दुर्गमा गृहीतुमशक्या भुवि पृथिव्यां संति किंभूता ये भूरिवीरैर्बहुसुभटैः स्फुरदस्त्रैरुत्तेजितशस्त्रैः संकुला व्याप्ताः श्रीविक्रमार्कक्षितिपेन ते दुर्गाः पूर्वं नतीकृता नम्रीकृताः पश्चात् पालिताः सेवकभावेन रक्षिताः किंभूतास्ते स्वार्यः स्वस्य अर्यः स्वामी श्रीविक्रमार्कस्तस्य शुभः प्रतापस्तेन उज्ज्वलिता मानमलरहितीकृताः ॥ ४६ ॥

दुर्गारंभस्य योऽनेहाः प्रोदितोऽसौ मयाधुना ॥
दुर्गमध्यपुरारंभे ग्राह्यो भूमिभुजादरात् ॥ ४७ ॥

अथ कालशुद्ध्युपसंहारमाह—दुर्गेति ॥ मया योऽसौ दुर्गारंभस्यानेहाः कालः प्रोदितो गदितः सोऽधुना कालो भूमिभुजादरात् आग्रहात् ग्राह्यः कस्मिन् दुर्गमध्यपुरारंभे वप्रस्य मध्यनगरारंभणे ॥ ४७ ॥

अशालनगरारंभे गदितः कालनिर्णयः ॥
विशेषो यस्तमेवाहं ब्रवीमि सदृषीरितम् ॥ ४८ ॥

अथ स्वागतया पुरेऽनुक्तशुद्धिं दर्शयन्नाह—अशालेति ॥ अशालनगरारंभे प्राकाररहितनगरप्रारंभणे कालनिर्णयो गदितः प्रोक्तः पुनर्यः काले विशेषोऽस्ति अहं तमेव कालं ब्रवीमि किंभूतं सदृषीरितं शुभऋषिप्रोक्तं ॥ ४८ ॥

जितम३गोरमृग१०घट११ज१भसंस्थे वासयेत्पुरमशीतलकेतौ ॥
पौषषट्कवति वाश्विनमार्गादित्यजूक७शिलीमुख८योगे ॥ ४९ ॥

अथ संक्रांत्यादिशुद्धौ पुरवासमाह—जित्मेति ॥ सुधीः पुरं वासयेत् कस्मिन् जित्मं मिथुनं गौर्वृषः मृगो मकरः घटः कुंभः अजो मेषः एषु राशिषु संस्थेऽशीतलकेतौ उष्णधाम्नि सूर्ये किंभूते सूर्ये पौषषट्कवति पौषादिषण्मासयुक्ते वाऽथवा आश्विनेति आश्विने मासे मार्गमासे आदित्यजूकमाशिलीमुखयोगे सूर्यतुलासंक्रमणवृश्चिकसंक्रमणयोगे ॥ ४९ ॥

लेय५गेऽमरपुरोधसि मौढ्ये वक्रगे पतितमास्यधिके वा ॥
हारिपूरचनमास्फुजितोऽस्ते क्षीणचंद्रमसि नो पुरकर्तुः ॥ ५० ॥

अथ गुर्वादिदोषे पुरारंभं निषेधति—लेयेति ॥ पुरकर्तुः नगरकारकस्य पूरचनं नगरकरणं हारि शुभं नो स्यात् कस्मिन् लेयगे सिंहराशौ अमरपुरोधसि गुरौ पुनर्मौढ्येऽस्तंगते वक्रगते सति च पुनःपतितमासि क्षीणमासेऽधिकमासे च पुनरास्फुजितोऽस्ते शुक्रास्ते पुनः क्षीणचंद्रमसि क्षीणचंद्रे ॥ ५० ॥

दुष्टयोगहरहृज्जनिरिक्ता४।९।१४मंदमंगलबुधाः स्युरभीष्टाः ॥
उग्रमिश्रकभदारुणतारा नैव संवसथसाधनकाले ॥ ५१ ॥

अथ ग्रामकरणशुद्धिमाह—दुष्टेति ॥ संवसथसाधनकाले ग्रामकरणकाले एते नैवाभीष्टा नो शुभाः स्युस्तानाह दुष्टयोगा हरस्य हृदि हृदये जनिर्जन्म यस्याः सा विष्टिः रिक्तास्तिथयः ४।९।१४।मंदः शनिः मंगलः बुधः एषां द्वंद्वे उग्रभानि मिश्रे द्वे को वायुस्तस्य भं स्वाती दारुणताराः क्रूरभानि आसां द्वंद्वे ॥ ५१ ॥

राम३वेद४युग४पावका३गमा४ंभोधि४राम३यम२भैस्तु तारकैः ॥
ग्रामवत्स इनभाच्छमुद्वसं स्थैर्यमादरकमीलयाः क्रमात् ॥ ५२ ॥ ❀

अथ रथोद्धतया ग्रामवत्सचक्रे भानि स्थापयति—रामेति ॥ ग्रामवत्से रविभात् सूर्याक्रांतभात् रामादिमितैस्तारकैःक्रमात् शादयः स्युः । कोऽर्थः ग्रामवत्से सूर्यनक्षत्रात् रामैस्त्रिभिस्तारकैः शं सुखं स्यात् । एवं वेदैश्चतुर्भिर्भैरुद्वसं जनशून्यं पुनर्युगैश्चतुर्भिर्भैः स्थैर्यं स्थिरता पुनः पावकैस्त्रिभिर्भैर्मा लक्ष्मीः स्यात् ॥ आगमैश्चतुर्भिर्भैर्दरो भयं स्यात् । अंभोधिभिश्चतुर्भिर्भैः कं धनं स्यात् । रामैस्त्रिभिर्भैर्भीर्भयं स्यात् । यमभैर्द्विप्रभितैर्भैर्लया मृत्युः स्यात् । एषां द्वंद्वः एवं सप्तविंशतिनक्षत्राणि देयानि । यतः ' यस्मिन्नृक्षे भवेद्भानुस्तदादौ त्रीणि मस्तके ॥ द्वे द्वे च पादयोर्न्यस्य स्थापयेत्त्रीणि पृष्ठतः ॥ १ ॥ चत्वारि वामकुक्षौ च याम्यां चत्वारि एव च ॥ पुच्छे त्रीणि च संस्थाप्य नासिकां द्वे नियोजयेत् ॥२॥ नासिका स्वामिनं भक्षेदुद्वासमग्रपादयोः ॥ शिरः पृष्ठे भवेल्लक्ष्मीः स्थिरं पश्चिमपादयोः ॥३॥ वामकुक्षौ च दारिद्र्यं याम्यां चैव धनागमः ॥ पुच्छे च जायते हानिर्वृषचक्रमुदाहृतं ' ॥ ४ ॥ इति ॥ ५२ ॥

वत्सशुद्धिवति भे विपश्चितः प्रोक्तपूर्वलयभादिसंपदि ॥
नव्यपूरचनमाहुरैंदवं पाकपस्य च बलं समीक्ष्य भे ॥५३ ॥

अथ वत्सादिभशुद्धौ पुररचनमाह—वत्सेति ॥ विपश्चितः पंडिताः नव्यपूरचनं नूतनपुरीकरणमाहुः कथयंति कस्मिन् वत्सशुद्धिवति वत्सशुद्धियुक्ते भे नक्षत्रे पुनः कस्यां प्रोक्तपूर्वलयभादिसंपदि कथितनगरचक्रनक्षत्रादिशुद्धिप्राप्तौ सत्यां पुनः किंकृत्वा भे नगरराशौ ऐंदवं बलं चंद्रबलं च पुनः पाकपस्य नगरदशापतेर्बलं समीक्ष्य विलोक्य ॥ ५३ ॥

आकृति नं. ३४

विधीयते चेद्विशिखा तदा स्यात्तद्वत्समीक्ष्याखिलशुद्धिरस्मिन् ॥
यदा पुरे निःसरणप्रपंचो विनैव तच्छुद्धिमयं विधेयः ॥ ५४ ॥

अथ पुरप्रतोलीकरणशुद्धिमाह—विधीयतइति ॥ चेत् यदा सुधिया विशिखा प्रतोली विधीयते तदाऽस्यां प्रतोल्यां तद्वत् पूर्वोक्तपुरशुद्धितुल्याखिलशुद्धिः समीक्ष्या विलोकनीया ॥ पुनरस्मिन् पुरेऽयं निःसरणप्रपंचो गृहादीनां सुखविस्तारो विधेयः कर्तव्यः कां विना तच्छुद्धिं तस्याः शुद्धिं विना एव निश्चितं ॥ ५४ ॥

अमीनकीटद्वितनूचरोदये सत्कंटके संकरणं पुर-
स्य तत् ॥ असाधुभिर्वोपचया ३।६।१०।११। नुगै-
रुतांगिरोविधू चेद्वन४मान१०गौ तथा ॥ ५५ ॥

अथ लग्नशुद्धौ पुरकरणमाह—अमीनेति ॥ पुरस्य नगरस्य तत् संकरणं सम्यक्-प्रकारेण करणीयं स्यात् कस्मिन् अमीनेति मीनः कीटः कर्को द्वितनू द्विस्वभावलग्नं चरोदयश्चरलग्नं विद्यंते एते यस्मिन्स तस्मिन् मीनादिरहिते उदये सति किंभूते उदये सत्कंटके संतः शुभ-ग्रहाः कंटके यस्य स तस्मिन् उत वितर्के च पुनः चेत् यदि उपचयानुगैः त्रिषड्दश-मैकादशभावगैरसाधुभिः खलग्रहैः कृत्वांगिरोविधू गुरुचंद्रौ वनमानगौ चतुर्थदशमभावगौ भवतस्तदा तथा पुरस्य करणं स्यात् ॥ ५५ ॥

विशेदधिष्ठानमथायने नवं सौम्येऽब्कीर्णांशुविसारवासरे ॥
सहोनभोहेल्यलिसिंहसंगमे दीपोत्सवद्यूदरमासि वा क्वचित् ॥५६॥

अथ पुरप्रवेशस्य शुद्धिमाह—विशेदिति ॥ अथ पुरकरणानंतरं सुधीरधिष्ठानं पुरं विशेत् प्रविशेत् ' निवेशनमधिष्ठानं ' इति हैमः॥ कस्मिन् सौम्येऽयने उत्तरायणे किंभूतेऽयनेऽब्कीर्णांशुविसारवासरे मीनार्कदिनरहिते वा पक्षांतरे सहो मार्गशीर्षः नभः श्रावणः हेलिः सूर्यः अलिर्वृश्चिकः सिंह एषां संगमे संयोगे सति क्वचित् दीपोत्सवस्य द्यु दिनं उदरे मध्ये यस्य स एवंविधो मा मासस्तस्मिन् कार्तिकमासे इत्यर्थः ॥ ५६ ॥

प्राचेतसश्वासनतिष्यवासवस्थिरश्रवोदोर्मृदुभिर्नवं विशेत् ॥
शालं पुरं चाशुभयोगवर्जितैरनारवारेषु सदैंदवद्युषु ॥ ५७ ॥

अथ पुरादिप्रवेशे भवारशुद्धिमाह—प्राचेतसेति ॥ सुधीः नवं नवीनं शालं वा पुरं वा गृहं वा विशेत् प्रविशेत् कैः प्राचेतसं शततारा श्वासनं स्वाती तिष्यः पुष्यः वासवं धनिष्ठा स्थिरसंज्ञानि श्रवः श्रवणः दोर्हस्तः मृदूनि एषां द्वंद्वे एभिर्नक्षत्रैः किंभूतैर्नक्षत्रैः अशुभयो-गवर्जितैः पुनः केषु सदैंदवद्युषु शुभचांद्रदिनेषु किंभूतेषु अनारवारेषु भौमरहितदिनेषु ॥ ५७ ॥

स्थिरोदयेऽदूषितकेंद्रधीशुभे सपत्नवीर्यायखले भवेन्नवः ॥
पुरप्रवेशोऽधिकले विधौ हितो बलैर्दशाजन्मपराजमंत्रिणाम् ॥ ५८ ॥

अथात्र प्रवेशे लग्नशुद्धिमाह—**स्थिरेति** ॥ नवो नूतनः पुरप्रवेशो हितः शुभो भवेत् कस्मिन् स्थिरोदये स्थिरलग्ने किंभूते स्थिरोदये अदूषिताः दूषणरहिताः केंद्रभावाः १।४।७। १० पंचमभावः ५ शुभः पुण्यो नवमभावश्च यस्मिन् स तस्मिन् पुनः किंभूते सपत्ने षष्ठे वीर्ये तृतीये ३ आये एकादशे ११ खलाः क्रूरग्रहा यस्य तस्मिन् पुनः कस्मिन् अधिकले अधि अधिकाः पूर्णाः कला यस्य स तस्मिन् एवंविधे विधौ चंद्रे 'अधिबले' इत्यपि पाठः पुनः कैः दशाजन्मपराजमंत्रिणां दशापतेः जन्मपतेः राज्ञश्चंद्रस्य मंत्रिणो गुरोश्च एषां बलैः ॥ ५८ ॥

**प्रयाणदिक्खेचरयोगशुद्ध्या जीवे कवौ दर्शितमंडले स्यात् ॥**
**छंदोध्वनौ वाद्यसुगीतघोषे पुरं समावेशितमर्थसिद्ध्यै ॥ ५९ ॥**

अथ पुरप्रवेशे शेषशुद्धिं प्रयाणशुद्धिवत् दर्शयति—**प्रयाणेति** ॥ समावेशितं प्रवेशीकृतं पुरं नगरमर्थसिद्ध्यै कार्यनिष्पत्तये स्यात् कया प्रयाणदिक्खेचरयोगशुद्ध्या यात्रायां यथा दिग्ग्रहयोगानां शुद्धिस्तथात्रैव विलोकनीया इत्यर्थः। पुनः कस्मिन् जीवे गुरौ कवौ शुक्रे दर्शितमंडलेऽस्तवर्जिते पुनः कस्मिन् छंदोध्वनौ वेदघोषे सति ॥ ५९ ॥

**दद्याद्धयं दैवविदे पुरोधसे वसुंधरामर्थचयं द्विजव्रजे ॥**
**संतोषयेच्चैलधनैश्च मागधान् दीनानिहान्नैरुपवेशितो नृपः ॥६०॥**

**इति श्रीकविकालिदासोदिते ज्योतिर्विदाभरणे प्राकारपुरसाधनप्रवेशाध्यायः ॥ १५ ॥**

अथ प्रवेशितस्य भूपस्य वदान्यतामाह—**दद्यादिति** ॥ नृपो भूप इह उपवेशितः पुरोपवेशितः सन् दैवविदे दैवज्ञाय हयमश्वं दद्यात् पुनः पुरोधसे पुरोहिताय वसुंधरां भुवं दद्यात् पुनर्द्विजव्रजे विप्रेऽर्थचयं धनसमूहं दद्यात् पुनर्मागधान् मंगलपाठकान् चैलधनैर्वस्त्रद्रव्यैः संतोषयेत् पुनर्दीनान् दीनजनान् अन्नैः संतोषयेत् ॥ ६० ॥

इति श्रीपौर्णिमीयशिष्यभावरत्नविरचितायां श्रीकालिदासकृतज्योतिर्विदाभरणस्य सुखबोधिकायां प्राकारपुरसाधनप्रवेशोनाम पचदशोऽध्यायः ॥ १५ ॥

## गृहप्रवेशदेवताप्रतिष्ठाप्रकरणम् ।

**गार्हस्थो विपुलयशा यदाश्रमाणां धर्मो वेदवचनकर्मसारधर्मः ॥**
**तद्देवादिजमनुजाखिलाप्तकामो वक्ष्येऽहं कुलकरणस्य कालनीतिम्॥१**

अथ प्राकारपुरसाधनानंतरं तत्र गृहसाधनं घटतेऽतः प्रहर्षिण्या गृहारंभनिर्णयं संदधाति—**गार्हस्थ इति** ॥ यत् यस्मात् कारणात् आश्रमाणां चतुर्णां मध्ये गार्हस्थो गृहस्थसंबंधी धर्मो गृहस्थाचारो विपुलयशाः विस्तीर्णकीर्तिः स्यात् । किंभूतो गार्हस्थो वेदवचनेन यत् कर्म कृत्यं तेन सारः शुभो धर्मो न्यायो नीतिर्यस्मिन् सः । यदुक्तं 'धर्मोयमोपमापुण्यस्वभावाचा-

रधन्वसु । सत्संगेऽर्हत्यहिंसादौ न्यायोपनिषदोरपि ॥१॥ धर्मं दानादिके' इति हैमः ॥ पुनः किंभूतो गार्हस्थो देवा हरिहरादयः आदिजा विप्राः मनुजाः क्षत्रियादयस्तैरखिलः समस्त आप्तः प्राप्तः काम ईप्सितं यस्मात्स इति तत् तस्मात्कारणात् अहं कुलकरणस्य गृहविधानस्य कालनीतिं समयनिर्णयं वक्ष्ये कथयिष्यामि ॥ १ ॥

**वृत्रारिस्वपतिवनेश्वरांतकानां दिक्षु स्याद्भवनमिहादिजादिकानां ॥ वर्णानां विदिशि शुभं च संकरस्य प्रासादे हरिशिवयक्षदिग्विमध्यम्॥२**

अथ गृहकरणे दिग्योग्यतामाह—वृत्रेति ॥ आदिजादिकानां विप्रादीनां वर्णाना भवनं गृहं शुभं स्यात् वृत्रादीनां दिक्षु वृत्रारिरिंद्रस्तस्य दिशि विप्राणां गृहं शुभं स्यात् । स्वपतिर्धनद-स्तस्य दिशि क्षत्रियाणां गृहं शुभं वनेश्वरो वरुणस्तस्यदिशि वैश्यानां गृहं शुभं अंतको यमस्तस्य दिशि शूद्राणां गृहं शुभं च पुनः संकरस्य संकरजातीनां विदिशि गृहं शुभं स्यात् पुनरिह प्रासादे हरिदिग् शिवदिग् यक्षदिग् आसां विमध्यं यस्मिंस्तत् मध्यभागं गृहं वरं॥२॥

**नागां८गे६न१२युग४नवा९ग७भूग्र११धिष्ण्यैर्नागारं हरिह-रितो वरं ककुप्सु ॥ जन्मोत्थैरनु परभैः पुरस्य मध्ये स्यादेवं यमवति भस्थले नराणाम् ॥ ३ ॥**

अथ दिग्राश्योरमेलने दूषणमाह—नागांग इति ॥ नराणां मनुष्याणामगारं गृहं वरं न स्यात् कासु हरिहरितः पूर्वदिशातः ककुप्सु कैर्जन्मोत्थैर्नागादिमितधिष्ण्यै राशिभिः अनु पश्चात् परभैः वृषमिथुनसिंहमकरराशिभिः कोऽर्थः पूर्वदिशि नरस्य नागराशिनाऽगारं वरं न स्यात् वृश्चिकराशिमान् पुरुषः पूर्वस्यां न वसेदित्यर्थः। एवं नरस्य अंगेन कन्याराशिना अग्निदिशि, पुनरिनेन मीनराशिना दक्षिणस्यां, पुनर्युगेन कर्कराशिना नैरृत्यां पुनर्नवाभि-र्धनूराशिना पश्चिमायां, पुनरगेन सप्तमराशिना वायव्यां, पुनर्भुवा मेषराशिना उत्तरस्यां, पुनरुग्रेण ईश्वरेण कुंभराशिना ईशान्यामिति पुनः कस्मिन् यमवति शनियुक्ते भस्थले नक्षत्रचक्रे ग्रामचक्रे यत्र शनियुक्तं भं राशिस्थानं स्यात्तदा तत्स्थाने गृहं वरं न स्यात् इत्यर्थः ॥ ३ ॥

**मीना १२ली ८भरिपु५भवन्नुरिष्टमोकः प्रागास्यं मकर-१०वशा६कुलीर४भस्य ॥ याम्यास्यं जितुम३तुलास्त्रभ९स्य पुंसः पश्चात् द्वारपरभवन्नु१।२।१२।रुत्तरास्यम् ॥ ४ ॥**

अथ दिङ्नरराश्योर्मेलने गृहसन्मुखं शुभमाह—मीनेति॥ मीनः अलिर्वृश्चिकः इभरिपुभं सिंहराशिः अस्त्यर्थे वतुः तेन एभिर्युक्तस्य नुः पुरुषस्य प्रागास्यं पूर्वदिङ्मुखं ओको गृहमिष्टं शुभं स्यात् । पुनर्मकरवशाकुलीरभस्य मकरकन्याकर्कराशिर्यस्य स तस्य पुंसो याम्यास्यं दक्षिणदिङ्मुखं ओको वरं पुनर्जितुमतुलास्त्रभस्य मिथुनतुलाधनूराशिर्यस्य स तस्य पुंसः

पश्चात्द्वाः पश्चिमादिङ्मुखं ओको वरं द्वाःशब्दो हसांतः पुनरपरभवन्नुःउक्तेभ्योऽन्यराशियुक्त-पुरुषस्य उत्तरास्यं ओको वरम् ॥ ४ ॥

फाल्गूने नभासि सहस्यदः सहस्ये वैशाखे शरणमशेषशं विधत्ते ॥ आरब्धं द्वितनु ३।६।९।१२। भभानुयोगयुक्ते निर्लेयामरसचिवादिभूखगारते ॥ ५ ॥

अथ गृहारंभे मासादिशुद्धिमाह— फाल्गून इति ॥ अदः शरणं गृहं कर्तृपदं आरब्धं प्रारंभितं सत् अशेषशं समस्तसुखं विधत्ते करोति कस्मिन् आरब्धं फाल्गुने मासे अत्र दीर्घ ऊकारः शब्दप्रभेदाद् दृश्यते । नभसि श्रावणे सहसि मार्गशीर्षे सहस्ये पौषे वैशाखे किंभूते एतन्मासे द्वितनुभभानुयोगयुक्ते द्विस्वभावराशौ सूर्ये योगयुक्ते सति पुनः किंभूते निः निर्गतः लेयामरसचिवः सिंहगुरुश्च आदिभुवौ खगौ विप्रग्रहौ गुरुशुक्रौ तयोरस्तश्च यस्मात्सः सिंहगुरुरहिते गुरुशुक्रास्तरहिते इत्यर्थः ॥ ५ ॥

मासेऽपागयनगतेऽपि चौकसः स्यादारंभोऽतिवरफलोऽत्र वेशनं न ॥ भेदत्वाद्घटननिवेशदेवतानां रिक्तामा ४।९।१४। ३०। शुभयुतिविष्टिमुक्तपक्षः ॥ ६ ॥

अथ गृहारंभे अयनादिशुद्धिमाह—मास इति ॥ ओकसो गेहस्यारंभोऽतिवरफलो भृशं फलकृत् स्यात् । कस्मिन् अपागयनगते दक्षिणायनगते मासेऽपि पुनरत्र दक्षिणायनगते मासे वेशनं गृहप्रवेशो न स्यात् घटननिवेशदेवतानां भेदत्वात् घटनमुहूर्तस्य भिन्नदेवाः प्रवेशनमुहूर्तस्य भिन्नदेवास्तेनेति किंभूत आरंभः रिक्तास्तिथयः अशुभयुतिर्दुष्टयोगः विष्टिर्भद्रा एताभिर्मुक्तस्त्यक्तः पक्षोऽङ्गीकारो यस्य सः ॥ ६ ॥

भानौ केसरिणि ५ मृगे १० च कुंभ११कर्क्योः४रिंद्राशापरवदनं निशांतमुक्तं ॥ गो२जूक ७भ्रमर८पशू१ष्णदृष्टि योगे कीनाशस्वपतिदिगाननं प्रवेकम् ॥ ७ ॥

अथोचितदिशि गृहसन्मुखत्वमाह—भानाविति ॥ केसरिणि भानौ सिंहसंक्रांतौ मृगे मकरसंक्रांतौ च कुंभकर्क्योः कुंभसंक्रांतौ कर्कसंक्रांतौ च इंद्राशापरवदनं पूर्वपश्चिमादिङ्मुखं निशांतं गेहं प्रवेकं श्रेष्ठमुक्तं प्रोक्तं पुनर्गौर्वृषः जूकस्तुला भ्रमरो वृश्चिकः पशुर्मेषः एतद्राशिषु उष्णवृष्णियोगे सूर्यसंक्रमे कीनाशस्वपतिदिगाननं दक्षिणोत्तरमुखं निशांतं श्रेष्ठं प्रोक्तं ॥ ७ ॥

मासो दर्श३०युगलकालमो यथा यो ग्राह्योऽसौ निलयकृतौ प्रमाणसिद्धः । सर्वत्रैव सुरधुनीकलिंदजांतर्देशे स्यादपविधुघस्रमध्यवर्ती ॥ ८ ॥

अथ गृहकरणे मासप्रमाणतामाह—मास इति ॥ यथा योऽसौ मासो दर्शयुगलकालेन अमावास्यायुग्मकालेन मीयते इति दर्शयुग्मकालप्रमाणो दार्शिको मासः स्यात् इत्यर्थः॥ असौ मासो निलयकृतौ गृहकरणे प्रमाणसिद्धोऽधिकक्षयकालमुक्तः सर्वत्र सर्वदेशे ग्राह्यः स्यात् । तथा सुरधुनी गंगा कलिंदजा यमुना एतयोरंतर्देशे विचालेऽपविधुवक्रमध्यवर्ती अपगतो विधुश्चंद्रो यस्याः सकाशात् सा अपविधुः अमावास्या तस्या घस्रं यस्य मध्ये वर्तते इत्येवं शीलं यस्य स पौर्णिमासिको मासो ग्राह्यः स्यादित्यर्थः ॥ ८ ॥

**सद्वारे करणमुतोरजस्य भानौ तिष्यश्वासनमृदुवासवैन्द्रधीरैः ॥**
**आधत्ते सुषमफलं सवारुणर्क्षैरुत्सृष्टाशुभखगयोगविद्धबिंबैः ॥ ९ ॥**

अथ गृहकरणे वारनक्षत्रशुद्धिमाह—सद्वार इति ॥ उत वितर्के उरजस्य गृहस्य करणं सुषमफलं मनोहरफलं 'वामरुच्यसुषमाणि शोभनं' इति हैमः॥ अथवा कवर्गीयरवकारोऽपि 'खं सुखं ज्ञानमित्यपि' इति एकाक्षरे । सु अतिशयेन खं सुखं तेन मीयते इति तत् च फलं च इत्यपिशब्दार्थः। आधत्ते बिभृयात् कस्मिन् सद्वारे शुभग्रहदिने पुनर्भानौ सूर्यवारे पुनः कैः तिष्यः श्वासनं स्वाती मृदूनि वासवं धनिष्ठा ऐन्द्रं हस्तः धीराणि एतैर्नक्षत्रैः किंभूतैः सवारुणर्क्षैः शततारासहितैः पुनः किंभूतैर्नक्षत्रैः उत्सृष्टानि त्यक्तानि अशुभखगयोगेन पापग्रहयोगेन विद्धानि बिंबानि यैस्तानि तैः पापग्रहयोगविद्धमंडलरहितैः ॥ ९ ॥

**पूर्वत्से क्रमरविधिष्ण्यचक्रभेदैस्त्रि३द्व्य२ब्धि४त्रि३यमा२**
**श्वि२वेद४ दृ२ ग्मैः ॥ दृग्मा २ ग्रैः शवृजिनकायरुक्-**
**शधैर्यं दारिद्र्यं दरमरणे क्रमेण कर्तुः ॥ १० ॥** ⊛

अथ मतभेदेनेह वत्सचक्रमाह—पूर्वत्स इति॥ पूर्वत्से नगरचक्रे क्रमरविधिष्ण्यचक्रभेदैः सूर्याक्रांतनक्षत्रचक्रभेदैः किंभूतैः त्रिद्व्यादिमितैः दृग्माग्रैश्च क्रमेण कर्तुः शालादिकारकस्य शवृजिनादिकं स्यात् । कोऽर्थः सूर्याक्रांतनक्षत्रचक्रे वत्सस्य शीर्षादिषु त्रिभिर्नक्षत्रैः कर्तुःसुखं स्यात्। एवं द्वाभ्यां वृजिनं पापं अर्थसामर्थ्यात्कष्टं अब्धिभिश्चतुर्भिर्भैः कं सुखं धनं वा स्यात् । त्रिभिर्भैरायो लाभः स्यात् । गुणैस्त्रिभिर्भैः रुक् रोगः स्यात्। यमैर्द्वाभ्यां भाभ्यां शं सुखं स्यात्॥ अश्विभ्यां द्वाभ्यां भाभ्यां धैर्यं स्यात् । वेदैश्चतुर्भिर्दारिद्र्यं स्यात् । दृग्मैर्द्विमानाभ्यां भाभ्यां दरो भयं स्यात् । दृग्माग्रैः द्विमितसंख्याभ्यां भाभ्यां मरणं स्यात् । दरमरणे इति द्वंद्वे प्रथमाद्विवचनं दृग्मं द्विप्रमितं अग्रं संख्या येषां ते तैः अत्राग्रशब्दः संख्यावाची शवृजिनादीनां द्वंद्वैकत्वं नगरवत्सचक्रात् इदं मतभेदात् ज्ञेयमिति ॥ १० ॥

**शाले पुरे चाष्ट८विभागभेदो दिग्भाग१०भेदो मठमंदिरादौ ॥**
**भेदाः षडत्रामरधाम्नि धीरैरन्यत्र वा द्वादश१२वत्सचक्रे ॥११॥**

---

आकृति नं. ३५

अथ वत्सचक्रे शालादीनां विभागभेदानाह—शालइति ॥ अत्र वत्सचक्रे शाले पुरे वा धीरैर्बुधैरष्टविभागभेदः अष्टौ भागा भेदाः स्थाप्याः । पुनर्मठमंदिरादौ दिग्भागभेदः दशभागाः स्थाप्याः । पुनरमरधाम्नि देवगृहे षड्भेदाः अन्यत्र द्वादशभेदाः स्थाप्याः ॥ ११ ॥

**स्युः सप्तसप्तानलभादुडूनि प्राच्याश्चतुर्दिक्षु निशांतचक्रे ॥**
**पुरोगपृष्ठस्थमिहौषधीशं त्यक्त्वा तदारंभणमिष्टमुक्तम् ॥१२॥**

अथ गृहे दिग्द्वारभचक्रमाह—स्युरिति ॥ इह निशांतचक्रे गेहचक्रे प्राच्याः पूर्वातश्चतुर्दिक्षु अनलभात् कृत्तिकातः सप्त सप्त उडूनि स्युः। तदारंभणं तस्य गेहस्य प्रारंभणमिष्टं शुभमुक्तं प्रोक्तं किंकृत्वा पुरोगपृष्ठस्थं अग्रगतं पश्चाद्भागस्थं ओषधीशं चंद्रं त्यक्त्वा ॥ १२ ॥

**निकेतनं स्यात्त्रिविधं हि मृण्मयं हर्म्यं सदा पर्णकुटं बुधैः स्मृतं ॥**
**एको नयस्तत्करणस्य चोच्यते तथापि तत्प्रोक्तविशेषतन्नयः ॥ १३ ॥**

अथ त्रिविधं गृहमाह—निकेतनमिति॥ निकेतनं गृहं त्रिविधं त्रिधा स्यात् हि अवधारणे एकं मृण्मयं मृत्तिकापिंडबद्धं १ द्वितीयं हर्म्यं 'यदिष्टिकाद्यै रचितं तद्गेहं हर्म्यमादिशेत्' इति यादवः ॥'हर्म्यं तु धनिनां गृहं' इति हेमः॥ २ तृतीयं पर्णकुटं 'तृणपत्रादिभिर्बद्धं गेहं पर्णकुटं स्मृतं' इति यादवः ॥'पर्णशालोटज' इति हैमः ॥ सदा इति बुधैःस्मृतं तत्करणस्य तेषां मृण्मयादिगृहाणां एको नयोऽस्ति वा पक्षांतरे तथापि तत्प्रोक्तः तेषु गृहेषु प्रोक्तश्चासौ विशेषश्चासौ तन्नयः स एव नयश्च इति तथापि विशेषनयोऽस्ति इत्यर्थः ॥ १३ ॥

**न हारि हर्म्येऽभिमुखं तमः स्यात् दृश्यं न तत्पर्णकुटादिगेहे ॥**
**क्षपाकरः पर्णकुटेऽभिवक्त्रो न दर्शनीयोऽन्यकुले स दृश्यः ॥ १४ ॥**

अथ हर्म्यादीनां दर्शनीयदोषमाह—न हारीति ॥ हर्म्ये गृहविशेषेऽभिमुखं सन्मुखं तमो राहुर्हारि श्रेष्ठं न स्यात् । पर्णकुटादिगेहे तत्तमो राहुर्न दृश्यं न विलोकनीयं स्यात् । क्षपाकरश्चंद्रः पर्णकुटेऽभिवक्त्रः सन्मुखो न दर्शनीयः स्यात् । अन्यकुले इष्टिकादिमृत्पिंडादिराचिते गेहे सन्मुखश्चंद्रो दृश्यो विलोकनीयः ॥ १४ ॥

**लघुश्रवोधीरमृगांत्यचित्रामित्रांगिरोमैत्रसिताख्यवारैः ॥**
**न्यासं शिलादारुकृतं सुधायाः कुर्वंति लेपं निबिडं च धिष्ण्ये॥१५**

अथ गृहे इष्टिकादिचयनसुधालेपशुद्धिमाह —लघ्विति ॥ सुधियो धिष्ण्ये एकभूमिद्विभूम्यादिगेहे शिलादारुकृतं पाषाणकाष्ठकृतं न्यासं प्रथमं इष्टिकादिचयनं च पुनः सुधाया लेपं कुर्वंति किंभूतं निबिडं दृढं कैः कृत्वा लघूनि श्रवः श्रवणः धीराणि मृगो मृगशीर्षं अंत्यं रेवती चित्रा मित्रोऽनुराधांऽगिरा गुरुः मैत्रः शनिवारः सितः शुक्रवारः एषां द्वंद्वे एभिः ॥ १५ ॥

---

आकृति नं. ३६

**नभस्यमासं परिहाय पक्षं त्विषोर्जयोरादिममंत्यमाहुः ॥**
**शुचेर्बुधाः पर्णकुटक्रियां वा समस्तवारेषु सितांगिरोऽस्तम्॥१६**

अथ पर्णकुटकार्यशुद्धिमाह—**नभस्येति** ॥ बुधाः पंडिताः पर्णकुटक्रियामाहुः कथयंति किंकृत्वा नभस्यमासं भाद्रपदं परिहाय त्यक्त्वा न पुनः इषोर्जयोः आश्विनकार्तिकयोरादिमं पक्षं विहाय पुनः शुचेरापाढस्यांत्यं पक्षं विहाय वा पुनः सितांगिरोऽस्तं शुक्रगुर्वोरस्तं परिहाय केषु समस्तवारेषु ॥ १६ ॥

**कर्णत्रयं हारमृदुध्रुवाख्यैर्युतं सतिष्यानलमूर्ध्वभूमेः ॥**
**आरंभकृत्ये कृतिनो नयंति ज्ञादित्रये भूषणभाजि वारे ॥१७॥**

अथोर्ध्वभूम्यारंभमाह—**कर्णेति** ॥ कृतिनो बुधाः ऊर्ध्वभूमेरारंभकृत्ये कर्णत्रयं श्रवणत्रयं नयंति कथयंतीत्यर्थः प्राप्नुवंति वा किंभूतं कर्णत्रयं हरस्येदं हारं आर्द्रा मृदूनि ध्रुवाख्यानि एभिर्युतं युक्तं पुनः किंभूतं सतिष्यानलं पुष्यकृत्तिकासहितं कस्मिन् ज्ञादित्रये बुधगुरुशुक्रवारे किंभूते भूषणभाजि कुयोगविष्टिरिक्तापर्वभ्योऽन्यसुयोगभूषणयुक्ते ॥ १७ ॥

**स्यात्द्विप्रकृत्यचरराश्युदये सकेंद्रैः सद्भिः सदोपचयव-**
**द्भिरसद्भिरोकः ॥ सर्वर्द्धये त्युत विदांगरसा ख १० गे-**
**नागारा ४ नुगेन नरराश्युदये च सिद्ध्यै ॥ १८ ॥**

अथ वसंततिलकेन गृहकरणे लग्नशुद्धिमाह—**स्याद्विप्रेति** ॥ सदा हि अवधारणे उत वितर्के ओको गेहं सर्वर्द्धये समस्तसमृद्ध्यै स्यात् ॥ कस्मिन् द्विप्रकृत्यचरराश्युदये द्विस्वभावलग्ने स्थिरलग्ने च पुनः कैः सकेंद्रैः केंद्रसहितैः सद्भिः शुभग्रहैः पुनः कैः उपचयवद्भिः ३।६।१०। ११।उपचयभवनयुक्तैरसद्भिः पापग्रहैः च पुनः नरराश्युदये खगेन दशमभावगेनाऽऽगारानुगेन चतुर्थभावगतेन विदा बुधेन अंगिरसा गुरुणा च ओकः सिद्ध्यै स्यात् ॥ १८ ॥

**दुष्टारिनाशउदयोऽपि कुले सुखाप्त्यै दुष्टारिध्नाश**
**८ उदयो न कुले सुखाप्त्यै ॥ आरंभकालवति**
**दुष्टमदोदयश्चेदारंभकालवति दुष्टमदोदयः स्यात् ॥ १९ ॥**

**दुष्टारीति** ॥ दुष्टानामरीणां शत्रूणां नाशो यस्मिन् स एवंविध उदयो भाग्योदयः कुले गोत्रे सुखाप्त्यै सुखलाभाय स्यात् । अपि संभावनायां कुले गेहे दुष्टारिनाशउदयः दुष्टौ क्रूरग्रहदूषितौ षष्ठाष्टमभावौ यस्मिन् स एवंविध उदयो लग्नं सुखलाभाय न स्यात् । चेद्यदि आरंभकालवति कुले गृहकरणप्रारंभणे दुष्टमदोदयो दूषितसप्तमभावः स्यात्तदा आरंभकालवति प्रारंभिते कर्माणि दुष्टमदोदयः दुष्टानां दायादादीनां मदोऽहंकारस्तयोस्तत्रान्योन्यं कलिः स्यादित्यर्थः । 'मदो रेतस्यहंकारे मद्ये हर्षेभदानयोः । कस्तूरिकायां क्षैब्ये च' इति हैमः॥१९॥

**गुरौ घने १ राजसुते निवृत्तौ७ मैत्रे बले३मातुल ६ भाजि मित्रे ॥**
**कवौ कुले ४ भूभुवि विद्धि लाभे११क्षयं समारंभितमक्षयं हि ॥ २० ॥**

गुराविति ॥ हि युक्तार्थे हे गृहकर्तः त्वं क्षयं गृहं समारंभितं प्रारंभितमक्षयमविनाशि विद्धि जानीहि कस्मिन् घने लग्ने गुरौ सति निवृत्तौ सप्तमभावे राजसुते बुधे सति बले तृतीयभावे मैत्रे शनौ सति मातुलभाजि मित्रे षष्ठभावे सूर्ये सति एतावता एको योगो ज्ञेयोऽथवा पुनः कुले गेहे चतुर्थभावे कवौ शुक्रे पुनर्लाभे एकादशे भूभुवि भौमे सति ॥ २० ॥

**सराजमंत्री कुल४मान१०वर्ती सहंसभूमंगललाभ११भावः ॥**
**निशांतकर्तुश्चिरधामसौख्यं यदोत जंबालचरोदयेऽब्जः ॥ २१ ॥**

सराजेति ॥ यदा उत वितर्के कुलमानवर्ती चतुर्थदशमभावस्थः सराजमंत्री चंद्रयुक्तगुरुः स्यात् । पुनः सहंसभूमंगललाभभावः लाभभावगतशनियुक्तभौमः पुनः जंबालचरोदये जंबाले पंके चरति गच्छतीति कर्कस्तस्योदये कर्कलग्नेऽब्जश्चंद्रः स्यात्तदा निशांतकर्तुः गृहकारकस्य चिरधामसौख्यं दीर्घकालं गृहसुखं स्यात् ॥ २१ ॥

**ग्रहेश्वरे नष्टबले गृहेश्वरो विधौ वधू मंत्रिणि शं च राः सिते ॥**
**क्षयं समेति क्षयसाधनेऽथवा नीचाश्रयिण्यंशुविलुप्तमंडले ॥ २२ ॥**

ग्रहेश्वर इति ॥ हि अवधारणे क्षयसाधने गृहकरणे ग्रहेश्वरे सूर्ये नष्टबले सति गृहेश्वरो गृहस्वामी पुमान् क्षयं समेति प्राप्नोति पुनर्विधौ चंद्रे नष्टबले सति वधूः स्त्री क्षयं समेति पुनर्मंत्रिणि गुरौ नष्टबले सति शं सुखं कर्तृपदं क्षयं समेति च पुनः सिते शुक्रे नष्टबले सति रा लक्ष्मीः क्षयं समेति वाऽथवा नीचाश्रयिणि नीचराशिगते ग्रहे सति अंशुविलुप्तमंडलेऽस्तग्रहे एवं फलं ॥ २२ ॥

**ससौम्यराज्य१०श्च सभास्वदायः ११सपूज्यकेंद्रः १।४।७।१०**
**ससितोदय१श्चेत् ॥ विनिर्मितं यच्छरणं शरण्यं भवेच्चिरं**
**कर्तुरुदारसंपत् ॥ २३ ॥**

ससौम्येति ॥ चेत् यदि ससौम्यराज्यः बुधयुक्तदशमभावः स्याच्च पुनः सभास्वदायः सूर्यसहितैकादशो भावः स्यात् । पुनः सपूज्यकेंद्रः गुरुयुक्तकेंद्रं स्यात् । पुनः ससितोदयः शुक्रयुक्तलग्नं स्यात्तदा यच्छरणं गृहं विनिर्मितं कृतं तत् गृहं कर्तुः पुंसश्चिरं दीर्घकालं शरण्यं शरणे रक्षणे साधु भवेत् किंभूतं गृहं उदारा प्रधाना संपत् समृद्धिर्यस्मिंस्तत् ॥२३ ॥

**समंगलं मातुलवर्गमादरात्सविक्रमं ३ सूरमगारसाधने ॥**
**गुरुं कविं सोदय१मिच्छसि स्थितिं गृहाण चेदब्दशतद्वयं गृहिन् ॥२४॥**

समंगलमिति ॥ चेद् यदि हे गृहिन् त्वं अब्दशतद्वयं द्विशतवर्षमितां स्थितिं इच्छासि गेहस्येति शेषस्तदा त्वमगारसाधने गृहकरणे आदरात् मातुलवर्गं पञ्चमभावं समंगलं भौमयुक्तं गृहाण

पुनरेवं सविक्रमं तृतीयभावयुक्तं नरं सूर्यं गृहाण पुनर्गुरुं कविं च सोदयं लग्नसहितं गृहाण ॥ २४ ॥

**कुल४मान१०गौ यदि च राजगुरू स्तः कुलमानदौ यदि निकेतनकर्तुः॥**
**कुसुते च मंदवति वै भव११भावे कुसुतेऽपि संभवति वैभवभावः॥२५॥**

अथ कुटजनामच्छंदसाह—कुलेति ॥ यदि राजगुरू चंद्रगीष्पती कुलमानगौ चतुर्थदशमभावगौ स्तस्तदा तौ चंद्रगुरू निकेतनकर्तुः कुलमानदौ गोत्रसन्मानदायकौ स्यातां च पुनर्वै निश्चितं भवभावे एकादशभावगते कुसुते भौमे मंदवति शनियुक्ते सति निकेतनकर्तुर्वैभवभावः समृद्धिभावः संभवति संजायते कस्मिन् कुसुतेऽपि दुष्टपुत्रेऽपि सति इति भ्रमर इत्यन्यः इति छंदोऽनुशासने हैमः ॥ २५ ॥

**उदये कविर्भवति सोच्चपदश्रीरमृतादनार्चितपदो वनवर्ती ॥**
**कुरुते कुलक्रमवृषं कुलकर्तुर्यदि वा यमो घट७गतिर्भव११शाली ॥२६॥**

उदय इति ॥ यदि सोच्चपदश्रीरुच्चस्थानश्रीसहित उच्चगतो मीनस्थ इत्यर्थः एवंविधः कविरुदये लग्ने भवति वाथवा अमृतादना अमृतभोजिनो देवास्तैरर्चितौ पादौ यस्य स गुरुर्वनवर्ती चतुर्थभावस्थः कर्कस्थो भवति । अथवा यमः शनिर्घटगतिस्तुलास्थो भवशाली एकादशभावस्थो भवति तदा एवंविधः शुक्रो गुरुः शनिश्च कुलकर्तुर्गृहकारकस्य कुलक्रमवृषं स्वगोत्रधर्मं कुरुते ॥ २६ ॥

**स्वगृहोच्चसुहृत्कुलांशयातैरनिलाध्वानुचरैः प्रभूतकालं ॥**
**परितिष्ठति पस्त्यमर्थयुक्तं कृतनिर्माणमतोऽन्यगैरनर्थम् ॥ २७ ॥**

अथ मालभारिण्याह—स्वगृहेति॥अनिलाध्वा मरुन्मार्गो व्योम तस्मिन्ननुचरंति गच्छंतीति ग्रहास्तैः कृतनिर्माणं कृतसाधनं पस्त्यं गृहं कर्तृपदं प्रभूतकालं प्रचुरकालं यावत् परितिष्ठति किंभूतं पस्त्यं अर्थयुक्तं धनभृतं किंभूतैरनिलाध्वानुचरैः स्वगृहं उच्चस्थानं सुहृत्कुलं मित्रगृहं अंशः स्वगृहादिनवांशः एषु स्थानेषु यातैः गतैः 'पस्त्यं संस्त्याय आश्रयः' इति हैमः ॥एभ्यः स्थानेभ्योऽन्यगैरन्यस्थानगतैर्ग्रहैः कृतं गृहमनर्थं दारिद्र्याढ्यं भवति ॥ २७ ॥

**द्युचरः परभागगो यदैको मद७गो वापबलोऽपि वर्णनाथः ॥**
**रचितं सदनं समेति सत्यं समया तत्क्षयमेकया परस्य ॥ २८ ॥**

द्युचरेति—यदा एको द्युचरो ग्रहः परभागगः शत्रुनवांशगतो भवेत् वाथवा एको मदगः सप्तमभावगतो वाथवा वर्णनाथः यथा विप्राणां गुरुशुक्रौ स्वामिनौ क्षत्रियाणां सूर्यभौमौ इत्यादिवर्णपतिर्ग्रहोऽपबलो निर्गतबलोऽपि भवेत्तदा सत्यं निश्चितं रचितं विहितं तत् सदनं गृहं कर्तृपदं एकया समया एकवर्षेण परस्य शत्रोः क्षयं हस्तं समेति प्राप्नोति परहस्तगतं भवेदित्यर्थः ॥ २८ ॥

**गणकं बहुशास्त्रभेददक्षं कृतहस्तं सदयक्षमं सुशीलं ॥**
**परिपृच्छ्य समारभेदगारं गतलोभं प्रतिघाभिमानमुक्तम् ॥ २९ ॥**

अथ गणकादेशेन गृहारंभमाह—गणकमिति ॥ सुधीरगारं गृहं समारभेत् प्रारभेत् किंकृत्वा गणकं ज्योतिर्विदं परिपृच्छ्य संकथ्य किंभूतं गणकं बहुशास्त्रभेददक्षं अनेकशास्त्रभेदे कुशलं पुनः किंभूतं गणकं कृतहस्तं शिक्षितं 'कर्म हस्तमुखाः कृताः' इति हैमः। पुनः किंभूतं सदयक्षमं दयाक्षमायुक्तं पुनः किंभूतं सुशीलं शोभनाचारं पुनः किंभूतं गतलोभं पुनः किंभूतं प्रतिघः क्रोधः अभिमानोऽहंकारस्ताभ्यां मुक्तं रहितं ॥ २९ ॥

**तदुदीरितकालनीतिशुद्धौ खलु तेनैव सुसूत्रधारयुक्त्या ॥**
**घटयेदुरजं यथोपसारो नृवरो निर्मलमानसः सुदेशे ॥ ३० ॥**

अथ सूत्रधारैर्गृहकरणमाह—तदुदीरितेति ॥ खलु निश्चितं नृवरो नरश्रेष्ठस्तथा तत् उरजं गृहं घटयेत् कस्यां तेनैव गणकेनैव उदीरितकालनीतिशुद्धौ कथितकालनिर्णयशुद्धौ कया कृत्वा सुसूत्रधारयुक्त्या सुशिल्पियुक्त्या किंभूतो नृवरः यथोपसारः यथा उप समीपे सारो द्रव्यं यस्य स पुनः किंभूतो निर्मलमानसः स्वच्छचित्तः पुनः कस्मिन् सति सुदेशे उत्तमदेशे सर्वा शुद्धिर्ग्राह्या इत्यर्थः अन्यत्र यथा तशुद्धौ वा ॥ ३० ॥

**आसन्ना ये कंटकक्षीरशाला ह्यावासे स्युः पर्यवस्थातृकामाः ॥**
**अभ्यर्णोद्रियोऽवकेशी स शश्वत्तत्कर्तारं नष्टसूतिं विधत्ते ॥ ३१ ॥**

अथ शालिन्या समीपदुष्टवृक्षगृहं सापवादमाह—आसन्नेति ॥ हि अवधारणे ये आसन्ना गृहसमीपस्थाः कंटकीबदर्यादिक्षीरशालाः क्षीरवृक्षा राजादनादयः शालाः साधारणा वृक्षा 'शालः सर्जतरुः स्मृतः' इति वैजयंती । आवासे गृहे पर्यवस्थातृकामाः पर्यवं गृहं तत्र तिष्ठतीति पुमान् तस्यातृकामो मरणकामो येषां ते मरणदायका इत्यर्थः । पुनरभ्यर्णो गृहसमीपस्थो योऽद्रिर्वृक्षोऽवकेशी 'वंध्यवृक्षोऽवकेशी स्यात्' शश्वन्निरंतरं स वंध्यवृक्षस्तत्कर्तारं गृहकर्तारं नष्टसूतिं नष्टा मृता सूतिः संततिर्यस्य स तं विधत्ते करोति ॥ ३१ ॥

**अर्कोन्मत्तः स्नुह्यरिष्टाख्ययासाः शाकव्याधग्रंथ्यपामार्गमुख्याः ॥**
**उद्धर्तव्यास्ते समूला मनुष्यैर्धामोन्मानक्षोणिगा धामकृत्ये ॥ ३२ ॥**

अथ धामस्थानस्थानर्कादिवृक्षानुच्छेदनीयानाह—अर्कोन्मत्त इति ॥ ये अर्कः प्रतीतः उन्मत्तो धत्तूरः स्नुहिः थोहरिः 'स्नुहिर्वज्रो महातरुः' इति हैमः। अरिष्टाख्यः फेनिलः निंबो यियासः 'यवासक' इति निघंटः । द्वंद्वे बहुवचनं शाकः सागः व्याधः 'कर्णिकारे परिव्याधश्च व्याधवत्' इति शब्दप्रभेदः। ग्रंथिस्तरुभेदः अपामार्गः अघाडो इति भाषा इति मुख्याः प्रमुखाः संति मनुष्यैस्तेऽर्कादयो वृक्षाः समूला उद्धर्तव्या उत्पाटनीयाः कस्मिन् धामकृत्ये गृहनिर्माणे किंभूतास्ते धामोन्मानक्षोणिगा गृहप्रमाणभूमिगताः ॥ ३२ ॥

अग्र्यो बोधिः पृष्ठगश्चेद्वासः स्यादावासे निर्मितोऽनंतरस्थः ॥
शस्ता धिष्ण्ये पूजिताश्चांघ्रिपा ये नैकट्यास्तद्योगतस्तेऽपि शस्ताः॥३३

अथ गृहसमीपबोधिवृक्षादिफलमाह—अग्र्य इति ॥ चेद्यदि अग्र्य आवासस्याग्रगतः च पुनः पृष्ठगः आवासपृष्ठगतो बोधिरश्वत्थः स्यात् । अनंतरस्थोंऽतररहितो निर्मित आवासः अवासः न विद्यते वासो वसनं यस्मिन् स शून्यः स्यात् इत्यर्थः । च पुनः ये अंघ्रिपा वृक्षाः पूजिताः पूजां प्राप्तास्ते धिष्ण्ये गृहे शस्ताः शोभनाः स्युस्तद्योगतः पूजितवृक्षसंयोगात् ये नैकट्याः समीपभवास्तेऽपि वृक्षा गृहे शस्ताः ॥ ३३ ॥

शाखी निंद्यो नीरसो निंबुशालस्तालः कालो द्वारि वाराशयश्च ॥
प्रासादो नो मंजुलः पृष्ठदेशे वानस्पत्यं दारु नेयं न गेहे ॥३४॥

अथ गृहमाश्रित्य शुष्कवृक्षादिदूषणमाह—शाखी इति ॥ द्वारि गृहद्वारे नीरसः शुष्कः शाखी वृक्षो निंद्यः स्यात् । निंबुशालो निंद्यः स्यात् । कालः कृष्णस्तालो निंद्यः स्यात् । च पुनर्वाराशयो जलाशयः कूपादि निंद्यः स्यात् । पुनः पृष्ठदेशे गृहपृष्ठे प्रासादो देवगृहं मंजुलः शोभनो न स्यात् । पुनर्गेहे वानस्पत्यं दारु काष्ठं न देयं न नेयं 'फलंति ये विना पुष्पं वनस्पतीन् विदुर्बुधाः' इति हलायुधः ॥ ३४ ॥

शालारंभे चेदपांपित्तकीला दृष्टा सन्नावासदाहादिपीडा ॥
ओतुर्वाहिस्तत्र दृष्टोऽरिपुष्टिर्वादो मांद्यं रोदनं संश्रुतं स्यात् ॥३५॥

अथ गृहारंभेऽग्निज्वालादिदूषणं दर्शयति—शालारंभेति ॥ चेद्यदि शालारंभे गृहारंभे अपांपित्तकीलाऽग्निज्वाला दृष्टा स्यात्तदा आसन्ना समीपभूता आवासदाहादिपीडा भवेत् स्वल्पकालेन गृहं भस्मसाद्भवेदित्यर्थः । पुनस्तत्र गृहारंभे ओतुर्मार्जारोऽहिः सर्पो वा दृष्टः तदाऽरिपुष्टिः शत्रुवृद्धिः स्यात् । यदा रोदनं मार्जारादीनां संश्रुतं स्यात्तदा वादो मांद्यं वा स्यात् ॥ ३५ ॥

शालादोष्णां साधने सूत्रपाते छेदोऽत्यै चेद्ग्रंथिरार्त्यै च कर्तुः ॥
कैलोभंगः स्याद्रुजे क्ष्मानिमग्नः कीलः शून्यं विस्मयः खातदेशे॥३६॥

अथ गृहारंभे सूत्रकीलच्छेदे दोषमाह—शालेति ॥ चेद्यदि शालादोष्णां गृहभुजानां सूत्रपाते सूत्रन्यासकरणे छेदस्त्रोटनं ग्रंथिर्वा भवेत्तदा कर्तुर्गृहकारकस्य आर्त्यै एव पीडायै भवेत् । खाते देशे कैलोभंगः कीलभग्नता रुजे रोगाय स्यात् । यदा क्ष्मानिमग्नः कीलस्तदा शून्यं विस्मय आश्चर्यं स्यात् ॥ ३६ ॥

खाते तावत् खन्यमाने प्रपश्येद्ग्रावाणं वा केशमंगारमस्थि ॥
चर्मायश्चेदापदो राजभीतेः सात्सिद्धिं सद्रस्तु दृष्टं तनोति॥३७

अथ खाते दृष्टवस्तुफलमाह—खात इति ॥ चेद्यदि खन्यमाने खाते सुधीस्तावत् प्रथमं ग्रावाणं वा केशं वाऽगारं वाऽस्थि वा चर्म वाऽयो लोहं वा प्रपश्येत्तदा राजभीतेः राजभयात् आपदः स्युः । सद्वस्तु शुभवस्तु दृष्टं सत् सत्सिद्धिं शुभसमृद्धिं तनोति विस्तारयति ॥ ३७ ॥

**सौम्येऽनेहस्याद्दते साधयित्वा खातं तावत्स्वाययुग्गेहपीठं ॥**
**दृश्यं प्रोक्तं तद्व्ययाद्यं हि सर्वं मित्रं पश्चादुत्तराद्यं विधेयम् ॥३८**

अथ गृहारंभे उत्तरायणादिशुद्धिमाह—सौम्य इति ॥ सौम्ये उत्तरायणेऽनेहसि काले आद्दतेऽङ्गीकृते तावत् प्रथमं खातं साधयित्वा स्वाययुग् शुभाययुक्तं गेहपीठं दृश्यं विलोकनीयं च पुनस्तद्व्ययाद्यं सर्वं मित्रं च प्रोक्तं पूर्वोक्तं दृश्यं विलोकनीयं पश्चात् उत्तराद्यं उत्तरदिग्गतं गृहं विधेयं कर्तव्यं ॥ ३८ ॥

**धारामंडलशालपत्तनकुलप्रासादवापीप्रपाकासारांधुषु पीठमंडपदरीपट्टासनद्वार्षु च ॥ संसत्पीठनृयानवारणगृहानोमंगिनीखारिकामंजूषाशयनादिचीवरगणे ग्राह्यः सदायो बुधैः ॥ ३९ ॥**

अथ शुभायस्य ग्राह्यस्थानमाह—धारेति ॥ बुधैः सदायः शुभायो ग्राह्यः केषु धारामंडलं पृथिवीपीठं शालः प्राकारः पत्तनं नगरं कुलं गृहं प्रासादो देवालयः वापी प्रपा पानीयशाला कासारः सरः अंधुः कूपः एषां द्वंद्वे एषु पुनः कासु पीठं मंडपः जनाश्रयः दरी कंदरा पट्टासनं द्वारं आसु पुनः कस्मिन् संसत्पीठं सभापीठं नृयानं याप्ययानं वारणगृहं अंबारी अनः शकटः रथादिः मंगिनी नौका खारिका मंजूषा पेटा शयनादिर्मंचकादिः चीवरं एषां गणे समूहे ॥ ३९ ॥

**वेदीपीठसमस्तकुंडरचनापट्टातपत्रध्वजक्षेत्रारामसुखास्त्रतुर्यशिबिरासंदीवितानेष्वपि ॥ सौम्यायोर्हतमो भवेदिति सति क्ष्मादेवतायां ध्वजो राजन्ये नखरायुधो विशि गजो गोःपत्सवेऽन्येऽन्यगः ॥४०**

अथाङ्कूरायस्य ग्राह्यस्थानमाह—वेदीति ॥ वेदी पीठं समस्तकुंडरचना पट्टः आतपत्रं छत्रं ध्वजः क्षेत्रं आरामो वाटिकादिः मुखाः प्रमुखाः अस्त्रं शस्त्रं तुर्यं वाद्यं शिबिरं पटमंडपादि आसंदी वेत्रवृक्षघटितासनं ' स्याद्वेत्रासनमासंदी ' इति हैमः ॥ वितानं उल्लोच एषां द्वंद्वे एषु सौम्य आयोऽर्हतमः शुभतमो भवेत् इति सत्यपि क्ष्मादेवतायां विप्रे ध्वज आयः शुभतमः स्यात् । राजन्ये क्षत्रिये नरखरायुधः सिंहायः शुभतमो भवेत् ' राजन्यो बाहुसंभवः ' इति हैमः । पुनः विशि वैश्ये गज आयः शुभतमो भवेत् । पत्सवे पादजाते शूद्रे गोरायः शुभतमो भवेत् । अन्ये खला आया अन्यगाः कुविंदचर्मकारादिवर्णप्राप्ताः शुभतमाः स्युः ॥ ४० ॥

करणे व्ययहीने स्यात्सिद्धिरायाधिके सदा ॥
विपरीतेऽन्यथा प्राग्वद्भगैर्मैत्रं सदत्र चेत् ॥ ४१ ॥

अथ व्यये आये न्यूनाधिके फलमाह—करण इति ॥ 'करणं कारणं विद्या कारणं क्षेत्रमुत्तमं॥ करणो जातिभेदश्च करणानींद्रियाण्यपि ' ॥१॥ इत्यनेकार्थध्वनिमंजर्या । करणे क्षेत्रे गृहे सदा व्ययहीने आयाधिके साति अत्र गृहे सिद्धिः स्यात् विपरीतो व्ययाधिक आयहीनोन्यथाऽसिद्धिः स्यात् । चेत् यदि प्राग्वत् पूर्ववत् भाद्यै राश्यादिभिर्मैत्रं स्यात्तदात्र गृहे सत् शुभं स्यात् ॥ ४१ ॥

गेहं षोडशभेदमुक्तमाद्यैः प्रस्तारैर्दिगलिंदभेदभूतैः ॥
वक्ष्ये तानहमेभिरन्यभेदास्त्वन्यत्रापि सदेति साधनीयाः ॥४२

अथ ग्रहाणां षोडशभेदानाह—गेहमिति ॥ आद्यैराचार्यैः षोडशभेदं गृहमुक्तं प्रोक्तं कैः दिग् दिशालिंदः ' प्रघाणः प्रघणोऽलिंद ' इति हैमः ॥ एतयोर्भेदभूतैर्भेदोत्पन्नैः प्रस्तारैरन्यभेदाः साधनीया इति हेतोरहं तान् प्रस्तारान् वक्ष्ये ॥ ४२ ॥

विलिखेत्करणानुमान् गुरून्प्रथमाद्यो लघुमाग्न्यरूपकान् ॥
लघुपृष्ठगुरुस्ततोऽखिला लघवो यावदयं विधिर्भवेत् ॥ ४३ ॥

अथात्र प्रस्तारं दर्शयति—विलिखेदिति॥सुधीराग्न्यरूपकान् प्रथमरूपकान् करणानुमान् क्षेत्रप्रमितान् गुरून् विलिखेत् । 'करणं क्षेत्रगात्रयोः' इत्यादि हैमानेकार्थः॥ ततः प्रथमाद्यो लघुं न्यसेत् लघुपृष्ठगुरून् लिखेत् यावत् अखिला लघवो भवंति तावदयं विधिर्भवेत्॥यतः' पादे सर्वगुरावाद्ये लघुं न्यस्य गुरोरधः । यथोपरि तथा शेषं भूयः कुर्यादमुं विधिम्' १अन्यच्च 'पुढमं गुरुहिट्ठाणे लहुया पिठविअप्यबुद्धि एसरि सासरि सापंती उवरिया पछिम देहि' २ ॥४३॥

सदनाभिमुखादिहभ्रमादपसव्यान्यदिशो लघुस्थले ॥
स्युरलिंदमुदीरितं बुधैरिति षोडशभेदजा गृहाः ॥ ४४ ॥

अथ लघुप्रघाणस्थानं दर्शयति—सदनेति ॥ बुधैरिह लघुस्थलेऽलिंदमुदीरितं प्रघाणः प्रोक्तः कस्मात् सदनाभिमुखात् गृहसन्मुखात् भ्रमात् अपसव्यान्यदिशः वामकाष्ठातः वैनिश्चितं इति षोडशभेदजा गृहाः स्युः ॥ ४४ ॥

ध्रुव१धान्ये २ जय ३ नंदौ ४ खर ५ कांत ६ मनोरमं७सुमुखं ८ ॥
कुमुखं९क्रूर१०विपक्षे११धन१२क्षया१३क्रंद१४विपुलानि१५ ॥ ४५ ॥
विजयं१६षोडशभेदैरभिरूपैरुदीरितानि नामानि ॥
नाम्ना फलमिति सदृशं कलितं च वास्तुविभोरनिशम् ॥ ४६ ॥

अथ षोडशगेहनामान्याह—ध्रुवेति ॥ विजयेति ॥ युग्मं अभिरूपैः पंडितैः सदृशरूपैर्मनोरमैर्वा षोडशभेदैर्ध्रुवादीनि नामानि उदितानि प्रोक्तानि च पुनरनिशं निरंतरं वास्तुविभोर्गृहस्वामिनो नाम्ना ध्रुवादिनाम्ना सदृशं फलं कलितं कथितं ॥ ४५ ॥ ४६ ॥

**परे वदंतीति बुधा दुष्टाख्यं तत्सदंत्यजातीनां ॥**
**शुभवर्णानां सौम्यं केचित्सर्वाणि सर्ववर्णेषु ॥ ४७ ॥**

अथ वर्णभेदेऽत्रमतमाह—पर इति ॥ परे बुधा इति वदंति इतीति किं अंत्यजातीनां तत् ध्रुवादि गृहं दुष्टाख्यं दुष्टनाम सत् शुभं स्यात् । शुभवर्णानां द्विजातीनां सौम्यं सौम्यसंज्ञं गृहं वरं स्यात् । केचिदिति वदंतीति किं सर्ववर्णेषु सर्वाणि शोभनानि स्युः ॥ ४७ ॥

**एवं द्वि२त्र्या३दि४कु१भिर्भवंति धामन्यनेकधा भेदाः ॥**
**एभिश्च खंडमेरोर्ज्ञानाय जायतेऽत्र किल सिद्धिः ॥ ४८ ॥**

अथानेकधा गृहभेदान् दर्शयति—एवमिति ॥ एवं धामनि गृहेऽनेकधा भेदा भवंति काभिर्द्वित्र्यादिकुभिर्द्वित्र्यादिभूमिभिः च पुनः किलेति सत्येऽत्र खंडमेरोर्ज्ञानाय सिद्धिर्जायते कैरेभिः ॥ ४८ ॥

**मूलं भित्तेर्धर्मराजाशमुक्तं वारुण्याशं वा तदग्राशमग्र्यं ॥**
**कल्प्या भागा मूलतो व्योमगानामर्कादीनां द्वारमिष्टं सदंशे ॥ ४९ ॥**

अथ दिगाश्रितभिन्नमूलफलमाह—मूलमिति ॥ धर्मराजाशं दक्षिणदिग्गतं भित्तेर्मूलमग्र्यं श्रेष्ठं स्यात् वाऽथवा वारुण्या पश्चिमदिग्गतं वा तदग्राशं उत्तरादिग्गतं भित्तेर्मूलं श्रेष्ठं स्यात् । पुनरर्कादीनां व्योमगानां ग्रहाणां मूलतो भागाः कल्प्याः पुनः सदंशे शुभग्रहाणामंशैर्द्वारमिष्टं श्रेष्ठं स्यात् ॥ ४९ ॥

**शालाल्पत्वान्नावकाशः सदंशे द्वारे वान्यागारकोणादिवेधात् ॥**
**पापांशे तद्वामशाखा न दुष्या शेषं नेयं तत्तदा सौम्यभागे ॥ ५० ॥**

अथ द्वारे नवांशादिशुद्धिमाह—शालेति ॥ सदंशे शुभग्रहनवांशे द्वारोद्धारस्य अवकाशो न स्यात् कस्मात् शालाल्पत्वात् पट्टशालास्तोकत्वात् वाऽथवाऽन्यागारकोणादिवेधात् पुनः पापांशे दुष्टग्रहांशे तद्वामशाखा तस्य गृहस्य वामशाखा न दुष्या स्यात्तदा सौम्यभागे तद् द्वारमशेषं नेयं कर्तव्यं ॥ ५० ॥

**दुष्टांशे तत्संभवश्चेत्तदा स्याद्द्वारे तत्र द्वारिकान्यत्र साध्वी ॥**
**कार्या केचित्सव्यगं तत्रिभागं मुक्त्वा द्वारं ज्ञांगिरोंऽशस्थमाहुः॥५१**

अथ द्वारद्वारिकामोचनविवेकमाह—दुष्टांश इति ॥ चेद्यदि दुष्टांशे तत्संभवो द्वारसंभवःस्यात् तदा तत्र द्वारं स्यात् । पुनरन्यत्र अग्रभित्तौ वा यथावकाशस्थले साध्वी शोभना द्वारिका कार्या ह्रस्वं द्वारमिति द्वारिका इति विग्रहः कर्तव्यः । केचित् बुधाः ज्ञांगिरोंऽशस्थं बुध-

गुरुनवांशगतं द्वारमाहुः किंकृत्वा तत्रिभागं तस्य गेहस्य त्रिभागं सव्यगं वामगतं त्यक्त्वा ॥ ५१ ॥

एवं दुर्गे पूर्वतो द्वारशुद्धिर्ज्ञेया द्वारे स्तंभकूपादिमार्गैः ॥
नीचोच्चोर्वीदेवताभिश्च वेधस्त्याज्यश्चोर्ध्वद्वारि नैवं गवाक्षे ॥५२॥

अथ दुर्गादिद्वारे वेधं त्यज्यन्नाह–एवं दुर्गं इति ॥ सुधीभिरेवं दुर्गे निर्वृतौ दुर्गे कृते सति द्वारशुद्धिर्ज्ञेया च पुनर्द्वारे वेधस्त्याज्यो वर्जनीयः कैः स्तंभकूपादिमार्गैः स्थूणाकूपवृक्षमार्गैश्च पुनर्नीचोच्चोर्वीदेवताभिः उच्चनीचभूमीभिः देवतामूर्तिभिश्च पुनरूर्ध्वद्वारि गवाक्षे एवंविधो वेधस्त्याज्यो न स्यात् ॥ ५२ ॥

वेधे सत्यप्यत्र वेधो न दृश्योऽतश्चेत्तद्द्विघ्नैकसूत्रेण दूरे ॥
स स्यात्सर्वत्रैव वेधप्रबोधो ज्ञेयो विद्धज्ञानिभिर्नित्यवेध्ये ॥ ५३ ॥

अथ दूरवेधे निर्दोषतामाह–वेध इति॥ चेत् यदि अतो द्वारतस्तद्द्विघ्नैकसूत्रेण गृहात् द्विगुणसूत्रेण दूरवेधे सति अत्र द्वारवेधो न दृश्यो विलोकनीयो न स्यात् । अपि निश्चितं स वेधप्रबोधो वेधज्ञानं सर्वत्रैव विद्धज्ञानिभिर्वेधज्ञैर्ज्ञेयः स्यात् कस्मिन् नित्यवेध्ये निरंतरवेधस्वप्रान्तदेशे यथा शरेण वेध्यं तत् शराख्यकं अन्यथा न ॥ ५३ ॥

मृदुलघुपुरुहूतर्क्षादितेयानिलेषु त्रिदशसचिवसोमज्ञोशनोवासरैश्च ॥
वलजकृतिरभीष्टा दुष्टयोगाद्यदुष्टैर्युवति६जितुम३धीरर्क्षोदये साधुकेंद्रे५४

अथ द्वारकरणे नक्षत्रशुद्धिमाह–मृद्विति ॥ वलजस्य द्वारस्य कृतिः करणमभीष्टा शुभा स्यात् केषु मृदूनि लघूनि पुरुहूतो ज्येष्ठा आदितेयं पुनर्वसू आनिलं स्वाती एषु च पुनः कैः त्रिदशसचिवो गुरुः सोमः ज्ञो बुधः उशनाः शुक्रः एषां वासरैर्दिनैः किंभूतैः दुष्टयोगादिभिरजुष्टैरमिश्रैः पुनः कस्मिन् युवतिः कन्या जितुमं मिथुनं धीरर्क्षाणि स्थिरराशयः एषां उदये लग्ने किंभूते साधुकेंद्रे ॥ ५४ ॥

दिनकरकिरणाक्रांतर्क्षतो द्वारचक्रे युग४यम२युग४दृग्वेद४द्वि२वेद४द्वि२रामैः ३॥ मितमुडगणभागं विन्यसेदूर्ध्वतोंतर्नियममखिलदिग्गं नाप्यधःकोणभं सत्॥ ५५ ॥

अथ द्वारचक्रे भानि न्यस्यति–दिनेति॥सुधीरूर्ध्वतोंऽतरनियमं मध्यपर्यंतं उडुगणभागं न्यसेत् कस्मिन् द्वारचक्रे कस्मात् दिनकरकिरणाक्रांतर्क्षतः सूर्याक्रांतनक्षत्रात् किंभूतं उडुगणभागं युगं चत्वारः४यमः द्वौ२ युगानि चत्वारः ४दृग् द्वौ२ वेदाः चत्वारः ४ द्वौ२ वेदाः चत्वारः ४द्वौ २रामास्त्रयः ३एभिर्मितं अपि निश्चितं अखिलदिग्गं मध्ये समस्तदिग्गतं ॥ अथ फलं ॥ अथ कोणभं अधोदिग्गतं चतुष्कोणगतं च नक्षत्रं सत् शुभं न स्यात् ॥ ५५ ॥

ध्रुवधिषणभमेषादित्यदोर्मैत्रचित्रारुरुकवसुभपौष्णेमौ-
लिदारु प्रदद्यात ॥ तरणिधिषणकाव्याहःसुधीरत्र
लग्ने विकुयुतिषु च ताराराजवीर्ये सुघस्रे ॥ ५६ ॥

अथ मोभदारुमोचने नक्षत्रादिशुद्धिमाह--ध्रुवेति ॥ सुधीः मौलिदारु पदकं प्रदद्यात् मोभ भारवट इति भाषा स्थापयेत् कैः ध्रुवाणि धिषणभं पुष्यः मेशं श्रवणः आदित्यं पुनर्वसू दोर्हस्तः मैत्रमनुराधा चित्रा रुरु मृगशीर्षं कोवायुः स्वाती वसुभं धनिष्ठा पौष्णं रेवती एतद्भैः पुनः केषु तरणिः सूर्यः धिषणो गुरुः काव्यः शुक्रः एषामहस्सु दिनेषु किंभूतेषु विकुयुतिषु कुयोगरहितेषु च पुनः कस्मिन् धीरे स्थिरे लग्ने पुनस्ताराराजवीर्ये चंद्रबले सुघस्रे सत्तिथौ ॥५६

शालास्वशेषास्वयमादृतो विधिः प्रपाश्रमाद्यापणमंदुराहिषु ॥
गीर्वाणगेहे वलजोर्ध्वदारुजा दृश्या न शुद्धिः क्वचिदित्युदीरितं॥५७

अथोपसंहारेणाह—शालेति ॥ बुधैरयं विधिरादृतोऽङ्गीकृतः क्व अशेषासु शालासु अथ पुनः प्रपा जलपर्व आश्रमादिः आश्रमस्तु मुनिस्थानं आपणः हट्टः मंदुरा 'वाजीशाला तु मंदुरा' इति हैमः । पुनर्गीर्वाणगेहे देवगृहे वलजोर्ध्वदारुना द्वारोर्ध्वकाष्ठजाता शुद्धिर्न दृश्या नो विलोकनीया इति क्वचित्स्थाने उदीरितं ॥ ५७ ॥

गृहे न रामायणभारताहवं चित्रं कृपाणाहवमिंद्रजालवत् ॥
शिलोच्चयारण्यमयं सदासुरं भीष्मं कृताक्रंदनरं त्वनंबरम् ॥ ५८ ॥

अथ गृहे दुष्टलेख्यानि निषेधति—गृह इति ॥ गृहे एतच्चित्रं आलेख्यं न सत् श्रेष्ठं न स्यात्तदाह रामायणभारताहवं रामायणभारतयुद्धयुक्तमालेख्यं कृपाणाहवं खड्गयुक्तं चित्रं इंद्रजालवत् इंद्रजालयुक्तं चित्रं शिलोच्चयारण्यमयं पर्वतवनस्वरूपं चित्रं आसुरं असुर-संबंधि चित्रं भीष्मं भयानकं चित्रं कृताक्रंदनरं दीनरोदनकनरचित्रं अनंबरं दिगंबरचित्रं ॥५८

वराहशार्दूलशिवापृदाकवो गृध्राभिधोलूककपोतवायसाः ॥
शशैणगोधादिबकादिपत्रिणो विचित्रिता नो शरणे शुभावहाः ॥५९

अथात्र दुष्टपशुपक्षिचित्रं निषेधति—वराहेति ॥ एते विचित्रिताः शरणे गृहे शुभावहाः सुखकारका न स्युः । तानाह वराहः सूकरः शार्दूलो द्वीपी शिवा फेरवः पृदाकुः सर्पः गृध्राभिधः सिंचाणकः उलूको घूकः कपोतः वायसः शशः एणो मृगः गोधादिः बकादिः पत्री पक्षी एषां द्वंद्वे एते ॥ ५९ ॥

एतत्तु रामायणभारतादिकं चित्रं गृहाद्बाह्यमगर्हितं ग्रहे ॥
तदेव यच्चादरतो विचित्रितं मठप्रसादादिषु पुण्यसारदम् ॥ ६० ॥

अथ चित्रोपसंहारेण आशादिष्वनिषेधतामाह—एतदिति ॥ एतत् रामायणभारतादिकं चित्रं गृहाग्राह्यं गेहे न स्यात् । तु पुनर्ग्रहे नवग्रहप्रासादिषु अगार्हितं श्रेष्ठं स्यात् । च पुनर्यत् तदेव आदरतः सादरेण मठप्रासादादिषु विचित्रितं पुण्यसारदं धर्मबलकरं भवेत् ॥ ६० ॥

**सुधावलेपश्च चितेरुपक्रमः स्यादिष्टकानामिनजेनवारयोः ॥**
**लघुध्रुवैंद्रांत्यमृगश्रवस्वलं स्थिरोदये वैंद्रसुवस्तिकाहनि ॥ ६१ ॥**

अथेष्टकाचयनादिकृत्यमाह—सुधेति ॥ अलमित्यवधारणे इष्टकानां चितेरुपक्रमः चयनक्रिया च पुनः सुधावलेपः छोलेपः स्यात् । क इनजः शनिः इनः सूर्यः एतद्वारयोः पुनः केषु लघूनि ध्रुवाणि ऐंद्रं ज्येष्ठा आंत्यं रेवती मृगो मृगशीर्षं श्रवः श्रवणः एषु च पुनः स्थिरोदये स्थिरलग्ने वा इति पक्षांतरे इंद्रस्य सुवस्तिकः पुरोहितो गुरुस्तस्याहनि ' पुरोधास्तु पुरोहितः सुवस्तिक ' इति हैमः ॥ ६१ ॥

**अनारमंदारुणसूतवासरा वैरंचनैरैनचलाद्यधैषणैः ॥**
**समैत्रवर्गैरुदिता नृभोदये सौधे कुलेऽन्यत्र च चित्रकर्माणि ॥६२॥**

अथ सौधादौ चित्रकर्मशुद्धिमाह—अनारेति ॥ सौधे कुले सौधं तु नृपमंदिरं सुधावलेपगृहेऽन्यत्र च चित्रकर्माणि अनारमंदारुणसूतवासरा उदिताः प्रोक्ताः आरो भौमः मंदः शनिः अरुणसूतः अरुणः सूतः सारथिर्यस्य स सूर्यः एभ्योऽन्यवासराः सौम्यवारा इति कैः वैरंचं रोहिणी नैरं पूर्वाषाढा ऐनं हस्तः चलसंज्ञानि आद्यं अश्विनी धैषणं पुष्यः एषां द्वंद्वे एभिः किंभूतैः समैत्रवर्गैः मैत्रसंज्ञनक्षत्रयुक्तैः पुनः कस्मिन् नृभोदये नृलग्ने सति ॥ ६२ ॥

**स्वस्थानमैंद्र्यां च महानसः शुचेर्दिश्यर्णसोंऽशः समवर्तिनोऽस्त्रगौः ॥**
**क्रव्यादकोणेऽशनगोरपौर्यगा सस्यस्थलं सद्दिशि मातरिश्वनः ॥ ६३ ॥**

कुलकं । अथ पूर्वादौ धनन्यासादिगृहाणि दर्शयति—स्वथेति ॥ ऐंद्र्यां दिशि स्वस्थानं धनगृहं सत् शुभं स्यात् । च पुनः शुचेर्दिशि अग्निदिशि महानसः पाकस्थानं सत् । पुनः समवर्तिनो यमस्य दिशि अर्णसो जलस्यांशो जलस्थानं सन् शुभः । 'समवर्तिकालौ' इति हैमः ॥ पुनः क्रव्यादकोणे नैर्ऋत्यां अस्त्रस्य आयुधस्य गौर्भूमिरायुधगृहं सतीत्यर्थः । पुनः अपोर्यगा अपःशब्दः सकारांतोपि क्लीबलिंग इति शब्दप्रभेदस्तेन अपोर्यगा इति वाक्यसिद्धिः । जलस्वामिदिग्गताऽशनगौर्भोजनभूः शुभा पुनः सस्यस्य धान्यस्य स्थलं गृहं मातरिश्वनो वायोर्दिशि सत् इति ॥ ६३ ॥

**स्थलं भवेदोकसि शायनं शुभं स्वपालदिग्गं च सुरार्चनस्थलं ॥**
**शिवाशमाद्यैरिति भाषितं बुधैस्तत्पार्श्वगं मध्यमतोऽन्यथाधमम् ॥६४॥**

इति श्रीकविकालिदासोदिते ज्योतिर्विदाभरणे गृहारंभाध्यायः षोडशः ॥ १६ ॥

स्थलमिति ॥ ओकसि गृहे स्वपालदिग्गं धनददिग्गतं शायनं शयने भवं स्थलं

शुभं भवेत् । शिवाशां ईशानकोणगतं सुरार्चनस्थलं देवार्चनगृहं शुभं भवेत्। च पुनस्तत्पार्श्वगं मध्यं मध्यमं अतोऽन्यथाधमं शायनस्थलं देवगृहं च स्यात् इति आद्यैर्बुधैर्भाषितं ॥ १४ ॥

इति श्रीपौर्णिमीय गच्छाधिराजभट्टारकपुरंदरश्री महिमाप्रभसूरीश्वरचरणसरोरुहचंच-रीकायमानशिष्यभावरत्नविरचितायां श्रीकालिदासकृतज्योतिर्विदाभरणस्य सुखबो-धिकायां गृहारंभाध्यायः षोडशः ॥ १६ ॥

## गृहप्रवेशप्रकरणम्

**अथेह शालारचनादनंतरं ब्रुवेऽहमावेशविनिर्णयं तथा ॥**
**यथा चतुर्वर्गफलं श्रियं कुलं प्रविश्य गेही लभतेऽपसंशयम् ॥ १ ॥**

अथ शालादीनां करणानंतरं प्रवेशो घटतेऽतः प्रवेशाध्यायसंधानमाह—**अथइति** ॥ अथानंतरं इहाध्याये शालारचनानंतरं गृहकरणानंतरं तथा तेन प्रकारेणाहमावेशनि-र्णयं गृहप्रवेशनिश्चयं ब्रुवे यथा येन प्रकारेणापसंशयं निश्चयेन गेही गृहस्थश्चतुर्वर्गफल-श्रियं चतुर्वर्गाणां फललक्ष्मीं लभते प्राप्नोति किंकृत्वा कुलं गेहं प्रविश्य ॥ १ ॥

**निकेतनावेशविधेरहर्पतेरमीनसौम्यायनमातनोति शं ॥**
**शुक्रांत्यवैशाखतपःसहस्यगं सुरासुराचार्यसुदर्शनावहम् ॥ २ ॥**

अथ गृहप्रवेशेऽयनादिशुद्धिमाह—**निकेतेति** ॥ अहर्पतेः सूर्यस्य अमीनसौम्यायनं कर्तृपदं शं सुखमातनोति विस्तारयति कस्य निकेतनस्य गेहस्य आवेशविधिः प्रवेशविधि-र्यस्य स तस्य पुरुषस्य किंभूतममीनसौम्यायनं शुक्रो ज्येष्ठः आंत्यः फाल्गुनः वैशाखः तपो माघः सहस्यः पौषः एषां द्वंद्वे एषु गतं पुनः किंभूतं सुरासुराणां देवदैत्यानां आचार्यौ गुरुशुक्रौ तयोः सुदर्शनावहं शुभदर्शनधारकं ॥ २ ॥

**रिक्ताकलाचारिणि राजनि प्रियो गृहप्रवेशो न च पर्वगामिनि ॥**
**कुयोगभद्रापमसाम्यवद्दिने दुष्टैर्दशासूतिभलग्नपेंदुभिः ॥ ३ ॥**

अथ बलहीनचंद्रादिदोषे प्रवेशं निषेधति—**रिक्तेति** ॥ गृहप्रवेशः प्रियो न हितो नो स्यात् कस्मिन् रिक्ताकलाचारिणि रिक्ताकलाः रिक्तास्तिथयः ४।९।१४। तासु गामिनि पर्वगामिनि च राजनि चंद्रे सति पुनः कस्मिन् कुयोगः भद्रा अपसाम्यं क्रांतिसाम्यं एतानि संति अस्येति एतद्युक्तदिने पुनः दशापः सूतिभपः जन्मनक्षत्रस्वामी लग्नपो लग्नस्वामी इंदुः एषां द्वंद्वे एभिः किंभूतैः दुष्टैर्दुष्टस्वभावप्राप्तैः ॥ ३ ॥

**दैत्यादितेयार्चितपादविग्रमा वारा वरा वस्तुनिवेशने भृशं ॥**
**साधारणोऽत्र द्विजराजवासरे विगर्हितौ राजनभोगवासरौ ॥४॥**

अथ गृहप्रवेशे वारशुद्धिमाह—दैत्यादीति ॥ भृशमत्यर्थं दैत्यादितेयौ असुरसुरौ ताभ्यामर्चितौ पादौ ययोस्तौ शुक्रगुरू विद्बुधः शनिः एषां द्वंद्वे एते वारा वराः श्रेष्ठाः स्युः कस्मिन् वास्तुनिवेशने गृहप्रवेशे पुनरत्र प्रवेशे द्विजराजवासरश्चंद्रदिनं साधारणः स्यात् । पुनरत्र राजनयोगवासरौ क्षात्रियग्रहवासरौ रविभौमौ विगर्हितौ सक्तौ स्तः ॥ ४ ॥

**मरुदांगिरसोडुवासवध्रुवयादोऽर्यममैत्रवर्गभैः ॥**
**प्रविशेन्नवमालयं नरो गतदोषैरपि भूषणार्चितैः ॥ ५ ॥**

अथ वैतालीयेन गृहप्रवेशे भशुद्धिमाह—मरुदिति ॥ नरः पुमान् नवमालयं नूतनगेहं प्रविशेत् कैः स्फुरंति सर्याक्रमणरहितानि आंगिरसोडु पुष्यं वासवं धनिष्ठा ध्रुवाणि यादोर्यभं यादसां जलजंतूनामर्यः स्वामी वरुणस्तस्य भं शततारा मैत्रवर्गभानि मित्रसंज्ञानि एषां द्वंद्वे एतैः किंभूतैर्गतदोषैर्दोषवर्जितैरपि पुनर्भूषणार्चितैः सुयोगाढ्यैः ॥ ५ ॥

**भरवींदुषु यैर्निवेशनं कलितं द्वित्वमिहापि जीवकैः ॥**
**इदमादृतमेभिरोकसोऽभिजिदंशुद्युसहोनभोनुगम् ॥ ६ ॥**

अथात्र जैनमतेन स्वमतं दृढयति—भरवीमिति ॥ यैर्जीवकैः क्षपणैर्दिगंबरैरिति शब्दपर्यायाः श्वेतांबरैरपि इह लोके भरवींदुषु राशिसूर्यचंद्रेषु द्वित्वं द्वौ द्वौ कलितं प्रोक्तं 'द्वौ द्वौ रवींदू भगणौ' इति शिरोमणौ । 'दोशशिदोरविपेटमे' इति जैनदर्शनोक्तेः । 'जीवको वृद्धिजीविनि । क्षपणे प्राणके पीतसालसेवकयोर्द्रुमे ॥ १ ॥ व्यालग्राहे ' इति हैमः॥ 'जीवको जैन इति हलायुधः' तैरेभिर्जीवकैरपि ओकसो गेहस्य निवेशनं प्रवेशनमादृतमंगीकृतं किंभूतं निवेशनं अभिजिन्नक्षत्रं अंशुद्यु सूर्यदिनं सहो मार्गशीर्षो नभः श्रावणः एषु अनुगं प्राप्तं अतो मयापि एषां मतमंगीकृतमित्यर्थः ॥ ६ ॥

**कलशेंऽशुभचक्रसंभ्रमे कुकृतापंचकरामरामभे ॥**
**ककुदिंगतरकंठपायुगे तलकंठापरसौम्यभैर्वरम् ॥ ७ ॥ ***

अथ कलशचक्रे तानि स्थापयति—कलश इति ॥ कलशे कुंभे किंभूते अंशुभचक्रसंभ्रमे सूर्यनक्षत्रात् चक्रभ्रमणे पुनः किंभूते कुः एकः १कृतानां चतुर्णां मानपंचकं मर्यादीकृत्य ४।४।४।४।४।रामास्त्रीणि ३ रामास्त्रीणि भानि यस्मिन्स्त तस्मिन् पुनः किंभूते के मूर्द्धनि १दिक्षु चतुर्दिक्षु १६ अंतरे मध्ये ४ कंठे ३ पायौ गुदे ३ एतत्स्थानगते इति 'पानं पायुर्गुदं च्युतिः' इरितिहैमः ॥ एवं सप्तविंशतिभानि स्थाप्यानि ॥ अथ फलमाह प्रवेशने कलशस्थापनं वरं स्यात् । कैः गुदे तले ३ कंठे ३अपरे पश्चिमे ४सौम्ये उत्तरस्यां ४एषु गतैर्भैर्नक्षत्रैः कृत्वा ॥७॥

**अमृतादनवैद्यभं क्वचिद्वदितं धामनिवेशने शुभं ॥**
**शरणं ह्युत यद्दिगाननं नृवरस्तद्धरिदास्यभे विशेत् ॥ ८ ॥**

अथात्र किंचिद्विशेषं दर्शयति—अमृतेति ॥ क्वचित्स्थाने अमृतादनाः सुधाभुजो देवास्तेषां वैद्यौ तयोर्भमश्विनी धामनिवेशने गेहप्रवेशने शुभं गदितं प्रोक्तं । हि अवधारणे उत वितर्के

* आगति पंचर, ३१३.

यादिगमनं दिङ्मुखगतं शरणं गेहं भवेत् नवरो नृपस्तद् गेहं विशेत् कस्मिन् हरिदास्यभे दिगमुखनक्षत्रे ॥ ८ ॥

अतिमिद्विशरीरभस्थिरानुदयानाहुरगारवेशने ॥
चरमत्स्यलवान्यभागगानभिरूपाः शुभयोगवीक्षणात् ॥ ९ ॥

अथ गृहप्रवेशे लग्नशुद्धिमाह—अतिमीति ॥ अभिरूपाः पंडिता अगारवेशने गेहप्रवेशने उदयान् लग्नानि आहुः कस्मात् समयोगवीक्षणात् शुभयोगविलोकनेन किंभूतान् उदयान् अतिमिद्विशरीरभस्थिरान् मीनवर्जितद्विस्वभावस्थिरलग्नानि पुनः किंभूतान् उदयान् चरम-त्स्यलवान्यभागगान् चरमीननवांशेभ्योऽन्यनवांशगतान् ॥ ९ ॥

स्थिरराश्युदये प्रवेशनं विदधीतेति जगाद गालवः ॥
अपजूकनरोदये क्वचित्सदितीहोभयमादृतं मया ॥ १० ॥

अथात्रान्यमतेन स्वमतं द्रढयति—स्थिरेति ॥ गालवऋषिरिति जगाद इति किं सुधीः स्थिरराश्युदये प्रवेशनं विदधीत पुनः क्वचित्स्थानेऽपजूकनरोदये तुलारहिते नृराश्युदये प्रवेशनं सत् शुभं इति हेतोरिह प्रवेशे मया उभयमादृतमंगीकृतं ॥ १० ॥

प्रातिभा५ध्वर९केंद्रगैः शुभैरशुभैः केंद्रलयांत्यभान्यगैः ॥
प्रविधाय निवेशमौकसं विविधं धामपदे शमश्नुते ॥ ११ ॥

अथ गृहप्रवेशे भावगतग्रहफलमाह—प्रतिभेति ॥ गेही धामपदे गेहास्पदे विविधं शं सुख-मश्नुते प्राप्नोति किंकृत्वा औकसं गृहसंबंधिनं निवेशं प्रविधाय कैः प्रतिभा पंचमभावः ५ अध्वरो नवमः ९ केंद्राणि १।४।७।१० एषु गतैः शुभैर्ग्रहैः पुनः कैः केंद्राणि १।४।७।१० लयोऽष्टमः ८ आंत्यं भं द्वादशस्थानं एभ्योऽन्यगतैरशुभैर्ग्रहैः ॥ ११ ॥

जानिभादुत जन्मलग्नतः पृथुसारोऽत्र स राशिरुद्गमः ॥
चरराशिमपास्य तत्र वै कुलमावेशितमेति शं कुलात् ॥ १२ ॥

जानिभेति ॥ उत वितर्के जानिभात् जन्मराशितो जन्मलग्नतः पृथुसारो बहुवीर्य उपचयभवन-गत इत्यर्थः । उद्गमे भव एवंविधः स राशिः स्थिरद्विस्वभावराशिः स्यात्तदा तत्र समये चरराशिमपास्य विहाय गेहिना कुलं गेहमावेशितं प्रवेशितं सत् गेही शं सुखमेति प्राप्नोति कस्मात् कुलात् गृहात् ॥ १२ ॥

सघनः कविसूनुरुद्गमे समदो राजसुतो यदा तदा ॥
ससुखो गुरुरालयाश्रयादनिशं शंसितशं तदालयम् ॥ १३ ॥

सघन इति ॥ यदा उद्गमे लग्ने सघनस्तनुभावस्थः कविसूनुः शुक्रः स्यात् । समदः सप्तमभावस्थो राजसुतो बुधः स्यात् ॥ ससुखश्चतुर्थभावगतो गुरुः स्यात्तदालयाश्रयात् गृहप्रवेशात् अनिशं

सद्मा तत् गृहं शंसितशं कथितसुखं स्यात् । किंभूतं गृहं आ लक्ष्मीस्तस्या आलयः स्थानं य-स्मिंस्तत् ॥ १३ ॥

**उदये १ च रसातले ४ शुभैरतितेजोभिरगारवेशनं ॥**
**निखिलश्रियमावहत्यदोऽपखलातर्यचरे पुरोदये ॥ १४ ॥**

उदयइति ॥ अदोऽगारवेशनं कर्तृपदं निखिलश्रियं संपूर्णलक्ष्मीमावहति बिभर्ति कैरुदये लग्ने रसातले चतुर्थभावे चातितेजोभिर्बहुबलयुक्तैः शुभैर्ग्रहैश्च पुनः पुरोदये तनुलग्नेऽचरे स्थिरलग्ने किंभूतेऽपखलातरि अपगताः खलाः क्रूरा अतरि मृत्यौ भावे यस्मिन् स तस्मिन् ॥१४॥

**उदितं सुरसूडु सूतिकावसथस्याद्यबुधैर्विनिर्मितौ ॥**
**चतुराननशौरिभांतरे स्मृतभे हारि च तत्प्रवेशनम् ॥ १५ ॥**

अथ सूतिकागृहकर्मशुद्धिमाह—उदितमिति ॥ सूतिकावसथस्य 'अरिष्टं सूतिकागृहं' इति हैमः । तस्य विनिर्मितौ निर्माणकर्मणि आद्यबुधैः पुराणपंडितैः सुरसूडु देवमातृनक्षत्रं पुनर्वसु उदितं प्रोक्तं च पुनस्तत्प्रवेशनं तस्य सूतिकागृहस्य प्रवेशनं हारि शुभं स्यात् कस्मिन् चतुराननो ब्रह्मा रोहिणी शौरिभं श्रवणः एते अंतरे मध्ये यस्मिंस्तत्तस्मिन्नेवंविधे स्मृतभे प्रोक्तनक्षत्रे ॥ १५ ॥

**शयाश्विने शांकरसप्तिवास्तुनः सुत्रामभं सिंधुरबंधसद्मनः ॥**
**कोशौकसोऽतर्भसुपर्णकेतुभे प्रवेशनिर्माणविधौ विगृह्यते ॥ १६ ॥**

अथ वृषभतुरंगमादीनां शालाकर्माह—शयेति ॥ शांकरा वृषभाः सप्तयस्तुरंगमा एषां वास्तुनो गेहस्य प्रवेशनिर्माणविधौ सुधीभिः शयाश्विने शयो हस्तः आश्विनं अश्विनी अनयो-र्द्वंद्वे प्रथमाद्विवचनेन पदं विगृह्यते अर्थवशात् विभक्तिपरिणामः पुनरेवं सिंधुरबंधसद्मनो ह-स्तिबंधनगेहस्य प्रवेशनिर्माणविधौ सुत्रामभं ज्येष्ठा विगृह्यते पुनः । कोशौकसो भंडारगेहस्य प्रवेशनिर्माणविधौ अंतर्भमभिजित् नक्षत्रांतर्गतत्वात् सुपर्णकेतुर्गरुडध्वजो विष्णुस्तस्यभं श्रवणः इमे द्वे कर्मपदे विगृह्येते संगृह्येते ॥ १६ ॥

**आवासनिर्माणमृगांकभीरवः सादित्यनासत्यशयर्क्षशौरिभाः ॥**
**आरंभणे देवकुलस्य मंजुला मुक्तादितेयाश्विनभाद्गमामठे ॥ १७ ॥**

अथ देवगृहादिकर्मशुद्धिमाह— आवासेति ॥ देवकुलस्यारंभणे देवगृहारंभे आवासनिर्माण-मृगांकभीरवः गृहप्रारंभनक्षत्राणि मंजुलाः शोभनाः स्युः किंभूताः आदित्यं पुनर्वसु ना-सत्यमश्विनी शयर्क्षं हस्तः शौरिभं श्रवणः एतैः सहवर्तमानाः पुनरिमास्तारा मठे छात्रव्रतिनां गेहे मंजुलाः किंभूता मुक्ते त्यक्ते आदितेयं पुनर्वसु आश्विनभं इमे द्वे याभिस्ताः ॥ १७ ॥

**सदोचितं पुष्करभं प्रपाकृतावट्टस्यवेशोघटनं च तारयोः ॥**
**भगाजयोः क्षुद्रगणाश्रमक्रियापूर्वात्रयेशेष्वपि नैव गर्हिताः॥१८॥**

अथ जलगृहादिकर्मशुद्धिमाह—सदोचितामिति ॥ प्रपाकृतौ पानीयशालाकरणे सदा पुष्करभं जलभं पूर्वाषाढा उचितं योग्यं । अट्टस्य आपणस्य वेशः प्रवेशो घटनं मूल्यादिकृत्यं च भगाजयोस्तारयोः पूर्वाफल्गुनीरोहिण्योर्विषये शुभं स्यात् । क्षुद्रगणाश्रमक्रिया तुच्छदेवस्थानानि इत्यर्थः लघुदेवगणानां देहरी इत्यादि गृहकर्मणि नैव गर्हिता शुभा इत्यर्थः । केषु पूर्वात्रयैशेष्वपि पूर्वात्रिकं ऐशमार्द्रा एषु ॥ १८ ॥

**विशेष एषोऽत्र मयोदितः पृथक् शेषं शुभाद्यं निखिलं गृहोदितम् ॥**
**ग्राह्यं प्रवेशे च तथा विनिर्मितौ तथैव तत्क्षुद्रवदासुरोरजम् ॥ १९ ॥**

अथोपसंहारेणाह—विशेषेति ॥ यथात्राध्याये एष विशेषः पृथक् उदितः प्रोक्तः । यथा प्रवेशे निर्मितौ च शेषं निखिलं भाद्यं नक्षत्रादिकं गृहोदितं गृहेषु प्रोक्तं ग्राह्यं स्यात् । तथैव तत्क्षुद्रवत् लघुदेवगणवत् देहल्याद्या तुल्यं आसुरोरजं असुरगेहं न गर्हितं ॥ १९ ॥

**उग्रे नृपोत्तारमुपैति तीक्ष्णे राज्ञः कुमारः किल राजपत्नी ॥**
**मिश्रे क्वचित्कृत्तिकयाग्निदाहः समस्तभेदोरजसन्निवेशात् ॥ २० ॥**

अथ गृहप्रवेशे उग्रादिभानि सापवादान्याह—उग्रइति ॥ उग्रे उग्रसंज्ञे भे समस्तभेदोरजसंनिवेशात् ग्रहान् संपूज्य प्रवेशात् समग्रग्रहवास्तुपूजनात् नृपोऽत्तारं मृत्युमुपैति । एवं तीक्ष्णे नक्षत्रे राज्ञः कुमारो नृपसुतो मृत्युमुपैति मिश्रे नक्षत्रे राजपत्नी मृत्युमुपैति क्वचित् कृत्तिकया सहाग्निदाहः स्यात् ॥ २० ॥

**नोल्कानिपातावनिकंपवासरे काले निवेशोऽत्र वरो न दुर्दिने ॥**
**यानोदिताः सच्छकुना विलोमगा यच्छंति शं धामनिवेशकारिणः॥२१**

अथोल्कादिदोषप्रवेशमाह—नोल्केति ॥ अत्र गृहे निवेशः प्रवेशो न वरः श्रेष्ठो नो स्यात् कस्मिन् उल्कानिपातोऽवनिकंपो यस्मिन् दिने इमौ जातौ तद्दिने इत्यर्थः । अनयोर्वासरे वारे पुनरकाले दुर्दिनेऽकालजातमेघजाततमसि न वरः ॥ अथ विलोमगा यानोदिताः प्रयाणोदिताः सच्छकुनाः शुभशकुनाः शं सुखं यच्छंति ददति कस्य धामनिवेशकारिणः ॥ २१ ॥

**न योगिनी मंदिरपृष्ठयोगिनी वियोजिनी वेश्मनिवेशिनो वशा ॥**
**भवेद्यदा शूलमगारपृष्ठगं त्वगारशूलो निलयप्रवेशकृत् ॥ २२ ॥**

अथ गृहप्रवेशे योगिन्यादिदोषं त्यजन्नाह—न योगिनीति ॥ यदा योगिनी मंदिरपृष्ठयोगिनी गृहपृष्ठानुगामिनी न भवेत्तदा वेश्मनिवेशिनो गृहे प्रवेशकर्तुर्वशा स्त्री वियोजिनी विशेषेण योजिनी संयोगयुक्ता भवेत् । तु पुनर्यदागारपृष्ठगं शूलं भवेत्तदा निलयप्रवेशकृत् गृहप्रवेशकर्ताऽगारशूलो गृहात् शूलं रोगो यस्य स अथवा काष्ठकीलकप्रायग्रहो भवेत् 'शूलं रुगायुधयोः॥ योगे शूला तु पण्यस्त्री वधहेतुश्च कीलकः' इति हैमः ॥२२॥

काले निकाय्यानुगते निवेशिनः काले निकाय्यानुगतिस्त्वरं भवेत् ॥
पाशेऽपशोभे हि सराजमंडले स्वमंडले मंडलतामुपैति ना ॥ २३ ॥

कालइति—आदित्ये उत्तरे काल इत्यनुसारेण निकाय्यानुगते गृहप्रष्टगते काले सति निवेशिनः प्रवेशकर्तुर्नरस्य अरं शीघ्रं निकाय्यानुगतिः प्रेतगतिर्मृत्युर्भवेत् ॥ तु पुनः पाशे मे पाशनक्षत्रे निकाय्यानुगते सति अपगता शा लक्ष्मीः शं सुखं वा यस्मात्स अपश एवंविधो ना पुमान् भवेत्। हे युक्तार्थे राजमंडले निकाय्यानुगते स ना पुमान् स्वमंडले स्वजनवर्गे मंडलतां प्रभुत्वमुपैति ॥ २३ ॥

विधाय वामं द्युमणिं पुरोऽग्रजां सनीरकुंभं विमलांगमानसः ॥
नरश्च वेदध्वनिभिः सुमंगलैः सतोरणद्वारमगारमाविशेत् ॥ २४ ॥

अथ गृहप्रवेशविधिमाह—विधायेति ॥ नरः पुमान् सतोरणद्वारं तोरणयुक्तद्वारमगारं गेहमाविशेत् किंकृत्वा वामं द्युमणिं सूर्यं विधाय पुनरग्रजान् विप्रान् सनीरकुंभं जलभृतघटं च पुरोऽग्रे विधाय कैर्वेदध्वनिभिः सुमंगलैश्च किंभूतो नरो विमलांगमानसः निर्मलकायचित्तः॥२४॥

प्रविश्य पस्त्यं किल कालवेदिनं गुरुं च गोचीरधनैः समर्चयेत् ॥
विद्वांसमाप्तं गृहपस्तु शिल्पिनं दीनांस्तथा धान्यचयैश्च मागधान्॥२५॥

अथ गृहप्रवेशानंतरं कृत्यमाह—प्रविश्येति ॥ किलेति युक्तं गृहपो गृहस्वामी पस्त्यं गेहं प्रविश्य कालवेदिनं दैवज्ञं गुरुं च गोचीरधनैः सुरभिवस्त्रधनैः समर्चयेत् पूजयेत्तु पुनर्विद्वांसं कोविदं आप्तं प्रधानं स्वजनादिकं वा तु पुनः शिल्पिनं कारुं समर्चयेत् । तथा दीनान् मागधान् मंगलपाठकान् धान्यचयैर्धान्यसमूहैश्च समर्चयेत् ॥ २५ ॥

तिष्येशनासत्यशयश्रवःस्थिरैरलिंजराली च वितानमालये ॥
कोष्ठादिकं तल्पमहानसस्थितिं सदन्त्यशेषं तदुपस्करं न्यसेत् ॥ २६ ॥

अथ गृहे भांडादिनिवेशशुद्धिमाह—तिष्येशेति ॥ पुमान् सदन्हि शुभदिने आलये गेहेऽशेषं समस्तं तदुपस्करं न्यसेत् स्थापयेत् । तान्याह अलिंजराली 'उत्रेवाडि' इति भाषा ॥ वितानं चंद्रोदयं कोष्ठादिकं धान्यकोष्ठादिकं तल्पमहानसस्थितिं शय्यास्थानं चुल्लिस्थानमिति कैः तिष्यः पुष्यः ईश आर्द्रा नासत्यमश्विनी शयो हस्तः श्रवणः स्थिरसंज्ञानि तैः ॥ २६ ॥

न दर्शरिक्ताकुयुगीश्वरांगजाः कृत्स्नक्षयोपस्करसाधने हिताः ॥
खट्वांगमृद्दारुतृणादिचुल्हिका नयेन्न वा वासवपंचके कुलम् ॥ २७ ॥

अथ गृहोपस्करसाधनशुद्धिमाह—न दर्शेति ॥ कृत्स्नक्षयोपस्करसाधने समस्तगृहसामग्रीसाधने दर्शरिक्ताकुयुगीश्वरांगजा हिता न स्युः । दर्शोऽमा रिक्तास्तिथयः कुयुग् दुष्टयोगः ईश्वरांगजा भद्रा अथवा पक्षांतरे गृही वासवपंचके धनिष्ठापंचके खट्वांगमृद्दारुतृणादिचुल्हिकाः कुलं गृहं न नयेत् । द्विकर्मकधातुत्वात् कुलमिति अधिकरणे कर्म ॥ खट्वांगानि श-

श्मादीनि मृतकार्ये तृणकाष्ठादिसंग्रह इति कोऽर्थः श्रविष्ठोत्तरार्द्धादिपाणिपर्यंतभेषु पूर्वमत्रगर्हितमिदमपि वा पक्षांतरेण धनिष्ठादिपंचके इति विशेषः ॥ २६ ॥

**मघामृगैनेज्यकुशर्क्षधीरभादितेयमैत्रेषु च वासवद्वये ॥**
**कवीज्यसोमेष्वुदकुंभ्यधिक्रिया भद्राख्यरिक्तान्यतिथौ जलोदये॥२७॥**

अथ गृहे जलस्थानस्थापनमाह—मघेति ॥ उदकुंभ्यधिक्रिया जलकुंभाधिकरणं पानीयाधारणं स्थापनं स्यात् केषु मघा मृगो मृगशिरः ऐनं हस्तः ऐज्यं पुष्यः कुशर्क्षं जलभं पूर्वाषाढा धीराणि ध्रुवाणि आदितेयं पुनर्वसु मैत्रमनुराधा एषां द्वंद्वे एषु च पुनर्वासवद्वये धनिष्ठायुग्मे पुनः कस्मिन् कविः शुक्रः इज्यो गुरुः सोमः एषां वारे पुनर्भद्राख्यरिक्तातिथिभ्योऽन्यतिथौ पुनर्जलोदये जलराशिलग्ने ॥ २७ ॥

**नवेऽमरस्थापनमामरे दिनेऽथो मंदिरे दृष्टसितार्यमंडले ॥**
**उत्सृष्टविश्वर्क्षमघार्यवासरे समाचरेद्राजबले दले सिते ॥ २८ ॥**

अथ गृहे देवमूर्तिस्थापनशुद्धिमाह—नव इति ॥ अथानंतरं नवे नूतने मंदिरे सुधीरमरस्थापनं समाचरेत् कुर्यात्। कस्मिन् आमरे दिने उत्तरायणे पुनर्दृष्टसितार्यमंडले शुक्रगुरूदये सति पुनः उत्सृष्टं त्यक्तं विश्वर्क्षमुत्तराषाढा मघा च आर्यवासरश्च येन स तस्मिन् उत्तराषाढामघागुरुदिनवर्जिते सिते दले शुक्लपक्षे राजबले चंद्रबले सति ॥ २८ ॥

**रिक्ताशिवापक्षतिदर्शमुक्तैर्लघुध्रुवादित्यमृगांत्यमैत्रैः ॥**
**सकर्णयुग्मैर्गुरुसौम्यवारे नरोदये स्थापनमिष्टमस्य ॥ २९ ॥**

अथ कृष्णमूर्तिस्थापनमाह—रिक्तेति ॥ अः कृष्णस्तस्य स्थापनमिष्टं शुभं अथवा इष्टा मा लक्ष्मीर्यस्य स इष्टमो नारायणस्तस्य स्थापनं कर्तव्यमिति कैः रिक्तास्तिथयः शिवा विष्टिः पक्षतिः प्रतिपत् दर्शोऽमा एषां द्वंद्वे एभिर्मुक्तैर्लघूनि ध्रुवाणि आदित्यं पुनर्वसु मृगो मृगशिरः अंत्यं रेवती मैत्रमनुराधा एषां द्वंद्वे एतैः किंभूतैः सकर्णयुग्मैः श्रवणधनिष्ठायुक्तैः पुनः कस्मिन् गुरुसौम्यवासरे पुनर्नरोदये नृराश्युदये ॥ २९ ॥

**संस्थापयेत्स्थाणुमिहाभिजिच्छ्रवोभूतेशभाचार्यहिमांशुभीरुभिः ॥**
**ऐनीनजीवद्युषु भूभुवि क्वचिद्यमारककुयोगैर्जितुमोदयेऽनिशम्॥३०॥**

अथात्र शिवलिंगस्थापनमाह—संस्थापयेदिति ॥ अनिशं सदा सुधीरिह गृहे स्थाणुं शिवं संस्थापयेत् ॥ काभिः अभिजित् श्रवणः भूतेश ईश्वरस्तस्य भमार्द्रा आचार्यः पुष्यः हिमांशुभीरवस्तारा इत्यर्थः ताभिः पुनः केषु ऐनिः शनिः इनः सूर्यः जीवो गुरुः एषां द्युषु पुनः कैर्यमाकुयोगैः अमाकुयोगरहितैः पुनर्जितुमोदये मिथुनलग्ने क्वचित्स्थाने भूभुवि भौमवारे स्थाणुस्थापनमुक्तम् ॥ ३० ॥

तिष्याभिजित्तामरसोदयाजभैर्विकर्तनाचार्यविदामहर्गतैः ॥
संस्थापितोऽजस्तनुते चतुर्विधं निपोदये वर्गफलं व्ययोगकैः ॥३१॥

अथ ब्रह्मस्थापनमाह—तिष्येति ॥ अजो ब्रह्मा चतुर्विधं वर्गफलं धर्मार्थकाममोक्षसंबंधि तनुते विस्तारयति किंभूतः संस्थापितः कैः तिष्यः पुष्यः अभिजित् तामरसोदयः कमलजो ब्रह्मा रोहिणी अजभं श्रवणः एषां द्वंद्वे एतैः किंभूतैर्विकर्तनः सूर्यः आचार्यो गुरुः विद् बुधः एषां अहर्गतैर्दिनप्राप्तैः पुनः किंभूतैर्व्ययोगकैः कुयोगरहितैः पुनः कस्मिन् निपोदये 'कलशः कलसो निपः' इति हेमोदये ॥ कुंभोदये ॥ ३१ ॥

रुरूत्तमांगे शिवभे शिफायां श्रुतौ शये शक्तिगणप्रतिष्ठा ॥
शस्ता रवावांगिरसेऽर्यमे वा शस्त्र्यंगनाक्ष्जित्मश्विसारलग्ने १२॥ ३२ ॥

अथ भवान्या गणस्थापनामाह—रुरूत्तमेति ॥ शक्तिगणप्रतिष्ठा देवीगणस्थापना शस्ता शुभा स्यात् कस्मिन् रुरूत्तमांगे मृगशीर्षे शिवभे आर्द्रायां पुनः शिफायां मूले पुनः श्रुतौ श्रवणे शये हस्ते पुना रवौ वारे आंगिरसे गुरौ यमे शनौ वा पुनः शस्त्री धनुः अंगना कन्या जितमं मिथुनं विसारो मीन एषां लग्ने ॥ ३२ ॥

नृभोदये पाण्यजिच्छ्रवस्सु बलाननोपेंद्रगणान्प्रतिष्ठयेत् ॥
शुभे दिनेऽथैषु च भाग्यरेवतीमित्रार्यमर्क्षेषु रविं रवौ हरौ ॥ ३३ ॥

अथ रामकृष्णादिगणस्थापनामाह—नृभोदय इति ॥ सुधीर्बलाननोपेंद्रगणान् बलभद्रप्रमुखकृष्णगणान् प्रतिष्ठयेत् कस्मिन् नृभोदये नराश्युदये वा पुनः पाणिर्हस्तः अभिजित् श्रवः श्रवणः एषु पुनः शुभे दिने ॥ अथ सुधी रविं सूर्यं स्थापयेत् केषु एषु विष्णुगणप्रतिष्ठावारभेषु पुनः भाग्यं पूर्वाफाल्गुनी रेवती मित्रोऽनुराधा अर्यमा उत्तराफाल्गुनी एतेषु पुना रवौ सूर्यदिने हरौ सिंहलग्ने ॥ ३३ ॥

पौष्णार्द्रयोरंशुसितांशुजन्मनां वारेषु वाजांघ्रियुगेऽसृजि क्वचित् ॥
गुहाखुयानादिपिनाकभृद्गणानास्थापयेद्युग्ममरंदभोदये ॥ ३४ ॥

अथ स्कंदगणेशशिवगणस्थापनमाह—पौष्णेति ॥ सुधीर्गुहाखुयानादिपिनाकभृद्गणान् स्कंदगणेशादिशंकरगणान् आस्थापयेत् कयोः पौष्णार्द्रयो रेवत्यार्द्रयोः पुनः केषु अंशुः सूर्यः सितः शुक्रः अंशुजन्मा शनिरेषां वारेषु वा पुनः क्वचित्स्थाने आजांघ्रियुगे अजपादयुगे पूर्वाभाद्रपदा उत्तराभाद्रपदा एतयोः असृजि भौमवारे पुनर्युग्मं मिथुनं मरंदो भ्रमरो वृश्चिकः अनयोरुदये लग्ने ॥ ३४ ॥

महाबलर्क्षश्रुतिशैवदोर्भगं संस्थापनं त्वद्यतरं हनूमतः ॥
प्रभाकरादित्रिदिनेषु वा गुरौ स्थिरोदयेऽत्रैव मरुद्गणस्य च ॥३५॥

अथ हनूमत्स्थापनमाह—महेति ॥ हनुमतो वज्रकंकटस्य संस्थापनं त्वद्यतरं श्रेष्ठतरं स्यात् । किंभूतं संस्थापनं महाबलर्क्षं वायुभं स्वाती श्रुतिः श्रवणः शैवमार्द्रा दोर्हस्तः एषु गतं

पुनः केषु प्रभाकरादित्रिदिनेषु सूर्यादित्रयाणां वारेषु वा पक्षांतरे च पुनर्मरुद्गणस्य देवगणस्य संस्थापनं शुभं स्यात् । कस्मिन् अत्र हनूमत्स्थापनमुहूर्ते पुनर्गुरौ वारे स्थिरोदये ॥ ३९ ॥

**सप्तर्षिसंस्थोडुषु संप्रतिष्ठामृषिव्रजस्याहुरजेज्यभे वा ॥**
**जीवान्हि वा जीव९।१२गृहोदये सत्केंद्रे क्वचित्सोमदिनेऽपि संतः॥३६॥**

अथ ऋषिगणप्रतिष्ठामाह—सप्तर्षीति ॥ संतः सज्जनाः ऋषिव्रजस्य संप्रतिष्ठामाहुः कथयंति केषु सप्तर्षिसंस्थोडुषु सप्तर्षीणां संस्था प्रतिष्ठा तस्यां यानि उडूनि तेषु वा पुनरजेज्यभे अजः कृष्णस्तस्यभं श्रवणः इज्यभं पुष्यः पुनर्वा जीवान्हि गुरुदिने वा पुनर्जीवस्य गुरोः गृहं धनुर्मीनश्च तयोरुदये किंभूते सत्केंद्रे क्वचित्स्थाने सोमदिनेऽपि ॥ ३६ ॥

**सरौहिणेयाहनि वासवर्क्षे संस्थापयेद्योषिति लोकपालान् ॥**
**सितत्र्यहःशैवशिफासु शस्ता चरे च यक्षादिगणप्रतिष्ठा ॥ ३७ ॥**

अथ लोकपालस्थापनमाह—सरौहिणेयेति ॥ सुधीर्लोकपालान् संस्थापयेत् कस्मिन् वासवर्क्षे धनिष्ठायां किंभूते वासवर्क्षे सरौहिणेयाहनि बुधयुक्तदिने पुनः कस्यां योषिति कन्यालग्ने ॥ पुनर्यक्षादिगणप्रतिष्ठा शस्ता शुभा स्यात् कासु सितात् शुक्रात् त्रयः शुक्रशनिः आदित्यः एषामहर्दिनं शैवमार्द्रा शिफा मूलं एषां द्वंद्वे आसु च पुनश्चरे लग्ने ॥ ३७॥

**न्यंकूत्तमांगश्रुतितिष्यहस्तैरब्जार्ययोः सर्वसुरप्रतिष्ठा ॥**
**अर्हा सभूषैरपदोषदोषैर्जीवेक्षिते वारणवैरिलग्ने ॥ ३८ ॥**

अथ समुच्चयदेवप्रतिष्ठामाह—न्यंकूत्तमेति ॥ सर्वसुरप्रतिष्ठा अर्हा शुभा स्यात् कैः न्यंकूत्तमांगं मृगशीर्षं 'मृगभेदा रुरु न्यंकु, इति हैमः ॥ श्रुतिः श्रवणः तिष्यः पुष्यः हस्तः एषां द्वंद्वे एभिः किंभूतैः सभूषैः सुयोगसहितैः पुनः किंभूतैरपगता दोषाः कुयोगा एव दोषा रात्रियैभ्यस्तानि तैः पुनः कयोरब्जार्ययोश्चंद्रगुरुदिनयोः पुनर्वारणवैरिलग्ने किंभूते जीवेक्षिते गुरुणा दृष्टे ॥ ३८ ॥

**मघाशतानंदभसौम्यशार्ङ्गिभैः संस्थापितः पितृगणः प्रजाश्रियै ॥**
**शूरौषधीशामरवंद्यवासरै रिक्ताविमुक्तैर्व्यालिधीरभोदये ॥ ३९ ॥**

अथ पूर्वजगणस्थापनमाह—मघेति ॥ पितृगणः पूर्वजगणः संस्थापितः प्रजाश्रियै संतानलक्ष्म्यै स्यात् । कैः मघा शतानंदो ब्रह्मा रोहिणी 'स्थविरः शतानंदपितामहौ' इति हैमः ॥ सौम्यं मृगशीर्षं शार्ङ्गी श्रवणः एषां द्वंद्वे एभिः पुनः कैः शूरः सूर्यः ओषधीशश्चंद्रः अमरवंद्यो गुरुः एषां वासरैः किंभूतैः रिक्ताविमुक्तैः रिक्तातिथिरहितैः पुनः कस्मिन् व्यालिधीरभोदये वृश्चिकरहितस्थिरलग्नोदये ॥ ३९ ॥

**चैत्येऽथ जैनप्रतिमास्थलं न्यसेच्चरे चरर्क्षोदयवत्यनेहसि ॥**
**जयासु पूर्णासु बुधे सिते विधौ क्वचिच्च चित्राश्विनभेऽपि वा रवौ॥४०**

अथ जैनबिंबप्रतिष्ठाशुद्धिमाह—चैत्य इति ॥ सुधीः चैत्ये जिनसद्मनि जैनप्रतिमास्थलं जिनप्रतिमायाःस्थलं यवाक्षणादिप्रासादिकं न्यसेत्। कस्मिन् चरे चरलग्ने चरर्क्षोदये चरराश्युदययुक्तेऽनेहसि काले पुनः कासु ज्यासु पूर्णासु तिथिषु पुनः कस्मिन् बुधे सिते शुक्रे विधौ वा च पुनश्चित्राश्विनभे वा पक्षांतरे कचित् स्थाने रवौ सूर्यवारेऽपि ॥ ४० ॥

**यस्यामरस्य क्रियते प्रतिष्ठा वारे तिथौ भे च भवेत्तदीये ॥**
**सुयोगलग्ने शुभराशिलग्ने लग्ने सुशुद्ध्योदितमासकालके ॥४१॥**

अथ यस्य प्रतिष्ठा क्रियते तस्य देवस्य वारादिग्राह्यतामाह—यस्येति ॥ यस्यामरस्य देवस्य प्रतिष्ठा क्रियते तदिये तस्य देवस्य संबंधिनि वारे तिथौ भे नक्षत्रे च पुनः कस्मिन् सुयोगलग्ने शुभयोगप्राप्ते पुनः शुभराशिप्राप्ते एवंविधे लग्ने पुनः सुशुद्ध्योदितमासकालके शुद्ध्या निर्दोषेण प्रोक्तमासकाले ॥ ४१ ॥

**स्वाम्नायभेदोदितहोमकर्मणा दानैरिभाघ्न्याश्वतुलारसाननैः ॥**
**शास्त्रागमज्ञो ननु कालवेदिनः संतोष्य विप्रानिह देवतां न्यसेत् ॥४२॥**

अथ देवगृहे देवस्थापनमाह—स्वाम्नायेति ॥ ननु निश्चितं शास्त्रागमज्ञ इह देवगृहे देवतां न्यसेत्। केन स्वाम्नायभेदः स्वसंप्रदायभेदस्तेन उदितं प्रोक्तं होमकर्म तेन किं कृत्वा कालवेदिनो दैवज्ञान् विप्रान् च संतोष्य कैरिभा हस्तिनः आघ्न्या गावः अश्वाःस्तुला रसा भूमिः प्रमुखानि येषु तैर्दानैः ॥ ४२ ॥

**अनेकदेवायतनानि भारते कृतानि येनाप्तशकोऽधिदेवतः ॥**
**संस्थापिता वेदविधानदानतः श्रीविक्रमार्कोऽवनिपो विराजताम् ॥४३॥**

**इतिश्री कविकालिदासोदिते ज्योतिर्विदाभरणे नवगृहप्रवेशदेवताप्रतिष्ठाध्यायः सप्तदशः॥**

अथोपसंहारेण विक्रमनृपं वर्णयति—अनेकेति ॥ येन विक्रमार्केण भारते भरतक्षेत्रेऽनेकदेवायतनानि देवगृहाणि कृतानि पुनर्येनाधिदेवता देवेश्वराः संस्थापिताः प्रतिष्ठापिताः स विक्रमार्कोऽनविपो भूमिपतिर्विराजतां भातु। किंभूतः आप्तशकः प्राप्तशकः अपशक इति पाठे अपगताः शका म्लेंछा यस्मात्स क्षयीकृतम्लेंछ इत्यर्थः। अथवागपतः शको यस्मात् पूर्वशकनिवृत्तिकृत् निजशकप्रवृत्तिकृत् इत्यर्थः ॥ ४३ ॥

इति श्रीपौर्णिमीयगच्छाधिराजभट्टारकपुरंदरश्रीमहिमाप्रभसूरीश्वरचरणसरोरुहचंच-रीकायमाणशिष्यभावरत्नविरचितायां श्रीकालिदासकृतज्योतिर्विदाभरणस्य सुखबोधिकायां नवगृहप्रवेशामरप्रतिष्ठाध्यायः सप्तदशः ॥ १७ ॥

## अग्न्याधानादि विशेषसंस्कारप्रकरणम् ।

भूत्वा गृही वन्हिपरिग्रहं चरेत्स दारकालेऽशुभदुत्तरायणे ॥
दायाद्यकालेऽप्युत सोमपग्रहावनस्तगौ स्तो ननु चेदृजुर्गुरुः ॥ १ ॥

अथ गृहप्रवेशानंतरं अग्निसेवनं घटतेऽतोऽग्न्याधानाद्यर्थसंधानमाह—भूत्वेति ॥ गृही भूत्वा गृहस्थतां प्राप्य स नरो वन्हिपरिग्रहमग्न्याधानं चरेत् कुर्यात् कस्मिन् दारकाले विवाहकाले पुनःशुभदुत्तरायणे उत्तरायणगते सूर्ये पुनर्दायाद्ये भगो दायाद्यो भ्रातॄणां धनविभागस्तस्यकाले समयेऽपि उत चेत् सोमपग्रहौ द्विजग्रहौ गुरुशुक्रौ अनस्तगौ स्तो भवतः अस्तरहितौ इत्यर्थः ननु निश्चितं चेत् गुरुः ऋजुरवक्रः स्यात्तदा ॥ १ ॥

स्ववेदशाखोदितकर्मकालो मुख्योऽथ दक्षैरिह मानितः स्यात् ॥
तच्छाखिनोऽसौ क्वचिदंतकाशेऽयनेऽपि वा तद्विषयानुकूलः ॥ २ ॥

अथाग्न्याधाने समयं दर्शयति—स्ववेदेति ॥ अथेह अग्न्याधानविधौ दक्षैर्निपुणैः स्ववेदशाखोदितकर्मकालो निजवेदशाखाप्रोक्तकृत्यसमयोऽसौ मुख्यो मानितोऽङ्गीकृतः स्यात् । कस्य तच्छाखिनस्तस्य वेदस्य शाखिनो नरस्य क्वचित्स्थाने वा पक्षांतरेंऽतकाशेऽयने दक्षिणायनेऽपि तद्विषयानुकूलस्तस्य कालस्य गोचरानुकूलः स्यात् ॥ २ ॥

सदारकालोऽभिहितश्चतुर्थीकर्मोत्तरस्तत्र परिग्रहोऽग्नेः ॥
दायाद्यकः सोदरसारभागस्तूपासिताग्नौ जनकेऽग्रजे च ॥३॥

अथ दारादिकालेऽग्न्याधानमाह—सदारेति ॥ चतुर्थीकर्मोत्तरो विवाहतश्चतुर्थदिने होमविधानादूर्ध्वः सदारकालः शुभदारकालो विवाहकालोऽभिहितः प्रोक्तः । तु पुनः सोदराणां भ्रातॄणां सारभागो द्रव्यविभागो दायाद्यकेऽभिहितः प्रोक्तस्तत्र सदारकाले दायाद्यकाले वाऽग्नेः परिग्रहोऽग्न्याधानं स्यात् । कस्मिन् उपासिताग्नौ सेविताग्न्याधाने जनके पितरि अग्रजे भ्रातरि च सति ॥ ३ ॥

तदाज्ञया वाग्निपरिग्रहोऽस्मिन्सौम्यायने भूषणभाजि काले ॥
कलौ स्वशाखादृतकर्मसिद्धो यथावकाशे तदसंभवत्वात् ॥ ४ ॥

अथ आज्ञयाग्निपरिग्रहं दर्शयति—तदेति ॥ वा पक्षांतरे कलौ अस्मिन् दारकाले वा दायाद्यकाले तदाज्ञया पितृभ्रात्राज्ञयाग्निपरिग्रहः स्यात् । कस्मिन् भूषणभाजि निर्दोषे गुरुसितविकृतचाररहिते काले ॥ अथ तदसंभवत्वात्तयोर्जनकज्येष्ठभ्रात्रादेरभावत्वाद्यथावकाशे यथाप्राप्तकाले स्वशाखाभिर्निजशाखाभिरादृतं कर्म तेन सिद्धो निष्पन्नोऽग्निपरिग्रहः स्यात् ॥ ४ ॥

रिक्तातिरिक्ते रविसूनुमुक्ते भद्रोज्झिते पक्षयुगे व्ययोगे ॥
धूमध्वजाधानमुशंति संतः संतोषभूषाःसति सोमवीर्ये ॥ ५ ॥

अथाग्निपरिग्रहे कुयोगान्निषेधति--रिक्तेति ॥ संतोषभूषाः संतोषभूषणाः संतो धूमध्वजाधानमग्निपरिग्रहमुशंति वांछंति कस्मिन् रिक्तातिरिक्ते रिक्तातिथिवर्जिते रविसूनुमुक्ते शनिवर्जिते भद्रोज्झिते विष्टिवर्जिते व्ययोगे कुयोगवर्जिते एवंविधे पक्षयुगे पुनः कस्मिन् सति शुभग्रहे सोमवीर्ये सति ॥ ५ ॥

वृद्धश्रवोवन्हिभधीरभेषु वृद्धश्रवोवन्हिभजीवभेषु ॥
कुरंगमूर्द्धांत्यभयोरशंसन्धनंजयाधानविधानमार्याः ॥ ६ ॥

अथाग्निपरिग्रहे भशुद्धिमाह—वृद्धेति ॥ आर्या आचार्या धनंजयाधानविधानकर्म अशंसन् अकथयन् केषु वृद्धश्रवा इंद्रो ज्येष्ठा वन्हिभं कृत्तिका जीवभं पुष्यः एषां द्वंद्वे एषु पुनः कयोः कुरंगमूर्द्धा मृगशीर्षं अंत्यभं रेवती तयोः ॥ ६ ॥

वैरोचनादित्यभविश्वकर्मभैर्जगाद कश्चिद्धुतभुक्परिग्रहं ॥
एतेषु युक्तेष्वपि सर्वशाखिनां नासौ क्षये मास्यधिके च हायने ॥७॥

वैरोचनेति॥कश्चित् हुतभुक्परिग्रहं जगाद केषु वैरोचनं रोहिणी आदित्यभं पुनर्वसु विश्वकर्मभं चित्रा एषां द्वंद्वे एभिर्युक्तेषु एतेषु पूर्वोक्तयोगेषु केषां सर्वशाखिनां सर्ववेदशाखिनां विप्राणां । अथासौ वन्हिपरिग्रहो न स्यात् कस्मिन् क्षये मासि अधिके मासि च हायने वर्षे ॥७॥

निपे११कुली रे४शकलि१२न्युतोदये मृगे१०तदंशेऽपि विभावरीविभौ॥
निर्मंथदारुप्रभवस्तनूनपाच्छमं समीयादिति कोविदा विदुः ॥ ८ ॥

अथ कुंभादिलग्ने नूतनाग्निपरिग्रहं निषेधति —निप इति ॥ निर्मंथदारुप्रभवो मंथनकाष्ठसंभवस्तनूनपात् अग्निः शममुपशांतिं क्षयमित्यर्थः समीयात् प्राप्नुयात् । कदाग्निसंभवस्तदाह उत वितर्के कस्मिन् निपे घटे कुलीरे कर्के शकलिनि मीने मृगे मकरे उदये लग्ने तदंशे तेषां घटादीनां नवांशेऽपि विभावरीविभौ चंद्रे सति इति कोविदाः पंडिता विदुः ॥ ८ ॥

तपो९मनीषा५बल३लब्धि११केंद्रगौ मित्रत्रयार्यौ तनुतोऽग्निसंग्रहे ॥
स्तोमाश्रियं वा द्रविणा२य११मान१०धी५बंधूपग४स्तारकराजनंदनः॥९

अथाग्निपरिग्रहे वारादिशुद्धिमाह—तपइति ॥ मित्रत्रयार्यौ मित्रात् सूर्यात् त्रयं रविः सोमो भौमश्चेति त्रयं आर्यो गुरुः इमौ अग्निसंग्रहे स्तोमाश्रियं यज्ञे शोभां बहुश्रियं वा तनुतो विस्तारयतः किंभूतौ मित्रत्रयार्यौ तपो नवमं ९ मनीषा पंचमं५ बलं तृतीयं ३ केंद्राणि

१ वृद्धश्रवा इन्द्रो वन्हिभमग्निभ उभे मिलित्वा द्विदैवताकमेकं विशाखा धीरभानि ध्रुवसंज्ञकानि वृद्धश्रवा विष्णुः श्रवणः वन्हिभं कृत्तिका जीवभं पुष्येति.

१।४।७।१० इषु गतौ ॥ वा पुनस्तारकराजनंदनो बुधः स्तोमश्रियं तनोति किंभूतो द्रविणं द्वितीयं २ आय एकादशं ११ मानो दशमं १० धीः पंचमं ५ बंधुश्चतुर्थं ४ एतद्भवनोपगतः ॥ ९ ॥

**यज्वा गुरौ शत्रयु९दयेऽग्निसंग्रहे क्रिये१ऽसृजि व्योम्नि१०मंदे७च सत्फलं**
**मित्रे विमानोपचये ३।६।११त्रिनेत्रजे तथैव मंदे च विधुंतुदे भवेत् ॥१०॥**

यज्वेति ॥ यज्वा यज्ञकृत् अग्निसंग्रही सत्फलः प्राप्तशुभफलो भवेत् कस्मिन् शत्रयुदये धनुर्लग्नस्थे गुरौ पुनः क्रिये मेषराशौ वा व्योम्नि दशमे वा मंदे सप्तमभावेऽसृजि भौमे सति पुनर्विमानोपचये दशमभाववर्जिते उपचये ३।६।११ मित्रे सूर्ये सति तथैव मंदे शनौ सति च पुनर्विधुंतुदे राहौ सति ॥ १० ॥

**वशा लयं याति लये८विधौ खले नरश्च साधावुभयोरिहामयः ॥**
**नीचे जितेऽसाधुभिरुद्गमप्रभावधोगतिं याति कृशानुकोपतः ॥ ११॥**

वशेति ॥ लयेऽष्टमभावे विधौ चंद्रे सति वशा स्त्री लयं क्षयं याति च पुनर्लये खले ग्रहे सति नरो लयं याति पुनरिह लग्नेऽष्टमभावस्थे साधौ सौम्यग्रहे सति उभयोर्दंपत्योरामयो रोगः स्यात् । पुनर्नीचे नीचभावस्थेऽसाधुभिः खलग्रहैर्जिते वा एवंविधे उद्गमप्रभौ लग्नस्वामिनि सति नरोऽधोगतिं नरकगतिं याति कस्मात् कृशानुकोपतः आहिताग्निकोपप्रभावात् ॥ ११ ॥

**स्वनीचगैरंशुमदंशुसंकुलैः सुत्राममंत्रीद्विजराजमंगलैः ॥**
**स्वपर्ययस्थातृगृहोपवर्तिभिर्नैवानलाधानमिने मधावजे ॥ १२ ॥**

स्वनीचेति॥ अनलाधानं अग्न्याधानं नैव स्यात् कैः सुत्राममंत्री इंद्रगुरुः द्विजराजश्चंद्रः भौम एषां द्वंद्वे तैः किंभूतैः स्वनीचगैर्निजनीचराशिगतैः पुनः किंभूतैः अंशुमदंशुसंकुलैः सूर्यकिरणलुप्तैः पुनः किंभूतैः स्वपर्ययस्थो निजरिपुः अत्ताष्टमभावः अनयोर्गृहोपवर्तिभिः स्वशत्रुगृहमृत्युगृहगतैः पुनः कस्मिन् मधौ चैत्रेऽजे मेषस्थे इने सूर्ये सति ॥ १२ ॥

**दिनावसानप्रहरोदयो दयां द्यति द्विजस्याहितकृष्णवर्त्मनः ॥**
**तमी तदाधानविधौ मरुत्तमी तदा समस्तागमतात्रदायता ॥ १३ ॥**

अथाग्निपरिग्रहे कालशुद्धिमाह—दिनेति ॥ दिवावसानप्रहरोदयश्चतुर्थप्रहरलग्नं द्विजस्य दयां द्यति खंडयति किंभूतस्य द्विजस्य आहितकृष्णवर्त्मनः स्थापिताग्नेः तथा तदाधानविधौ मरुत्तमी देवरात्रिर्दक्षिणायनं तमी दक्षिणायनरजनी अत्ता नाशस्तस्यादायता अत्रदायता आयुर्दायका इत्यर्थः। समस्तागमता सर्वशास्त्रप्रमाणता स्यात् ॥ १३ ॥

**हुताशनोपासनकालवत् क्वचिद्याम्यायनं सत्समुदीरितं हि तत् ॥**
**श्रुतिप्रमाणान्यतया न तद्वचः प्रमाणमस्माद्धृतमुत्तरायणम् ॥ १४ ॥**

अथात्र कस्यचिन्मतं दूषयति—हुताशनेति ॥ कचित्स्थाने हि यस्मात् तत् याम्यायनं सत् शुभं समुदीरितं प्रोक्तं किंभूतं याम्यायनं हुताशनोपासनकालवत् अग्न्याधानसेवनकालयुक्तं तद्वचः प्रमाणं न स्यात् कथं श्रुतिप्रमाणान्यतया वेदप्रमाणतो वैपरीत्येन अस्मात् कारणात् उत्तरायणं कृतं सत्यं स्यात् ॥ १४ ॥

**कृतावसथ्यावनिदेवताभिः स्ववेदभेदोदितकालसाध्याः ॥**
**तत्पाकयज्ञाश्च हविष्यसंस्थाः सप्तैव सप्तानु च सोमसंस्थाः ॥१५॥***

अथ संस्थानां त्रिकं सेव्यमाह—कृतेति ॥ कृतावसथ्यावनिदेवताभिर्विहिताग्न्याधानस्थानविप्रैस्तत्पाकयज्ञास्तस्यावसथ्यस्य पाकयज्ञाः सप्त च पुनर्हविष्यसंस्था घृतयज्ञसंस्थाः सप्त अनु पश्चाच्च सोमसंस्थाः संस्कारविशेषयज्ञाः सप्त एवं स्ववेदवेदोदितकालसाध्या निजनिजवेदशाखावेदोक्तकालेन साधनीयाः ॥ यतः॥ अग्न्याधेयः १ अग्निहोत्र २ दर्शपूर्णमासौ ३ चातुर्मास्यानि वैश्वदेवपर्व वरुणप्रघासपर्व शाकमेधापर्व शुनासीरीयपर्व ४ पशुबंधः ५ सौत्रामणी६पाकयज्ञ७इति सप्त हविर्यज्ञसंस्थाः १॥ श्रवणाकर्म १ आश्वयुजीकर्म २ आग्रहायणी ३ अपूपाष्टका ४ मांसाष्टका ५ शाकाष्टका ६ वर्षाष्टका ७ इति पाकयज्ञसंस्थाः सप्त ॥ अग्निष्टोमः१ अत्यग्निष्टोमः२ उक्थ्यः ३ षोडशी४ अतिरात्र ५ वाजपेयः ६ आप्तोर्यामः ७ इति सोमसंस्थाः सप्त॥ अथः आवसथ्यप्रसंगाद्वेदिकामानं लिख्यते ॥ 'षडरत्निर्द्विपाशा च मध्ये पंचसु चिन्हिता ॥ द्विहस्तेऽङ्गुलाङ्के च त्रिंशदष्टादशकेषु च॥१॥सार्द्धहस्ते च पाशः स्याद् वेदी स्यात्पौर्णिमासिकी । एवं रज्जुं विनिर्माय वेदिं कुर्यात्॥ तत्प्रकारस्तु 'सूत्रे प्राचि त्र्यरत्न्यं वशंकोः पाशौ प्रमुच्य तौ ॥ षडंगुलगतं चिन्हमाकर्षेन्नैरृतीं दिशं ॥ एवं करे द्विहस्तांके शंकुमारोपयेत्ततः॥ षडंगुलगतं चिन्हमाकर्षेद्वायुगां दिशं ॥२॥ तत्रापि द्विकरे चिन्हे शंकुमारोप्य तं त्यजेत्॥ कृत्वा पश्चिमे श्रोणी अंशौ पूर्वे प्रसाधयेत् ॥ ४॥तस्या रज्जोश्चतुर्थीकमाकर्षेद्दक्षिणां दिशं ॥ आकृष्य रज्जुं चिन्हे पंचमे शंकुमावहेत् ॥ ५ ॥ एवमेवोत्तरे भागे आकर्षेदीशगां दिशं ॥ पंचाके शंकुस्तत्रापि तेषु सूत्राणि वेष्टयेत् ॥ ६ ॥ मध्ये संग्रहप्रकारोऽपि तत्रैव ॥ आनीय रज्जुं पूर्वार्द्धात् पश्चार्द्धे यावदंत तु ॥ द्विगुणीकृत्य तां रज्जुं मध्ये तस्यास्तु शंकुकौ ॥ ७॥प्रामयेत्तां मानेन तया रज्ज्वाष्टभागया॥ वा पृथुः चतुरीयेण मध्या पाठिता संग्रहो ॥८॥ अथवा॥ वेदिश्रोण्यंशयोर्मध्ये तया रज्ज्वाष्टभागया । विलिखेन्मध्यतो वेद्यौ स ज्ञेयो मध्यसंग्रहः ॥२॥ अपरामितां वा वेदिं कुर्यात् ॥ त्रिचतुरादिमानं उत्सृज्य गार्हपत्याहवनीययोरंतरालं षोढा सप्तधा वा गंतुरमं त्रेधा विभज्यापरात्तृतीयभागेन दक्षिणायम्य तस्मिन्नग्निं विपर्यास्योत्तरांस उत्करः॥ अरत्निश्चतुरश्रस्तु पूर्वस्याग्नेः खरो भवेत् ॥ रथचक्रकृतिः पश्चाच्चंद्रार्द्ध इव दक्षिणः॥१॥ अग्नेरुदक् सार्द्धसप्तांगुले मध्यं ततो लिखेद्वृत्तमेकोनविंशत्या प्राची या मध्यगा भवेत् ॥ उदगर्द्धे त्रिपर्वाक् स्यात् रेखा दक्षिणस्य तु॥ गार्हपत्यमंडलं सार्द्धत्रयोदशांगुलमितसूत्रभ्रमेण निष्पादनीयं । गार्हपत्यस्य पुरस्तादृष्टसुप्रक्रमेष्वेकादशसु द्वादशसु सप्तसु वाहवनीय इत्यलं ॥ १५ ॥

---

* आकृति नंबर ३७

दैत्यादितेयार्चितमौढ्यकालस्तथोपरागक्षयवृद्ध्यनेहाः ॥
संक्रांतिरादुष्यति पाकयज्ञानेष्वन्यदोषप्रकरो न दुष्टः ॥ १६ ॥

अथ शुक्रास्तादिदुष्टकाले पाकयज्ञानाह—दैत्येति ॥ दैत्यादितेयार्चितमौढ्यकालः शुक्र-गुर्वोरस्तकालस्तथा उपरागो ग्रहणं तथा क्षयवृद्ध्यनेहाः क्षयाधिकमासादिस्तथा संक्रांतिः पाकयज्ञान् दुष्यति पुनरेषु पाकयज्ञेषु अन्यद्दोषप्रकरो न दुष्टः स्यात् ॥ १६ ॥

मघौ निदाघे शिशिरे च मेनिरे बुधा हविःसोमविधानमादरात् ॥
श्रितानलाधानदिनोडुयुग्गणं स्फुरत्तनौ वेदविभौ द्विजगृहे ॥१७॥

मघाविति ॥ बुधा आदरात् सोमविधानं मेनिरे बुबुधिरे कस्मिन् मघौ वर्तते निदाघे उष्णकाले शिशिरे च सति पुनर्द्विजौ गुरुशुक्रौ तयोर्गृहं धनुर्मीनौ वृषतुलौ जातित्वादेकवचनं तस्मिन् द्विजगृहे वेदविभौ वेदस्वामिनि किंभूते वेदविभौ स्फुरत्तनौ अस्तरहिते किंभूतं सोमविधानं श्रितानलाधानदिनोडुयुग्गणं प्राप्ताग्न्याधानदिननक्षत्रयोगगणं ॥ १७ ॥

सौम्यायने दूषणमुक्तवासरेऽनिशं महाहोमविधिं समाचरेत् ॥
पूर्णाजयानंदवतीनसद्दिनैः सुगोचरे वैकृतकालवर्जिते ॥ १८ ॥

अथ होमविधानशुद्धिमाह—सौम्येति ॥ अनिशं सदा सुधीर्महाहोमविधिं समाचरेत् कुर्यात् कस्मिन् सौम्यायने उत्तरायणे किंभूते दूषणमुक्तवासरे दोषवर्जितदिने पुनः किंभूते सुगोचरे शुभग्रहगोचरे पुनः किंभूते विकृतौ भवो वैकृतः कालस्तेन वर्जिते पुनः कैः पूर्णास्तिथयः जयास्तिथयः नंदवत्यो नंदास्तिथयः इनसद्दिनानि सूर्यशुभग्रहदिनानि एषां द्वंद्वे एतैः ॥ १८ ॥

हुताशनाधानहितर्क्षवर्गे शैवश्रवोऽजांघ्रिशयान्वितेऽस्मिन् ॥
विदुर्महारुद्रमुखाननेकान् होमानभिज्ञा हि सुयोगयोगे ॥ १९ ॥

अथ होमे भशुद्धिमाह—हुताशेति ॥ हि अवधारणे अभिज्ञाः पंडिताः अनेकान् महारुद्रमुखान् होमान् विदुः कस्मिन् अस्मिन् हुताशनाधानहितर्क्षवर्गे अग्न्याधानशुभकारकनक्षत्रसमूहे किंभूते शैवमार्द्रा श्रवः श्रवणः अजो रोहिणी अंघ्रिः पूर्वाभाद्रा शयो हस्तः एषां द्वंद्वे एभिरन्विते युक्ते पुनः किंभूते सुयोगयोगे शुभयोगे शुभयोगप्राप्ते ॥ १९ ॥

पूर्णाहुतिः पुण्यतमा सदाहुतौ पूर्णातिथौ पुण्यधिया प्रशस्यते ॥
नंदाजयास्वावभृतं निमज्जनं पूर्णासु वा सन्त्युदये सदह्न्यपि ॥२०॥

अथ कृताहुतौ यज्ञांतस्नानशुद्धिमाह—पूर्णेति ॥ पुण्यधिया पवित्रबुद्धिना नरेण पूर्णाहुतिः पुण्यतमा अतिशयेन पुण्या प्रशस्यते कस्यां सतां शुभग्रहाणां आहुतिर्यस्यां पूर्णातिथौ । नरेणावभृथो यज्ञांतस्तस्मिन् भवमावभृतं निमज्जनं स्नानं प्रशस्यते कासु तं-

हाजयासु तिथिषु वा पूर्णासु तिथिषु सदन्हयपि शुभग्रहदिनेऽपि किंभूतं निमज्जनं सतां नृणां शुभनरराशीनामुदयो लग्नं यस्मिंस्तत् ॥ २० ॥

**उदीरितं चावभृताभिषेचने नृपाभिषेके वलयत्रयं क्रमात् ॥**
**विराजि सम्राजि च राज्यदस्तथा हयाधिपे सिंधुरपे नराधिपे ॥२१॥**

अथ यज्ञांतस्नाने राजमुद्राचक्रं दर्शयति—उदीरितमिति ॥ अवभृथाभिषेचने नृपाभिषेके च वलयत्रयं कलशचक्रत्रयमुदीरितं प्रोक्तं कस्मिन् विराजि विशेषेण राजते इति विराट् तस्मिन् तथा सम्यक्प्रकारेण राजते इति सम्राट् तस्मिन् राजते इति राट् तस्मिंश्च क्रमात् क्रमेण हयाधिपेऽश्वपतौ सिंधुरपे गजाधिपतौ नराधिपे चादश्चक्रत्रयं प्रोक्तं ॥ यतः 'अग्निहोत्रादिकर्ता यो ब्राह्मणो राट् प्रकीर्तितः ॥ सम्राड् वै वाजपेयेन विराट् तत्पूर्वयज्ञतः' ॥ १ ॥ इति यज्ञांते विप्राणां भूपानामभिषेके चेदं चक्रत्रयं ज्ञेयमिति हार्दं ॥२१॥

**एतक्रमेणोत्तरपूर्वयाम्यगं भपंचनाडीपरिभिन्नमालिखेत् ॥**
**सदैव नासत्यमघाशिफादिकात्रिभेदतारापटलावहं त्वदः ॥२२॥ ❀**

अथ तच्चक्रत्रये नक्षत्रस्थापनं दर्शयति—एतक्रमेति ॥ सुधीः क्रमेण उत्तरपूर्वयाम्यगं उत्तरपूर्वदक्षिणदिग्गतं भपंचनाडीपरिभिन्नमेतच्चक्रत्रयमालिखेत् पुनः सुधीरदश्चक्रत्रयं सदैव नासत्यमश्विनी मघा शिफा मूलमित्यादिकेन अश्विन्यादिप्रथमेन त्रिभेदतारापटलावहं भेदत्रयेण नक्षत्रसमूहभृतं लिखेत् । कोऽर्थः प्रथममश्वपतिच्छत्रचक्रं नक्षत्रपंचनाडिकाविद्धं तत्र प्रथमं मस्तकेऽश्विनी देया ततो भरणी कृ.रो.मृ.आ.पु.पु.श्ले. इति । एवं द्वितीयं गजपतिच्छत्रचक्रं तत्र प्रथमं मस्तके मघा दातव्या ततः पू.उ.ह.चि.स्वा.वि.अ.ज्ये. इति । तृतीयं नरपतिच्छत्रचक्रं तत्र प्रथमं मस्तके मूलं दातव्यं ततः पू.उ.श्र.ध.श.पू.उ.रे. इति वलयत्रयं ॥ २२ ॥

**अतोऽपरेषु क्षितिपेषु यज्वसु स्वकीयनामाक्षरभादिकं त्विदं ॥**
**आधारनामासनपट्टसिंहवत् सिंहासनानीत्यपि भेदपंचकं ॥२३॥❀**

अथ विशेषतः पंचभेदं सिंहासनत्रयचक्रमाह—अत इति । यज्वसु यज्ञकर्तृषु अश्वपति अश्वपतिगजपतिनरपतिषु इदं च त्रयं साधारनामासनपट्टसिंहवत् ४ सिंहासनमपि आधारः आसनं पट्टः सिंहः सिंहासनमित्यपि ईदृशमपि भेदपंचकं सिंहासनत्रयं चक्रं भवति । तु पुनः अतोऽश्वपादिभ्योऽपरेषु क्षितिपेषु राजसु स्वकीयनामाक्षरभादिकं नृपनामनक्षत्रतः स्थापनीयमिति चक्रं स्यात् ॥ तथाचोक्तं 'आदौ चक्रं समालिख्य छत्रत्रयसुशोभनं । अश्विन्यादि न्यसेत्तत्र सप्तविंशति भानि च ॥ १ ॥ अश्विन्याद्यं मघाद्यं च मूलाद्यं च क्रमेण च । उत्तरे पूर्वदक्षिणे एतच्छत्रत्रयं मतं ॥२॥ प्रतीचीमध्यरेखाया ईशानांतं हयाधिपः । आग्नेयांतं गजाधिपस्तद्वत् च नराधिपः॥३॥ अश्वाध्यक्षगजाध्यक्षनराध्यक्षाः क्रमेण च । एषां

आकृति नंबर ३८ आकृति नंबर ३९।४०।४१.

छत्रविभागेन ज्ञातव्यं च शुभाशुभं ॥ ४ ॥ अमीषां भूभृतामृक्षं यत्र ऋक्षे व्यवस्थितं । तच्छत्रं तस्य भूपस्य शुभाशुभफलप्रदं ॥ ५ ॥ चापरं कलशं वीणां छत्रं दंडं पतद्ग्रहं । आसनं कीलकं रज्जुनैव भेदाः प्रकीर्तिताः ॥६॥ यस्य छत्रे स्थितः सौरिर्भंगं तस्य विनिर्दिशेत् ॥ इत्यादि फलं ज्ञेयमिति ॥ अथातः संप्रवक्ष्यामि चक्रं सिंहासनत्रयं । येन विज्ञातमात्रेण क्रियते राज्य-निर्णयः ॥ १ ॥ सप्तविंशतिऋक्षैस्तु एकैकं च नवात्मकं । अश्विनीमघमूलाद्यं पंचनाडीवि-भेदकं ॥ २ ॥ अश्विन्याद्युत्तरे भागे मघाद्यं पूर्वतः स्थितं । मूलाद्यं दक्षिणे चापि ज्ञातव्यं नृपतित्रयं ॥ ३ ॥ इतरेषु च राज्येषु नृपनामर्क्षतो वदेत् । शुभाशुभमिदं सर्वं यस्य यस्यास-नस्थितं ॥ ४ ॥ नाडिकापंचभेदेन एकैकस्यासने भवेत् । आधारमासनं पट्टं सिंहं सिंहासनं तथा ॥ ५ ॥ आधारादिफलं सर्वमेकैकस्य वदाम्यहं । ग्रहवेधवशाज्ज्ञेयं सौम्यक्रूरैः शुभाशुभं ॥६॥ नृपस्याधारमाद्यर्क्षे यदा पट्टोऽभिषेचितः । पराधीनगतो राज्यं कुरुते नात्र संशयः ॥७॥ आसनस्थेन ऋक्षेण नीतियुक्तो भवेन्नृपः । प्रधानपुरुषादेशी प्रजाशांतिकरो भवेत् ॥ ८ ॥ पट्ट-ऋक्षे यदा राजा चोपविष्टो य आसने । पूर्वराज्यस्थितेस्तुल्यां चिरं पालयते महीं ॥९॥ सिं-हरूपी भवेद्राजा सिंहऋक्षासने स्थितः । संग्रामस्य प्रियो नित्यमसाध्यो मंत्रिणामपि ॥ १० ॥ सिंहासने गते ऋक्षे तेजस्वी भीषणाकृतिः । चलचित्तो महाक्रोधी प्रजापीडाकरो नृपः ॥ ११ ॥ इत्याद्यत्र ग्रहाणामपि फलं ज्ञेयं ॥ २३ ॥

**यज्वा च राजा गतधर्मलक्ष्मीराधारनामोडुनि नीतिसंपत् ॥**
**इहासनर्क्षेऽनु च पट्टधिष्ण्ये प्रजाप्रियो भेऽर्थबलोऽस्ति सिंहे ॥२४॥**

अथात्र चक्रे स्थितनक्षत्रफलमाह—यज्वेति॥ इह चक्रे आधारनामोडुनि आधारस्थिते ऋक्षे यज्वा राजा च गतधर्मलक्ष्मीः परहस्तगतराज्यलक्ष्मीर्भवेत् । एवमासनर्क्षे सति नीतिसंपद् नीति-युक्तो भवेत् । अनु पश्चाच्च पट्टधिष्ण्ये सति प्रजाप्रियो भवेत् । सिंहे भे सिंहऋक्षे सति अर्थ-बलोऽस्ति ॥ २४ ॥

**सिंहासने शासनलोकशोको धिष्ण्ये भवेदत्र विपापवेधे ॥**
**तत्कालचंद्रोडुनि साध्ववस्थेऽभिषेकितोऽसौ सुखभृन्नृलग्ने ॥ २५॥**

सिंहेति ॥ सिंहासने धिष्ण्ये सति शासनलोकशोकः प्रजादुःखकारको नृपो भवेत् । असौ नृपः सुखभृत् सुखधारकःस्यात् किंभूतोऽत्र विपापवेधे पापग्रहवेधवर्जिते साध्ववस्थे शुभावस्था-यां स्थिते तत्कालचंद्रोडुनि अभिषेकचंद्रनक्षत्रे नृलग्ने वाभिषेकितः सन् ॥ २५ ॥

**भद्रासनेऽसद्व्यधगेऽभिषेकभे सदन्विते वेतशिवोध्वरी नृपः ॥**
**भद्रासने सद्व्यधगेऽभिषेकभे सदन्विते वेतशिवोध्वरी नृपः ॥ २६॥**

अथात्र चक्रे पापग्रहविद्धभफलमाह—भद्रेति ॥ भद्रासनेऽसद्व्यधगे पापग्रहवेधप्राप्तेऽसदन्विते पापग्रहयुक्तेऽभिषेकभे सति अध्वरी यज्वा नृपो वा इतं निर्गतं शिवं कल्याणं यस्मात् स एवंविधः स्यात् ॥ वा पुनर्भद्रासने सद्व्यधगे शुभग्रहवेधप्राप्ते सदन्विते शुभग्रहयुक्तेऽभिषेकभे इतं प्राप्तं शिवं कल्याणं येन स एवंविधः स्यात् ॥ २६ ॥

द्वादश्यासु तिथिषु वा पूर्णासु तिथिषु सदन्हस्यपि शुभग्रहदिनेऽपि किंभूतं निमज्जनं सतां नृणां शुभनरराशीनामुदयो लग्नं यस्मिंस्तत् ॥ २० ॥

**उदीरितं चावभृताभिषेचने नृपाभिषेके वलयत्रयं क्रमात् ॥**
**विराजि सम्राजि च राज्यदस्तथा हयाधिपे सिंधुरपे नराधिपे ॥२१॥**

अथ यज्ञांतस्नाने राजमुद्राचक्रं दर्शयति—उदीरितमिति ॥ अवभृथाभिषेचने नृपाभिषेके च वलयत्रयं कलशचक्रत्रयमुदीरितं प्रोक्तं कस्मिन् विराजि विशेषेण राजते इति विराट् तस्मिन् तथा सम्यक्प्रकारेण राजते इति सम्राट् तस्मिन् राजते इति राट् तस्मिंश्च क्रमात् क्रमेण हयाधिपेऽश्वपतौ सिंधुरपे गजाधिपतौ नराधिपे चादश्वक्रत्रयं प्रोक्तं ॥ यतः ' अग्निहोत्रादिकर्ता यो ब्राह्मणो राट् प्रकीर्तितः ॥ सम्राड् वै वाजपेयेन विराट् तत्पूर्वयज्ञतः ' ॥ १ ॥ इति यज्ञांते विप्राणां भूपानामभिषेके चेदं चक्रत्रयं ज्ञेयमिति हार्दं ॥२१॥

**एतत्क्रमेणोत्तरपूर्वयाम्यगं भपंचनाडीपरिभिन्नमालिखेत् ॥**
**सदैव नासत्यमघाशिफादिकात्रिभेदतारापटलावहं त्वदः ॥२२॥ ⊛**

अथ तच्चक्रत्रये नक्षत्रस्थापनं दर्शयति—एतत्क्रमेति ॥ सुधीः क्रमेण उत्तरपूर्वयाम्यगं उत्तरपूर्वदक्षिणदिग्गतं भपंचनाडीपरिभिन्नमेतच्चक्रत्रयमालिखेतु पुनः सुधीरदश्वक्रत्रयं सदैव नासत्यमश्विनी मघा शिफा मूलमित्यादिकेन अश्विन्यादिप्रथमेन त्रिभेदतारापटलावहं भेदत्रयेण नक्षत्रसमूहभूतं लिखेत् । कोऽर्थः प्रथममश्वपतिच्छत्रचक्रं नक्षत्रपंचनाडिकाविद्धं तत्र प्रथमं मस्तकेऽश्विनी देया ततो भरणी कृ.रो.मृ.आ.पु.पु.श्ले. इति । एवं द्वितीयं गजपतिच्छत्रचक्रं तत्र प्रथमं मस्तके मघा दातव्या ततः पू.उ.ह.चि.स्वा.वि.अ.ज्ये. इति । तृतीयं नरपतिच्छत्रचक्रं तत्र प्रथमं मस्तके मूलं दातव्यं ततः पू.उ.श्र.ध.श.पू.उ.रे. इति वलयत्रयं ॥ २२ ॥

**अतोऽपरेषु क्षितिपेषु यज्वसु स्वकीयनामाक्षरभादिकं त्विदं ॥**
**आधारनामासनपट्टसिंहवत् सिंहासनानीत्यपि भेदपंचकं ॥२३॥⊛**

अथ विशेषतः पंचभेदं सिंहासनत्रयचक्रमाह—अत इति ॥ यज्वसु यज्ञकर्तृषु अश्वपति अश्वपतिगजपतिनरपतिषु इदं च त्रयं साधारनामासनपट्टसिंहवत् ४ सिंहासनमपि आधारः आसनं पट्टः सिंहः सिंहासनमित्यपि ईदृशमपि भेदपंचकं सिंहासनत्रयं चक्रं भवति । तु पुनः अतोऽश्वपादिभ्योऽपरेषु क्षितिपेषु राजसु स्वकीयनामाक्षरभादिकं नृपनामनक्षत्रतः स्थापनीयमिति चक्रं स्यात् ॥ तथाचोक्तं 'आदौ चक्रं समालिख्य छत्रत्रयसुशोभनं । अश्विन्यादि न्यसेत्तत्र सप्तविंशति भानि च ॥ १ ॥ अश्विन्याद्यं मघाद्यं च मूलाद्यं च क्रमेण च । उत्तरे पूर्वदक्षिणे एतच्छत्रत्रयं मतं ॥२॥ प्रतीचीमध्यरेखाया ईशानांतं हयाधिपः । आग्नेयांतं गजाधीशस्तदंते च नराधिपः॥३॥अश्वाध्यक्षगजाध्यक्षनराध्यक्षाः क्रमेण च । एषां

आकृति नंबर ३८ आकृति नंबर ३९।४०।४१।

छत्रविभागेन ज्ञातव्यं च शुभाशुभं ॥ ४ ॥ अमीषां भूभृतामृक्षं यत्र छत्रे व्यवस्थितं । तच्छत्रं तस्य भूपस्य शुभाशुभफलप्रदं ॥ ५ ॥ चामरं कलशं वीणां छत्रं दंडं पतद्ग्रहं । आसनं कीलकं रज्जुर्नव भेदाः प्रकीर्तिताः ॥६॥ यस्य छत्रे स्थितः सौरिर्भंगं तस्य विनिर्दिशेत् ॥ इत्यादि फलं ज्ञेयमिति ॥ अथातः संप्रवक्ष्यामि चक्रं सिंहासनत्रयं । येन विज्ञातमात्रेण क्रियते राज्यनिर्णयः ॥ १ ॥ सप्तविंशतिऋक्षैस्तु एकैकं च नवात्मकं । अश्विनीमघमूलाद्यं पंचनाडीविभेदकं ॥ २ ॥ अश्विन्याद्युत्तरे भागे मघाद्यं पूर्वतः स्थितं । मूलाद्यं दक्षिणे चापि ज्ञातव्यं नृपतित्रयं ॥ ३ ॥ इतरेषु च राज्येषु नृपनामर्क्षतो वदेत् । शुभाशुभमिदं सर्वं यस्य यस्यासनस्थितं ॥ ४ ॥ नाडिकापंचभेदेन एकैकस्यासने भवेत् । आधारमासनं पट्टं सिंहं सिंहासनं तथा ॥ ५ ॥ आधारादिफलं सर्वमेकैकस्य वदाम्यहं । ग्रहवेधवशाज्ज्ञेयं सौम्यक्रूरैः शुभाशुभं ॥६॥ नृपस्याधारमाचक्षे यदा पट्टोऽभिषेचितः । पराधीनगतो राज्यं कुरुते नात्र संशयः॥७॥ आसनस्थेन ऋक्षेण नीतियुक्तो भवेन्नृपः । प्रधानपुरुषादेशी प्रजाशांतिकरो भवेत् ॥ ८ ॥ पट्टऋक्षे यदा राजा चोपविष्टो य आसने । पूर्वराज्यस्थितेस्तुल्यां चिरं पालयते महीं ॥९॥ सिंहरूपी भवेद्राजा सिंहऋक्षासने स्थितः । संग्रामस्य प्रियो नित्यमसाध्यो मंत्रिणामपि ॥ १० ॥ सिंहासने गते ऋक्षे तेजस्वी भीषणाकृतिः । चलचित्तो महाक्रोधी प्रजापीडाकरो नृपः ॥ ११ ॥ इत्याद्यत्र ग्रहाणामपि फलं ज्ञेयं ॥ २३ ॥

**यज्वा च राजा गतधर्मलक्ष्मीराधारनामोडुनि नीतिसंपत् ॥**
**इहासनर्क्षेऽनु च पट्टधिष्ण्ये प्रजाप्रियो भेऽर्थबलोऽस्ति सिंहे ॥२४॥**

अथात्र चक्रे स्थितनक्षत्रफलमाह—यज्वेति॥ इह चक्रे आधारनामोडुनि आधारास्थिते ऋक्षे यज्वा राजा च गतधर्मलक्ष्मीः परहस्तगतराज्यलक्ष्मीर्भवेत् । एवमासनर्क्षे सति नीतिसंपद् नीतियुक्तो भवेत् । अनु पश्चाच्च पट्टधिष्ण्ये सति प्रजाप्रियो भवेत् । सिंहे भे सिंहऋक्षे सति अर्थबलोऽस्ति ॥ २४ ॥

**सिंहासने शासनलोकशोको धिष्ण्ये भवेदत्र विपापवेधे ॥**
**तत्कालचंद्रोडुनि साध्ववस्थेऽभिषेकितोऽसौ सुखभृन्नृलग्ने ॥ २५॥**

सिंहेति ॥ सिंहासने धिष्ण्ये सति शासनलोकशोकः प्रजादुःखकारको नृपो भवेत् । असौ नृपः सुखभृत् सुखधारकःस्यात् किंभूतेऽत्र विपापवेधे पापग्रहवेधवर्जिते साध्ववस्थे शुभावस्थायां स्थिते तत्कालचंद्रोडुनि अभिषेकचंद्रनक्षत्रे नृलग्ने वाभिषेकितः सन् ॥ २५ ॥

**भद्रासनेऽसद्व्यधगेऽभिषेकभे सदन्विते वेतशिवोध्वरी नृपः ॥**
**भद्रासने सद्व्यधगेऽभिषेकभे सदन्विते वेतशिवोध्वरी नृपः ॥ २६॥**

अथात्र चक्रे पापग्रहविद्धभफलमाह—भद्रेति ॥ भद्रासनेऽसद्व्यधगे पापग्रहवेधप्राप्तेऽसदन्विते पापग्रहयुक्तेऽभिषेकभे सति अध्वरी यज्वा नृपो वा इतं निर्गतं शिवं कल्याणं यस्मात् स एवंविधः स्यात् ॥ वा पुनर्भद्रासने सद्व्यधगे शुभग्रहवेधप्राप्ते सदन्विते शुभग्रहयुक्तेऽभिषेकभे इतं प्राप्तं शिवं कल्याणं येन स एवंविधः स्यात् ॥ २६ ॥

सिंहासनाख्यवलयं क्वचिदेतदेवं राज्याभिषेकविषयं किल केवलं स्यात्
नैत्याध्वरांतसमयस्नपनं प्रसिद्धं जैना जगुर्निगमकर्मविरोधभावात्२७

अथ वसंततिलकेन यज्ञकर्मविनाप्यदश्चक्रं विलोक्यं तदाह—सिंहेति॥ किलेति संभावनायां एतत् वाहासनाख्यवलयं पुन्नपुंसकं वलयं चक्रं कर्तृपदं क्वचित् स्थाने एवं पूर्वरीत्या स्यात्। राजाभिषेकाविषयं सिंहासनाख्यवलयं केवलं स्यात्। इति हेतोर्जैना अध्वरांतसमयस्नपनं प्रसिद्धं प्रकटं अवभृथस्नानं न जगुः न ऊचुःकस्मात् निगमकर्म निश्चयकर्म वेदकर्म वा तस्य विरोधभावात्॥ २७॥

तुरंगमेशस्य तुरंगमे च गजाधिपस्येति गजे भशुद्धिः॥
नराधिपस्यानासि चिंतनीया विराजि सम्राजि च राजि यज्ञात्॥ २८॥

अथाश्वाधिपादीनां 'अग्निहोत्रादिकर्ता यो ब्राह्मणो राट् प्रकीर्तितः॥ सम्राड् वै वाजपेयेन विराट् तत्पूर्वयज्ञतः' मुख्यशुद्धिमाह—तुरंगमेति॥ तुरगमेशस्याश्वाधिपतेस्तुरंगमे भशुद्धिर्नक्षत्रशुद्धिश्चिंतनीया॥ चपुनर्गजाधिपे गजे भशुद्धिश्चिंतनीया॥ नराधिपस्यानासि शकटे भशुद्धिश्चिंतनीया कस्मात् विराजि सम्राचि राजि च यज्ञात् यज्ञतः अग्निहोत्रादिकर्तेत्यादिश्लोकः॥ २८॥

गंधर्वचक्रे लपनांबकश्रवःशिरांसि लूनांघ्र्युदराणि पृष्ठकं॥
न्यसेद्भचक्रं द्विरयमरद्विरदोरभुजारगजे८षु५बाणा-
५ नुमभागमश्वमात्॥ २९॥ ❀

अथ तुरंगचक्रे भानि स्थापयति-गंधर्वेति॥सुधीर्लपनं वदनं अंबके नेत्रे श्रवसी कर्णौ शिरोमस्तकं एषां द्वंद्वे एतानि लूनं पुच्छं अंघ्रयः पादा उदरमेषां द्वंद्वे एतानि पृष्ठकमिति गंधर्वचक्रेऽश्वचक्रे भचक्रं नक्षत्रगणं न्यसेत् कस्मादश्वभात् तुरंगमनामनक्षत्रात् किंभूतं भचक्रं द्वौ २ यमौ २ द्वौ २ दोः २ भुजौ २ गजा ८ इषुः५बाणाः ५एषां द्वंद्वे एभिरनुमीयते स चासौ भागश्च तं॥२९

शुभप्रदेशा मुखनेत्रगर्भाः सप्तेरसौम्यास्त्वपरप्रदेशाः॥
शुभांशगेऽत्रेतिजनौ समग्रं गांधर्वकृत्यं वरमाद्दतर्क्षैः॥ ३०॥

अथाश्वचक्रगतभफलमाह—शुभमिति॥ सप्तेरश्वस्य मुखनयनोदराणि शुभप्रदेशाः स्युः। तु पुनरपरप्रदेशा अवयवा असौम्या अनिष्टाः स्युः॥ आद्दतर्क्षैः प्रोक्तनक्षत्रैः समग्रं गंधर्वकृत्यं घोटककार्यं वरं श्रेष्ठं स्यात्॥ अत्रिऋषिस्तस्मात् इतः प्राप्तो जनिर्जन्म येन स चंद्रस्तस्मिन् शुभांशगे शुभनवांशगते सति॥ ३०॥

दुष्टांशगेऽश्वे यदि हेल्यपत्यं तदाश्वकृत्यं पटबंधनं त्वुत॥
मखाभिषेको हयहन्नृपघ्नं बलक्षयं तत्र हरः क्रमात् स्यात्॥ ३१॥

---

आकृति नंबर. ४२

अथाश्वावयवे शनिफलमाह—दुष्टांशग इति ॥ यदि दुष्टांशगेऽश्वे हेल्यपत्यं शनिःस्यात्तदा क्रमात्क्रमेण अश्वकृत्यं तुरंगमकार्यं हयहृत् तुरंगक्षयकृत् स्यात्॥मखाभिषेकस्त्वत्र हरः कुलांतकृत्स्यात् ॥ 'तंत्रंशास्त्रंकुलं तंत्रं' इत्याद्यनेकार्थध्वनौ ॥ तथाच॥ अथातस्तौरगं चक्रं कथयामि सुरेश्वरि ॥ इंगितं निपुणं ज्ञात्वा हयानां राजवाहनं ॥१॥ अश्वाकारं लिखेच्चक्रमश्वधिष्ण्या-दितारकाः ॥ वदनात् सृष्टिगा देया अष्टाविंशतिसंख्यया ॥ २ ॥ मुखाक्षिकर्णशीर्षेषु पुच्छांघ्रिषु युगं युगं ॥ पंचपंचोदरे पृष्ठे सौरिर्यत्र फलं ततः ॥ ३॥ मुखाक्ष्युदरशीर्षस्थो यदा सौरिस्तुरंगमे ॥ तदारिभंगमायाति रणेऽन्यत्र पराजयः ॥४॥ कर्णांघ्रिपुच्छपृष्ठस्थो यदा यस्य हयस्य च॥ विभ्रमं भंगहानी च करोत्यन्यो महाहवे॥५॥ एतत्स्थानस्थितः सौरिर्यदा काले हयस्य च ॥ पट्टबंधे गमे युद्धे वर्जयेत्तं हयं नृपः ॥ ६ ॥ इत्यादि फलं ज्ञेयं ॥ ३१ ॥

**अथास्यशुंडांबककर्णमौलिपल्लांगूलपृष्ठोदरगं न्यसेदिभे ॥**
**गजर्क्षतो द्वि२द्वि२यम२द्वि२दो२र्गज८द्वि२वेद४वेदा४नुमम्रृक्षपंजरं३२॥**

अथ गजचक्रे भानि स्थापयति—अथास्येति ॥ अथाश्वचक्रानंतरं सुधीरिभे गजे ऋक्षपंजरं नक्षत्रगणं न्यसेत् स्थापयेत् । कस्मात् गजर्क्षतो गजनामनक्षत्रात् ।किंभूतं ऋक्षपंजरं मुखं शुंडा शुंडा अंबके नेत्रे कर्णौ मौलिः शीर्षं पादौ लांगूलं पुच्छं पृष्ठं उदरं एषां द्वंद्वे एषु गतं पुनः किंभूतं द्वौ २ द्वौ २ यमौ २ द्वौ २ दोः २ गजा अष्टौ८ द्वौ २ वेदाश्चत्वारः ४ वेदाश्चत्वारः ४ एषां द्वंद्वे एभिरनुमीयते इति अनुमं प्रमितमिति मुखे २ शुंडायां २ नेत्रयोः २ कर्णयोः २ शीर्षे २ चरणेषु ८ पुच्छे २ पृष्ठे ४ उदरे ४ इति स्थापनीयं ॥ ३२ ॥

**भवेयुरत्रास्य१शिरो२क्षि३संधिनी४गर्भा५वरांशास्त्वपरेऽशुभांशकाः ॥**
**शुभप्रदेशे करिकर्म भेश्वरे प्रियं सदोदीरितभैरुदीरितम् ॥ ३३ ॥**

अथ गजचक्रगतभफलमाह—भवेयुरिति ॥ अत्र गजचक्रे आस्याशिरोक्षिसंधिनी-गर्भा मुखमस्तकनेत्रशुंडोदराणि वरांशाः शुभावयवा भवेयुः । तु पुनरपरेऽशुभांशका अन्येऽवयवा अशुभाः स्युः ॥ शुभप्रदेशे गजशुभावयवे भेश्वरे चंद्रे सति सदा करिकर्म गजकार्यं प्रियं श्रेष्ठमुदीरितं प्रोक्तं कैरुदीरितभैः प्रोक्तनक्षत्रैः ॥ ३३ ॥

**गजे कुदेशे यदि हंससंततिर्न वाजपेयादिमखांतमज्जनात् ॥**
**पट्टाभिषेकादनु चैति संगरात्सम्राडिलेशश्च यशो जयश्रियम् ॥ ३४॥**

अथ गजचक्रे शनिफलमाह—गज इति ॥ यदि चेत् गजे गजचक्रे कुदेशे दुष्टावयवे हंससंततिः सूर्यपुत्रः शनिः स्यात्तदा सम्राट् इलेश्वरो भूपो यशो जयश्रियं नैति न प्राप्नोति कस्मात् वाजपेयादिमखांतमज्जनात् संज्ञाविशेषयज्ञप्रमुखयज्ञांतस्नानात् ।अनु पश्चात् पट्टाभिषेकात् च पुनः संगरात् संग्रामात् ॥ तथा चोक्तं ॥ अथातः संप्रवक्ष्यामि चक्रं मातंगनामकं ॥ येन विज्ञातमात्रेण यात्रायुद्धे जयो भवेत् ॥ १॥ गजाकारं लिखेच्चक्रं सर्वावयवसंयुतं । अष्टाविंशति

---

आकृति नंबर ४३

अथ वसंततिलकेन यज्ञकर्मविनाप्यदश्वक्रं विलोक्यं तदाह—सिंहेति॥ किलेति संभावनायां एतत् वाहासनाख्यवलयं पुन्नपुंसकं वलयं चक्रं कर्तृपदं काचित् स्थाने एवं पूर्वरीत्या स्यात् । राजाभिषेकाविषयं सिंहासनाख्यवलयं केवलं स्यात् । इति हेतोर्जैना अध्वरांतसमयस्नपनं प्रसिद्धं प्रकटं अवभृथस्नानं न जगुः न ऊचुःकस्मात् निगमकर्म निश्चयकर्म वेदकर्म वा तस्य विरोधभावात् ॥ २७ ॥

**तुरंगमेशस्य तुरंगमे च गजाधिपस्येति गजे भशुद्धिः ॥**
**नराधिपस्यानसि चिंतनीया विराजि सम्राजि च राजि यज्ञात् ॥ २८॥**

अथाश्वाधिपादीनां 'अग्निहोत्रादिकर्ता यो ब्राह्मणो राट् प्रकीर्तितः ॥ सम्राड् वै वाजपेयेन विराट् तत्पूर्वयज्ञतः ' मुख्यशुद्धिमाह—तुरंगमेति ॥ तुरगमेशस्याश्वाधिपतेस्तुरंगमे भशुद्धिर्नक्षत्रशुद्धिश्चिंतनीया ॥ चपुनर्गजाधिपे गजे भशुद्धिश्चिंतनीया ॥ नराधिपस्यानसि शकटे भशुद्धिश्चिंतनीया कस्मात् विराजि सम्राचि राजि च यज्ञात् यज्ञतः अग्निहोत्रादिकर्तेत्यादिश्लोकः ॥ २८ ॥

**गंधर्वचक्रे लपनांबकश्रवःशिरांसि लूनांघ्र्युदराणि पृष्ठकं ॥**
**न्यसेद्भचक्रं द्विश्यमश्द्विश्दोश्भुजाश्गजे८षु५बाणा-**
**५ नुमभागमश्वमात् ॥ २९ ॥ ❀**

अथ तुरंगचक्रे भानि स्थापयति—गंधर्वेति॥सुधीर्लपनं वदनं अंबके नेत्रे श्रवसी कर्णौ शिरो-मस्तकं एषां द्वंद्वे एतानि लूनं पुच्छं अंघ्रयः पादा उदरमेषां द्वंद्वे एतानि पृष्ठकमिति गंधर्वचक्रेऽश्वचक्रे भचक्रं नक्षत्रगणं न्यसेत् कस्मादश्वभात् तुरंगमनामनक्षत्रात् किंभूतं भचक्रं द्वौ २ यमौ २ द्वौ २ दोः २ भुजौ २ गजा ८ इषुः५बाणाः ५एषां द्वंद्वे एभिरनुमीयते स चासौ भागश्च तं॥२९

**शुभप्रदेशा मुखनेत्रगर्भाः सप्तेरसौम्यास्त्वपरप्रदेशाः ॥**
**शुभांशगेऽत्रीतजनौ समग्रं गांधर्वकृत्यं वरमादृतर्क्षैः ॥ ३० ॥**

अथाश्वचक्रगतभफलमाह—शुभमिति ॥ सप्तेरश्वस्य मुखनयनोदराणि शुभप्रदेशाः स्युः । तु पुनरपरप्रदेशा अवयवा असौम्या अनिष्टाः स्युः ॥ आदृतर्क्षैः प्रोक्तनक्षत्रैः समग्रं गंधर्वकृत्यं घोटककार्यं वरं श्रेष्ठं स्यात् ॥ अत्रिऋषिस्तस्मात् इतः प्राप्तो जनिर्जन्म येन स चंद्रस्तस्मिन् शुभांशगे शुभनवांशगते सति ॥ ३० ॥

अथाश्वावयवे शनिफलमाह—दुष्टांशग इति ॥ यदि दुष्टांशगेऽश्वे हेल्यपत्यं शनिःस्यात्तदा क्रमात्क्रमेण अश्वकृत्यं तुरंगमकार्यं हयहृत् तुरंगक्षयकृत् स्यात्॥ मखाभिषेकस्त्वत्र हरःकुलांतकृत्स्यात् ॥ 'तंत्रंशास्त्रंकुलं तंत्रं' इत्याद्यनेकार्थध्वनौ ॥ तथाच॥ अथातस्तौरगं चक्रं कथयामि सुरेश्वरि ॥ इंगितं निपुणं ज्ञात्वा हयानां राजवाहनं ॥१॥ अश्वाकारं लिखेच्चक्रमश्वधिष्ण्यादितारकाः ॥ वदनात् सृष्टिगा देया अष्टाविंशतिसंख्यया ॥ २ ॥ मुखाक्षिकर्णशीर्षेषु पुच्छांघ्रिषु युगं युगं ॥ पंचपंचोदरे पृष्ठे सौरिर्यत्र फलं ततः ॥ ३॥ मुखाक्ष्युदरशीर्षस्थो यदा सौरिस्तुरंगमे ॥ तदारिभंगमायाति रणेऽन्यत्र पराजयः ॥४॥ कर्णाघ्रिपुच्छपृष्ठस्थो यदा यस्य हयस्य च॥ विभ्रमं भंगहानी च करोत्यन्यो महाहवे॥५॥ एतत्स्थानस्थितः सौरिर्यदा काले हयस्य च ॥ पट्टबंधे गमे युद्धे वर्जयेत्तं हयं नृपः ॥ ६ ॥ इत्यादि फलं ज्ञेयं ॥ ३१ ॥

**अथास्यशुंडांबककर्णमौलिपल्लांगूलपृष्ठोदरगं न्यसेदिभे ॥**
**गजर्क्षतो द्वि२द्वि२यम२द्वि२दो२र्गज८द्वि२वेद४वेदा४नुममृक्षपंजरं॥३२॥**

अथ गजचक्रे भानि स्थापयति—अथास्येति ॥ अथाश्वचक्रानंतरं सुधीरिभे गजे ऋक्षपंजरं नक्षत्रगणं न्यसेत् स्थापयेत् । कस्मात् गजर्क्षतो गजनामनक्षत्रात् किंभूतं ऋक्षपंजरं मुखं शुंडा शुंडा अंबके नेत्रे कर्णौ मौलिः शीर्षं पादौ लांगूलं पुच्छं पृष्ठं उदरं एषां द्वंद्वे एषु गतं पुनः किंभूतं द्वौ २ द्वौ २ यमौ २ द्वौ २ दोः २ गजा अष्टौ८ द्वौ २ वेदाश्चत्वारः ४ वेदाश्चत्वारः ४ एषां द्वंद्वे एभिरनुमीयते इति अनुमं प्रमितमिति मुखे २ शुंडायां २ नेत्रयोः २ कर्णयोः २ शीर्षे २ चरणेषु ८ पुच्छे २ पृष्ठे ४ उदरे ४ इति स्थापनीयं ॥ ३२ ॥

**भवेयुरत्रास्य१शिरो२क्षि३संधिनी४गर्भा५वरांशास्त्वपरेऽशुभांशकाः ॥**
**शुभप्रदेशे करिकर्म भेश्वरे प्रियं सदोदीरितभैरुदीरितम् ॥ ३३ ॥**

अथ गजचक्रगतभफलमाह—भवेयुरिति ॥ अत्र गजचक्रे आस्याशिरोक्षिसंधिनीगर्भा मुखमस्तकनेत्रशुंडोदराणि वरांशाः शुभावयवा भवेयुः । तु पुनरपरेऽशुभांशका अन्येऽवयवा अशुभाः स्युः ॥ शुभप्रदेशे गजशुभावयवे भेश्वरे चंद्रे सति सदा करिकर्म गजकार्यं प्रियं श्रेष्ठमुदीरितं प्रोक्तं कैरुदीरितभैः प्रोक्तनक्षत्रैः ॥ ३३ ॥

**गजे कुदेशे यदि हंससंततिर्न वाजपेयादिमखांतमज्जनात् ॥**
**पट्टाभिषेकादनु चैति संगरात्सम्राडिलेशश्च यशो जयश्रियम् ॥ ३४॥**

अथ गजचक्रे शनिफलमाह—गज इति ॥ यदि चेत् गजे गजचक्रे कुदेशे दुष्टावयवे हंससंततिः सूर्यपुत्रः शनिः स्यात्तदा सम्राट् इलेश्वरो भूपो यशो जयश्रियं नैति न प्राप्नोति कस्मात् वाजपेयादिमखांतमज्जनात् संज्ञाविशेषयज्ञप्रमुखयज्ञांतस्नानात् ।अनु पश्चात् पट्टाभिषेकात् च पुनः संगरात् संग्रामात् ॥ तथा चोक्तं ॥ अथातः संप्रवक्ष्यामि चक्रं मातंगनामकं ॥ येन विज्ञातमात्रेण यात्रायुद्धे जयो भवेत्॥१॥ गजाकारं लिखेच्चक्रं सर्वावयवसंयुतं । अष्टाविंशति

आकृति नंबर ४३

सिंहासनाख्यवलयं क्वचिदेतदेवं राज्याभिषेकविषयं किल केवलं स्यात्
नैत्याध्वरांतसमयस्नपनं प्रसिद्धं जैना जगुर्निगमकर्मविरोधभावात्२७

अथ वसंततिलकेन यज्ञकर्मविनाप्यदश्वक्रं विलोक्य तदाह—सिंहेति॥ किलेति संभावनायां एतत् वाहासनाख्यवलयं पुन्नपुंसकं वलयं चक्रं कर्तृपदं क्वचित् स्थाने एवं पूर्वरीत्या स्यात्। राजाभिषेकाविषयं सिंहासनाख्यवलयं केवलं स्यात्। इति हेतोर्जैना अध्वरांतसमयस्नपनं प्रसिद्धं प्रकटं अवभृथस्नानं न जगुः न ऊचुःकस्मात् निगमकर्म निश्चयकर्म वेदकर्म वा तस्य विरोधभावात्॥ २७॥

तुरंगमेशस्य तुरंगमे च गजाधिपस्येति गजे भशुद्धिः॥
नराधिपस्यानसि चिंतनीया विराजि सम्राजि च राजि यज्ञात्॥ २८॥

अथाश्वाधिपादीनां 'अग्निहोत्रादिकर्ता यो ब्राह्मणो राट् प्रकीर्तितः॥ सम्राड् वै वाजपेयेन विराट् तत्पूर्वयज्ञतः' मुख्यशुद्धिमाह—तुरंगमेति॥ तुंरगमेशस्याश्वाधिपतेस्तुरंगमे भशुद्धिर्नक्षत्रशुद्धिश्चिंतनीया॥ चपुनर्गजाधिपे गजे भशुद्धिश्चिंतनीया॥ नराधिपस्यानसि शकटे भशुद्धिश्चिंतनीया कस्मात् विराजि सम्राचि राजि च यज्ञात् यज्ञतः अग्निहोत्रादिकर्तेत्यादिश्लोकः॥ २८॥

गंधर्वचक्रे लपनांबकश्रवःशिरांसि लूनांघ्र्युदराणि पृष्ठकं॥
न्यसेद्भचक्रं द्विरयमश्द्विरदोर्भुजारगजे८षु५बाणा-
५ नुमभागमश्वमात्॥ २९॥ ❀

अथ तुरंगचक्रे भानि स्थापयति–गंधर्वेति॥सुधीर्लपनं वदनं अंबके नेत्रे श्रवसी कर्णौ शिरो-मस्तकं एषां द्वंद्वे एतानि लूनं पुच्छं अंघ्रयः पादा उदरमेषां द्वंद्वे एतानि पृष्ठकमिति गंधर्वचक्रेऽश्वचक्रे भचक्रं नक्षत्रगणं न्यसेत् कस्मादश्वभात् तुरंगमनामनक्षत्रात् किंभूतं भचक्रं द्वौ २ यमौ २ द्वौ २ दोः २ भुजौ २ गजा ८ इषुः५बाणाः ५एषां द्वंद्वे एभिरनुमीयते स चासौ भागश्च तं॥२९

शुभप्रदेशा मुखनेत्रगर्भाः सप्तेरसौम्यास्त्वपरप्रदेशाः॥
शुभांशगेऽत्रीतजनौ समग्रं गांधर्वकृत्यं वरमाहृतर्क्षैः॥ ३०॥

अथाश्वचक्रगतभफलमाह—शुभमिति॥ सप्तेरश्वस्य मुखनयनोदराणि शुभप्रदेशाः स्युः। तु पुनरपरप्रदेशा अवयवा असौम्या अनिष्टाः स्युः॥ आहृतर्क्षैः प्रोक्तनक्षत्रैः समग्रं गंधर्वकृत्यं घोटककार्यं वरं श्रेष्ठं स्यात्॥ आत्रिऋषिस्तस्मात् इतः प्राप्तो जनिर्जन्म येन स चंद्रस्तस्मिन् शुभांशगे शुभनवांशगते सति॥ ३०॥

दुष्टांशगेऽश्वे यदि हेल्यपत्यं तदाश्वकृत्यं पटबंधनं त्युत॥
मखाभिषेको हयहन्नृपघ्नं बलक्षयं तत्र हरः क्रमात् स्यात्॥ ३१।

अथाश्वावयवे शनिफलमाह— दुष्टांशग इति ॥ यदि दुष्टांशगेऽश्वे हेल्यपत्यं शनिःस्यात्तदा क्रमात्क्रमेण अश्वकृत्यं तुरंगमकार्यं हयहृत् तुरंगक्षयकृत् स्यात्॥ मखाभिषेकस्त्वत्र हरःकुलांतकृत्स्यात् ॥ 'तंत्रंशास्त्रंकुलं तंत्रं' इत्याद्यनेकार्थध्वनौ ॥ तथाच॥ अथातस्तौरगं चक्रं कथयामि सुरेश्वरि ॥ इंगितं निपुणं ज्ञात्वा हयानां राजवाहनं ॥१॥ अश्वाकारं लिखेच्चक्रमश्वधिष्ण्यादितारकाः ॥ वदनात् सृष्टिगा देया अष्टाविंशतिसंख्यया ॥ २ ॥ मुखाक्षिकर्णशीर्षेषु पुच्छांघ्रिषु युगं युगं ॥ पंचपंचोदरे पृष्ठे सौरिर्यत्र फलं ततः ॥ ३॥ मुखाक्ष्युदरशीर्षस्थो यदा सौरिस्तुरंगमे ॥ तदारिर्भंगमायाति रणेऽन्यत्र पराजयः ॥४॥ कर्णाघ्रिपुच्छपृष्ठस्थो यदा यस्य हयस्य च॥ विभ्रमं भंगहानी च करोत्यन्यो महाहवे ॥५॥ एतत्स्थानस्थितः सौरिर्यदा काले हयस्य च ॥ पट्टबंधे गमे युद्धे वर्जयेत्तं हयं नृपः ॥ ६ ॥ इत्यादि फलं ज्ञेयं ॥ ३१ ॥

**अथास्यशुंडांबककर्णमौलिपल्लांगूलपृष्ठोदरगं न्यसेदिभे ॥**
**गजर्क्षतो द्वि२द्वि२यम२द्वि२दो२र्गज८द्वि२वेद४वेदा४नुमम्रक्षपंजरं३२॥**

अथ गजचक्रे भानि स्थापयति—अथास्येति ॥ अथाश्वचक्रानंतरं सुधीरिभे गजे ऋक्षपंजरं नक्षत्रगणं न्यसेत् स्थापयेत् । कस्मात् गजर्क्षतो गजनामनक्षत्रात् किंभूतं ऋक्षपंजरं मुखं शुंडा शुंडा अंबके नेत्रे कर्णौ मौलिः शीर्षं पादौ लांगूलं पुच्छं पृष्ठं उदरं एषां द्वंद्वे एषु गतं पुनः किंभूतं द्वौ २ द्वौ २ यमौ २ द्वौ २ दोः २ गजा अष्टौ८ द्वौ २ वेदाश्चत्वारः ४ वेदाश्चत्वारः ४ एषां द्वंद्वे एभिरनुमीयते इति अनुमं प्रमितमिति मुखे २ शुंडायां २ नेत्रयोः २ कर्णयोः २ शीर्षे २ चरणेषु ८ पुच्छे २ पृष्ठे ४ उदरे ४ इति स्थापनीयं ॥ ३२ ॥

**भवेयुरत्रास्य१शिरो२क्षि३संधिनी४गर्भा५वरांशास्त्वपरेऽशुभांशकाः ॥**
**शुभप्रदेशे करिकर्म भेश्वरे प्रियं सदोदीरितभैरुदीरितम् ॥ ३३ ॥**

अथ गजचक्रगतभफलमाह—भवेयुरिति ॥ अत्र गजचक्रे आस्याशिरोक्षिसंधिनीगर्भा मुखमस्तकनेत्रशुंडोदराणि वरांशाः शुभावयवा भवेयुः । तु पुनरपरेऽशुभांशका अन्येऽवयवा अशुभाः स्युः ॥ शुभप्रदेशे गजशुभावयवे भेश्वरे चंद्रे सति सदा करिकर्म गजकार्यं प्रियं श्रेष्ठमुदीरितं प्रोक्तं कैरुदीरितभैः प्रोक्तनक्षत्रैः ॥ ३३ ॥

**गजे कुदेशे यदि हंससंततिर्न वाजपेयादिमखांतमज्जनात् ॥**
**पट्टाभिषेकादनु चैति संगरात्सम्राडिलेशश्च यशो जयश्रियम् ॥ ३४ ॥**

अथ गजचक्रे शनिफलमाह —गज इति ॥ यदि चेत् गजे गजचक्रे कुदेशे दुष्टावयवे हंससंततिः सूर्यपुत्रः शनिः स्यात्तदा सम्राट् इलेश्वरो भूपो यशो जयश्रियं नैति न प्राप्नोति कस्मात् वाजपेयादिमखांतमज्जनात् संज्ञाविशेषयज्ञप्रमुखयज्ञांतस्नानात् ।अनु पश्चात् पट्टाभिषेकात् च पुनः संगरात् संग्रामात् ॥ तथा चोक्तं ॥ अथातः संप्रवक्ष्यामि चक्रं मातंगनामकं ॥ येन विज्ञातमात्रेण यात्रायुद्धे जयो भवेत् ॥ १॥ गजाकारं लिखेच्चक्रं सर्वावयवसंयुतं । अष्टाविंशति

आकृति नंबर ४३

ऋक्षाणि देयानि सृष्टिमार्गतः ॥२॥ मुखशुंडाग्रनेत्रेषु कर्णशीर्षांघ्रिपुच्छके । द्विकं द्विकं च दातव्यं पृष्ठोदरे चतुश्चतुः॥३॥ इत्यादि ज्ञेयं ॥ ३४ ॥

देयं रथे भानुमदक्षपूर्वं भपंजरं तन्नवभागसंस्थं ॥
रथाग्रमध्यावधिगं च सौम्यं रथांगमध्येष्वपरेष्वसत्स्यात ॥३६॥ ❀

अथ रथचक्रे भानि स्थापयाति–देयमिति ॥ सुधीभी रथे रथचक्रे भानुमदक्षपूर्वं सूर्याक्रांतनक्षत्रादिकं भपंजरं नक्षत्रवृंदं देयं स्थापनीयं । किंभूतं भपंजरं तन्नवभागसंस्थं तस्य रथस्य नवसु भागेषु स्थितं ॥ अथ रथांगमध्यावधिगं चक्रमध्यमर्यादागतं भं सौम्यं शुभं स्यात् । च पुनरपरेषु रथांगमध्येषु रथावयवेषु गतं भमसत् नेष्टं स्यात् ॥ ३५ ॥

रथिनो यदि नामभं शुभांगे हरिजस्तत्स्थलगो मखाभिषेकः ॥
न समाहितवन्हिना च राज्ञा क्रियते पट्टरथाधिरोहणम् ॥ ३६ ॥

अथ मालभारिण्याश्च रथचक्रे शनिफलमाह—रथिन इति ॥ यदि चेत् शुभांगे रथचक्रे शुभावयवे रथिनो रथिकस्य नामभं स्यात् । पुनस्तत्स्थलगो रथिकनामनक्षत्रस्थानस्थितो हरिजः शनिः स्यात्तदा समाहितवन्हिना अग्निहोत्रिणा राज्ञा मखाभिषेको यज्ञांतस्नानं च पुनः पट्टरथाधिरोहणं न क्रियते दूषणत्वादिति ॥ ३६ ॥

इति सत्रविराममज्जनं त्युदितं यल्लिखितं मयैतदत्र ॥
त्रिविधावनिपाभिषेककाले त्रिविधैतद्वलयेक्षणोपयोगः ॥ ३७ ॥

अथ चक्रोपसंहारेणाह—इति रीति ॥ सत्रविराममज्जनं यज्ञांतावभृथस्नानमुदितं प्रोक्तं मया एतत्त्रिभेदचक्रं. यत् यस्माल्लिखितं तस्माद्धेतोरत्रावसरे त्रिविधावनिपाभिषेककाले त्रिप्रकारभूपाभिषेकसमये त्रिविधं चैतद्वलयं न तस्य ईक्षणं विलोकनं तस्य उपयोगः स्यात् ॥ ३७ ॥

विहितेषु महामखव्रतेषु प्रविहाय मरसुप्तिकालमास्त्यं ॥
कविमार्यमशौषधीशसारेऽपरसंस्कारविधिं च सर्वकाले ॥ ३८ ॥
लघुधीरभधूर्जटींदुभांत्यश्रुतियुग्मामरसूड्डभिस्त्वरण्यं ॥
प्रति पौत्रमुखं विलोक्य धीराः सदहोभिः शरणात्समाश्रयेयुः ॥३९

अथ वानप्रस्थतामाह—विहित इति ॥ लघ्विति युग्मं ॥ धीराः सुधियः पौत्रमुखं विलोक्य शरणाद्गृहादरण्यं वनं प्रति समाश्रयेयुः समीयुः । केषु महामखव्रतेषु प्रौढयज्ञव्रतेषु विहितेषु कृतेषु सत्सु । किंकृत्वाऽमरसुप्तिकालं चातुर्मासकं च पुनरस्तं भवं आस्त्यं कविमार्यं शुक्रगुर्वस्तं अपरसंस्कारविधिं गृहस्थाश्रमसंस्कारविधानं च प्रविहाय त्यक्त्वा पुनः कस्मिन् सर्वकाले ओषधीशसारे चंद्रबले सति पुनः कैः लघूनि धीराणि भानि धूर्जटी ईश्वर

आर्द्रा इंदुभं मृगशीर्षं आंत्यं रेवती श्रुतिद्वयं श्रवणधनिष्ठे अमरपूर्वैवमाता तस्या उडु पुनर्वसु एषां द्वंद्वे एभिः पुनः कैः सदंशभिः शुभग्रहदिनैः ॥ ३८ ॥३९॥

**शिरसोदयभाजि कंटके सन्निहिते दीक्षण९धीस्थ५ले विदीड्ये ॥**
**विपिनाश्रमसादरेण भिक्षुं खलु वैखानसमीरयेदजस्रम् ॥ ४० ॥**

अथात्र लग्नशुद्धिमाह—शिरस इति ॥ खलु निश्चितमजस्रं निरंतरं विपिनाश्रमं तत्पदमादरेण वैखानसं वानप्रस्थं भिक्षुं सन्यासिनमीरयेत् प्रेरयेत् कस्मिन् शिरसोदयभाजि शीर्षोदयलग्नयुक्ते सन्निहिते शुभग्रहव्याप्ते कंटके सति पुनर्दीक्षणं दीक्षाधर्मः नवमं धीः पंचमं एतयोः स्थाने विदीड्ये बुधधिषणे सति अनयोः समाहारैकत्वं आश्रमशब्दः पुंनपुंसकः ॥ ४० ॥

**संन्यासः श्रुतियुगल शये शिवर्क्षे वैरंचे रुरुशिरसींद्रपूजितर्क्षे ॥**
**नीरिक्ते स्थिरसदनेऽपवर्गसिद्ध्यै सोमेज्यज्ञखरकरेषु चोत्तरासु ॥ ४१**

अथ महर्षिण्या संन्यासे नक्षत्रादिशुद्धिमाह—संन्यासेति ॥ संन्यासोऽपवर्गसिद्ध्यै मोक्षप्राप्तये स्यात् कस्मिन् श्रुतियुगले श्रवणे धनिष्ठायां शये हस्ते शिवर्क्षे आर्द्रायां वैरंचे रोहिण्यां रुरुशिरसि मृगशीर्षे इंद्रपूजितर्क्षे पुष्ये नीरिक्ते निगतो रिक्तः कुंभो यस्मात् कुंभराशिवर्जिते स्थिरसदने स्थिरराश्युदये सति च पुनः सोमश्चंद्र इज्यो गुरुः ज्ञो बुधः खरकरः सूर्यः एषां द्वंद्वे एषां दिने उत्तरासु च ॥ ४१ ॥

**एतद्भेष्वदितियुतेष्वभर्गभेषु स्याधत्ते नरभवनोदये सभूपे ॥**
**सद्दीक्षामुदितदिनेषु साधुमर्त्यः सन्मासेऽथातुरपुरुषोऽनु सर्वकाले ॥ ४२ ॥**

अथ दीक्षाग्रहणशुद्धिमाह—एतद्भेष्विति ॥ हि निश्चितं साधुमर्त्य उत्तमनरः सद्दीक्षामाधत्ते गृह्णाति केषु एतद्भेषु उक्तनक्षत्रेषु आदितियुतेषु अभर्गभेषु आर्द्रारहितेषु सत्सु पुनर्नरभवनोदये नृराश्युदये सभूपे शुभग्रहयोगविलोकिते पुनरुदितदिनेषु भोक्तवासरेषु पुनः सन्मासि शुभे मासि अनु पश्चात् चेत् आतुरपुरुषो दीक्षाग्रहणे शीघ्रस्तदा सर्वकाले दीक्षां धत्ते ॥ ४२ ॥

**पूर्वावारुणसुरवैद्यभेषु दीक्षा मैत्रर्क्षेष्वदितीभवासवेनभेषु ॥**
**ऐनीनज्ञसितदिनैस्तु वीतरागाः शस्ता पुंसि चरणजे विपर्वरिक्तैः ॥ ४३**

पूर्वेति ॥ चरणजे शूद्रे पुंसि विषये वीतरागा निर्गतरागद्वेषलक्षणा दीक्षा शस्ता शुभा स्यात् । केषु पूर्वात्रयं वारुणं शततारा सुरवैद्यमश्विनी एषां द्वंद्वे एषु पुनर्मैत्रर्क्षेषु मैत्रसंज्ञभेषु पुनरदितिभं पुनर्वसु वासवं धनिष्ठा इनभं हस्तः एषां द्वंद्वे एषु तु पुनः कैः ऐनिः शनिः इनः सूर्यः ज्ञो बुधः सितः शुक्रः एषां दिनैः किंभूतैर्विपर्वरिक्तैः पर्वरिक्तातिथिवर्जितैः ॥ ४३ ॥

दयार्द्रभावेन सुधर्मकर्मणामारंभमूचुर्लघुमैत्रधीरभैः ॥
शयेशभादित्यभवासवैर्विशो रिक्ताकुयुङ्मुक्तपतंगसद्द्युषु ॥४४॥

अथ धर्मकर्मण आरंभमाह—दयेति ॥ सुधियो विशां नृणां दयार्द्रभावेन सुधर्मकर्मणा-मारंभमूचुर्जगुः कैः लघूनि मैत्राणि धीराणि एषां द्वंद्वे एभिः पुनः कस्मिन् शयो हस्त ईशभं आर्द्रा आदित्यभं पुनर्वसु वासवं धनिष्ठा एषां द्वंद्वे एभिः पुनः केषु रिक्तास्तिथयः कुयुग् दुष्टयोगः एभिर्मुक्तपतंगसद्द्युषु वर्जितसौरशुभग्रहदिनेषु ॥ ४४ ॥

पारायणं वेदपुराणपद्धतेरमंदवारेषु वरं विदारुणैः ॥
व्युग्रैश्च भैर्मुक्तगलग्रहैर्भवेदारंभितं सद्वृषधीनृभोदये ॥ ४५ ॥

अथ समग्राध्ययने वारादिशुद्धिमाह—पारायणमिति ॥ वेदपुराणपद्धतेः आगमपुराणपंक्तेः पारायणं साकल्येन सामस्त्येन वचनमध्ययनमिति 'साकल्यवचनं पारायणं' इति हैमः। वरं श्रेष्ठं स्यात् केषु अमंदवारेषु शनिवर्जितसर्ववारेषु पुनः कैर्विदारुणैर्भैर्दारुणसंज्ञरहितनक्षत्रैः पुनर्वे-दपुराणपद्धतेरारंभितं प्रारंभणं सत् शुभं भवेत्। कैर्व्युग्रैर्भैरुग्रसंज्ञवर्जितनक्षत्रैः किंभूतैर्मुक्तगलग्रहैः पुनः कस्मिन् वृषधीनृभोदये नवमपंचमभावस्थे नृराश्युदये ॥ ४५ ॥

रिक्ताविमुक्तासु तिथिष्वसृग्यमैर्वारैः पुराणोत्थकथाश्रुतिः श्रियै ॥
मृदुस्थिरक्षिप्रचलात्रिपूर्विकाकीर्णेषु सत्केंद्रचरोदये भवेत् ॥ ४६ ॥

अथ पुराणकथाश्रवणशुद्धिमाह—रिक्तेति ॥ पुराणोत्थकथाश्रुतिः पुराणोद्भूतवार्ताश्रवणं श्रियै भवेत् केषु रिक्ताविमुक्तासु रिक्तातिथिवर्जितासु तिथिषु पुनः कैरसृग् भौमः यमः शनिः आभ्यां वर्जितैर्वारैः किंभूतासु तिथिषु विरिक्तासु मृदूनि स्थिराणि क्षिप्राणि चलानि त्रिपूर्विका एषां द्वंद्वे एभिराकीर्णेषु युक्तेषु पुनः कस्मिन् सत्केंद्रचरोदये शुभग्रहकेंद्रचरराश्युदये ॥ ४६ ॥

पुष्यस्नानैकवासस्नपनमुखविधिर्मंजुलः शुद्धकाले कार्ष्ण्याषाढे नभस्थे त्विषमलमपहायेंदुमंघ्र्यूनबिंबं ॥ वारे धिष्ण्ये च सौर्ये धवलगुदिवसे धैषणे दारुणोग्रैरुत्सृष्टैर्भैररिक्ते भवति कुयुतिवि-ष्टयुज्झिते सौम्यलग्ने ॥ ४७ ॥

अथ स्रग्धरया ऋत्वादिस्नानशुद्धिमाह—पुष्येति ॥ पुष्यस्नानं ऋतुस्नानं एकवासःस्न-पनं एकवस्त्रस्नानमित्यादिमुखस्य प्रमुखस्य विधिर्विधानं मंजुलः श्रेष्ठो भवेत् कस्मिन् शुद्धकाले धैष्ण्ये शुक्रे वारे सौर्ये वारे सूर्यवारे धवलगुदिवसे चंद्रवारे धैषणे गुरौ वारे किंभूते दारुणो-ग्रैर्भैरुत्सृष्टे उग्रदारुणसंज्ञभवर्जिते पुनः कस्मिन् सौम्यराशिलग्ने किंभूते सौम्यराशिलग्ने कुयुतिविष्टयुज्झिते कुयोगविष्टिवर्जिते किंकृत्वा कार्ष्ण्याषाढं कृष्णपक्षभवमाषाढमासं नभस्थं भाद्रपदं तु पुनरिषमाश्विनमासं अंघ्र्यूनबिंबं चतुष्कलाहीनवर्तिबिंबने वर्तितमिंदुं चंद्रं चापहाय त्यक्त्वाऽलमत्यर्थं ॥ ४७ ॥

एतेषु कृत्येष्वखिलेषु मंत्रिणं कविं किलास्तं विधुमंगिरोहरिं ॥ विकर्तनं चाप९तिमि१२स्थितं तथा क्षयाधिमासद्युसमाः परित्यजेत् ॥४८॥

इति श्रीकविकालिदासोदिते ज्योतिर्विदाभरणेऽग्न्याधानादिविशेषसंस्काराध्यायोऽष्टादशः ॥ १८ ॥

अथोपजात्योपसंहारमाह—एतेष्विति ॥ किलेति सत्ये सुधीः मंत्रिणं गुरुं कविं शुक्रमास्तमस्ते भवं तथा विधुं चंद्रं तथांगिरोहरिं सिंहगुरुं तथा चापतिमिस्थितं धनुर्मीनस्थं विकर्तनं सूर्यं तथा क्षयाधिमासद्युसमाः क्षयाधिकमासं क्षयाधिकदिनं क्षयाधिकवर्षं परित्यजेत् केषु अखिलेषु एतेषु पूर्वोक्तेषु कृत्येषु कर्मसु ॥ ४८ ॥

इति श्रीकविकालिदासकृतज्योतिर्विदाभरणसुखबोधिकायामग्न्याधानविशेषसंस्कारपुण्यसाधनाध्यायोऽष्टादशः ॥ १८ ॥

---

## मिश्रप्रकरणम् ।

हुताशनाधानविधेरनंतरं वदामि मिश्रव्यवहारकर्मणाम् ॥
कृषिस्वगोपण्यसरःक्रियावतां नयं हि लोकव्यवहारवृत्तये ॥ १ ॥

अथाग्न्याधानविधेरनंतरं मिश्रव्यवहारकर्म घटतेऽतो मिश्रव्यवहारकर्माध्यायसंधानमाह—हुताशेति ॥ हुताशनाधानविधेरग्न्याधानविधानादनंतरं हि युक्तार्थे मिश्रव्यवहारकर्मणां साधारणव्यवहारकार्याणां कृषिः कर्षणं स्वं धनं गौर्धेनुः पण्यं विक्रेयं सरो जलाशय एषां द्वंद्वे एषां क्रियावतां क्रियायुक्तनराणां नयं निर्णयं वदामि कथयामि कस्यै लोकव्यवहारवृत्तये जनव्यवहारप्रवर्तनाय ॥ १ ॥

क्रियाविधानेऽनु च वक्ष्यमाणे दुष्टा हि विष्टिः क्षयकायराजा ॥
रिक्ताकुयोगाखिलपर्वकालो दुष्टस्तथा राजविरुद्धराशिः ॥ २ ॥

अथ क्रियाविधानशुद्धिमाह—क्रियेति ॥ नु वितर्के हि युक्तार्थे वक्ष्यमाणे क्रियाविधाने विष्टिर्दुष्टा स्यात् । तथाच क्षयकायराजा क्षीणचंद्रस्तथा रिक्ताकुयोगाखिलपर्वकालस्तथा राजविरुद्धराशिर्दुष्टचंद्रराशिश्च दुष्टोऽशुद्धः स्यात् ॥ २ ॥

सदन्हि कीर्णे लघुवारुणांत्यभादितेयशक्राग्निभशाक्रनासवैः ॥
शस्ता समस्तानडुही क्रिया तथा वत्सक्रिया वत्सलयोगवर्धिनी ॥ ३

अथ गवां कर्मशुद्धिमाह—सदन्हीति ॥ समस्ता सर्वानडुही क्रिया गोक्रिया गार्भिणी स्वनद्रवां नवप्रसूता वृद्धा वंध्या इत्यादिभेदानां गवां कर्म इत्यर्थः शस्ता शुभा स्यात् ॥ तथा वत्सक्रिया शस्ता स्यात् किंभूता वत्सक्रिया वत्सलयोगवर्द्धिनी स्नेहसंयोगप्रवर्द्धिनी कस्मिन् सद-

म्हि शुभग्रहदिने छघूनि वारुणं शतभिषक् आंत्यभं रेवती आदितेयं पुनर्वसू शक्राग्निभं विशाखा शक्रो ज्येष्ठा वासवं धनिष्ठा एषां द्वंद्वे एभिः कीर्णे व्याप्ते ॥ ३ ॥

सनातनर्क्षाजभविश्वकर्मभोत्तरात्रये भूत१४दिनेऽष्ट८मीतिथौ ॥
दर्शे३०निवेशश्च विनिर्गमो रवौ चतुष्पदानां क्रयविक्रयौ न हि ॥ ४

अथ चतुष्पदानां प्रवेशादिकर्म निषेधति—सनातनेति ॥ चतुष्पदानां गवादीनां निवेशः प्रवेशस्तथा विनिर्गमो गृहाद्बहिर्निष्कासनं तथा क्रयविक्रयौ नहि स्युः कस्मिन् सनातनो विष्णुस्तस्य ऋक्षं श्रवणः अजभं रोहिणी विश्वकर्मभं चित्रा उत्तरात्रयं एषां द्वंद्वैकत्वेऽस्मिन् पुनर्भूतदिने चतुर्दश्यां पुनरष्टमीतिथौ पुनरमावास्यायां दर्शे रवौ सूर्यवारे ॥ ४ ॥

पूर्वाविशाखांत्यशिफैंदवार्यभैः सवासवादित्यभपाशपाणिभैः ॥
क्षिप्रैश्च सोमेनसितांगिरोदिनैरजाविकालीप्रविधानमर्थकृत् ॥ ५ ॥

अथाजादीनां कृत्यशुद्धिमाह—पूर्वेति ॥ अजा प्रतीता अविर्मेषी काली महिषी आसां प्रविधानमुत्कृष्टकार्यमर्थकृत् संपदाकृत् स्यात् । कैः पूर्वात्रयं विशाखा आंत्यं रेवती शिफा मूलं ऐंदवं मृगशीर्षं आर्यभं पुष्यः एषां द्वंद्वे एतैः किंभूतैर्वासवं धनिष्ठा आदित्यभं पुनर्वसु पाशः पाणौ यस्य स पाशपाणिर्वरुणस्तस्य भं शततारा एषां द्वंद्वे एभिश्च पुनः क्षिप्रैः पुनः कैः सोम इनः सितः शुक्र अंगिरा गुरुरेषां दिनैः ॥ ५ ॥

कराद्यपर्जन्यमृदूडुपावनं सकाश्यपीदैवतमाह पेशलम् ॥
वामीगरुत्मत्खरनौक्रियाविधौ कश्चिच्छनींदूष्णगुकाव्यवासरे ॥ ६ ॥

अथ वडवादीनां कर्मशुद्धिमाह—करेति ॥ कश्चित् सुधीः करादिमं पेशलं मनोहरमाह कथयति । करो हस्तः आद्यमश्विनी पर्जन्यस्य इंद्रस्येदं पार्जन्यं ज्येष्ठा मृदूडूनि पवनस्येदं पावनं स्वाती एषां द्वंद्वैकत्वं किंभूतं सकाश्यपीदैवतं पुनर्वसुसहितं कस्मिन् वामी वडवा गरुत् पक्षो विद्यतेऽस्येति गरुत्मान् पक्षी कुक्कुट्यादिः 'पक्षो गरुच्छदश्चापि' इति हैमः ॥ खरो रासभः नौः मंगिनी आसां क्रियाविधाने कस्मिन् शनिः इंदुः ऊष्णगुः सूर्यः काव्यः शुक्र एषां वासरे ॥ ६ ॥

क्रयोऽवनेर्विक्रय एव देवमूर्मृगानुराधांत्यमघाजटाहिभैः ॥
द्विदैवपूर्वासु समृद्धये भवेन्नंदासु पूर्णासु च काव्यजीवयोः ॥ ७ ॥

अथ क्रयविक्रयकरणशुद्धिमाह—क्रय इति ॥ अवेनर्भूमेः क्रयो विक्रयश्चैव समृद्धये भवेत् कैः देवसूर्देवमाता पुनर्वसु मृगो मृगशीर्षं अनुराधा आंत्यं रेवती मघा जटा मूलं अहिभं आश्लेषा एषां द्वंद्वे एभिः पुनः कासु द्विदैवं विशाखा पूर्वात्रयं आसु पुनर्नंदासु पूर्णासु च पुनः काव्यजीवयोः शुक्रगुर्वोर्वारे ॥ ७ ॥

प्राचेतसादित्यमघेज्यराधापानीयधराब्जशयश्रविष्ठाः ॥
कासारवाप्यंधुसुखे च वामा नीराशये सोमसितार्यवाराः ॥ ८ ॥

अथ तटाकादिजलाशयानां करणशुद्धिमाह—प्राचेतसेति ॥ कासारस्तडागो वापी अंधुः कूप इत्यादौ नीराशये जलाशये विषये प्राचेतसादितारा वामाः श्रेष्ठाः स्युः। प्राचेतसं शततारा आदित्यं पुनर्वसु मघा ऐज्यं पुष्यः राधा विशाखा पानीयं पूर्वाषाढा धीरसंज्ञानि अब्जस्य चंद्रस्येदं आब्जं मृगशीर्षं शयो हस्तः श्रविष्ठा धनिष्ठा एताश्च पुनः सोमसितार्यवाराश्चंद्र-शुक्रगुरुवाराः श्रेष्ठाः स्युः 'विशाखेंद्राग्निदेवता राधा' इति हैमः ॥ ८ ॥

पुराद्धुताशानिलराक्षसाशामुक्तान्यकाष्ठासु सुवारिदोंऽधुः ॥
वानीरदूर्वांकुशवामलूरक्षोण्यां भवेत्स्वादुजलं च शीघ्रम् ॥ ९ ॥

अथ कूपकरणे दिक्शुद्धिमाह—पुरादिति ॥ अंधुः कूपः सुवारिदः स्वादुजलदायको भवेत् कासु पुरात् नगरात् ग्रामात् वा हुताशो वन्हिः अनिलो वायुः राक्षस एषामाशां दिशं मुक्त्वा अन्यकाष्ठासु च पुनः शीघ्रं स्वादु जलं भवेत् कस्यां वानीरो वेतसवृक्षः दूर्वा कुशः वामलूरो वल्मी कूटं एषां क्षोण्यां भूमौ ॥ ९ ॥

आद्यार्जुनोदुंबरसिंदुवाराः पर्णप्रवालातिसुशालशाखाः ॥
वल्मीकपार्श्वाः स्युरगा हि यत्र तत्रांबु निर्देश्यमलं समाशु ॥ १० ॥

अथ शीघ्रजलव्यंजकदेशमाह—आद्येति ॥ यत्र स्थानेऽगा वृक्षा एवंविधाः स्युः किंभूताः आद्या अर्जुनः ककुभवृक्ष उदुंबरः सिंधुवींतारी निर्गुंडी एषां ते ते पुनः किंभूताः पर्णप्रवालैः पत्रकिसलयैरतिसुशालाः सुशोभमानाः शाखा एषां ते ते पुनः किंभूताः वल्मीकः कृमिपर्वतस्तस्य पार्श्वे सामीप्यं एषां ते हि अवधारणेऽलं पूर्णं समाशु शीघ्रतरं तत्र स्थानेऽम्बु जलं निर्देश्यं कथनीयम् ॥ १० ॥

योष्मातिशीतलवसत्तृणपुष्टिरुर्वी सा स्वादुसांद्रसलिला
किल शीघ्रवार्दा ॥ इत्थं विलोक्य वसुधामिह
कूपवापीकासारकुंडखननं विदधीत शश्वत् ॥ ११ ॥

योष्मेति ॥ या उर्वी भूमिरुष्मातिशीतलवसत्तृणपुष्टिः उष्मणि ग्रीष्मकालेऽति-शीतले न वसंति उद्गच्छंति तृणानि तेषां पुष्टिर्यस्यां सा एवंविधा स्यात् किलेति भावना-यां सा भूमिः शीघ्रवार्दा झटिति जलदायिनी स्यात् । किंभूता भूमिः स्वादुसांद्रसलिला मि-ष्टगंभीरपानीया शश्वत् सदा सुधीरित्थं वसुधां भूमिं विलोक्य इह भूमौ कूपवापीकासार-कुंडानि एषां खननं विदधीत कुर्वीत ॥ ११ ॥

सिंधुप्रतानमरुकार्णवगौडगेशेऽनिर्मं धरांतरगमंबु निस-
र्गभावात ॥ क्षाराम्लकुंठतरुवद्भुवि निस्तृणोर्व्यां तद्वद्धनं
विकृतिमणद्बमाहुरार्याः ॥ १२ ॥

अथ नीचगतजलदेशमाह—सिंध्विति ॥ सिंधुप्रतानं सिंधुनदीतटं मरुको देशः अर्णवः समुद्रः गौडो देशः एषु गर्तेऽशभागे एतेषां भूम्येकदेशभागे धरांतरगं भूमितलगतमंबु जलं निसर्गभावात् स्वभावात् निम्नं नीचतलगं स्यात् ॥ आर्या आचार्याः क्षारो वृक्षः आम्लवृक्षः कुंठतरुः पल्लवादिवर्जिततरुः एतद्वती भूस्तस्यां तद्वत् निस्तृणोर्व्यां तृणरहितभूमौ वनं जलं विकृतिमद्गुणं रोगकरस्वभावमाहुः ॥ १२ ॥

> ग्रामादुदीरितहरित्युशनोऽब्जभागे क्षेत्रे भमंडलवि-
> भागवति प्रशस्तं ॥ वाच्यं वनं तदिह गर्भकवींदुभागे
> निम्नार्द्रभूमितटिनीनगदिक्शिराभिः ॥ १३ ॥

अथ शुभजलज्ञानमाह—ग्रामादिति ॥ वनं जलं प्रशस्तं शुभं वाच्यं वक्तव्यं क ग्रामात् उदीरितहरिति प्रोक्तदिशि क्षेत्रे किंभूते उशनोऽब्जभागे शुक्रचंद्रस्थितिप्रदेशे पुनः किंभूते भमंडलविभागवति नक्षत्रगणविभागयुक्ते पुनः किंभूते गर्भकवींदुभागे मध्यगतशुक्रचंद्रविभागे इह स्थाने पुनः काभिः निम्ना नीचा आर्द्रा भूमिस्तटिनी नदी नगः पर्वत एषां द्वंद्वे एषां दिक्शिराभिरेतद्दिग्गतजलशिराभिः कृत्वा ॥ १३ ॥

> सूरे सुधाशनदिने वितिमीनकाले धिष्ण्योषधीशधि-
> षणोदयभाजि कूपः ॥ वापी सरो भवति हेल्यलिमार्ग-
> योगे कुंडं तथा क्वचिदपाधिकहीनमासे ॥ १४ ॥

अथ कूपादिकरणे कालशुद्धिमाह—सूर इति ॥ वितिमीनकाले मीनक्रांतिवर्जितकाले धिष्ण्योषधीशधिषणोदयभाजि शुक्रचंद्रगुरुलग्नयुक्ते सुधाशना अमृतभोजिनो देवास्तेषां दिने उत्तरायणे सूरे सूर्ये सति कूपस्तथा वापी तथा सरस्तडागो भवेत् । क्वचित् हेल्यलिमार्गयोगे रवियुक्तवृश्चिकसंक्रांतिमार्गशीर्षयोगे कुंडं भवति किंभूते हेल्यलिमार्गयोगे अपाधिकहीनमासे निर्गताधिकक्षयमासे सति ॥ १४ ॥

> स्याद्रोहिणिवदनतारकमंडलाख्यं मध्याद्यपूर्वमुख-
> दिक्षु सदांधुचक्रे ॥ केंद्रांत्तकेशमरुतां नवधा विभक्तं
> दिक्षु स्थितं तदिह वैकृतवारि सूते ॥ १५ ॥ ❁

अथ कूपचक्रे भानि स्थापयति—स्याद्रोहिणीति ॥ सदांधुचक्रे कूपचक्रे रोहिणीवदनतारकमंडलाख्यं रोहिणीप्रमुखनक्षत्रगणः कर्तृपदं मध्याद्यपूर्वमुखदिक्षु मध्यं आद्ये यासां तास्तासु पूर्वादिदिक्षु शस्तासु स्यात् । किंभूतं रोहिणीवदनमंडलतारकाख्यं नवधा विभक्तं नवभागगतं कूपचक्रमध्ये प्रथमं रोहिणीत्रिकं देयं ततः पूर्वादितः

---

❁ आकृति नंबर ४५

सर्वभमंडलं त्रिकं त्रिकं देयमित्यर्थः । तदु रोहिण्यादिभमंडलं कर्तृपदं वैकृतवारि दुष्टजलं सूते जनयति किंभूतं तद् इह केंद्रांतकेशमरुतां दिक्षु संस्थितं सत् कस्य जलस्येंद्रः स्वामी वरुणः अंतको यम ईशानो मरुत् वायुरेषां दिक्षु ॥ १५ ॥

**कोष्ठे धिष्ण्यचतुष्टयं विधिभतो नाभिस्तथा हृद्गले**
**नेत्रे वाममवामकं भयुगलं तद्वच्च पादौ पराः ॥**
**अष्टौ राजवशाः सदैषु फलता सत्पुष्करं वा द्रुतिर्धीनाशः**
**स्थिरता कलिर्द्रविणतानर्थो हि वाप्यां क्रमात् ॥ १६ ॥**

अथ वापीचक्रे भानि संस्थाप्य फलमाह—कोष्ठ इति ॥ वाप्यां वापिकायां कोष्ठे विधिभतो रोहिणीतो धिष्ण्यचतुष्टयं नक्षत्रचतुष्कं स्यात् ॥ पुनस्तथा नाभिस्तथा हृत्तथा गलस्तथा नेत्रं वाममवामकं तद्वच्च पादौ एषु स्थानेषु राजवशाश्चंद्रास्त्रियस्ताराः फलदाः स्थिता इत्यर्थः ॥ यथा नाभौ चत्वारि भानि हृदि भचतुष्कं गले चत्वारि भानि नेत्रयोः सव्यापसव्ययोर्भयुग्मं पादयोर्भचतुष्कं ॥ अथ फलमाह ॥ तदा हि अवधारणे सदा एषु कोष्ठादिस्थानेषु क्रमात् क्रमेण सत्पुष्करादि फलं स्यात् । कोष्ठे सत्पुष्करं शुभजलं वाऽथवा द्रुतिर्जलवेगता स्यात् नाभौ धीनाशो बुद्धिविनाशो हृदि स्थिरता गले कलिर्नेत्रयोर्द्रविणता धनत्वं पादयोरनर्थः स्यात् ॥ १६ ॥

**कासारे कमलासनोडुवदनो नंदांशमो दीयते मध्यैं-**
**द्र्यादिहरित्सु पेशलमिदं मध्यापरा यातुदिक् ॥ कुंडे**
**धिष्ण्यगणः कभत्रिकतले काष्ठाचतुष्को विदिग्युग्मः**
**स्याद्द्रविणेशयातुदहनांतस्थः शुभो भांशकः ॥ १७ ॥**

अथ तडागचक्रे भानि स्थापयति—कासार इति ॥ कासारे तटाकचक्रे कमलासनो ब्रह्मा तस्योडु रोहिणी सा वदनं प्रमुखं यस्य स नंदांशमो नवात्रिकसप्तविंशातितुल्यभागो दीयते कासु मध्यैंद्र्यादिहरित्सु मध्यतः पूर्वतः सर्वदिक्षु ॥ अथ फलमाह—अत्र मध्यो मध्यभागो ऽपरा पश्चिमा दिक् यातुदिक् नैर्ऋतदिक् एतत्त्रयस्थानगतमिदं धिष्ण्यत्रिकं पेशलं मनोहरं स्यात् । अथ कुंडचक्रे भानि स्थापयन्फलमाह । को ब्रह्मा तस्य भत्रिकं रोहिणीत्रिकं तले यस्य पुनः काष्ठाचतुष्कः चतुर्षु दिक्षु चतुश्चतुष्कं पुनर्विदिग्युग्मश्च चतुर्षु विदिक्षु युग्मचतुष्कं एवं धिष्ण्यगणः स्थाप्यः । तत्र द्रविणेशयातुदहनांतस्थः उत्तरनैर्ऋताग्निदिङ्मध्यस्थितो भांशको नक्षत्रभागः शुभः स्यात् ॥ १७ ॥

**परिखापरिखातखारिणां खननं निम्नुसुखैररोहिताश्वैः ॥**
**वियमारदिनैः सजैषणवैशैरपविष्टचादिकयुग्गलग्रहाख्यैः ॥१८॥**

---

आकृति नंबर ४६ आकृति नंबर ४७

अथ परिखादिखनने भशुद्धिमाह—परिखेति ॥ परिखा परिखातः समस्तखातः अवटः खारिका मानविशेषप्राप्ता आसां खननं स्यात् ॥ कैर्निम्नमुखैरधोमुखनक्षत्रैः किंभूतैररोहिताश्वैः रोहिताश्वोऽग्निस्तस्येदं भं कृत्तिका तया वर्जितैः पुनः किंभूतैर्वियमारद्दिनैः शनिभौमदिनरहितैः पुनः किंभूतैः सजैष्णवेशैः ज्येष्ठार्द्रायुक्तैः पुनरपविष्टयादिकुयुगगलग्रहाख्यैर्विष्टिकुयोगगलग्रहवर्जितैः ॥ १८ ॥

**मिहिराकुलितर्क्षतो विचिंत्याः परिखायां हरितो हि षोडशर्क्षाः ॥**
**विदिशोऽष्टमभास्त्रिगर्भतारा न शुभा यातुयमानिलानलाशाः ॥१९॥** ❀

अथ परिखाचक्रे भानि स्थापयति—मिहिरेति ॥ हि अवधारणे मिहिराकुलितर्क्षतो रविभात् परिखायां खातिकायां सुधीभिः षोडशर्क्षाः षोडशनक्षत्राणि यासु ता हरितो दिशो विचिंत्याः पुनरष्टमानि अष्टप्रमितानि भानि यासु ता विदिशो विचिंत्याः पुनस्त्रिगर्भतारा मध्ये त्रितारा विचिंत्यास्तत्र यातुर्नैर्ऋतिः यमः अनिलो वायुरनलोऽग्निरेषामाशाः शुभा न स्युः ॥ १९ ॥

**रविभादिह पंच पंच दिक्षु प्रमदाः शीतलगोस्तले च सप्त ॥**
**तलपूर्वकुबेरदिग्गताराः सफलाः सन्ति सदैव खारिकायाम् ॥ २० ॥** ❀

अथ खारिकायां भानि स्थापयति—रविभादिति ॥ इह खारिकायां शीतलगोश्चंद्रस्य प्रमदास्तारा दिक्षु पंच पंच तले मध्ये सप्त देयाः कस्मात् रविभात् सदैव खारिकायां तलो मध्यः पूर्वदिक् कुबेरदिक् आसु गतास्ताराः सफलाः संति ॥ २० ॥

**न तिमीनयुतौ शुचौ नभस्ये नभसि स्यात्परिखा च खारिकाख्या ॥**
**क्षयरोचिषि राजनीह तद्वच्छुभभान्योदयकेंद्रदुष्टतायाम् ॥ २१ ॥**

अथ मीनार्कादौ खारिकादिकर्म निषेधति—नतिमीति ॥ परिखा खारिका च न स्यात् क तिमीनयुतौ मीनार्कयोगे शुचौ आषाढे नभस्ये भाद्रपदे नभसि श्रावणे क्षयरोचिषि क्षीणकांतौ राजनि चंद्रे तद्वत् शुभभेभ्यः शुभराशिभ्योऽन्योदयस्यान्यलग्नस्य केंद्रदुष्टतायां सत्यामिह ॥ २१ ॥

**नंदा च भद्रा घटनेऽर्कसद्दिनं भवेद्योगैश्चरभोदयैः शुभैः ॥**
**मूलाद्यतिष्याजमृदुश्रवोद्वयादितेयवातैर्घटयेत्तरीं तथा ॥२२॥**

अथ घटनकर्मशुद्धिमाह—नंदेति ॥ घटने घटनकर्मणि नंदातिथिर्भद्रातिथिरर्कसद्दिनं सूर्यशुभग्रहाणां दिनं च भवेत् कैरयोगैः सुयोगं विनापि। तथा सुधीस्तरीं नावं घटयेत् कारयेत् कस्मिन् चरभोदये चरराश्युदये पुनः कैः शुभैः सुयोगैः मूलं आद्यमश्विनी तिष्यः पुष्यः मृदूनि श्रवोद्वयं श्रवणधनिष्ठे आदितेयं पुनर्वसु वातः स्वाती एषां द्वंद्वे एतैः ॥ २२ ॥

**लघुश्रवोवासवमैत्रराजभैर्निवेशयेद्वारि दिनैर्विवित्सताम् ॥**
**जयासु पूर्णासु सचंद्रिकाद्रिकास्विमां नावं नवामिंदुबले जलोदये ॥२३**

---

आकृति नंबर ४८ आकृति नंबर ४९

अथ जले तरीमोचनशुद्धिमाह—लब्विति ॥ इंदोश्चंद्रस्य बलं यस्य स इंदुबलो नरो नवां नूतनां नावं तरीं वारि जले निवेशयेत् प्रवेशयेत् कैर्लघूनि श्रवः श्रवणः वासवं धनिष्ठा मैत्रमनुराधा राजभं मृगशीर्षं एषां द्वंद्वे एतैः पुनः कैर्विवर्जितशुभग्रहाण दिनैः पुनः कासु जयासु तिथिषु पूर्णासु तिथिषु सचंद्रिकासु ज्योत्स्नायुक्तासु पुनर्जलोदये जलराशिलग्ने ॥ २४ ॥

लग्नेऽलिमुक्ते धिषणे बुधे वा खलैरसारैश्च सिते नभस्थे ॥
निशीथिनीशे जलचारिराशौ जलेऽखिलं कर्म तदिष्टयंत्रैः॥२४॥

अथ लग्नादिना नौकायंत्रणशुद्धिमाह—लग्न इति ॥ जले तदिष्टयंत्रैस्तस्या नाव इष्टयंत्रणैरखिलं समस्तं कर्म स्यात्। कस्मिन् अलिमुक्ते वृश्चिकरहिते लग्ने धिषणे गुरौ बुधे वा च पुनरसारैर्बलरहितैः खलैः क्रूरग्रहैः पुनर्नभस्थे दशमस्थे सिते शुक्रे पुनर्जलचारिराशौ निशीथिनीशे चंद्रे ॥ २५ ॥

कूपाग्रगं सैष्यगतं च सेनभं मध्ये षडास्ये त्र्युडु भत्रयं त्वदि ॥
पाठाणमेकं परतस्त्रयं त्रयं सुषाणगं मध्यभषट् सदंतरम् ॥२५॥*

अथ नौकाचक्रे भानि स्थापयति—कूपेति ॥ सैष्यगतं एष्यमाणनक्षत्रयुक्तं सेनभं सूर्याक्रांतनक्षत्रं एतावता नक्षत्रयुग्मं कूपाग्रगं कूपस्तंभाग्रगतं स्यात्। च पुनर्मध्ये षड् भानि स्युः। आस्ये मुखे त्र्युडु त्रयं स्यात्। हृदि भत्रयं स्यात्। पाठाणमेकं भं स्यात्। परतोऽग्रतस्त्रयं स्यात्। सुषाणगं त्रयं स्यात्। मध्यभषट् मध्ये भषट्कं स्यात्। अथ फलमाह। अत्र चक्रे अंतरं विचालगतद्वादशनक्षत्रं सत् शुभं स्यात् ॥ २९ ॥

प्राचेतसोमेशरमेशभोत्तराः सरोहिणीवासववासवार्च्यभाः॥
वरा विरिक्तेनयमारवासरा नवे तरीकूपकपट्टबंधने ॥ २६ ॥

प्राचेति ॥ नवे नवीने तरीकूपकपट्टबंधने मंगिनीकूपस्तंभपट्टबंधने प्राचेतसादयस्तारा वराः श्रेष्ठाः स्युः। प्राचेतसं शततारा उमेश ईश्वर आर्द्रा रमेशो विष्णुस्तद्भं श्रवणः उत्तरा उत्तरात्रयं किंभूताः रोहिणी वासवं धनिष्टा वासव इंद्रस्तस्यार्च्यो गुरुस्तस्य भं पुष्य एभिः सहिताः पुनः किंभूताः विगता रिक्तातिथिः इनः सूर्यः यमः शनिः आरो भौम एषां वासराश्च याभ्यः स्ताः ॥ २६ ॥

पूर्णाजयानंदवतीषु सद्द्युभिः प्रपूरयेन्नावमनेकवस्तुभिः ॥
स्थिरे मृदुक्षिप्रजयास्वसौ भवेद् बृहद्धमानेहसि मंगिनीगमः ॥२७॥

अथ नौकायां वस्तुप्रपूरणशुद्धिमाह—पूर्णेति ॥ वणिक् अनेकवस्तुभिर्नावं प्रपूरयेत्। केषु पूर्णातिथिः जयातिथिः नंदवती नंदातिथिः. आसां द्वंद्वे आसु पुनः कैः सद्द्युभिः

---

* आकृति नंबर ५७

शुभग्रहवासरैः ॥ असौ मंगिनीगमस्तरीप्रयाणं भवेत् कस्मिन् स्थिरे स्थिरसंज्ञभे मृदूनि क्षिप्राणि जयातिथिः आसां द्वंद्वे आसु पुनर्बृहद्रमानेहासि बृहत्प्रयाणकालेऽतिदूरगमनकाले ॥ २७ ॥

सवारिवारीशतमीशतारकालघुध्रुवाधोक्षजभावबासवान् ॥
यमार्यमार्यास्फुजितो निराकुलानुशंत्यविद्धान्नवसेतुबंधने ॥ २८ ॥

अथ जले सेतुबंधनशुद्धिमाह—सवारीति ॥ सुधियो नवसेतुबंधने जले नूतसेतुबंधने यमादीन् उशंति वांछंति । यमः शनिः अर्यमाः सूर्यः आर्यो गुरुः आस्फुजिच्छुक्रः एषां द्वंद्वे इमान् किंभूतान् सवारीति वारि जलं पूर्वाषाढा वारीशो जलस्वामी शतभिषक् तमीशश्चंद्रस्तस्य तारका मृगशीर्षं लघूनि ध्रुवाणि अधोक्षजो विष्णुः श्रवणः भवस्य ईश्वरस्येदं भावमार्द्रा वासवं धनिष्ठां एषां द्वंद्वे एभिः सहितान् पुनः किंभूतान् निराकुलान् सूर्याक्रमणवर्जितान् पुनरविद्धान् ग्रहैरभिन्नमंडलान् ॥ २८ ॥

पादेंऽशुभात्पंच तु पंच चांसे सप्तोदरे पंच परांसके स्युः ॥
पादे सदा पंचमिताः परस्मिंस्तारा वराः सेतुसमूर्ध्वसंस्थाः ॥२९॥

अथ सेतुबंधचक्रे भानि स्थापयति—पाद इति ॥ अंशुभात् सूर्यभात् पादे पंच ताराः स्युः । तु पुनरंसे स्कंधे पंचताराः स्युः । च पुनरुदरे मध्ये सप्त ताराश्च पुनः परांसकेऽपरस्कंधे पंचताराः स्युः । परस्मिन् पादे परपादे पंचमितास्ताराः स्युः । सदा सर्वकाले सेतुसमूर्ध्वसंस्थाः सेतुचक्रे उपरितनास्तारा बराः श्रेष्ठाः स्युः ॥ २९ ॥

लेये तिमौ तावुरिभे निपेऽस्त्रिणि द्विपुंसि लग्ने ससदंबरायने ॥
चतुष्टये विक्रमवैरिलाभगैरसाधुभिः सेतुनिबंधनं श्रियै ॥ ३० ॥

अथ सेतुबंधने लग्नशुद्धिमाह—लेय इति ॥ सेतुबंधनं पानीयपंक्तिबंधनं श्रियै स्यात् क लेये सिंहे तिमौ मीने तावुरिभे वृषराशौ निपे कुंभे अस्त्रिणि धनुषि द्विपुंसि मिथुने लग्ने चतुष्टये केंद्रे किंभूते ससदंबरायने शुभग्रहैः सहिते पुनः कैरसाधुभिः खलग्रहैर्विक्रमस्तृतीयं ३ वैरी षष्ठं ६ लाभ एकादशं ११ एतद्भवनगतैः ॥ ३० ॥

मघाशिफोषार्यभदांदशूकत्रिपूर्विकावारुणभेषु वामं ॥
सदन्हि सूरे जलयंत्रकर्मारिक्तेऽब्जदीप्तौ जलभोदयेऽब्जे ॥३१॥

अथ अरहट्टकयंत्रणकर्माह—मघेति ॥ जलयंत्रकर्म अरहट्टकयंत्रणं वामं श्रेष्ठं स्यात् केषु मघा शिफा मूलं उषार्यो रजनीशश्चंद्रो मृगशीर्षभं दांदशूकं दंदशूकस्य सर्पस्येदमश्लेषा त्रिपूर्विकाः पूर्वात्रयं वारुणभं शतभिषक् एषां द्वंद्वे एषु सदन्हि शुभग्रहवारे सूरे रविवारे अरिक्ते रिक्तातिथिवर्जिते अब्जदीप्तौ चंद्रज्योत्स्नायां शुक्लपक्ष इत्यर्थः । जलभोदये जलराश्युदयेऽब्जे चंद्रे सति ॥ ३१ ॥

---

आकृति नंबर ५१ आकृति नंबर ५२

सौम्यायने क्ष्मामरखेटदर्शने सहस्यपीज्यालयतोऽन्यराशिगे ॥
विकर्तने शंबरयंत्रसाधनं न बाधते कूपवनश्रियं क्वचित् ॥३२॥

अथ अरघट्टकयंत्रे मतमाह—सौम्येति ॥ क्वचित्स्थाने शंबरयंत्रसाधनं जलयंत्रकर्म कर्तृपदं कूपवनश्रियं कूपजललक्ष्मीं न बाधते न पीडयति क्व सौम्यायने उत्तरायणे क्ष्मामरौ द्विजौ गुरुशुक्रौ च तौ खेटौ च तयोर्दर्शनेऽस्तरहिते सहसि मार्गशीर्षेऽपि पुनरिज्यो गुरुस्तस्याालयौ धनुर्मीनौ ताभ्यामन्यराशिगे विकर्तने सूर्ये सति ॥ ३२ ॥

यंत्रे शिरःपंजरगर्भकाग्रमालातलेषु क्रमतोंऽशुधिष्ण्यात् ॥
पंचाक्षमाः पंच च पंच सप्त तारा वराः स्युस्तलमौलिसंस्थाः ॥३३॥

अथारघट्टचक्रे भानि स्थापयति—यंत्र इति ॥ यंत्रेऽरघट्टचक्रेंऽशुधिष्ण्यात् सूर्यनक्षत्रात् क्रमतः शिरो मस्तकं पंजरं गर्भः काग्रं मस्तकाग्रे मालातलं एषु पंच अक्षमाः पंच च पुनः पंच सप्त ताराः स्युः कोऽर्थो द्विपार्श्वतो मस्तकयोः पंच पंच भानि घटमालिकामध्ये पंचभानि घटमालिकामस्तके पंच भानि घटमालिकातले सप्त भानि इति॥ अथ फलमाह ॥ तलमौलिसंस्थास्तारा वराः स्युः ॥ ३३ ॥

शुद्धिस्त्वियं सलिलयंत्रविधावशेषे नेयांबुचक्रवलये
भगणांक ९ भागाः ॥ मध्येंद्रदिङ्मुखहरित्सु विलेखनीया
दुष्टांशकाः श्वसनयातुयमाग्निदिक्स्थाः ॥ ३४ ॥

अथ कूपचक्रे दुष्टांशकान् दर्शयति—शुद्धिरिति ॥ अशेषे समस्ते सलिलयंत्रविधौ जलयंत्रकार्ये इयं शुद्धिर्नेया ज्ञेया सुधीभिरंबुचक्रवलये कूपचक्रमंडले भगणांकभागा नक्षत्रगणविभागा विलेखनीयाः कासु मध्ये मध्यभागे इंद्रदिङ्मुखहरित्सु पूर्वप्रमुखकाष्ठासु अत्र श्वसनो वायुः यातुर्निर्ऋतिर्यमः कालोऽग्निरेषां दिक्स्था दुष्टांशका अशुभभागाः स्युः ॥ ३४ ॥

आद्यांत्यपाणिद्वयमैत्रयुग्मे सवासवादित्यभधैषणे स्यात् ॥
सदन्हि रिक्ताशुभयोगमुक्ते तत्सिद्धये तैलिकयंत्रकर्म ॥३५॥

अथ तैलिकयंत्रशुद्धिमाह—आद्यमिति ॥ तैलिकयंत्रकर्म कर्तृपदं तत्सिद्धये तैलिनः संपदे स्यात् । आद्यमश्विनी आंत्यं रेवती पाणिद्वयं हस्तः चित्रा मैत्रयुग्मं अनुराधा ज्येष्ठा एषां द्वंद्वैकत्वे किंभूते आद्यांत्यपाणिद्वयमैत्रयुग्मे वासवं धनिष्ठा आदित्यभं पुनर्वसु धैषणं पुष्य एभिः सह वर्तमाने सदन्हि शुभग्रहदिने किंभूते सदन्हि रिक्तातिथिः अशुभयोगा एभिर्मुक्ते वर्जिते ॥ ३५ ॥

शृंगांतस्तलकर्णदारुयुगसंभारेषु भास्वद्भतः सप्त७ाग्नि३
द्व्यग७वन्हि३ सायक५मितास्तारा न्यसेयुः क्रमात् ॥

संपच्छोकविपद्धनर्द्धयसुखता यच्छंति तास्तैलिके यंत्रे-
ऽन्यत्र रसक्रियेऽपि शुभभे लग्ने ससत्कंटके ॥ ३६ ॥*

अथ शार्दूलविक्रीडितेन तैलिकयंत्रचक्रे भानि स्थापयति-शृंगांतइति ॥ तैलिके यंत्रे सुधियो भास्वद्भतः सूर्यनक्षत्रात् क्रमात् सप्त ७ अग्नित्रयः३ द्वौ२ अगाः सप्त ७ वन्हित्रयः३ सायकाः पंच ५ एभिर्मितास्तारा न्यसेयुः स्थापयेयुः । केषु शृंगं अंतर्मध्यं तलः कर्णः दारुयुगं संभाराः एषां द्वंद्वे एषु । ताः सप्तादितारा: संपत् ७ शोकः ३ विपत् २ धनं७ ऋद्धिः ३ सुखं ५ एषां भावे तांतामिति यच्छंति ददति कस्मिन् शुभभे शुभराशौ किंभूते शुभभे ससत्कंटके शुभग्रहयुक्त-केंद्रे सति अन्यत्र रसक्रिये इक्षुरसादियंत्रकर्मण्यपि इदं ज्ञातव्यं ॥ ३६ ॥

दिक्षु ताराश्चतस्रो विदिक्षु त्रयं हेलिभादीशकोणात्सभाशासने ॥
मृष्टिमार्गाच्च शून्यस्थिती वन्हिभीर्धीश्च भी राजशं चौरभीः शं क्रमात्३७

अथ स्रग्विण्या चउरो (चबुतरुं) इत्यादिभाषा चक्रे भानि स्थापयति—दिक्ष्विति ॥ हेलि-भात् सूर्यनक्षत्रात् सृष्टिमार्गात् सभाशासने आस्थानसभायां (चबुतरो) इति भाषायां चतस्रस्तारा: स्थाप्याः । च पुनरीशकोणात् ईशानकोणात् विदिक्षु त्रयं भत्रयं देयं । क्रमात् नक्षत्रचतुष्के शून्यं एवं त्रये स्थितिः अनयोर्द्वंद्वः चतुष्के वन्हिभीरग्निभीतिः त्रये धीर्बुद्धिः चतुष्के भीर्भयं त्रये राजशं भूपसुखं चतुष्के चौरभीः चौरभयं त्रये शं सुखं स्यात् ॥ ३७ ॥

दारुणोग्राण्यमूलानि मिश्राण्यवाःपित्र्यभान्यांत्यवातादितेयानि च ॥
प्रोज्झ्य शेषेषु भेष्वर्कसद्वासरे सत्तिथौ सत्सभालिंदमासाधयेत् ॥३८॥

अथालिंदकृत्यशुद्धिमाह—दारुणेति ॥ पुमान् सत्सभालिंदं शुभसभाप्रघाणमासाधयेत् कुर्यात् किंकृत्वा दारुणोग्राणि दारुणसंज्ञभानि उग्रसंज्ञभानि अमूलानि मूलवर्जितानि मि-श्राणि द्वे कृत्तिकाशब्दो बहुवचनांतत्वाद्बहुवचनं घटते अवाःपित्र्यभानि वार्जलं पूर्वाषाढा पित्र्यमं मघा आभ्यां वर्जितानि पितॄणामिदं पित्र्यमन्यथा छंदोभंगः आंत्यं रेवती वातः स्वाती आदितेयं पुनर्वसु एषां द्वंद्वे एतानि च प्रोज्झ्य विहाय शेषेषु भेषु अर्कसद्वासरे सूर्य-दिने शुभग्रहदिने सत्तिथौ ॥ ३८ ॥

द्विशयमिश्रभपावनदारुणान्युपलदारुविदारणकर्मणि ॥
विपुरसिद्धिवसाननमातिथीश्चपलराश्युदयेऽन्वसदन्विते ॥३९॥

अथ पाषाणकाष्ठविदारणशुद्धिमाह—द्विशयेति ॥ उपलाः प्रस्तराः दारु काष्ठं एषां विदारणकर्मणि द्विधाकरणकार्ये द्विशयो हस्तयुग्मं हस्तचित्रे मिश्रभानि पावनं स्वाती दारुणानि दारुणसंज्ञानि एषां द्वंद्वे इमानि स्युः । च पुनर्विगतं नष्टं पुरं शरीरं यस्माद्यस्य वा विपुरोऽनंगः कंदर्पस्त्रयोदश १३ सिद्धयोऽष्टौ ८ वः शंभुः एकादश ११ सः सूर्यो द्वादश

---

* आकृति नंबर ५३

१२ आः स्वयंभूस्तस्याननानि मुखानि चत्वारि एभिर्मातीति एतन्मिता तिथिः त्रयोदशी अष्टमी एकादशी द्वादशी चतुर्थी चेति शुभा स्यात् । 'वो वाते वरुणे रुद्रे' इति 'सः सूर्ये च परोक्षे च' इति 'विरिंचौ आश्च पुल्लिंग' इत्येकाक्षरकोषे ॥ पाठांतरेणापि यदुक्तं लोकभाषायां 'तरोसि अष्टमी चौदशी चोथि नवमीति हिंपाहाणटंकणदारणकज्जिवारिपुनिमइलहइकल्याण' १ इति फांकटं ॥ कस्मिन् चपलराश्युदये किंभूतेऽसदन्विते खलग्रहयुक्ते ॥ ३९ ॥

**रविभतो भुजयानुशरैस्ततो मुहुरिहोपचयेन विगर्हितम् ॥**
**यदुडु ताज्जिनदिक्प्रमितं तथा दृषदयोमणिदारुविदारणे ॥४०॥**

अथ पाषाणादौ विदारणे भानि चिंतयति—**रविभत इति** ॥ सूर्यनक्षत्रात् भुजया हस्तेन नक्षत्रयुग्मेन अनु पश्चात् शरैर्नक्षत्रपंचकेन ततो मुहुर्वारं वारं उपचयेन पुनः पुनः पंचवृद्धिविधानेन यत् उडु जिनदिक्प्रमितं चतुर्विंशतितमं दशमं च स्यात्तथा तन्नक्षत्रं चतुर्विंशं दशमं च विगर्हितं त्याज्यं कस्मिन् दृषत् पाषाणः अयोमणिर्लोहमणिः रत्नं दारु काष्ठं एषां विदारणे भिन्नकरणे ॥ ४० ॥

**चित्राजमित्राजभराजरेवतीसावित्रसुत्रामककाश्यपीज्यभैः ॥**
**सदन्हि सौरर्क्षदशेंद्रभान्यभैः पटक्रिया यंत्रविधौ नृभोदये ॥ ४१ ॥**

अथ वस्त्रक्रियायंत्रविधौ भादिशुद्धिमाह—**चित्रेति** ॥ यंत्रविधौ 'ताणो चढाववो' इति भाषा पटक्रिया स्यात् कैः चित्रा अजो विष्णुः श्रवणः मित्रोऽनुराधा अजो ब्रह्मा तस्य भं रोहिणी राजा चंद्रो मृगशीर्ष रेवती सावित्रं सविता सूर्यस्तस्येदं भं हस्तः सुत्रामा इंद्रो ज्येष्ठा को वायुः स्वाती काश्यपी पुनर्वसु इज्यभं पुष्यः एषां द्वंद्वे एभिः पुनः कैः सौरर्क्षात् सूर्यभात् दश दशमं इंद्रभं चतुर्दशं नक्षत्रं आभ्यामन्यभैः सूर्यनक्षत्राद्दशमचतुर्दशमितनक्षत्रवर्जितनक्षत्रैः क्व सदन्हि शुभग्रहदिवसे नृभोदये नरराश्युदये ॥ ४१ ॥

**आदित्यभादित्यमृदूग्रधन्वभं सांत्याजवाताजभमर्कसद्युगम् ॥**
**चरोदये वारिचरोदयेनजे सत्कंटके हारि कुलालकर्मणि ॥४२॥**

अथ कुंभकारकर्मणि भादिशुद्धिमाह—**आदित्येति** ॥ कुलालकर्मणि कुंभकारकार्ये आदित्यादिनक्षत्रं हारि शुभं स्यात् । आदित्यं पुनर्वसु आदित्यभं हस्तः मृदूनि उग्रधन्वा इंद्रस्तस्य भं ज्येष्ठा किंभूतं आंत्यं रेवती अजो विष्णुस्तस्य भं श्रवणः वातः स्वाती अजो ब्रह्मा रोहिणी एभिः सहितं पुनः किंभूतं अर्कसद्युगं सूर्यशुभग्रहदिनयुक्तं पुनः कस्मिन् चरोदये चरलग्ने वारिचरोदयेनजे जलचरलग्नयुक्तशनौ सत्कंटके ॥ ४२ ॥

**अधः समाशापरिधौ निपस्थले दंडे सचंडच्छविभाद्गमंडलं ॥**
**कुलालचक्रे क्रमतो नगांशमं घटापरोदक् च तदेतदर्थकृत् ॥४३॥***

---

* आकृति नंबर ५४

अथ कुलालचक्रे भानि स्थापयति—अथ इति ॥ कुलालचक्रे सचंडचक्रविभात् सूर्ययुक्तनक्षत्रात् नगांशमं सप्तानां चतुष्कमितेन अष्टाविंशतिर्भमंडलं स्थाप्यं कस्मिन् क्रमात् अधः समाशापरिधौ अधःस्थाने शंकुस्थाने समदिक्षु परिधौ निपस्थले कुंभस्थाने दंडे च अत्र घटापरोदक् कुंभस्थानगतं पश्चिमदिग्गतं उत्तरदिग्गतं तत एतत् नक्षत्रं अर्थकृत् कुंभकारस्य संतत्करं स्यात् ॥ ४३ ॥

शैलूषारोहयंत्रे तपनविधिभतोऽग्र्यंशमं मूर्ध्नि मध्ये
पूर्वाद्याशा वरत्रास्वनु तलविषये तारकामंडलं स्यात् ॥
वामं वेणाववामं त्वपरमिह सदैतत्कलाकर्तुरार्द्राचित्रा-
धीराच्युतर्क्षत्रितयधिषणभैः सत्सदर्कैः सुलग्ने ॥४४॥

अथ स्रग्धरया वंशाणिकानां वंशारोहणयंत्रचक्रे भानि स्थापयति—शैलूषेति ॥ शैलूषो नटस्तस्यारोहयंत्रे वंशस्थापनयंत्रणे तपनाविधिभतो रविनक्षत्रात् अग्र्यंशमं सप्तानां चतुष्कामितेन सप्तविंशतिस्तारकामंडलं मूर्ध्नि मस्तके मध्ये गर्भे पूर्वाद्याशावरत्रासु पूर्वप्रमुखदिग्रज्जुषु वामं अवामं सव्यापसव्येन गतं अनु पश्चात् तलविषये वंशतले स्यात् । इह वेणौ वंशे मस्तकमध्यतलानां त्रये आर्द्राचित्राधीराणि अच्युतर्क्षत्रितयं श्रवणत्रयं धिषणभं पुष्यः एषां द्वंद्वे एभिः सत् शुभं स्यात् । कस्यैतत्कलाकर्तुर्नटस्य कैः सदर्कैः शुभग्रहसूर्यैः सुलग्ने सति च पुनरपरं सव्यापसव्यरज्जुषु गतं नक्षत्रं इह कामविनाशकं स्यात् ॥ ४४ ॥

विडलभाडलभैरपहास्तितैरसदहानि युतान्यसदुद्गमे ॥
त्रियुगदारुणमिश्रशयद्वयैरुपलदारुविदारणकर्मणि ॥४५॥

अथोपलदारुविदारणे धीरादिशुद्धिमाह—विडलेति ॥ उपलदारुविदारणकर्मणि पाषाणकाष्ठभेदनकार्येऽसदहानि खलग्रहदिनानि स्युः [illegible] असदहानि युतानि युक्तानि कैरपहस्तितैर्हस्तवर्जितैर्विडलभाडलभैः विड[illegible]नक्षत्रयोगैः [illegible]योगैः त्रियुगं पूर्वात्रयं उत्तरात्रयं दारुणसंज्ञानि मिश्रसंज्ञे शयद्वयं हस्तश्रिन्ना एषां द्वंद्वे एतैः क्वासदुद्गमेऽशुभग्रहाणां लग्ने ॥४५॥

शयमृगश्रुतिमूलपुनर्वसुश्वसनभेशभवासववासवैः ॥
निचितनिर्जरवर्द्धकिभैर्भवेद्विदि च चर्मविधानमहौ सिते ॥४६ ॥

अथ चर्मकार्ये भादिशुद्धिमाह—शयेति ॥ चर्मविधानं चर्मकार्यं भवेत् कैः शयो हस्तः मृगो मृगशिरः श्रुतिः श्रवणः मूलं पुनर्वसु श्वसनो वायुस्तद्भं स्वाती ऐशभं आर्द्रा वासवं धनिष्ठा वासव इंद्रो ज्येष्ठा एषां द्वंद्वे एभिः किंभूतैर्निचितं नियुक्तं निर्जरवर्द्धकिर्देवसूत्रभारस्तद्भं चित्रा एषु तैः पुनः क विदि बुधे पुनरहौ सूर्ये सिते शुक्रे वारे ॥ ४६ ॥

नवकमंडलुपूर्वपयोग्रहो वरतरो गुरुराजसितेषु च ॥
वरुणवातमृगाश्विनधीरभैर्वसुभमूलमघादितिजीवभैः ॥४७॥

अथ नवीनकमंडलौ जलभरणशुद्धिमाह—नवेति ॥ नवकमंडलुपूर्वपयोग्रहो नूतनकमंडलौ प्रथमपानीयग्रहणं वरतरः शुभः स्यात् केषु गुरुराजसितेषु गुरुचंद्रशुक्राणां वारे च पुनः कैः वरुणः शतभिषक् वानं वनस्य जलस्येदं पूर्वाषाढा मृगो मृगशिरः आश्विनमश्विनी धीरभानि एषां द्वंद्वे एभिः पुनः कैः वसुभं धनिष्ठा मूलं मघा अदितिः पुनर्वसु जीवो गुरुस्तद्भं पुष्य एषां द्वंद्वे एतैः ॥ ४७ ॥

**प्रपादिपानीयविधानमेवं विहाय विष्टिक्षयसोमरिक्ताः ॥**
**जलोदये राजनि वांबुगे तच्छुद्धे त्रिकोणाष्टचतुष्टये स्यात् ॥४८॥**

अथ जलकार्यशुद्धिमाह—प्रपेति ॥ तत् प्रपादिपानीयविधानं जलशालादि जलकार्यमेवं स्यात् किंकृत्वा विष्टिं भद्रां क्षयसोमरिक्ताः क्षीणचंद्रं रिक्तातिथीन् विहाय कस्मिन् जलोदये जलराशौ राजनि चंद्रे वाथांबुगे चतुर्थभावगते चंद्रे वा त्रिकोणा ९ । ५ ष्ट-चतुष्टये १ । ४ । ७ । १० । त्रिकोणाष्टमकेंद्रे शुद्धे सति ॥ ४८ ॥

**मृदुध्रुवक्षिप्रशिफाविशाखाप्राचेतसांभोभगणो वरेण्यः ॥**
**वल्लीवसानद्रुमरोपणे स्यात्सौम्योदयः सत्तिथिवारसूरः ॥४९॥**

अथ वल्ल्यादिरोपणे वारादिशुद्धिमाह—मृद्विति ॥ वल्लीवसानद्रुमरोपणे वल्लीनां वसानं आच्छादनं वल्लीमंडपरोपणं वृक्षरोपणं च द्वंद्वैकत्वे तस्मिन् सौम्योदयः शुभलग्नं सत्तिथिवारसूरः शुभतिथिः सूर्यवारः पुनर्मृद्वादिनक्षत्राणां गणो वरेण्यः शुभः स्यात् । मृदूनि ध्रुवाणि क्षिप्राणि शिफा मूलं विशाखा प्राचेतसं शतभिषक् अंभो जलं पूर्वाषाढाभं एषां द्वंद्वे एषां गण इति ॥ ४९ ॥

**हलप्रवाहे जनजीवनोद्यमे कृषीवलो मंगलविद्यमांस्त्यजेत् ॥**
**कृपीटयोन्यंतकभीमभोगिभात्रिपूर्विकैंद्राणि चतुष्टयुक्तिथिः ॥५०॥**

अथ हलप्रवाहे वारादिशुद्धिमाह—हलेति ॥ हलप्रवाहे सीरकर्षणे जनजीवनोद्यमे जीवनमाजीविका तस्योद्यमे कृषीवलः कुटुंबी कर्तृपदं मंगलो भौमः विद् बुधः यमः शनिः एषां द्वंद्वे इमान् च पुनः कृपीटयोनिर्वन्हिः कृत्तिका अंतको भरणी भीमो भर्ग आर्द्रा भोगी सर्पोऽश्लेषा त्रिपूर्विका ऐंद्रं ज्येष्ठा एषां द्वंद्वे इमानि पुनर्दुष्टयुक्तिथिः कुयोगतिथीस्त्यजेत् वर्जयेत् ॥ ५० ॥

**नैवाडले भे द्विकलोनमंडले वार्मण्डले लांगलवाहमारभेत् ॥**
**कुटुंबिराशावपराजसत्फले ज्येष्ठादिमार्द्धे च तथैव भद्रया ॥५१॥**

अथाडलादौ हलकर्षणं निषेधति—नैवेति ॥ कुटुंबी लांगलवाहं हलप्रवाहं नैवाचरेत् न कुर्यात् कस्मिन् अडले भे अडलयोगनक्षत्रे पुनर्द्विकलोनमंडले द्विकलाभ्यामूनं हीनं मंडलं यस्य स तस्मिन् कलाशब्देन तिथिः द्विकलोनमंडले इति कोऽर्थः द्विकलाः समसं-

ण्व्यारितथय २।४।६ । ८ । १० ।१२। १४ इति । यतः पाठांतरेणाप्युक्तं ॥ दशम्येकादशी चैव तृतीया च त्रयोदशी । सप्तमी पंचमी चैव प्रतिपच्च सुखावहा ॥१॥ इति शुभफलमाश्रित्य प्रोक्तमिति तासु वार्मंडले चंद्रे सति 'मृगांको जलमंडल' इति ब्रह्मसिद्धांते जलस्वरूपत्वात् ॥ पुनरपगतं राज्ञश्चंद्रस्य सत्फलं यस्मात् सोपराजसत्फलो गतचंद्रबलस्तस्मिन् कुटंबिराशौ कार्मुकनामराशौ सति पुनर्ज्येष्ठादिमार्द्धे ज्येष्ठमासपूर्वार्द्धस्तस्मिन् पुनस्तथैव भद्रया विष्ट्या ॥५१॥

**ससूरतारादिभतस्त्रयं त्रयं त्रयं शरोन्मं त्रितयं तु पंचकं ॥**
**त्रिकं द्विकं तारकमंडलं क्रमादसच्छुभं सीरविमध्यफालादिक्॥५२॥**

अथ हलचक्रे भानि स्थापयति—ससूरेति ॥ ससूरतारादिभतः सूर्याक्रांतनक्षत्रात् त्रयं ३ त्रयं३ त्रयं३ शरैरुन्मीयते इति शरोन्मं बाणामितं ५ त्रितयं ३ तु पुनः पंचकं ५ त्रिकं ३ द्विकं २ इति हलचक्रे तारकमंडलं स्यात्तत्र क्रमादसत् शुभं च स्यात् । कोऽर्थः योक्रात् त्रयमशुभं त्रयं शुभं त्रयमशुभं पंच शुभं त्रयमशुभमिति । पुनः सीरविमध्यफालादिक् हलस्य मध्यभागं प्रोह्य फालादिग् हलस्य द्वयोः प्रांते शुभं मध्ये नेष्टमित्यर्थः ॥ ५२ ॥

**न कंदमूलादिकृषावनिष्टः सीरप्रवाहे भगणांशकः क्वचित् ॥**
**शंपागतस्तन्मतमुद्धतं वा सर्वत्र शस्तं हि मदुक्तमेव ॥ ५३ ॥**

अथात्र कस्यचिन्मतं दूषयन् स्वमतं दृढयति—न कंदेति ॥ कंदमूलादिकृषौ कंदमूलोत्खनने क्वचित् शम्पागतः 'शमल' इति भाषा तत्र गतो भगणांशको हलप्रवाहे न इष्टः स्यात् । वा इति पक्षांतरे तन्मतं तस्य ज्योतिर्विदो मतमुद्धतमनर्गलं हि युक्तार्थे मदुक्तं मया प्रोक्तमेव सर्वत्र शस्तं शुभं ज्ञेयमित्यर्थः ॥ ५३ ॥

**तमीश्वराशं विनयेद्धलं सदा केदारमादौ सबलर्क्षभेरितं ॥**
**सीरोत्तराग्रोतसुरेंद्रदिङ्मुखी मृगांकदिक्शुद्धिवतीह सत्फला ॥५४**

अथ क्षेत्रकर्षणविधिमाह—तमीति ॥ सदा निरंतरं आदौ कुटुंबी हलं केदारं क्षेत्रतमीश्वराशं चंद्रदिशमुत्तराशागतं विनयेत् प्राप्नुयात् । द्विकर्मकत्वात् केदारमित्याधारे कर्म । किंभूतं हलं सबलर्क्षभेरितं बलिष्ठनक्षत्रराशिप्रेरितं इह क्षेत्रे मृगांकदिक् उत्तराशा सत्फला शुभफलदायिनी स्यात् । किंभूता मृगांकदिक् शुद्धिवती कुयोगरहिता पुनः किंभूता सीरोत्तराग्रोतसुरेन्द्रदिङ्मुखी सीरेण (हलेन उत्तरा स्यात् । उत्तरादिगग्रत ओतं प्रोतं सुरेंद्रदिग्मुखं (पूर्वदिङ्मुखं) यस्याः सा सीरोत्तराग्रोतसुरेंद्रदिङ्मुखी इति । सीतोत्तरा इति पाठे सीतया दंडपद्धत्या शेषं तथैव ॥ यतः सौमीं दिशं प्रति त्रिवारं नयनेन पंचरेखा उत्पद्यंते ॥ यथा प्रथमगमनेनैका आवर्तनेन द्वितीया पुनरुत्तरां प्रति द्वितीयगमनेन तृतीया पुनरावर्तनेन चतुर्थी पुनरुत्तरां प्रति तृतीयगमनेन पंचमी रेखा उत्पद्यतेऽधिका।

आकृति नंबर ५५

न कार्या तथा चोक्तं ॥ शस्तासु चंद्रतारासु शुचिः शुक्लेन वाससा । स्नात्वा गंधैश्च पुष्पैश्च पूजयित्वा विशेषतः॥१॥पृथ्वीं ग्रहसंयुक्तं पूजयित्वा प्रजापतिं। अग्निं प्रदक्षिणीकृत्य दातव्या च प्रदक्षिणा ॥ २॥ कृष्णौ वृषौ नियोक्तव्यौ नवीनैश्च युतेन वा ॥ हेमनृष्टहलाग्रेण छिन्नरेखा न कारयेत् ॥ ३ ॥ उत्तराभिमुखो भूत्वा क्षीरेणार्घं प्रदापयेत् । विबलं छिन्नलांगूलं कपिलं वृषभं त्यजेत् ॥ ४ ॥ हलप्रवाहणं कार्यं नीरुग्भिर्वृषकर्षकैः । हलादिभिर्दृढैः क्षेमं कुदृढं न शुभं भवेत् ॥ ५ ॥ वृषभा यदि युद्धेयरन् तस्य विघ्नं सदा भवेत् । तस्य सर्वप्रकारेण निर्विघ्नं कारयेत्तदा ॥ ६ ॥ एका जयकरी रेखा तृतीया चार्थवृद्धिदा । पंचमी च भवेद्रेखा बहुसस्यफलप्रदा ॥ ७ ॥ अत ऊर्ध्वं न कर्तव्या महादोषस्ततो भवेत् । स्मर्तव्या वसवः शुक्रः पृथु० नामा सचंद्रमाः ॥ ८ ॥ पराशरो हली चैव सर्वविघ्नोपशांतये ॥इति॥ अत्र दुर्निमित्तानि तत्रैवोक्तानि ॥ हले प्रवाह्यमाणे तु कूर्म उत्पद्यते यदि । गृहिणो मृत्युरेतस्य ततोऽग्नेश्च भयं भवेत् ॥ ९ ॥ इषाभंगो यदा कर्तुः संतापो जीवितस्य च । सुतनाशो युगे भग्ने समाने म्रियते शिशुः ॥ १० ॥ योक्त्रच्छेदे तु व्यासंगः सस्यहानिश्च जायते॥११॥ हले प्रवाह्यमाणे तु गौरेकः प्रपतेद्यदि । प्रपतेद्युक्तमात्रस्तु बंधनं च प्रयच्छति ॥ १२ ॥ ज्वरातिसाररोगेण कृषिभंगं विनिर्दिशेत् । प्रवहेद्युक्तमात्रस्तु ततो गौः खनते यदि ॥ १३ ॥ नहेन ! युक्तमात्रस्तु तदा सस्यं चतुर्गुणमिति ॥ ५४ ॥

**योक्त्रादिकोपस्करसाधनेऽनसो हलस्य वा स्युः सशुभेनवासराः ॥**
**पूर्णाजयानंदवतीयुता व्यमा मृदुस्थिरक्षिप्रजटाचराचिताः ॥५५॥**

अथ योक्त्रादिसाधनशुद्धिमाह—योक्त्रेति ॥ अनसः शकटस्य वा योक्त्रादिकोपस्करसाधने योक्त्राद्युपस्करकार्ये सशुभेनवासराः शुभग्रहयुक्तसूर्यादिनानि स्युः । किंभूताः सशुभेनवासराः पूर्णाजयानंदवतीयुताः पूर्णातिथिः जयातिथिः नंदातिथिः आभिर्युक्ताः पुनः किंभूता व्यमा अमावास्यावर्जिताः पुनः किंभूताः मृदूनि स्थिराणि क्षिप्राणि जटा मूलं चराणि एषां द्वंद्वे एतद्भैराचिता व्याप्ताः ॥ ५५ ॥

**मैत्रेष्वलोलेषु लघुष्विहानले मूलश्रविष्ठाग्रजभेषु सद्दिने ॥**
**रिक्ताविमुक्तेऽशुभदन्हि वानमे समस्तबीजोप्तिरभीष्टसिद्धये ॥५६॥**

अथ बीजवापने भादिशुद्धिमाह—मैत्रेष्विति ॥ समस्तबीजोप्तिः समग्रबीजवापनमभीष्टसिद्धये वांछितकार्याय स्यात् क मैत्रेषु भेषु लोलेषु लोलसंज्ञभेषु लघुषु आनले कृत्तिकायां मूलं श्रविष्ठा धनिष्ठा अग्रजो विष्णुस्तस्य भं श्रवणः एषां द्वंद्वे एषु सद्दिने शुभग्रहदिने वाशुभदन्हि सूर्यवारे रिक्ताविमुक्ते रिक्तातिथिवर्जिते पुनरनमे न विद्यतेऽमामावास्या यस्मिन् स तस्मिन्ननमे ५६

**कूपांबुसिद्धान्नकवापने क्वचिन्मघाशयावंशुविदौ विगर्हितौ ॥**
**समाहृतं वारिभमत्र केनचिद्बीजोप्तिरिष्टाश्रितसन्नृभोदये ॥ ५७ ॥**

अथ कूपजलवापकार्ये मतमाह—कूपेति ॥ क्वचित् स्थाने कूपांबुसिद्धान्नकवापने कूपजलेन नि-हान्नवान्यवापने मघाशर्यो मघाहस्तौ अंगुनिदौ सूर्यबुधौ विगर्हितौ वर्जितौ । अत्र केनचित् वारिमं पूर्वाषाढा समाहृतमंगीकृतं । पुनर्बीजोप्तिर्बीजवापनमिष्टा श्रेष्ठा स्यात् कस्मिन् आश्रि-तसन्नभोद्वये शुभग्रहयुक्त नृराश्युदये ॥ ५७ ॥

**शिरस्त्रिमा राममिता गलोऽर्कमा गर्भश्च रात्रोऽनु च लूनकं पराः ॥**
**पुच्छाग्रमिंदुप्रमदाः पिचंडगा वराः पृदाकोरुडुतोऽन्नवापने ॥५८॥***

अथ बीजवापविषये फणिचक्रमाह—शिर इति ॥ पृदाकोः सर्पस्य राहोरित्यर्थः । यतो राहोस्तु फणीति नाम ग्रंथांतरप्रसिद्धमिति तस्योडुनो नक्षत्रात् इंदुप्रमदास्तारा । त्रिमस्त्रय-मिताः शिरः स्यात् । एवं राममितास्त्रयमिता गलः स्यात् । अर्कमा द्वादशमिता गर्भो मध्य-भागः स्यात् । अनु पश्चात्तत्तो लूनकं पुच्छं स्यात् । परा अग्रेतनास्ताराः पुच्छाग्रं स्यात् अत्राहिचक्रे पिचंडगा उदरगास्तारा वराः श्रेष्ठाः स्युः 'पिचंडो जठरोदरे' इति हैमः ॥ ५८ ॥

**सीरप्रवाहद्युभशुद्धकाले गोदारणारंभणमाहुरार्याः ॥**
**क्षेत्रे च बीजोप्तिभपक्षशुद्धौ गृहे नयेत्सीत्यचयं कुटुंबी ॥५९॥**

अथ धान्यच्छेदनशुद्धिमाह—सीरेति ॥ आर्याः पंडिता गोदारणारंभणं कुद्दालकृत्यमाहुः कथयंति 'गोदारणं तु कुद्दाल' इति हैमः । कस्मिन् सीरप्रवाहद्युभशुद्धकाले हलप्रवाहस्य दिनन-क्षत्राणां शुद्धकाले च पुनः कुटुंबी सीत्यचयं धान्यपुंजं गृहे नयेत प्राप्नुयात् 'धान्यं तु सस्यं सीत्यं च' इति हैमः । कस्यां बीजोप्तिभपक्षशुद्धौ बीजवापनस्य नक्षत्रादिनानिर्देशितायां सत्यां ॥५९

**विधूलयंत्यावकरैः करीषैः सधूलिभिः क्षेममलं विशश्चेत् ॥**
**सदन्हि शुद्धेऽतिशुभं चराद्यं क्रव्यादभावाजपदृक्षपुष्यैः ॥ ६० ॥**

अथ क्षेत्रे करीषादिक्षेपणमाह—विधूलेति ॥ चेत् यदि अलमवधारणे विशः कुटुंबिनः क्षेत्रं विधूलयंति धूलियुक्तं कुर्वंति ( खातर नाखवुं ) इति भाषा कैः करीषैः शुष्कगोमयगणैः किंभूतैः करीषैः अवकरे संकरे भवा आवकरास्तैः पुनः किंभूतैः सधूलिभिः धूलियुक्तैः कस्मिन् सदन्हि शुभग्रहाणां दिने किंभूते सदन्हि शुद्धे निर्दोषप्राप्ते कैः चराढ्यानि चरनक्षत्रयुक्तानि क्रव्यादो राक्षसो मूलं भवस्येदं भावमार्द्रा अजपदृक्षं अजपादभं पूर्वभाद्रपदा पुष्य एषां द्वंद्वे एतैः किंभूतं क्षेत्रं अतिशुभं ॥ ६० ॥

**आजीवमिच्छत्यपि ना यदा यो गोधान्यभूमिव्यवहारतोऽसौ ॥**
**चरेच्चरक्षिप्रमृदुध्रुवर्क्षैस्तदुद्यमं सत्तिथिवारकीर्णैः ॥ ६१ ॥**

अथ गवादीनां व्यवहारशुद्धिमाह—आजीवमिति ॥ यदा चेत् यो ना पुमान् आजीवं आजीविकामिच्छति वांछति 'आजीवो जीवनं वार्ता इति' हैमः । कस्मात् गौर्वृषो धान्यं भूमिः

---

*आकृति नंबर ५६

क्षेत्रादिः आसां द्वंद्वे आसां व्यवहारतां व्यापारात्तद्वामौ नरस्तद्वर्म तेषु गवादिषु उपक्रमं चरेत् कुर्यात । कैः चराणि क्षिप्राणि मृदूनि ध्रुवाणि एषां द्वंद्वे एतद्भैः किंभूतैः सत्तिथिवारकीर्णैः शुभतिथिवारव्याप्तैः ॥ ६१ ॥

**नवोक्षगोकर्म समेत्य शुद्धे द्वीशादितैयैंद्रलघुश्रविष्ठाः ॥**
**सवारुणांत्याः सशुभद्युयोगाः शीर्षोदये प्रापयति प्रियार्थम् ॥६२॥**

अथ नूतनवृषस्य कृत्यमाह—नवोक्षेति । शुद्धे निर्दोषकाले नवोक्षगोकर्म नूतनवृषभस्य कृत्यं कर्तृपदं प्रियार्थं वांछितपदार्थं प्रापयति किंकृत्वा द्वीशं विशाखा आदितेयं पुनर्वसु ऐंद्रं ज्येष्ठा लघूनि श्रविष्ठा धनिष्ठा आसां द्वंद्वे एतास्ताराः प्रति समेत्य प्राप्य किंभूताः सवारुणांत्याः शतभिषक्रेवतीसहिताः पुनः किंभूताः सशुभद्युयोगाः शुभग्रहदिनयोगयुक्ताः क शीर्षोदये शीर्षलग्ने ॥ ६२ ॥

**मूलादितेयद्वयवारुणांत्यात्रिपूर्विकाक्षिप्रमृगश्रविष्ठाः ॥**
**सद्वीश्वरा वृष्ण्यजकासरीणां क्रियासु सेनास्फुजिदैनिसोमाः ॥६३॥**

अथ मेषादिनां कृत्यशुद्धिमाह—मूलादीति ॥ वृष्णिर्मेषः अजश्छागः कासरी महिषी आसां क्रियासु कर्मसु मूलादिताराः स्युः । मूलं आदितेयद्वयं पुनर्वसु पुष्यः वारुणं शतभिषक् आंत्यं रेवती त्रिपूर्विका पूर्वात्रयं क्षिप्राणि मृगो मृगशीर्षं श्रविष्ठा धनिष्ठा आसां द्वंद्वे इमास्ताराः किंभूता इमाः सद्वीश्वरा विशाखायुक्ताः पुनः किंभूताः सेनेति इनःसूर्यः आस्फुजित् शुक्रः ऐनिः शनिः सोम एषां द्वंद्वे एभिः सहवर्तमानाः ॥ ६३ ॥

**अथोष्ट्रवामीखरकर्म पाणौ पौरंदराद्यानिलमैत्रवर्गे ॥**
**पुनर्वसौ हंससितैनिवारे गरुत्मतां कर्म समृद्धये तु ॥ ६४ ॥**

अथेति ॥ अथानंतरं उष्ट्रवामीखरकर्म उष्ट्रवेसरघोटकखराणां कृत्यं तु पुनर्गरुत्मतां पक्षिणां कर्म कर्तृपदं समृद्धये संपदाये स्यात् । क पाणौ हस्ते पौरंदरं ज्येष्ठा आद्यमश्विनी आनिलं स्वाती मैत्रमनुराधा एषां वर्गे गणे पुनः पुनर्वसौ अदितिभे पुनर्वसुशद्ब एकवचनांतोऽप्यत्र पुनः हंसः सूर्यः सितः शुक्रः ऐनिः शनिः एषां द्वंद्वे एषां वारे ॥ ६४ ॥

**अमा३०ष्टमी८भूत१४दिनानि भास्करं चित्रोत्तराधोक्षजभाजभानि च ॥**
**परित्यजेन्निर्गमने निवेशने सदा पशूनां स्थितितोऽर्कसंक्रमम् ॥६५॥**

अथ पशूनां निर्गमप्रवेशशुद्धिमाह—अमेति ॥ सदा पुमान् पशूनां स्थितितः स्थानात् निर्गमने निवेशने प्रयाणे प्रवेशने एतानि त्यजेत्तान्याह ॥ अमा अमावासी अष्टमी ८ भूतादिनं चतुर्दशी एषां द्वंद्वे एतानि च पुनर्भास्करं रविदिनं च पुनश्चित्रा उत्तरा अधोक्षजो विष्णुस्तद्भं श्रवणः अजो ब्रह्मा रोहिणी एषां द्वंद्वे इमानि भानि पुनरर्कसंक्रममिति कर्मपदानि ॥६५

**लघुश्रवोवासववासवांत्यभैस्तिष्यादितेयद्विपविश्वकर्मभैः ॥**
**जीवस्वधात्वंबरधान्यवस्तुजः क्रयस्तथा विक्रय एव सल्लघुनि ॥६६**

अथ क्रयविक्रयशुद्धिमाह—लघ्विति ॥ जीवः पशुः स्वं धनं धातुर्लोहादिः अंबरं वस्त्रं धान्यं एषां द्वंद्वे इत्यादीनां वस्तूनां क्रयस्तथा विक्रय एव स्यात् । कैः लघूनि श्रवः श्रवणः वासवं धनिष्ठा वासव इंद्रो ज्येष्ठा आंत्यं रेवती एषां द्वंद्वे एतद्भैः पुनः कैः तिष्यः पुष्यः आदितेयं पुनर्वसु द्वीपं द्विस्वामिकं विशाखा विश्वकर्मभं चित्रा एषां द्वंद्वे एभिः पुनः सल्लघुनि शुभग्रहाणां दिने ॥ ६६ ॥

**एभिश्च यादोऽर्यतमीशभोत्तराभूतेशभैर्द्वीश्वरजैष्णवोज्झितैः ॥**
**विविद्युमारघ्नुषुच स्थिरोदये सत्कंटके वस्तुविनिमयो वरः ॥ ६७ ॥**

अथ वस्तूनां विनिमय ( पालटण ) शुद्धिमाह—एभिश्चेति ॥ वस्तुविनिमय एकं वस्तु दत्वान्यवस्तुग्रहो वरः श्रेष्ठः स्यात् कैरेभिः पूर्वोक्तलध्वादिनक्षत्रैः किंभूतैरेभिः द्वीश्वरं विशाखा जैष्णवं ऐंद्रं ज्येष्ठा श्रवणा उज्झितैः वर्जितैश्च पुनर्यादोऽर्यो नक्रस्वामी वरुणः शतभिषक् तमीशश्चंद्रो मृगशीर्षभं उत्तरात्रयं भूतेशभमार्द्रा एषां द्वंद्वे एतैः पुनः केषु विगता निर्गता विद् बुधः यमः शनिः आरो भौमश्चैते येभ्यस्तेषां द्युषु रविचंद्रगुरुशुक्रादिनेषु पुनः स्थिरोदये स्थिरलग्ने सत्कंटके शुभग्रहयुक्तकंटके ॥ ६७ ॥

**अलोलसाधारणदारुणोग्रैर्धनं प्रदत्तं कुसिदेहया यत् ॥**
**हृतं बलान्यस्तमिदं च दैवान्न याति पाणिं पुनरेव तत्स्वम् ॥६८**

अथ कालांतरधनार्पणशुद्धिमाह—अलोलेति॥ दैवात् कुसीदो वृद्धिजीवनं तस्या ईहा इच्छा तया कालांतरेच्छया कृत्वा यत् धनं प्रदत्तं च पुनः यत् धनं हृतं चौरेण इति शेषः पुनरथवा बलान्यस्तं भूमौ क्षिप्तं 'बला लक्ष्मीर्बला मही' इति अनेकार्थः॥ तत् इदं स्वं धनं कर्तृपदं पाणिं नायाति हस्तगतं न भवति तन्नरस्येति शेषः ।कुसीदमित्यत्र ह्रस्व इकारः शब्दभेदात् दृश्यते ॥६८॥

**भद्रा२।७।१२तिथौ मंगलसौरिमंत्रिण स्त्रिपुष्करः स्याद्विषमांघ्रिभं यदा ॥**
**वृद्धौ विनष्टे च हृते मृते फले योगस्तदासौ त्रिगुणप्रवृद्धिकृत् ॥ ६९ ॥**

अथात्र त्रिपुष्करयोगं दर्शयति—भद्रेति ॥ यदा भद्रातिथौ मंगलसौरिमंत्रिणो भौमशनिगुरवो विषमांघ्रिभं विषमचरणनक्षत्रं च स्युस्तदा त्रिपुष्करनामा योगः स्यात् । असौ त्रिपुष्करो वृद्धौ प्रवर्द्धने फले विनष्टे नाशे फले हृते चौरादिना हारिते फले मृते मरणे फले त्रित्रिगुणप्रवृद्धिकृत् शुभे त्रिगुणं शुभं अशुभे त्रिगुणमशुभं स्यात् ॥ ६९ ॥

**ध्रुवलघुमृदुलोलैर्जीवकाव्येंदुवारैः कुयुतिशजानिरिक्ता-**
**मा३०विमुक्तैर्नृलग्ने ॥नवकुसुमफलानां बादरादौषधीनां**
**रसकृषिकणिशानां संग्रहो भोगसिद्ध्यै ॥ ७० ॥**

अथ नवीनपुष्पादीनां संग्रहमाह— ध्रुवेति ॥ नवकुसुमफलानां पुन्वांदरः कार्पासः आर्द्रौषधयः आसां पुना रसो घृतादयः कृषिः कणिशं धान्यशिरः एषां द्वंद्वे एषां संग्रहो भोगवृद्धये सुखभोग प्रवर्द्धनाय स्यात् । कैः ध्रुवाणि मृदूनि लघूनि लोलानि एषां द्वंद्वे एतैः पुनर्जीवो गुरुः काव्यः शुक्र इंदुश्चंद्र एषां वारैः किंभूतैः कुयुतिः कुयोगः शः शंभुस्तस्माज्जातिर्जन्म यस्याः सा भद्रा रिक्तातिथिः अमामावासी आभिर्विमुक्तैर्वर्जितैः ॥ ७० ॥

नवसलिलफलान्नप्राशनं सज्जनानां श्रुतिशयकभपौ-
ष्णादिद्वयेषूत्तरासु ॥ सरविशुभदिनेष्वेवानुराधासु
शस्तं जितुम३घट७ककुद्मल्लेय५कन्या०९स्त्रिलग्ने ॥ ७१ ॥

अथ नवीनजलादीनां प्राशनमाह— नवेति ॥ नवसलिलं नूतनजलं नूतनफलं नवीनान्नं एषां प्राशनं खादनं शस्तं शुभं स्यात् । केषां सज्जनानां नृपादीनां क्व श्रुतिः श्रवणः शयो हस्तः को वायुस्तद्भं स्वाती पौष्णं रेवती आदिद्वयं अश्विनी भरणी एषां द्वंद्वे एषु पुनः उत्तरासु उत्तरात्रये पुनः सरविशुभदिनेषु रविवारे शुभग्रहवारे पुनरनुराधासु पुनर्जितुमं मिथुनं घटः कुंभः ककुद्मान् वृषभो वृषराशिः लेयः सिंहः कन्याऽस्त्री धन्वी धनुरेषां लग्न एव निश्चितं ॥ ७१ ॥

कृष्णाभयानागरपूर्वसेवनारंभो विधेयो लघुभेंऽत्यभे मृगे ॥
श्रवस्त्रयेऽर्केंदुसितेज्यवासरैः पूर्णाजयानंदवतीषु धीमता ॥ ७२ ॥

अथ हरीतक्यादिसेवनशुद्धिमाह— कृष्णेति ॥ धीमता विदुषा कृष्णा पिप्पली अभया हरीतकी नागरं शुंठी एषां पूर्वसेवनारंभः प्रथमं खादनप्रारंभो विधेयः कर्तव्यः क्व लघुभे लघुसंज्ञनक्षत्रेऽत्यभे रेवत्यां मृगे मृगशीर्षे श्रवस्त्रये श्रवणधनिष्ठाशतभिषासु पुनः कैः अर्कः सूर्य इंदुश्चंद्रः सितः शुक्र इज्यो गुरुरेषां वासरैः पुनः क्व पूर्णातिथिर्जयातिथिर्नंदवती नंदातिथिः आसां द्वंद्वे आसु ॥ ७२ ॥

मृगांकसूतादिरसांगसाधनं मिश्राद्यमूलैशमृगेंद्रवासवैः ॥
शये कुजार्केज्यजया३।८।१३स्वमौढ्ययोर्जीवारयोरीज्यगृहान्यगेहरौ७३

अथ रसांगसाधनशुद्धिमाह—मृगेति ॥ मृगांकः सूतः पारद इत्यादि रसांगसाधनं स्यात् कैः मिश्रसंज्ञभानि आद्यमश्विनी मूलं ऐशमार्द्रा मृगो मृगशीर्षं इंद्रो ज्येष्ठा वासवं धनिष्ठा एषां द्वंद्वे एतैः पुनः क्व शये हस्ते पुनः कुजो भौमः अर्कः इज्यो गुरुः जयातिथिः आसां द्वंद्वे आसु पुनः क्व जीवारयोर्गुरुभौमयोरमौढ्ययोरस्तवर्जितयोः पुनरीज्यगृहे गुरोर्गृहे धनुर्मीनौ आभ्यामन्यगे हरौ सूर्ये धनुरर्कमीनार्कवर्जिते इत्यर्थः ॥ ७३ ॥

लोले मृदुक्षिप्रगणे च पूर्णया सनंदयाब्जेज्यासितांशुमद्युभिः ॥
युते नृलग्ने भिषजोषधप्रिये पूर्णे विधौ हारि रसांगसेवनम् ॥७४॥

अथ रसांगसेवनमाह—लोल इति ॥ रसांगसेवनं हारि श्रेष्ठं स्यात् क लोले चरनक्षत्रे पुनः मृदूनि क्षिप्राणि एषां गणे समूहे च पुनर्नंद्या तिथ्या २।७।१२ किंभूतया भद्रया सनंदया नंदातिथियुक्तया १।६।११ पुनः क अब्जः इंदुः इज्यो गुरुः सितः शुक्रः अंशुमान् सूर्य एषां द्वंद्वे एषां द्युभिर्दिनैर्युते युक्ते नृलग्ने नरराश्युदये किंभूते नृलग्ने भिषजो वैद्यस्य औषधं तस्य प्रिये इष्टे पुनः क पूर्णे समग्रकलायुक्ते विधौ चंद्रे 'भिषग् भिषज भिषणजाः' इति शब्दप्रभेदः अथवा ओषधप्रिये नरे इत्यपिशब्दार्थः ॥ ७४ ॥

हुताशरेताः पुरुहूतकुंडलीप्रभंजनर्क्षैरधिकत्रिपूर्विकैः ॥
अवाप्य योऽपाटवमेत्यसंशयं स्ववैद्यरक्षोऽपि नरो यमालयम् ॥७५

अथ रोगोत्पत्तौ तद्गतभफलमाह—हुताशेति ॥ यः स्ववैद्यरक्षोऽपि देववैद्ययो रक्षा यस्य स स्यात् स पुमान् असंशयं निश्चितं यमालयं मृत्युमेति प्राप्नोति किंकृत्वापाटवं रोगमवाप्य प्राप्य कैः हुताशरेताः शंभुरार्द्रा 'वन्हिरेताः शिवोऽस्थिधन्वा' इतिहैमः ॥ पुरुहूत इंद्रो ज्येष्ठा कुंडली सर्पोऽश्लेषा प्रभंजनर्क्षं स्वाती एषां द्वंद्व एभिः किंभूतैरधिकत्रिपूर्वकैः पूर्वात्रयेण पूर्णैः ॥ ७५ ॥

मृगेशसाधारणवारुणोग्रैः सवासवव्यालभपापवारैः ॥
षष्ठीचतुर्थीनवमीतवारे रोगी नरोऽन्तारमुपैति सत्यम् ॥ ७६ ॥

मृगेति ॥ रोगी नरः सत्यं निश्चितमन्तारं मृत्युमुपैति प्राप्नोति कैः मृगो मृगशीर्षं ऐशमार्द्रा साधारणं मिश्रसंज्ञभं वारुणं शततारा उग्रसंज्ञानि एषां द्वंद्व एभिः किंभूतैर्वासवं धनिष्ठा व्यालभमश्लेषा पापवाराः एषां द्वंद्वे एभिः सहवर्तमानैः पुनः किंभूतैः षष्ठी चतुर्थी नवमी आसां द्वंद्व आसु तिथिषु इतः प्राप्तो वारोऽवसरो येषां तैः 'वेलावारावसरः' इति हैमः ॥७६

मैत्रेंऽत्यभे कृच्छ्रतया निरामयो नरोऽनुमासेन मृगाख्यवैश्वयोः ॥
मघासु पक्षैर्नखभैर्द्युभैस्तथा द्विदैवतब्रह्मभवासवेष्वपि ॥ ७७ ॥

अथ रोगोत्पन्नभेषु रोगावधिमाह—मैत्री इति ॥ मैत्रेऽनुराधायां आंत्ये रेवत्यां नरः कृच्छ्रतया कष्टेन निरामयो नीरोगी भवेत् । अनु पश्चादेवं मृगाख्यवैश्वयोर्मृगशीर्षे उत्तराषाढायां मासेन निरामयो भवेत् । मघासु नखभैर्वैस्त्रैर्विंशतिदिनैर्निरामयो भवेत् ॥ ७७ ॥

नवद्युभिर्यातुभकृत्तिकाश्विभिर्याम्यश्रवोवारुणविश्वकर्मभैः ॥
एकादशाहोभिरजेज्यकाश्यपीतारार्यभैः सप्तदिनैरुपांत्यभैः ॥ ७८ ॥

नवेति ॥ यातुभं मूलं कृत्तिका आश्विनमश्विनी एषां द्वंद्वे एभिः कृत्वा नवद्युभिर्नवदिनैर्निरामयो भवेत् । याम्यं भरणी श्रवः श्रवणः वारुणं शतभिषक् विश्वकर्मा तद्भं चित्रा एषां द्वंद्वे एभिः कृत्वा एकादशाहोभिरेकादशदिनैर्नीरोगी भवेत् । अजो ब्रह्मा रोहिणी इज्यः पुष्यः काश्यपी तारा पुनर्वसु अर्यभं उत्तराफाल्गुनी एषां द्वंद्व एभिः किंभूतैः उपांत्यभैः उत्तराभाद्रपदासहितैः सप्तदिनैर्नीरोगी भवेत् ॥ ७८ ॥

**काशानवेंद्राग्निभराजमौलिभैर्मघाहिशिफाशामनदंदशूकभैः ॥**
**दष्टो नरो यः श्वसनाशनेन वै स तार्क्ष्यसख्योऽपि जहाति जीवितम् ७९**

अथ सर्पदष्टे तद्व्रतमफलमाह—काशानवेति ॥ वै निश्चितं यो नरः श्वसनाशनेन सर्पेण दष्टः स्यात् कैः काशानवं कृत्तिका इंद्राग्नी तद्भं विशाखा राजमौलिश्चंद्रशेखरः शिव आर्द्रा एषां द्वंद्वे एतद्भैः पुनर्मघा शिफा मूलं शामनं भरणी दंदशूकभं सर्पभं आश्लेषा एषां द्वंद्वे एभिः स पुमान् जीवितं आयुर्जहाति त्यजति किंभूतः स तार्क्ष्यसख्योऽपि गरुडमित्रोऽपि ॥ ७९ ॥

**पौष्णद्वये दोस्त्रितये मृगे चले विमारुते वैषणमैत्रयातुभे ॥**
**मंत्रीनसोमद्युषु सत्तिथौ भवेद्भैषज्यकर्म त्वुपतापमुक्तये ॥ ८० ॥**

अथ रोगिभ्य ओषधदानमाह—पौष्णेति ॥ भैषज्यकर्म ओषधकृत्यं भवेत् किमर्थं नुः नरस्य उपतापो रोगस्तस्य मुक्तये विनाशाय 'उपतापो गदः समाः' इति हैमः ॥ क पौष्णद्वये रेवत्यामश्विन्यां दोस्त्रितये हस्तत्रये मृगे मृगशीर्षे पुनर्विमारुते स्वातीरहिते चले चरसंज्ञभे पुनर्वैषणं पुष्यः मैत्रमनुराधा यातुभं मूलं एषां द्वंद्वैकत्वे पुनर्मंत्री गुरुः इनः सूर्यः सोम एषां द्युषु दिनेषु पुनः सत्तिथौ शुभतिथौ ॥ ८१ ॥

**साधारणे वारुणदारुणाश्विनत्वाष्ट्रत्रिपूर्वासु बलाजहंसयोः ॥**
**हुताशशस्त्राद्युपचर्ययामयो व्रणोद्भवो याति विनाशमाशु च ॥८१॥**

अथ झिंमप्रतिक्रियामाह—साधारेति ॥ व्रणोद्भव आमयो रोगो हुताशशस्त्राद्युपचर्यया अग्निपरिणतशस्त्रादिप्रतिक्रियया झिंमादिक्रियया आशु शीघ्रं विनाशं क्षयं याति क साधारणे मिश्रनक्षत्रे च पुनर्वारुणं शतभिषक् दारुणसंज्ञभं आश्विनं त्वाष्ट्रं चित्रा त्रिपूर्वा आसां द्वंद्वे आसु पुनर्बला भूमिस्तज्जो भौमः हंसः सूर्य अनयोर्द्वंद्वे 'उपचर्योपचार्यौ च' इति हैमः ॥ ८१ ॥

**दुष्टे विधौ पंचकलोनबिंबे राशौ महोराशिमहीजवारे ॥**
**रिक्ताद्यचित्रानलवासवाढ्ये मुक्तोपतापस्य नुराप्लवः स्यात् ॥८२॥**

अथ रोगमुक्तस्नानमाह—दुष्ट इति ॥ मुक्तोपतापस्य त्यक्तरोगस्य नुर्नरस्य आप्लवः स्नानं स्यात् क दुष्टे दुष्टराशिगते विधौ चंद्रे पुनः पंचकलाभिरूनं हीनं बिंबं यस्य स तस्मिन् राशौ क्षीण-चंद्रराशौ सति पुनर्महसां तेजसां राशिःमहोराशिः सूर्यः महीजो भौमः अनयोर्वारे किंभूते रिक्ता-तिथिः आद्यमाश्विनी चित्रा अनलः कृत्तिका वासवं धनिष्ठा एषां द्वंद्वे एभिराढ्ये युक्ते॥८२॥

**चलोदये व्याधिखले सदंबरे खलाहिते मज्जनमंगिनो वरं ॥**
**गदावसाने त्वशुभद्युनि क्वचित्स्थिरांत्यपैत्रानिलसार्पभान्यभैः ॥ ८३ ॥**

चलोदेति ॥ अंगिनो नरस्य गदावसाने रोगप्रांते मज्जनं वरमस्ति क चलोदये चरलग्ने व्याधिखलेऽष्टमभावगतक्रूरग्रहे सदंबरे दशमभावगतशुभग्रहे पुनः खलाहिते षष्ठभावगतखल-

ग्रहे पुनरशुभद्युनि अशुभग्रहाणां दिने कचित् स्थिराणि भानि आंत्यं रेवती पैत्रं मघा आनिलं स्वाती सार्पमश्लेषाभं एषां द्वंद्वे एभ्यो भेभ्योऽन्यभैरन्यनक्षत्रैः ॥ ८३ ॥

शयैंदवानुश्रुतितिष्यवासवादितेयनासत्यभसंहतौ भवेत् ॥
आतंकमुक्तस्य नुरोकसो बहिर्गमो वरः सद्द्युनि मस्तकोदये ॥८४

अथ रोगमुक्तनरस्य बाह्यगमनशुद्धिमाह—शयैंदवेति ॥ आतंकमुक्तस्य रोगमुक्तस्य नुर्नरस्य ओकसो गृहात् बहिर्गमो वरो भवेत् क शयो हस्तः ऐंदवं मृगशीर्षं अनु श्रुतिः श्रवणः तिष्यः पुष्यो वासवं धनिष्ठा आदितेयं पुनर्वसु नासत्यभमश्विनी एषां द्वंद्वे एषां संहतौ गणे सति पुनः सद्द्युनि शुभग्रहदिने पुनर्मस्तकोदये शीर्षोदयलग्ने ॥ ८४ ॥

पापे दिने काव्यदिने सदामिषं निषेवणं मादकवस्तुमद्ययोः ॥
विपर्वकाले शततारकोग्रभे सदारुणे तावदुदग्रवीर्यकृत् ॥ ८५ ॥

अथ मांससेवनमाह—पाप इति ॥ तावत् प्रथमं पापे दिने खलग्रहदिने काव्यदिने शुक्रवारे आमिषं मांससंबधि निषेवणं सत् शुभं स्यात् । पुनर्मादकमद्ययोर्बलिष्ठवस्तुमदिरयो-र्निषेवणं उग्रवीर्यकृत् उत्कटवीर्यकरं स्यात् क शततारका शतभिषक् उग्रभं उग्रसंज्ञभं एषां द्वंद्वैकत्वे किंभूते विपर्वकाले दर्शादिवर्जिते पुनःकिंभूते सदारुणे दारुणसंज्ञनक्षत्रयुक्ते ॥८५॥

चराचरेंदूडुलघूडुचित्रा विषाशने भानुकवींदुभौमान् ॥
य ईहतेऽनेकविधानि तावत्स कालकूटानि सदैति वै ना ॥८६॥

अथ विषाशने भादिशुद्धिमाह—चरेति ॥ वै निश्चितं यो ना पुमान् सदा निरंतरमनेक-विधानि कालकूटानि विषाणि ईहते भक्षणाय वांछति स ना पुमान् तावत्प्रथमं विषाशने कालकूटादिखादने चरादितारांश्च पुनर्भान्वादिवारान् एति प्राप्नोति चरादीनाश्रित्य भक्षयतीत्यर्थः । अथवा यस्तावत्प्रथमं विषाशने विषभक्षणे निमित्तं अनेकविधानि कालकूटा-नि एति भक्षयतीत्यर्थः स सदा निरंतरं चरादिताराः भान्वादिवारान् ईहते वांछति विषाशनमु-हूर्ते गृण्हातीत्यर्थः । चराणि चलसंज्ञानि अचरसंज्ञानि इंदूडु मृगशीर्षं लघूडूनि चित्रा आसां द्वंद्वे एताः प्रति पुनर्भानुः कविः शुक्र इंदुभौम एषां द्वंद्वे इमान् ॥ ८६ ॥

अज्ञातजातिगुणरूपविधानकानामन्नादिबीजरसपुष्पफलौषधीनां ॥
संसेवनं सुकृतसौख्ययशोभिवृद्ध्यै निःसंशयं नरवरैर्विदधीत नात्र॥८७

अथ निघंटादिप्रोक्तव्यतिरिक्तानां द्रव्याणां भक्षणं निषेधति—अज्ञातेति ॥ निःसंशयं नि-श्चितं नरवरः सत्पुमान् अत्र लोके सुकृतसौख्ययशोभिवृद्ध्यै पुण्यं सुखं कीर्तिः आसां वर्द्ध-नाय अन्नादिबीजरसपुष्पफलौषधीनां संसेवनं न विदधीत न कुर्यात् किंभूतानामन्नादीनां अज्ञातं अविदितं जातिः गुणः रूपं विधानं च जातिर्द्रव्यं गुणोऽशुभाशुभरूपः सद्भावः विधानकं कृत्यं येषां तानि तेषां ॥ ८७ ॥

दि१०ग्विश्व१३दो२रग७नवां९ग६खराम३०घस्राः सूर्यारमंत्र्युशनसां दिवसा न शस्ताः ॥ निःशाक्रदारुणमघातकमिश्रतारास्तैलाभिमज्जनविधौ किल पर्वकालाः ॥ ८८ ॥

अथ दशम्यादिषु तैलस्नानं निषेधति—दिग्विश्वेति ॥ किल संभावनायां तैलाभिमज्जनविधौ तैलमर्दनपूर्वकस्नानकार्ये एते न शस्ता न शुभाः स्युस्तानाह ॥ दिग् दशमी विश्वे त्रयोदशी दोर्द्वितीया उरगः सप्तमी नव नवमी अंगः षष्ठी खरामोऽमावासी एतत्संख्यायुक्तघस्रा दिवसाः पुनः सूर्यः आरो भौमः मंत्री गुरुरुशनाः शुक्र एषां दिवसाः पुनर्निःशाक्रं ज्येष्ठावर्ज्यं दारुणसंज्ञभं मघा अंतको भरणी मिश्रताराः आसां द्वंद्वे एताः पुनः पर्वकालाः पर्वणां समयाः ॥ ८८ ॥

अभ्यंगदूषितदिनेष्वपि जन्मघस्रे पाणिग्रहे च विजयामुनितर्पणाह्नि ॥ होलाविरामदिवसे बलिवासरे स्यादभ्यंग ईरितशिवो नियतं नराणाम् ॥ ८९ ॥

अथ जन्मादिदिने स्नानं निर्दोषमाह—अभ्यंगेति ॥ नियतं निश्चितं नराणां पुंसां ईरितं प्रेरितं शिवं कल्याणं येन स ईरितशिवोऽभ्यंगस्तैलविमर्दः स्यात् । अभ्यंगदूषितदिनेषु तैलमर्दनदोषदिनेष्वपि जन्मघस्रे जन्मदिने च पुनः पाणिग्रहे उद्वाहे पुनर्विजयामुनितर्पणाह्नि विजयादशम्यां ऋषितर्पणदिने पुनर्होलाविरामदिवसे होलिकांते रजःपर्वणि पुनर्बलिवासरे बलिपूजनदिने त्रयोदश्यादिदीपालिकादिनत्रये ॥ ८९ ॥

दुष्टे यमे भवति तैलनिमज्जनं यन्नित्यं विदह्नि च यमाह्नि न दुषितं तत् ॥ निंद्येऽप्यनेहसि सदाखिलवासरेषु संसेवितुं प्रसववासिततैलमर्हम् ॥ ९० ॥

अथ क्रूरग्रहे नित्यं स्नानमाह—दुष्ट इति ॥ दुष्टे यमे दुष्टराशिगते शनौ सति नित्यं यत्तैलनिमज्जनं तैलस्नानं भवति तत् स्नानं न दूषितं स्यात् क विदह्नि बुधवारे च पुनर्यमाह्नि शनिवारे इति । अथ वासिततैलं निर्दोषमाह । सदा प्रसववासिततैलं चंपकादिपुष्पवासिततैलं सेवितुमर्हं योग्यं स्यात् केषु निंद्येऽनेहसि दुष्टकाले अपि अखिलवासरेषु ॥ ९०

शीर्षं कपालकमथांत्रिकवल्लचर्मबैल्वानि चामलकमत्र परान्नमद्यात् ॥ नैवाष्टमीप्रभृतिचांद्रदिनेषु शश्वद्दर्शे तु मंथनजपद्रुमघातनं वा ॥ ९१ ॥

अथाष्टम्यादितिथौ नालिकेरादिभक्षणं निषेधति—शीर्षमिति ॥ शश्वत् निरंतरं नरोऽष्टमीप्रभृतिचाद्रदिनेषु शीर्षादिकं नैव अद्यात् न भक्षयेत् । अष्टम्यां शीर्षं नालिकेरं नवम्यां कपालकं तुंबकं अथ पुनर्दशम्यां आंत्रिकं नालीशाकं एकादश्यां वल्लः नल इति तंत्रांतरे वालुलि इति द्वादश्यां चर्म कदलीफलं त्रयोदश्यां बिल्वं बिल्वफलं एषां द्वंद्वे एतानि च पुनश्चतुर्दश्यां आमलकं पूर्णिमायां परान्नं न भक्षयेदत्र लोके इति तु पुनर्दर्शेऽमावास्यायां मंथनं गोरसमंथनं जपो मंत्रजपः द्रुमघातनं वृक्षच्छेदनं वा एषां द्वंद्वैकत्वं ॥ ९१ ॥

**धूमध्वजद्रुहिणपर्वतराजपुत्रीलंबोदराहिगुहहंसपिनाकिदुर्गाः ॥ कीनाशविश्वहरिकाममहेशसोमा दर्शांततः सुकृतिभिर्गदिता नराणाम् ॥ ९२ ॥**

**अथ** तिथीशानाह—धूमेति ॥ कृतिभिः शुभपंडितैर्दर्शांततः प्रतिपत्तः तिथिपाला धूमध्वजादयस्तिथीशा गदिताः प्रोक्ताः ॥ धूमध्वजो वन्हिः१ द्रुहिणो ब्रह्मा २ पर्वतराजपुत्री गौरी ३ लंबोदरो गणेशः ४ अहिः सर्पः ५ गुहः स्कंदः ६ हंसः सूर्यः ७ पिनाकी शंभुः ८ दुर्गा ९ कीनाशो यमः १० विश्वे ११ हरिर्विष्णुः १२ कामः कंदर्पः १३ महेश ईशः १४ सोमश्चंद्रः १५ एषां द्वंद्वे एते ॥ ९२ ॥

**स्थाणुः शिवा गुहजिनौ विधिविष्णुकालास्तुष्टौ रवेर्निगदिता ग्रहवारपालाः ॥ यस्यामरस्य तिथिवारभकालसाध्यं तस्य व्रतादि जपभोजनहोमदानम् ॥ ९३ ॥**

**इति श्री कविकालिदासोदिते ज्योतिर्विदाभरणे मिश्रकाध्याय एकोनविंशतितमः॥१९**

**अथ** सप्तवाराणां स्वामिन आह—स्थाणुरिति ॥ पंडितै रवेः सूर्यात् स्थाण्वादयो ग्रहपाला वारनायका निगदिताः प्रोक्ताः॥ सूर्यस्य स्थाणुः १चं. शिवा गौरी२ मं. गुहः स्कंदः ३ बु. जिनः कृष्णः ४ इमौ बृ. विधिर्ब्रह्मा ५शु. जिष्णुरिंद्रः ६ श. कालो यमः ७ एषां द्वंद्वे एते यस्यामरस्य देवस्य व्रतादिजपभोजनहोमदानं क्रियते तदा तस्यामरस्य तिथिवारभकालसाध्यं व्रतादितुष्ट्यै संतोषाय स्यात् ॥ ९२ ॥

इतिश्री पौर्णिमीयगच्छाधिराजभट्टारकपुरंदरश्री महिमाप्रभसूरीश्वरचरणसरोरुहचंचरीकायमानशिष्यभावरत्नविरचितायां श्रीकालिदासकृत ज्योतिर्विदाभरणस्य सुखबोधिकायां मिश्राध्याय एकोनविंशतितमः ॥ १९ ॥

---

# वर्णाश्रमकर्मसाधनप्रकरणम् ।

**कासारदेवायतनादिकर्मणामुत्सर्गकालस्य विनिर्णयं तथा ॥**
**अनेकवर्णाश्रमकर्मसाधनं ब्रुवेऽहमत्राखिलवर्गसाधनम् ॥ १ ॥**

**अथ** मिश्राध्यायकथनानंतरं कर्मसाधनं घटतेऽतोऽनेकवर्णाश्रमकर्मसाधनाध्यायसंधानमाह—कासारेति॥अत्राध्यायेऽहं कासारदेवायतनादिकर्मणां तडागदेवगृहकृत्यानामुत्सर्गकालस्य नीलोद्वाहदानविशेषस्य विनिर्णयं निश्चयं ब्रुवे ।.तथा पुनरनेकवर्णाश्रमकर्मसाधनं चतुर्वर्णानां कृत्यविधानं ब्रुवे किंभूतं अनेकवर्णाश्रमसाधनं अखिलवर्गसाधनं समस्तधर्मार्थकामंमोक्षाणां साधनमुपायः 'साधनं सिद्धिसैन्ययोः ॥ उपायो' इत्यादि हेमोऽनेकार्थः ॥ १ ॥

**सूरे चरत्यैलविलाशमादृता कासारकूपादिजलाशयेऽयनं ॥**
**जलप्रतिष्ठा च नवे महर्षिभिः प्रासादिकोत्सर्गविधिस्तथोदितः॥ २ ॥**

**अथ** जलाशयानां प्रतिष्ठामाह—सूरेति ॥ महर्षिभिः कासारकूपादिजलाशये नवे नवीने जलप्रतिष्ठा आदृता अंगीकृता कस्मिन् ऐलविलं धनदमश्नुते प्राप्नोति इति ऐलविलाशं उत्तरदिक् प्राप्तमयनं चरति गच्छति शतृप्रत्यये सूरे सूर्ये सति तथा पुनः प्रासादो देवगृहं कं जलं अनयोरुत्सर्गविधिर्नीलोद्वाहविधानं उदितः प्रोक्तः ॥ २ ॥

**शुभैव सा फाल्गुनमाधवाख्ययोर्मध्या सहस्ये च तपस्युदीरिता ॥**
**शुक्रेऽधमा शुद्धसमाद्यनेहसा शुद्धेऽभिरूपैः श्रुतिधर्ममानिभिः॥३॥**

अथात्र प्रतिष्ठायां मासशुद्धिमाह—शुभैवेति ॥ श्रुतिधर्ममानिभिर्वेदधर्मविद्भिरभिरूपैः पंडितैः फाल्गुनमाधवाख्ययोः फाल्गुनवैशाखयोः सा प्रतिष्ठा शुभा उदीरिता प्रोक्ता । एवं च पुनः सहस्ये पौषे तपसि माघमासे सा मध्या । पुनः शुक्रे ज्येष्ठमासे साऽधमा पुनः आद्यनेहसा प्रथमकालेन शुद्धे सति सा शुद्धतमा इति ॥ ३ ॥

**कल्प्या क्वचिन्मार्गशिरस्यलीनगे युग्मेनयोगे मलधारिगा शुचौ ॥**
**घनप्रसूनामरधामसंस्कृतिर्विगर्हिता साप्यधमाधमा बुधैः ॥ ४ ॥**

अथात्र मतं दर्शयन्नाह—कल्प्येति ॥ क्वचित् मार्गशिरसि मासेऽलीनगे वृश्चिकराशिगतसूर्ये घनप्रसूनं जलं अमरधाम देवगृहं अनयोः संस्कृतिः प्रतिष्ठा कल्प्या कर्तव्या 'मेघपुष्पकमलान्यापः पयः पाथसि' इति हैमः । मलधारिगा मलिनवेषधारिणा दर्शनांतरेण युग्मेनयोगे मिथुनसंक्रांतिसूर्ययोगे सा प्रतिष्ठा कल्प्या बुधैः सा प्रतिष्ठाऽधमाऽधमा-विगर्हिता तिरस्कृता ॥ ४ ॥

नीचे द्विपारौ च गुरौ प्रतिष्ठा प्रासादवाराशययोरजस्रं ॥
जीवालये जीवसितास्तकाले कार्या विधौ दुष्टतरेन कर्त्रा ॥ ५ ॥

अथ सिंहगुर्वादौ प्रतिष्ठां निषेधति—नीच इति ॥ अजस्रं निरंतरं कर्त्रा नरेण प्रासादवाराशययोः देवगृहजलाशययोः प्रतिष्ठा न कार्या क नीचे नीचराशिगते द्विपारौ सिंहराशिगते गुरौ जीवे सति पुनर्जीवालये धनुरर्के मीनार्के सति पुनर्जीवसितास्तकाले गुरुशुक्रास्तसमये पुनर्दुष्टतरे विधौ चंद्रे सति ॥ ५ ॥

विहाय दर्शोदरवारपंचकं रिक्तारमंदान् यमघंटमाडलं ॥
भद्रामशेषे समये मठांभसामलं प्रतिष्ठाखिलवर्गसिद्धये ॥ ६ ॥

अथ प्रतिष्ठायां तिथ्यादिशुद्धिमाह—विहायेति ॥ मठांभसां छात्रादिगृहाणां जलानां च प्रतिष्ठाखिलवर्गसिद्धये स्यात् किं कृत्वा दर्शोदरवारपंचकं द्विपार्श्वतोमावासीमध्यगतदिनपंचकं १३।१४।३०।१।२। च पुना रिक्तातिथिः आरो भौमः मंदः शनिः इमान् पुनर्यमघंटं प्रतीतं पुनः आडलं योगं भद्रां विष्टिं च विहाय त्यक्त्वा अशेषे समये समस्तकालेऽलमित्यर्थः ॥ ६ ॥

श्रवस्त्रयादित्यमृदुध्रुवोडुषु क्षिप्रेष्वविद्धेषु सभूषणेष्वपि ॥
तडागवाप्यादिमठप्रतिष्ठया प्रतिष्ठितः स्यादनुराजसंसदि ॥ ७ ॥

अथ प्रतिष्ठाया भादिशुद्धिमाह—श्रव इति ॥ श्रवस्त्रयं श्रवणत्रयं आदित्यं पुनर्वसु मृदूनि ध्रुवाणि इंदुर्मृगशीर्षं एषां द्वंद्वे एषु पुनः क्षिप्रेषु क्षिप्रसंज्ञनक्षत्रेषु किंभूतेषु अविद्धेषु ग्रहैरभिन्नमंडलेषु पुनः किंभूतेषु सुभूषणेषु शुभयोगयुक्तेषु सत्सु तडागवाप्यादिमठप्रतिष्ठया कृत्वानु पश्चात् स नरो राजसंसदि भूपसभायां प्रतिष्ठितः शोभायुक्तः स्यात् ॥ ७ ॥

जलालयस्थे जलचारिराशौ जलप्रतिष्ठा जलगोलमूर्तौ ॥
लग्ने सुकेंद्रे शुभदाथवा स्याच्छीर्षोदये वारिविधौ शुभे खे ॥ ८ ॥

अथ जलप्रतिष्ठायां लग्नशुद्धिमाह—जलेति ॥ जलप्रतिष्ठा शुभदा स्यात् क जलालयस्थे जलराशिप्राप्ते जलगोलमूर्तौ चंद्रे सति जलचारिराशौ जलचरराशियुक्ते लग्ने पुनः सुकेंद्रे शुभग्रहयुक्तकेंद्रेऽथवा पक्षांतरे शीर्षोदये लग्ने वारिविधौ चतुर्थभावगते चंद्रे खे शुभे दशमभावगतशुभग्रहे सत्येवं स्यात् ॥ ८ ॥

सुरप्रतिष्ठा गदितैव पूर्वं विष्णुप्रतिष्ठोडुषु वा प्रशस्ता ॥
तथापि कोत्सर्गविधानकालेऽखिलप्रतिष्ठापि न दोषदात्री ॥ ९ ॥

अथ नीलोद्वाहमाश्रित्य प्रतिष्ठामाह—सुरेति ॥ पूर्वं सुरप्रतिष्ठा गदितैव प्रोक्ता एव । वाथवा विष्णुप्रतिष्ठोडुषु जनार्दनप्रतिष्ठानक्षत्रेषु प्रशस्ता शुभा तथापि कस्य जलस्योत्सर्गविधानकाले नीलोद्वाहसमयेऽपि अखिलप्रतिष्ठा सर्वसुरप्रतिष्ठा दोषदात्री दोषदायिनी न स्यात् ॥ ९ ॥

वर्णक्रियारंभणमादरादहं तत्कर्मसाधारणसाधनप्रियं ॥
वदाम्यथो येन समस्तवर्णजाक्रियाफलस्यापि विनिश्चयो भवेत् ॥१०॥

अथ चतुर्वर्णानां कृत्यसंधानमाह- -वर्णेति ॥ अथो आनंतर्येऽहं आदरात् तत् वर्णक्रियारंभणं चतुवर्णानां कृत्यानां प्रारंभणं वदामि कथयामि । किंभूतं वर्णक्रियारंभणं तत्कर्मसाधारणसाधन-प्रियं कर्मणां सामान्योपायप्रियं येनारंभणेन समस्तवर्णक्रियाफलस्यापि चतुर्वर्णजाता क्रिया तस्याः फलस्यापि विनिश्चयो भवेत् ॥ १० ॥

द्विजो भुजाभूर्विडिमे द्विजातयस्तुरीयवर्णेऽघ्रिज एव कीर्तितः ॥ परेंऽत्यजा ये त्वपरे शकादिका मनीषिभिः संकरजातयः स्मृताः ॥ ११ ॥

अथ वर्णविवेकमाह—द्विज इति ॥ द्विजो विप्रः भुजाभूः क्षत्रियः विड् वैश्यः इति एते त्रयो द्विजातयः स्युः । अंघ्रिजः शूद्रः तुरीयवर्णः शूद्रः कीर्तितः प्रोक्तः । तु पुनः परे शूद्रेभ्यों ऽत्यजाः स्मृताः प्रोक्ताः मनीषिभिर्बुधैरपरे ये शकादिका म्लेच्छादयस्ते संकरजातयः स्मृताः प्रोक्ताः ॥ ११ ॥

अध्यापनं चाध्ययनं च याजनं दानं द्विजे स्युर्यजनं प्रतिग्रहः ॥ कर्माणि षड् यजनापवर्जने त्रिकर्मवानध्ययनं तथेति राट् ॥ १२ ॥

अथ विप्रकृत्यमाह—अध्यापनमिति ॥ वै निश्चितं अध्यापनं पात्रेभ्यो विद्यासमर्पणं १ अध्ययनं प्रतीतं २ याजनं अन्येषां यज्ञकरणं ३ स्वयं दानं ददाति ४ दानं प्रतीतं स्वयं यजति यजनं प्रतीतं ५ प्रतिग्रहः अन्यस्य दानग्रहः ६ चेति षट्कर्माणि द्विजे विप्रे स्युः । अथ क्षत्रियकृत्यमाह । तथा यजनापवर्जने यजनं यज्ञकरणं दानं अध्ययनं चेति त्रिकर्मवान् त्रिकर्मयुक्तो राट् क्षत्रियः स्यात् ॥ १२ ॥

वैश्यः सदा प्रापणिकोंऽघ्रिजन्मा द्विजन्मसेवारतिरेतदीयं ॥
कर्मेत्यकृत्यव्यवहारजानि कर्माण्यनेकान्यपरांत्यजानाम् ॥ १३ ॥

अथ वैश्यकृत्यमाह—वैश्य इति ॥ सदा वैश्यः प्रापणिको व्यवहारकृत् इति एतदीयं कर्म । अथ शूद्रकृत्यमाह—अंघ्रिजः शूद्रो द्विजन्मसेवारतिः विप्रसेवारक्तः इत्येतदीयं कर्म । अथांत्यजादीनां कृत्यमाह । तु पुनः अपरांत्यजानां अंत्यजम्लेंछादीनां अकृत्यव्यवहारजानि कुकर्मव्यवहारजातानि अनेकविधानि कर्माणि स्युः ॥ १३ ॥

यद्वर्णकर्माणि तदेककाले संसाधितान्येव हि यांति सिद्धिं ॥
तत्स्वस्वकर्मव्यवहारकालं नयेन्मनीषी युगपन्नयार्द्धम् ॥१४॥

अथ स्ववर्णे स्वकृत्यसिद्धिं दर्शयति—यद्वर्णइति ॥ हि निश्चितं तदेककाले तस्मिन् एककाले मंसाधितानि सम्यक्प्रकारेण विहितानि यद्वर्णकर्माणि येषां वर्णानां कृत्यानि सिद्धिं निष्पत्तिं यांति प्राप्नुवंति । इणोभातोरूपं । मनीषी बुद्धिमान् तत्स्वस्ववर्णव्यवहारकालं एषां स्वकीयस्वकीयवर्णानां व्यवहारकाले युगपन्नयाद्दैं समकालन्यायसंपदं नयेत् प्राप्नुयात् द्विकर्मत्वात् ॥ १४ ॥

**शमो दमः सत्यमथार्जवं क्षमा शौचं तपो ज्ञानकथामरार्चनं ॥**
**तीर्थं तथास्तिक्यमभिज्ञसंगतिः स्वभावकर्माग्रजनेर्मखव्रतम् ॥ १५ ॥**

अथ विप्राणां स्वभावकृत्यमाह—शम इति ॥ शमः शांतिः दमः पंचेंद्रियनिग्रहः सत्यं प्रतीतं आर्जवं मायात्यागः क्षमा शांतिः शौचं पावित्र्यं तपो ज्ञानकथा अमरार्चनं देवपूजा तीर्थं गोदावर्यादि तथा आस्तिक्यं श्रद्धात्वं अभिज्ञसंगतिः पंडितसंगमः मखव्रतं यज्ञव्रतं इति अग्रजनोर्विप्रस्य स्वभावकर्म निसर्गकृत्यं स्यात् ॥ १५ ॥

**शौर्यं बलं धैर्यधृतिर्धृतिर्मृधं विद्या सुदीक्षेश्वरतापवर्जनं ॥**
**क्षमाभृतः कर्म निसर्गजं विशो वाणिज्यगोजीवनकर्षणं त्विती॥१६॥**

अथ क्षत्रियाणां स्वभावकृत्यमाह—शौर्यमिति ॥ शौर्यं शूरत्वं बलं धैर्यधृतिर्धैर्यधारणं धृतिः संतोषो मृधं संग्रामः विद्या सुदीक्षा ईश्वरता अपवर्जनं दानं इति क्षमाभृतः क्षत्रियस्य निसर्गजं स्वाभाविकं कर्म स्यात् ॥ अथ वैश्यानां निसर्गकृत्यमाह—वाणिज्यगोजीवनकर्षणमिति ॥ विशो वैश्यस्य निसर्गजं कर्म स्यात् ॥ 'वाणिज्यं पाशुपाल्यं च कर्षणं च' इति व्रतय इति हैमः ॥ १६ ॥

**द्विजातिसेवावनिदेवताज्ञया धर्मो विधिः शूद्रनिषेककर्म च ॥**
**स्वभावकर्म प्रविहाय योऽन्यथा स्वयं चरेत्सोंऽत्यजकर्मनर्मभाक् ॥१७॥**

अथ शूद्राणां निसर्गकृत्यमाह—द्विजेति ॥ द्विजातिसेवा विप्रसेवा पुनरवनिदेवताज्ञया विप्राज्ञया धर्मो विधिश्चेति शूद्रनिसर्गकर्म शूद्राणां स्वाभाविकं कर्म स्यात् ॥ अथांत्यजानां कुकृत्यमाह ॥ यः स्वभावकर्म प्रविहाय त्यक्त्वाऽन्यथा नीचत्वं स्वयमात्मना चरेत् कुर्यात् सोंऽत्यजकर्मनर्मभाक् अंत्यजकार्यक्रीडासेवी स्यात् ॥ १७ ॥

**तिष्याजपाणिश्रुतिराजविश्वभैर्वरं समारंभितमग्रजन्मनः ॥**
**कर्मेनकाव्येज्यभवारशुद्धयोररिक्तयोरार्यसितद्युनोर्भवेत् ॥१८॥**

अथ विप्रकृत्ये भादिशुद्धिमाह—तिष्येति ॥ अग्रजन्मनो विप्रस्य कर्म समारंभितं प्रारंभितं वरं श्रेष्ठं स्यात् कैः तिष्यः पुष्यः अजो ब्रह्मा रोहिणी पाणिर्हस्तः श्रुतिः श्रवणः राजा चंद्रो मृगशीर्षं विश्वभं उत्तराषाढा एषां द्वंद्वे एभिः पुनः कयोः आर्यसितद्युनोर्गुरुशुक्रवासरयोः सतोः किंभूतयोः इनः सूर्यः काव्यः शुक्रः इज्यो गुरुः एषां भवारो राशिवारस्तेन शुद्धौ निर्दोषौ तयोः पुनः किंभूतयोररिक्तयो रिक्तातिथिवर्जितयोः ॥ १८ ॥

साधारणैंद्रेनशतोत्तराश्रवोदास्रांत्यमैत्रानिलभेष्वकीर्तयन् ॥
क्षत्रक्रियारंभणमंशुमंत्र्यसृक्सोमैः सपूर्णासु जयासु युक् परैः ॥१९॥

अथ क्षत्रियकार्यारंभे भादिशुद्धिमाह—साधरणेति ॥ बुधाः क्षत्रक्रियारंभणं क्षत्रियकर्मप्रारंभणमकीर्तयन् कथयामासुः केषु साधारणे मिश्रसंज्ञे ऐंद्रं ज्येष्ठा ऐनं हस्तः शतं शतभिषक् उत्तरात्रयं श्रवः श्रवणः दास्रमश्विनी आंत्यं रेवती मैत्रमनुराधा अनलभं कृत्तिका एषां द्वंद्वे एषु पुनः कैः अंशुः सूर्यः मंत्री गुरुः असृग् भौमः सोमश्चंद्रः एषां द्वंद्वे एतैः पुनः कासु जयासु तिथिषु किंभूतासु जयासु सपूर्णासु पूर्णातिथियुक्तासु पुनः कैः युक् परैः श्रेष्ठयोगैः ॥१९॥

श्रवोद्वयादित्ययुगैंदवाश्विनैः सविश्वकृन्मित्रभयातुभैर्भवेत् ॥
सितेंदुसौम्यांगिरसेषु सत्तिथावयोगसुक्तेषु च वैश्यकर्म सत् ॥ २० ॥

अथ वैश्यकार्यारंभे भादिशुद्धिमाह—श्रव इति ॥ वैश्यकर्म सत् शुभं स्यात्. कैः श्रवोद्वयं श्रवणयुग्मं आदित्ययुगं पुनर्वसु पुष्यः ऐंदवं मृगशीर्षं आश्विनमश्विनी एषां द्वंद्वे एतैः किंभूतैः सविश्वेति विश्वकृत् चित्रा मित्रोऽनुराधाभं यातुभं मूलभं एषां द्वंद्वे एभिः सहवर्तमानैः पुनः क सितः शुक्रः इंदुश्चंद्रः सौम्यो बुधः आंगिरसो गुरुः एषां द्वंद्वे एषु किंभूतेषु अयोगसुक्तेषु कुयोगवर्जितेषु पुनः क सत्तिथौ ॥ २० ॥

त्रियुग्मताराश्विनहारचित्रामित्रर्क्षमूलानिलवासवांत्याः ॥
विदिंदुशुक्रान्हि विपर्वरिक्ते शूद्रस्य कर्मण्युदितास्तदृद्ध्यै ॥ २१ ॥

अथ शूद्रकर्मारंभे भादिशुद्धिमाह—त्रियुग्मेति ॥ शूद्रस्य कर्माणि त्रियुग्मादितारास्तदृद्ध्यै शूद्रस्य संपदायै उदिताः प्रोक्ताः । त्रियुग्मताराः त्रयाणां पूर्वाणां उत्तराणां युग्मं भानि आश्विनमश्विनी हरस्येदं हारमार्द्रा चित्रा मित्रर्क्षमनुराधा मूलं अनिलः स्वाती वासवं धनिष्ठा आंत्या रेवती आसां द्वंद्वे एताः कस्मिन् विद् बुधः इंदुश्चंद्रः शुक्रः एषामन्हि दिने किंभूते विपर्वरिक्ते पर्वरिक्तातिथिवर्जिते ॥ २१ ॥

स्वकर्मवारांबरचारिभिर्युतं दृष्टं नृलग्नं निजकर्मसिद्धये ॥
उताय११ दुश्चिक्य ३जिघांस्वसद्ग्रहःशीर्षोदयः साधुचतुष्टयस्तथा॥२२

अथ स्वकार्यलग्नशुद्धिमाह—स्वकर्मेति ॥ स्वकर्मवारांबरचारिभिर्ग्रहैर्युतं दृष्टं उत नृलग्नं नरलग्नं निजकर्मसिद्धये स्यात् । तथा आय एकादशं ११ दुश्चिक्यं तृतीयं जिघांसुः षष्ठं ६ एषु भवनेषु असंतोऽशुभा ग्रहा यस्य स पुनः साधुचतुष्टयः शुभग्रहयुक्तकेंद्र एवंविधः शीर्षोदयः शीर्षोदयलग्नं निजकर्मसिद्धये स्यात् ॥ २२ ॥

शयाश्विने तिष्यमघाजवासवत्वाष्ट्रानुराधामृगरेवतीशिफाः ॥
कृषीवलानामखिलक्रियोद्यमे सद्वारमाहुर्नृदये च सत्कखम् ॥ २३ ॥

अथ हालिनां कार्ये भादिशुद्धिमाह—श्रयेति॥ सदा बुधाः कृषीवलानां कुटुंबिनामखिलक्रियोद्यमे समस्तप्रारंभे शयादीनि आहुः कथयंति शर्यां हस्त आश्विनमश्विनी अनयोर्द्वंद्वे तिष्यः पुष्यः मघा अजो ब्रह्मा रोहिणी वासव धनिष्ठा त्वाष्ट्रं चित्रा अनुराधा मृगो मृगशिरः रेवती शिफा मूलं आसां द्वंद्वे एतास्ताराः सद्वारे शुभग्रहाणां वासरे पुनर्नृदयं नरराशिलग्नं किंभूतं सत्कखं शुभग्रहाः के सुखे चतुर्थभावे खे दशमभावे च यस्य तत् इति सर्वाण्यपि कर्मपदानि॥ २३॥

**चित्रादिभे पाणिमृगौ पुनर्वसुद्वयं बलेशोडुयुगं च पूषभं॥ मैत्रं समेत्यैति सदन्हि सत्तिथौ महत्फलं आपणिकः स्वकर्मणि॥ २४॥**

अथ वणिक्कार्ये भादिशुद्धिमाह—चित्रेति॥ आपणिको नैगमः स्वकर्मणि महत्फलमेति प्राप्नोति किंकृत्वा चित्राआदिभमश्विनी अनयोर्द्वंद्वे पाणिमृगौ हस्तमृगशीर्षे अनयोर्द्वंद्वे इमौ पुनर्वसुद्वयं पुनर्वसु पुष्यं बलः लक्ष्मी तस्याः ईशः स्वामी विष्णुस्तस्योडुयुगं श्रवणधनिष्ठे च पुनः पूषभं रेवतीं मैत्रमनुराधां समेत्य प्राप्य क सदन्हि शुभग्रहाणां दिने पुनः सत्तिथौ शुभतिथौ॥ २४॥

**चतुष्टय १।४।७।१० स्थे धिषणे धने २ बुधे सत्याय ११ गेऽसत्यरि ६ गे सदुद्गमे॥ भवेदिदं कर्षककर्म सत्तिथौ वैदेहकर्मापि च लेखकक्रिया॥ २५॥**

अथ कर्षकादिकर्मसु लग्नशुद्धिमाह—चतुष्टयेति॥ इदं कर्षककर्म वैदेहकर्म सार्थवाहकर्म लेखकक्रिया च भवेत्। चतुष्टयस्थे केंद्रगते १।४।७।१० धिषणे गुरौ सति पुनर्धनभावे बुधे पुनः सत्यायगे शुभग्रहे एकादशभावगते पुनरसत्यरिगे खलग्रहे षष्ठभावगते पुनरेवंविधे सदुद्गमे शुभग्रहलग्ने सति॥ २५॥

**चलमूलदोरमरवार्धकितारा भावजैवसहिता हि हिताय॥ कविजीवबोधनदिने नरलग्ने विगलग्रहा लिपिकरस्य विधाने॥ २६॥**

अथ लिपिकरकार्ये भादिशुद्धिमाह—चलेति॥ लिपिकरस्य वार्णिकस्य विधाने कर्मणि चलादितारा हिताय शुभाय स्युः। चलसंज्ञानि मूलं दोर्हस्तः अमरवार्द्धकिश्चित्रा तारा आसां द्वंद्वे एताः कर्तृपदं किंभूताः मृगो मृगशीर्षं भवस्येश्वरस्येदं भावमार्द्रा जिनस्य कृष्णस्येदं जैनं श्रवणः एषां द्वंद्वे एतद्भिःसहिता युक्ताः पुनः किंभूताः विगलग्रहाः गलग्रहवर्जिताः क कविः शुक्रः जीवो गुरुः बोधनो बुधः एषां दिने नरलग्ने॥ २६॥

**श्रवणत्रये त्रिदशसूडुलघूडुद्वयमरेषु जैष्णवमृगाजपदांत्यैः॥ विदशीतवृष्णिसितवृष्णिदिने स्यान्निरमा ३० ष्टमीकुयुजि बल्लवकर्म॥ २७॥**

अथ गोपकर्मारंभे भादिशुद्धिमाह—श्रवणेति॥ बल्लवकर्म गोपकार्यं स्यात्। 'गोपगोसंख्यबल्लवाः' इति हैमः। कस्मिन् श्रवणत्रये श्रवणधनिष्ठाशतभिषक् त्रिदशसूर्देवमात

तस्या उडु पुनर्वसु लघूनि ध्यमरं शाक्राग्नी विशाखा एषां द्वंद्वे एषु जैष्णवं ज्येष्ठा मृगो मृग-शीर्षं अजरहा पूर्वाभाद्रपदा आंत्यं रेवती एषां द्वंद्वे लग्ने पुनर्विद् बुधः अशीतवृष्णिरुष्णरश्मिः सूर्यः सितवृष्णिः श्वेतांशुश्चंद्रः एषां दिने किंभूते निः निर्गता अमाष्टमी कुयुक् यस्मात्-स तस्मिन् ॥२७॥

**लघुलोलमृद्वजरवृद्धभशाक्रध्यमरेषु सद्धरिदिने परिभाति ॥**
**जयनंदपूर्णवति वित्रिकलग्ने रथकारकर्म सकलं विहितं सत ॥२८॥**

अथ रथकृत्कर्मारंभे भादिशुद्धिमाह—लघ्विति ॥ रथकारकर्म सकलं संपूर्णं सत् निरंतरं-परिभाति राजते। किंभूतं रथकारकर्म सकलं कलायुक्तं परिभावि इति पाठे रथकारकर्म परिभा-वि कृतं सत् शुभं स्यात् । शेषं तथैव क लघूनि भानि लोलानि मृदूनि अमरवृद्धो ब्रह्मा तद्वं रोहिणी ' सुरज्येष्ठो विरंचिनः' इति हैमः ॥ शाक्रं ज्येष्ठा ध्यमरं विशाखा एषां द्वंद्वे एषु पुनः क सद्धरिदिने शुभग्रहाः हरिः सूर्य एषां दिने किंभूते जया जयातिथिः पूर्णा पूर्णातिथिः अस्त्यर्थे वतुप्प्रत्ययः आभिस्तिथिभिर्युक्ते पुनर्वित्रिकलग्ने बुधगुरुशुक्राणां लग्ने ॥ २८ ॥

**चरमिश्रदेवरथकारभराज्यैर्लघुमिश्रमुष्टिकविधानमुशंति ॥**
**द्विजराजखेचरदिनेषु तदीये ह्युदये बुधा गुरुसुधाघृणिसक्के ॥२९॥**

अथ स्वर्णकारकार्यारंभे भादिशुद्धिमाह—चरेति ॥ हि निश्चितं बुधा मुष्टिकविधानं स्वर्णकार-कर्म उशंति वांछंति 'कलादो मुष्टिकश्च सः' इति हैमः ॥ कैः चलसंज्ञानि मिश्रे द्वे देवरथका-रभं चित्रा राज्यं मृगशीर्षं एषां द्वंद्वे एभिर्भैश्च पुनर्लघुभिर्भैः पुनर्द्विजराजखेचरादिनेषु गुरुशुक्रसूर्यभौमवासरेषु पुनस्तदीये उदये गुरुशुक्रसूर्यभौमलग्ने किंभूते गुरुः सुधाघृणिश्चंद्र आभ्यां सक्के युक्ते ॥ २९ ॥

**रुचिरं च वैकटिककर्म कृतं सयमकृष्णवर्त्मवसुजिष्णुभवातैः ॥**
**विधिविश्वकृच्छिवभमूलविशाखासहितैरसाध्वहनि धीरविलग्ने ॥ ३० ॥**

अथ मणिकारकर्मारंभे भादिशुद्धिमाह—रुचिरमिति ॥ वैकटिकस्य मणिकारस्य कर्म कृतं रुचिरं मनोहरं सन्निरंतरं स्यात्। कैः यमो भरणी कृष्णवर्त्मा वन्हिः कृत्तिका वसवो धनिष्ठा जिष्णुरिंद्रस्तद्धं ज्येष्ठा वातः स्वाती एषां द्वंद्वे एतैः किंभूतैः विधिर्ब्रह्मा रोहिणी विश्वकृत् चित्रा शिवभमार्द्रा मूलं विशाखा एषां द्वंद्वे एभिः सहितैः क असाध्वहनि अशुभग्रहदिने पुनर्धीर-विलग्ने स्थिरलग्ने ॥ ३० ॥

**सदा दिवाकीर्तिजनक्रियाकला चलेंद्रचित्रालघुपौष्णराजभा ॥**
**सौम्योदये सौम्यदिने सदाचिते सुतारयोषासमयोज्झिते भवेत्॥३१॥**

अथ नापितकर्मारंभे भादिशुद्धिमाह—सदेति ॥ सदा दिवाकीर्तिजनस्य नापितलोकस्य क्रियाकला क्रियाविज्ञानं भवेत् । किंभूता दिवाकीर्तिजनक्रिया कला चलानि चरसंज्ञानि इंद्रे ।

ज्येष्ठा चित्रा लघूनि पौष्णं रेवती राजा चंद्रो मृगशीर्षं एषां द्वंद्वे इमानि भानि यस्या सा क सौम्योदये शुभग्रहलग्ने किंभूते सद्वाचिते शुभग्रहव्याप्ते पुनः क सौम्यदिने शुभग्रहवारे किंभूते उषासमयोज्झिते निशांतकालवर्जिते पुनः कया सुतारया शुभतारकया ॥ ३१ ॥

अर्णोभलोलाश्विनतिष्यपितृभत्वाष्ट्रैंदवैरिंदुकवीज्यवासरैः ॥
भवेदिदं मालिककर्म सुश्रियै नरोदये कंटकमुक्तकंटके ॥ ३२ ॥

अथ मालिककर्मारंभे भादिशुद्धिमाह—अर्ण इति ॥ इदं मालिककर्म सुश्रियै स्यात् कैः अर्णो जलं तद्भं पूर्वाषाढा लोलानि आश्विनं तिष्यः पुष्यः पितृभं मघा त्वाष्ट्रं चित्रा ऐंद्वं मृगशीर्षं एषां द्वंद्वे एतैः पुनः कैः इंदुः कविः शुक्रः इज्यो गुरुः एषां वासरैः पुनः क नरोदये नरलग्ने किंभूते कंटकेः पापग्रहैर्मुक्तकंटके त्यक्तकेंद्रे ॥ ३२ ॥

आदित्यभादित्यमृदूग्रभन्वभैः सांत्याजवाताजभकर्म सद्गुणं ॥
चरोदये वारिचरोदयेनजे सत्कंटके हारि कुलालकर्माणि ॥ ३३ ॥

आदित्यमिति ॥ इदं काव्यं मिश्राध्याये द्वाचत्वारिंशत्तमं तत्र व्याख्यातं अत्र प्रस्तावाल्लिखितमतस्ततो व्याख्या ज्ञेया ॥ ३३ ॥

विकर्तनैकांतरवासरो ध्रुवं चित्राश्रवःक्षिप्रनगारिभांत्यभं ॥
स्थिरोदयः साधुपयो नभ १० स्थलो भवेच्च सिद्ध्यै पलगंडकर्माणि ॥ ३४ ॥

अथ चुनाराणां कर्मारंभे भादिशुद्धिमाह—विकर्तनेति ॥ विकर्तनात् सूर्यादेकांतरवासरः सूर्यः भौमः गुरुः शनिः एषां वासरे इत्यर्थः । पुनर्ध्रुवं स्थिरसंज्ञभं पुनश्चित्रा श्रवः श्रवणः क्षिप्रसंज्ञभानि नगारिरिंद्रो ज्येष्ठा आंत्या रेवती एषां द्वंद्वैकत्वं पुनः स्थिरोदयः स्थिरलग्नं किंभूतः स्थिरोदयः साधुपयोनभःस्थलः शुभग्रहयुक्तचतुर्थभावो दशमभावश्च समुच्चयार्थे इत्यादि कर्तृपदं पलगंडस्य लेपकृतः कर्माणि सिद्ध्यै भवेत् 'पलगंडस्तु लेपकृत्' इति हैमः ॥ ३४ ॥

चरे मृदुक्षिप्रकभोग्रधन्वभे कुविंदकृत्यं विदधीत धीमता ॥
रवीज्ययुग्मद्युनि साधुभोदये तथैव भे सूचिककर्म सद्दिने ॥ ३५ ॥

अथ तंतुवायकार्यारंभे भादिशुद्धिमाह—चर इति ॥ धीमता कुविंदस्य तंतुवायस्य कृत्यं विदधीत । अत्र उक्तिश्चित्या कस्मिन् चरे चरसंज्ञभे मृदूनि क्षिप्राणि को ब्रह्मा तद्भं रोहिणी उग्रधन्वा इंद्रस्तस्य भं ज्येष्ठा एषां द्वंद्वैकत्वे पुनः क रवीज्यौ सूर्यजीवौ तयोर्युग्मं रविचंद्रौ गुरुशुक्रौ एषां द्युनि वासरे पुनः साधुभोदये शुभग्रहाणां राशिलग्ने ॥ अथ सूचिककर्माह ॥ तथैव भे उक्तनक्षत्रे सूचिकस्तंतुवायस्तस्य कर्म स्यात् ॥ क सद्दिने शुभग्रहवासरे ॥ ३५ ॥

क्षिप्रादित्यांभोभचित्रानुराधावासामीरौषध्यार्यकर्णत्रयेषु ॥
रंगाजीवो रंजयत्येव लोकान्सोमांश्चोर्वा कर्मणा स्वेन शुक्रे ॥ ३६ ॥

अथ चित्रकारकार्ये भादिशुद्धिमाह—क्षिप्रेति ॥ रंगाजीवश्चित्रकृत् स्वेन कर्मणा निज- कृत्येन लोकान् रंजयति रागीकरोति 'रंगाजीवस्तौलिकश्चित्रकृत्' इति हैमः। क क्षिप्राणि आदित्यं पुनर्वसु अंभोभं पूर्वाषाढा चित्रा अनुराधा सामीरं स्वाती ओषध्यार्य ओषधीनाथश्चंद्र- स्तस्येदं मृगशीर्ष कर्णत्रयं श्रवणत्रिकं एषां द्वंद्व एषु पुनः क सोमश्चंद्रः अंशुः सूर्यः अन योर्द्वंद्वे तयोर्दिनयोः वाथवा पुनः शुक्रे शुक्रदिने एव निश्चितं ॥ ३६ ॥

**धीरादित्यश्वासनादित्यतिष्यै राधाकर्णद्वंद्वपौष्णैंद्रवाढ्यैः ॥**
**सद्वारैः स्यात्कर्म निर्णेजकस्य प्राग्र्यं पर्वप्रोज्झितैः पुंसि लग्ने ॥३७॥**

अथ रजकस्य कर्मारंभे भादिशुद्धिमाह—धीरेति ॥ निर्णेजकस्य रजकस्य कर्म प्राग्र्यं श्रेष्ठं स्यात् कैः धीराणि आदित्यं हस्तः श्वासनं स्वाती आदित्यं पुनर्वसु तिष्यः पुष्यः एषां द्वंद्वे एतैः किंभूतैः राधा विशाखा कर्णद्वंद्वं श्रवणधनिष्ठे पौष्णं रेवती ऐंद्रवं मृगशीर्षं एषां द्वंद्वे एभिराढ्यैः पूर्णैः पुनः कैः सद्वारैः शुभग्रहवारैः किंभूतैः पर्वप्रोज्झितैः दर्शादिव- र्जितैः पुनः क पुंसि लग्ने ॥ ३७ ॥

**सौम्ये पूर्वास्वांत्यभे द्वीशभे वा शाक्रे शैवे यातुभे वासवे स्यात् ॥**
**पाणौ चित्रायामभीष्टं च शुक्रे सूरे सौरे पादुकाकारकर्म ॥ ३८ ॥**

अथ चर्मकारकार्ये भादिशुद्धिमाह—सौम्य इति ॥ पादुकाकारकर्म चर्मकारकृत्यमभीष्टं श्रेष्ठं स्यात् क सौम्ये मृगशीर्षे पूर्वासु पूर्वात्रये आंत्ये रेवत्यां द्वीशभे विशाखायां वाथवा शाक्रे ज्येष्ठायां शैवे आर्द्रायां यातुभे मूले वासवे धनिष्ठायां पाणौ हस्ते चित्रायां शुक्रे सूरे सूर्ये सौरे शनौ वारे ॥ ३८ ॥

**जायाजीवो बल्लवश्च प्रकुर्याल्लोले धीरे मैत्रचित्रैंद्रवेषु ॥**
**शैवे तिष्ये नैकषेये स्वकर्म ब्रध्नेन्द्रेज्येंदूशनोभिः सुलग्ने ॥ ३९ ॥**

अथ नरविशेषकर्मारंभे भादिशुद्धिमाह—जायेति ॥ जायाजीवो नटः बल्लवो गोपश्च स्वकर्म निजकृत्यं प्रकुर्यात् क लोले चरसंज्ञभे धीरे स्थिरसंज्ञे मैत्रमनुराधा चित्रा ऐंद्रवं मृगशीर्षं एषां द्वंद्वे एषु शैवे आर्द्रायां तिष्ये पुष्ये नैकषेये मूले पुनः ब्रध्नः सूर्यः इंद्रेज्यो गुरुः उशनाः शुक्र एषां द्वंद्वे एभिः सुलग्ने शुभलग्ने ॥ ३९ ॥

**व्याधो दाशः कौटिकोंऽत्यावसायी पूर्वावातद्वीशवारीशकालैः ॥**
**तीक्ष्णैः पापाहन्यथात्मीयकर्म स्वार्थं कुर्यात्पापलग्नेऽसदाये ॥ ४० ॥**

अथ व्याधादीनां कार्ये भादिशुद्धिमाह—व्याध इति ॥ व्याधो मृगवधाजीवी पुन- र्दाशो धीवरः पुनः कौटिकः 'मांसिकः कौटिकश्चाथ' इति हैमः ॥ खाटकी इति भाषा। पुनः अंत्यावसायी चांडालश्च आत्मीयकर्म कुर्यात् किमर्थं स्वार्थं निजार्थं वा कैः पूर्वात्रयं

वातं स्वाती द्वीशं विशाखा वारीशो जलस्वामी शतभिषक् कालो यमो भरणी एषां द्वंद्वे एभिः पुनः तीक्ष्णैः उग्रसंज्ञकैः पुनः क पापाहनि खलग्रहाह्निे । अथ पुनः पापलग्ने किंभूते-ऽसदायेऽशुभग्रहयुक्तैकादशभावे ॥ ४० ॥

**शैवे शिफाशीविषभे भरण्यामजांघ्यहिर्बुध्न्यभयोर्द्विदैवं ॥**
**सितासिताब्जाहनि शाककर्म प्रशस्यते पापिनि पापलग्ने ॥ ४१ ॥**

अथ म्लेंछकार्ये भादिशुद्धिमाह—शैवइति ॥ शाककर्म म्लेंछकृत्यं प्रशस्यते क शैवे आर्द्रायां शिफा मूलं आशीविषभमश्लेषा अनयोर्द्वंद्वैकत्वे भरण्यां अजांघ्रिः पूर्वभद्रपद अहिर्बुध्न्यभं उत्तराभद्रपदा अनयोर्द्वंद्वे द्विदैवे विशाखायां सितः शुक्रः असितः शनिः अब्जश्चंद्र एषामहनि पुनः पापलग्ने खलग्रहलग्ने पापिनि खलग्रहे सति ॥ ४१ ॥

**वृद्धश्रवोराजभधीरपौष्णैर्लघुश्रवोमिश्रयुतैः सचित्रैः ॥**
**गुरूष्णवृष्णीभदिनेषु वै स्याच्छिलेष्टकाकारविधानमिष्टम् ॥ ४२ ॥**

अथ सिलाटकादीनां कृत्ये भादिशुद्धिमाह–वृद्धेति ॥ शिलेष्टिकाकारविधानं शिलाकारस्य इष्टकाकारस्य कृत्यमिष्टं शुभं स्यात् । कैः वृद्धश्रवा इंद्रो ज्येष्ठा राजा चंद्रो मृगशीर्षभं धीराणि ध्रुवाणि पौष्णं रेवती एषां द्वंद्वे एभिः किंभूतैः लघूनि श्रवः श्रवणः मिश्रे द्वे एषां द्वंद्वे एभिर्युतैः पुनः किंभूतैः सचित्रैश्चित्रायुक्तैः पुनः क गुरुः उष्णवृष्णिः सूर्यः इभः शुक्रः एषां द्वंद्वे एषां दिनेषु ॥ यत उक्तं 'इभः शुक्रे गजे ताक्ष्र्ये इभा भासु गिरिष्विति' वैजयंती ॥ ४२ ॥

**पतंगपातंगिसितारवारैरजांघ्रयहिर्बुध्न्यभदारुणोग्रैः ॥**
**युतैः सचित्राद्विसुरैरपर्वे रिक्ताजयास्वेव हि चोरकर्म ॥ ४३ ॥**

अथ चोरकर्मणि भादिशुद्धिमाह—पतंगेति ॥ हि अवधारणे चोरकर्म शुभं स्यात् । कैः पतंगः सूर्यः पातंगिः शनिः सितः शुक्रः आरो भौम एषां वारैः किंभूतैः अजांघ्रिः पूर्वाभद्रपदा अहिर्बुध्न्यभं उत्तराभद्रपदा दारुणानि उग्राणि एषां द्वंद्वे एतानि तैर्युक्तैः किंभूतैः सचित्राद्विसुरैः चित्राविशाखायुक्तैः पुनः किंभूतैरपर्वैः पर्वरहितैः पुनः क रिक्ताजयासु तिथिषु ॥ ४३ ॥

**जयासु पूर्णासु विदिंदुभार्गवैश्चलौषधीशाश्विनविश्वकर्मभैः ॥**
**निर्ग्रंथचार्वाकजनक्रिया भवेत्तदंभसिद्ध्यै विहिता चरोदये ॥ ४४॥**

अथ लिंगिप्रमुखानां कृत्ये भादिशुद्धिमाह—जयेति ॥ निर्ग्रंथो लिंगी चार्वाकजनो नास्तिकः अनयोः क्रिया कृत्यं तदंभसिद्ध्यै तयोः कपटसिद्धये स्यात् । किंभूता निर्ग्रंथचार्वाकजनक्रिया विहिता कृता कैः विद बुधः इंदुः भार्गवः शुक्रः एषां द्वंद्वे एतैः पुनः चलानि चरसंज्ञानि ओषधीशश्चंद्रो मृगशीर्षं आश्विनमश्विनी विश्वकर्मा तद्भं चित्रा एषां द्वंद्वे एतैः पुनः क जयासु पूर्णासु तिथिषु पुनश्चरोदये ॥ ४४ ॥

**अनेकवर्णोदितधर्मकर्मणा समानधर्मस्य नयं नयंत्यपि ॥**
**परे जनावाप्तुमलं क्रियाफलं स्वधर्मसत्यो लभते जनः श्रियम् ॥४५॥**

अथ स्वधर्मे दृढयन् विक्रमार्कवर्णनं संदधाति—अनेकेति ॥ अलमित्यवधारणे परोऽपरे जनाः क्रियाफलमात्रं प्राप्तुं नयं नीतिं नयंति प्राप्नुवंति कस्य समानधर्मस्य तुल्यधर्मस्य केन अनेकवर्णोदितधर्मकर्मणा स्पष्टं । वा पुनः पक्षांतरे स्वधर्मसत्यो लोकप्रवाहयुक्तो निजधर्मरक्तो जनः श्रियं लभते प्राप्नोति 'सत्यस्तु लोकभिन्' इति हैमः ॥ अर्थांतरन्यासेन श्रीविक्रमादित्य उक्तः स च सत्यमुक्तवान् तमेव वर्णयितुमाह ॥ ४५ ॥

**कांबोजगौडांध्रकमालवाननाः श्रीविक्रमार्कस्य सुराज्यगौर्जराः ॥**
**स्ववर्णधर्मक्रिययोज्ज्वलीकृतं यशोऽभिगायंत्यधुनापि ते जनाः॥४६**

**इति श्रीकविकालिदासोदिते ज्योतिर्विदाभरणे वर्णकर्मधर्मनिरूपणाध्यायो विंशतितमः॥**

काम्बोजेति ॥ अधुनापि कांबोजदेशप्रमुखाः सुराज्यगुर्जराद्या जना लोकाः श्रीविक्रमार्कस्य यशः कीर्तिमभिगायंति किंभूतं यशः स्ववर्णधर्मस्य निजनिजवर्णधर्मस्य क्रियया उज्ज्वलीकृतं निर्मलीकृतं ॥ ४६ ॥

इतिश्री पौर्णिमीयगच्छाधिराजभट्टारकपुरंदरश्रीमहिमाप्रभसूरीश्वरचरणसरोरुहचंचरीकायमानशिष्यभावरत्नविरचितायां श्रीकालिदासकृतज्योतिर्विदाभरणस्य सुखबोधिकायां विंशतितमोऽध्यायः ॥ २० ॥

---

## कालनिर्णयप्रकरणम् ।

**वर्णक्रियासंकथनादनंतरं वदामि कालव्यवहारनिर्णयं ॥**
**येनैव वेदस्मृतिकर्मसाधनं समेति सिद्धं प्रतिवेलमादरात्॥१॥**

अथ पूर्वोक्तं समयसाधनीयं स्यादतः कालव्यवहाराध्यायसंधानमाह—**वर्णेति** ॥ वर्णानां विप्रादीनां क्रियासंकथनात् अनंतरं अहमादरात् कालव्यवहारनिर्णयं वदामि कथयामि येन कालनिर्णयेन वेलां प्रति इति प्रतिवेलं वेदस्मृतिकर्मसाधनं कर्तृपदं समेति प्राप्नोति ॥ १॥

**मधौ शुचौ माघ इषे युगक्रमं सितादिरात्र्या नवरात्रिकं व्रतं ॥**
**देवीप्रसादं वशया विशाखिलैः कृतं चतुर्वर्गफलप्रदं युगैः ॥ २ ॥**

अथ नवरात्रिव्रतमाह—मधाविति ॥ मधौ चैत्रे शुचौ आषाढे माघे इषे आश्विने युगक्रमं कृतादिचतुर्युगानामनुक्रमेण सितादिरात्र्याः चैत्राषाढमाघाश्विनानां शुक्लपक्षप्रथमां रात्रिमारभ्य नवरात्रिकं व्रतं कर्तृपदं विशा नरेण वशया स्त्रियाऽखिलैर्युगैःकृतं सत् चतुर्वर्गफलप्रदं स्यात् । किंभूतं व्रतं देव्याः प्रसादो यस्मिन् तत् देवीप्रसादं ॥२॥

**अमांतरात्रावुत पक्षतौ घटं संस्थापयेल्लेय५तुला७घटो११क्ष२भे॥**
**लग्ने तथा द्विप्रकृतौ शुभैर्ग्रहैस्त्रिकोणलग्नेषु खलैररिस्थितैः ॥३॥**

अथात्र व्रते घटस्थापनमाह—अमांतेति ॥ सुधीः घटं संस्थापयेत् क अमांतरात्रौ अमावास्यावसानरजन्यां उत पक्षतौ प्रतिपदि पुनः क लेयः सिंहः तुला घटः कुंभः उक्षा वृषः एषां भे राशौ तथा पुनर्लग्ने द्विप्रकृतौ द्विस्वभावराशौ लग्ने तथा त्रिकोण लग्नेषु ५।९।१ शुभैर्ग्रहैः तथारिस्थितैः षष्ठभावगतैः खलैः क्रूरैः ॥ ३ ॥

**पृदाकुभाजांघ्रिभविश्वकर्मभान्यपास्य वा चेदिह नोऽर्कभद्युभं ॥**
**पातद्वयं वै कलशोऽष्टमे क्षणे संस्थापितः स्थापयति श्रियोऽखिलाः॥४॥**

अथ कुंभस्थाने भादिशुद्धिं तर्कयति—पृदेति ॥ वै निश्चितं चेत् यदि यत् अर्कभं सूर्यनक्षत्रं तदेव द्युभं दिननक्षत्रं न स्यात् । पातद्वयं व्यतीपातवैधृतौ न भवतः इति या प्रतिपत् स्यात्तस्यां अष्टमे क्षणे मुहूर्ते संस्थापितः कलशोऽखिलाः समस्ताः श्रियो लक्ष्मीः स्थापयति स्थिरीकरोति किंकृत्वा पृदाकुः सर्पस्तद्भमश्लेषा अजांघ्रिभं पूर्वाभाद्रपदा विश्वकर्मभं चित्रा एषां द्वंद्वे इमानि अपास्य त्यक्त्वा ॥ ४ ॥

**होमे तदीये नवमीयुताष्टमीं नयेत्सदैवेह तदीयपारणां ॥**
**वृद्धौ नवम्यां समभावतस्तथा क्षये दशम्यां च विशारदैः स्मृता ॥५**

अथात्र व्रते होमपारणाशुद्धिमाह—होम इति ॥ तदीये होमे नवरात्रिकव्रतहोमे नवमीयुताष्टमी स्यात् । सदैव सुधीरिह नवमीयुताष्टम्यां तदीयपारणां तस्य व्रतस्य पारणां नयेत् कुर्यात् । वृद्धौ तिथिवृद्धौ तथा समभावतस्तुल्यप्रमाणतो नवम्यां पारणां नयेत् । च पुनः क्षये तिथौ सति दशम्यां विशारदैः पंडितैः पारणा स्मृता ॥५॥

**होमे व्रतेऽन्यत्र करग्रहादिके वा सन्मंगले पौष्णयमाहियातुभैः ॥**
**चित्रात्रिपूर्वाभिरिनात्मजाह्नि वा न स्थापयेत्कुंभमसत्तिथौ निशि ॥६॥**

अथ रेवत्यादिषु होमादिसंबंधिकुंभस्थापनं निषेधति—होम इति ॥ सुधीः होमे व्रतेऽन्यत्र करग्रहादिके सन्मंगले शुभकार्ये वा कुंभं घटं न स्थापयेत् । कैः पौष्णं रेवती यमः भरणी अहिः श्लेषा यातुभं मूलं एषां द्वंद्वे एतैः पुनः काभिः चित्रा त्रिपूर्वाः आसां द्वंद्वे आभिः पुनः क इनात्मजाह्नि शनिदिने पुनः क असत्तिथौ अशुभतिथौ सति पुनः निशि रात्रौ ॥ ६ ॥

**आस्ते कवावांगिरसे गुरौ हरौ क्षयेऽधिके मासि च हायने तथा ॥**
**एतद्व्रतं न प्रथमं समारभेदन्यच्च कांताव्रतमप्यनादृतम् ॥ ७ ॥**

अथ गुर्वस्तादिदोषे नवरात्रिकव्रतारंभं प्रथमं निषेधति—आस्त इति ॥ सुधीरेतद्व्रतं नवरात्रिकं व्रतं प्रथमं न समारभेत् न प्रारभेत् क कवौ शुक्रे आंगिरसे गुरौ वास्ते

सति पुनः हरौ सिंहे गुरौ सति पुनः क्षयेऽधिके मासि मासे हायने वर्षे च तथा च पुनः अन्यत् कांताव्रतं स्त्रीव्रतमपि अनादृतं त्यक्तमित्यर्थः ॥ ७ ॥

**व्रतं हि भद्रादिविरुद्धकालो नित्यं न दुष्यत्यबलाजनस्य ॥**
**नैमित्तिकं स्यात् प्रथमं सदोषं कालस्थिरं नित्यमनित्यमन्यत् ॥ ८॥**

अथ नित्यानित्यव्रतविवेकमाह—व्रतमिति ॥ हि अवधारणे भद्रादिविरुद्धकालो वि-ष्ट्यादिदुष्टकालोऽबलाजनस्य स्त्रीजनस्य नित्यं व्रतं न दुष्यति। प्रथमं नैमित्तकं कारणिकं व्रतं सदोषभद्रादिविरुद्धकाले दूषणयुक्तं स्यात्। कालस्थिरं अस्मिन् काले इदं व्रतमवश्यं कर्तव्यमेव इति नित्यं व्रतं स्यादन्यत् अनित्यं व्रतं स्यादिति विवेकः ॥ ८ ॥

**माघे निशीथानुगता चतुर्दशी पक्षे परे या शिवरात्रि-**
**संज्ञिका ॥ भवेदुपोष्या सजया१३ऽपि वाम३०या युता**
**च रिक्तां प्रविहाय पारणा ॥ ९ ॥**

अथ शिवरात्रिकालशुद्धिमाह—माघ इति ॥ माघे मासे परे कृष्णे पक्षे या निशीथानुगता मध्यरात्रिगता चतुर्दशी स्यात् सा शिवरात्रिसंज्ञिका उपोष्या उपोषणीया भवेत्। किंभूता सजया त्रयोदशीयुक्ताऽपि वाऽथवा किंभूता अमया अमावास्यया युता युक्ता च पुना रिक्तां तिथिं विहाय पारणा स्यात् ॥ ९ ॥

**यदा निशीथद्वयगामिनी भवेच्चतुर्दशी सा परपूर्वगा क्रमात् ॥**
**वृद्धिक्षयत्वादुत मुक्तद्वया बव्ही विधेया किल कालवेदिभिः॥१०**

अथात्र न्यूनाधिकतिथौ विवेकमाह—यदेति ॥ यदा या निशीथद्वयगामिनी मध्यरात्रिद्वयगामिनी परपूर्वगा उत्तरमध्यरजनीत आगामिकमध्यरजनी यावत् गता प्राप्ता चतुर्दशी भवेत् सा शिवरात्रिश्चतुर्दशी भवेत्। किल संभावनाया उत कालवेदिभिर्दैवज्ञैर्बव्ही बहुकालतिथिश्चतुर्दशी विधेया किंभूता चतुर्दशी क्रमात् वृद्धिक्षयत्वात् मुक्तद्वया वृद्धिक्षयरहितभावात् वर्जितवृद्धिक्षयीतिथिः ॥ १० ॥

**देव्या व्रतेऽन्यत्र च वन्हिरेतसो व्रते सपर्यादिविधौ चतुर्दशी ॥**
**त्रयोदशीविद्धवती तथाष्टमी ग्राह्या नवम्या सहितातताेऽधिका॥११**

अथ देव्यादिव्रते तिथिशुद्धिमाह—देव्येति ॥ देव्या व्रते भवानीव्रतेऽन्यत्र च वन्हिरे-तस ईश्वरस्य व्रते सपर्यादिविधौ पूजादिकर्मणि च त्रयोदशीविद्धवती त्रयोदश्या विद्धा चतुर्दशी तथा नवम्या सहिता अष्टमी च ग्राह्या ततोऽधिका ग्राह्या ॥ ११ ॥

**सहोऽपरा मुख्यतमा चतुर्थिका व्रते गणेशस्य विघ्नदयाश्रया ॥**
**एवं चतुर्थ्यो निखिलाश्च तद्व्रते भवंति सिद्ध्यै किल कृष्णपक्षजाः॥१२**

अथ गणेशचतुर्थीव्रतशुद्धिमाह—सह इति ॥ गणेशस्य व्रते सहो मार्गशीर्षमासस्तस्यापरा कृष्णा मुख्यतमा श्रेष्ठतमा चतुर्थिका चतुर्थी ग्राह्या । किंभूता चतुर्थी विधूदयाश्रया चंद्रोदयव्यापिनी च पुनरेतं किमेति संभावनायां तत्रैव तस्य गणेशस्य व्रते निखिलाः समस्ताश्चतुर्थ्यः सिद्ध्यै भवंति किंभूताश्चतुर्थ्यः कृष्णपक्षगाः कृष्णपक्षजाताः ॥ १२ ॥

**दशम्यविद्धां समुपोषयेदिमामेकादशीं द्वादशिकां च पारयेत् ॥**
**क्षणावराद्ध्यां दशमी भमक्षणावमोत्तरा चेदपि तामुपोषयेत्॥१३॥**

अथैकादशीव्रतमाह—दशमीति ॥ बुध इमां दशम्यविद्धां एकादशीं समुपोषये च पुनर्द्वादशिकां पारयेत । उत चेत् यदि भमक्षणावमा भैर्नक्षत्रैर्मीयंते ते भमाश्च ते क्षणाश्च सप्तविंशतिक्षणैश्चतुःपंचाशन्मितघटिकाऽवमा हीना दशमी तदा सा एकादशी क्षणावराध्या क्षणैः श्रेष्ठा भवेत्तदा सुधीस्तामुपोषयेत् ॥ १३ ॥

**क्षणाधिका चेद्दशमी भमक्षणाऽधिकावमैकादशिकाऽधिका परा ॥**
**उपोषिता स्यादपरा फलप्रदा त्रयोदशी पारणयापि वा तदा॥१४॥**

अथाधिकावमतिथौ एकादशीविवेकमाह—क्षणेति ॥ चेत् यदि क्षणाधिका मुहूर्ताधिका भमक्षणा सप्तविंशतिमितमुहूर्तास्तेभ्योऽधिका वमा एवंविधा दशमी पुनरेकादशिकाधिका तदापरा द्वितीया एकादशी उपोषिता सती परा प्रकृष्टफलप्रदा स्यात् । वेति पक्षांतरे पारणयापि त्रयोदशी फलप्रदा स्यात् ॥ १४ ॥

**एकादशी चेत्स्पृशति त्रिवासरांस्तदा शुभं तद्द्वयमप्युपोषितं ॥**
**सवैष्णवैर्मस्करिसाग्निकैस्तथाऽपरः समेकामपरामुपोषयेत् ॥ १५ ॥**

अथैकादश्या विशेषमाह—एकेति ॥ चेत् यदि एकादशी त्रिवासरान् दिनत्रयं स्पृशति तदा मस्करिसाग्निकैर्दंडधारियोगिभिः अग्निहोत्रिभिः किंभूतैर्मस्करिसाग्निकैः सवैष्णवैर्वैष्णवयुक्तैस्तद्द्वयं तस्या एकादश्या द्वयमुपोषितं शुभं स्यात् । तथाऽपरः कश्चित्समेकां शुभां एकां परां अग्रेतनां एकादशीमुपोषयेत् ॥ १५ ॥

**चेद्द्वादशी षष्ठ्यधिका ६० तदा भवेदुपोषयेत्तामपि षष्ठिमां बुधः ॥**
**संपारयेद्द्वादशिकां परां क्वचिन्नंदा च भद्रा समुपोषणोचिता ॥१६॥**

चेदिति ॥ चेत् यदि षष्ठ्यधिका षष्ठिघटिकाभ्योऽधिका द्वादशी स्यात्तदा बुधः षष्ठिमां षष्ठिघटिकामितां तामपि द्वादशीमुपोषयेत् परामग्रेतनां द्वादशिकां संपारयेत् । पुनः क्वचित् स्थाने नंदा एकादशी भद्रा द्वादशी समुपोषणे हिता शुभा स्यात् ॥ १६ ॥

**भद्रावमेतां समुपोष्य पारयेत्त्रयोदशीं वारुणकालतोऽधिकां ॥**
**यातामिह द्वादशिकादि यद्धरेरहस्तदुल्लंघ्य सदैव पारणा ॥ १७ ॥**

अथास्या विशेषमाह—भद्रेति ॥ या भद्रा द्वादशी अरुणकालतः सूर्योदयात् प्राक् चतुर्घटिकात्मकोऽरुणोदयकालस्तस्मात् अवमेता अवमं क्षयं इता प्राप्ता वाऽरुणकालेऽधिका तदा तां द्वादशीं समुपोष्य त्रयोदशीं पारयेत्। इह हरेः कृष्णस्य तत् द्वादशीकादि यत् द्वादश्याः प्रथमचरणमेवंविधमहरुल्लंघ्य प्रोज्झ्य सदैव पारणा स्यात् ॥ १७ ॥

**चेद्द्वादशी पारणया हि लभ्या पूर्णान्वितैकादशिकां न पारयेत ॥**
**वृद्धौ क्षये वापि तदन्यरूपं भनिर्णये तत्क्रमनीतिभावतः ॥ १८ ॥**

चेद्द्वादशीति ॥ हि अवधारणे चेत् पारणया द्वादशी लभ्या प्राप्या स्यात्तदा सुधीः पूर्णान्वितैकादशिकां दशमीयुक्तमेकादशीं न पारयेत् भोजनं न कारयेदुपोषयेदित्यर्थः। तद्धेतुमाह वृद्धौ क्षये वा तिथौ सति भनिर्णये नक्षत्रनिश्चयेऽपि तदन्यरूपं तस्या ईप्सिततिथ्या अन्यरूपमन्यस्वरूपं स्यात्। कस्माद्धेतोः क्रमनीतिभावतः तिथ्यादिक्रमन्यायभावात् ॥ १८ ॥

**वृद्धिक्षयौ स्तः परमौ तिथौ सदा व्यर्धा रसाः सांघ्रिरसाश्च नाडिकाः॥**
**सनेमतर्काः सपदर्णवास्तु भे निरूयंशदोषौ द्विरदा युतौ क्रमात्॥१९॥**

अथ तिथिनक्षत्रयोगानां वृद्धिक्षयनियमाह—वृद्धिरिति ॥ तिथौ तिथिविषये सदा व्यर्धा रसा विगतं अर्धं येभ्यस्ते एवंविधा रसाः षड्नाडिकाः सार्धपंचघटिकाः ५।३० च पुनः सांघ्रिरसाश्चरणसहिताःषण्णाडिकाः सपादषड्घटिकाः ६।१५ क्रमेण वृद्धि५क्षयौ६ परौ उत्कृष्टौ स्तो भवतः। तु पुनर्भे नक्षत्रविषये सनेमतर्काः सार्धषड्घटिकाः ६।३० सपदर्णवाः सपादचतुष्कघटिकाः ४।१५ क्रमेण वृद्धिक्षयौ स्तः॥ पुनर्युतौ योगविषये निरूयंशदोषौ निर्गततृतीयभागो यस्मात् एवंविधौ दोषौ भुजौ द्वौ एतावता त्र्यंशयुक्ता एकघटिका १।४० द्विरदा गजा अष्टघटिकाः ८ क्रमात् वृद्धिक्षयौ स्तः ॥ १९ ॥

**मैत्रं शुचौ चेच्छ्रवणं नभस्ये पौष्णं तथोर्जेऽर्कमघस्रयोगे ॥**
**तत्पारणा हन्त्यपि धर्मभाजां पुराकृतैः पुण्यमशेषमेव ॥ २० ॥**

अथ नक्षत्राश्रितद्वादशीं दर्शयति—मैत्रमिति ॥ चेत् यदि शुचौ आषाढमासे मैत्रमनुराधा नभस्ये भाद्रपदे श्रवणः तथा ऊर्जे कार्तिके पौष्णं रेवती स्यात्। किंभूतं मैत्रादिभं अर्कमघस्रयोगं अर्कैर्द्वादशभिर्मीयते इति अर्कमश्चासौ घस्रो वासरश्च द्वादशी इत्यर्थः। तस्य योगः संयोगो यस्मिंस्तदिति तदा तत्पारणा तस्यां द्वादश्यां पारणा धर्मभाजां प्राणिनां पुराकृतमशेषमपि एवं पुण्यं हन्ति सा उपोष्या तदा शुभमित्यर्थः ॥ २० ॥

**तथापि पादं प्रथमं विमुक्त्वा मैत्रे च मध्यत्रिलवं श्रुतौ हि ॥**
**पौष्णेऽन्त्यपादं हरिवासराख्यं तत्पारणा धर्मफलाप्तये स्यात् ॥२१॥**

अथात्र नक्षत्रचरणगतविशेषं दर्शयति—तथेति ॥ हि अवधारणे तथा मैत्रेऽनुराधायाः प्रथमं पादं हरिवासराख्यं विमुक्त्वा विहाय च पुनः श्रुतौ श्रवणे मध्यत्रिलवं गर्भगततृती-

यद्वं हरिवासराख्यं विहाय पौष्णान्त्यपादं रेवत्या अन्त्यचरणं हरिवासराख्यं विहाय तत्पारणा तस्या द्वादश्याः पारणा धर्मफलाप्तये स्यात् ॥ २१ ॥

चैत्रे सिता द्युदलगा नवमी व्रते स्याच्छ्रीरामजन्मसमये
तदुपोषणं सत् ॥ वृद्धौ च सा दिनदलद्वयगा परा
चेत्पूर्वा क्षये द्विदिनमध्यगतान्यथा न ॥ २२ ॥

अथ रामनवमीमुपोष्यामाह—चैत्र इति ॥ चैत्रे मासे सिता शुक्ला द्युदलगा दिनार्द्धगता नवमी व्रते स्यात् । श्रीरामजन्मसमये तदुपोषणं तस्यां नवम्यां उपवासः स्यात् । चेत् यदि वृद्धौ सत्यां सा नवमी दिनदलद्वयगा दिनार्द्धयुग्मगता परा अग्रेतना स्यात् । क्षये सति द्विदिनमध्यगता दिनद्वयमध्यप्राप्ता पूर्वा स्यात् । अन्यथा उक्तविपरीतेन स्यात् ॥ २२॥

रिक्तां समुज्झ्य दशमी किल पारणायामायुःप्रजास्ववृ-
षवागपवर्गदा स्यात् ॥ श्रीरामजन्मसममन्यमहाव्र-
ताख्यं नोपोषितं ननु महोत्सवगीतमेतत् ॥ २३ ॥

अथास्याः पारणादिनमाह-रिक्तामिति ॥ किल संभावनायां रिक्तां नवमीं समुज्झ्य विहाय पारणायां दशमी आयुःप्रजास्ववृषवागपवर्गदा दीर्घजीवितसंतानधर्मसरस्वती मोक्षप्रदा स्यात् । ननु वितर्के महोत्सवगीतं महत्साडंबरेण गीतं स्तुतं वा उपोषितं सत् एतत् श्रीरामजन्मसमं व्रतमन्यमहाव्रताख्यं नास्ति ॥ २३ ॥

अष्टमी नभसि मासि यापरा रोहिणीसहितमध्यरात्रिगा ॥
कृष्णजन्मसमयोत्सवव्रता सर्वकामफलदा ह्युपोषिता ॥ २४ ॥

अथ गोकुलाष्टमीव्रतमाह—अष्टमीति ॥ नभसि श्रावणे मासे यापरा कृष्णा रोहिणीसहितमध्यरात्रिगाष्टमी भवति हि अवधारणे साष्टमी उपोषिता सती सर्वकामफलप्रद स्यात् । किंभूताष्टमी कृष्णजन्मसमयोत्सवाय व्रतं यस्यां सा स्पष्टमिति ॥ २४ ॥

रोहिणीसहितमष्टमीदिनं चेन्निशीथसमयद्वयं स्पृशेत् ॥
तच्चयापचयतः परं पुरा तन्न वा यदि ततस्तथान्यथा ॥ २५ ॥

अथात्र वृद्धौक्षये उपोषणं तर्कयति—रोहिणीति ॥ चेद्यदि अष्टमीदिनं कर्तृपदं रोहिणीसहितं निशीथसमयद्वयं मध्यरात्रियुग्मं स्पृशेत् तद्दिनं चयापचयतो वृद्धिक्षयत्वात् क्रमेण वृद्धौ सत्यां परमग्रेतनमुपोष्यं स्यात् । वाथवा क्षये सति पुरा पूर्वं दिनं उपोष्यं स्यात् । यदि चेत्ततोऽन्यथा तदा तन्न स्यात् ॥ २५ ॥

रोहिणीविरहिताष्टमीं नयेन्मध्यरात्रिसमयानुगामिह ॥
केवलामथ तिथिक्षयेऽथवा तां गतक्षणनिशीथगामपि ॥ २६ ॥

रोहिणीति ॥ इह व्रते सुधीः केवलां रोहिणीविरहितां रोहिणीनक्षत्रवर्जितां अष्टमीं मध्यरात्रिसमयानुगां नयेत् कुर्यात् । अनु पश्चात्तिथिक्षयेऽथवा तां गतक्षणनिशीथगां मुहूर्तमात्रहीनमध्यरात्रिगतामपि नयेत् ॥ २६ ॥

सोमसौम्यसहिताष्टमी कभा केवलाप्युत शुभा ह्युपोषिता ॥
भौमवासरवती तथोदयाद्बह्वभीष्टफलदोतसंभवात् ॥ २७ ॥ ॥

सोमेति ॥ हि अवधारणे सोमसौम्यसहिता चंद्रबुधयुक्ता कभा कस्य ब्रह्मणो भं नक्षत्रं यस्यां सा कभा रोहिणीयुक्ता उत विकल्पे केवलापि अष्टमी उपोषिता सतीति शुभा स्यात् । उदयात् भौमवासरवती भौमदिनयुक्ता तथा ऊनसंभवात् किंचिन्न्यूनसंयोगात् बह्वभीष्टफलदा स्यात् ॥ २७ ॥

अष्टमी भवति सप्तमीयुता गर्हिता व्रतविधौ यथा न तु ॥
वासुदेवजननोत्सवे तथा सा निशीथसमया समादृता ॥२८॥

अष्टमीति ॥ यथा सप्तमीयुताऽष्टमी व्रतविधौ उपोषणकर्मणि गर्हिता निंदिता न स्यात् तु अवधारणे तथा वासुदेवजननोत्सवे कृष्णजन्मोत्सवे साष्टमी निशीथसमया मध्यरात्रिगता समादृता आराधिता ॥ २८ ॥

रोहिणी यदि जया क्षणोन्मितामष्टमीमुत समेत्य रोहिणीं ॥
मध्यरात्रिसमयामुपोषयेत्तां निशीथनिकटानुगामपि ॥ २९ ॥

रोहिणीति ॥ यदि चेत् जया अष्टमी क्षणोन्मितां कलाप्रमितां रोहिणीं समेत्य संयोगं प्राप्य भवेत् । उत रोहिणी क्षणोन्मितां अष्टमीं समेत्य भवेत्तदा सुधीर्मध्यरात्रिसमयां निशीथनिकटानुगां मध्यरात्रिप्राप्तामपि तामष्टमीमुपोषयेत् ॥ २९ ॥

प्राङ्निशीथमुपगम्य वैष्णवैर्नीयते परदिनाचिते तु ते ॥
पारणा तदवसानतो भवेद्वा वियोगसमयात्परं तयोः ॥३०॥

अथात्र वैष्णवपक्षमाह—प्राङ्निशीति ॥ वैष्णवैः परदिनाचितेऽन्यदिनव्याप्ते ते द्वे अष्टमीरोहिण्यौ समेत्य प्राक् पूर्वमनु पश्चात् निशीथं मध्यरात्रिं नीयते प्राप्येते तदवसानतोऽष्टम्याः प्रांतात् पारणा भवेत् । वाथवा तयोरष्टमीरोहिण्योर्वियोगसमयात् विश्लेषकालात् परमग्रे पारणा भवेत् ॥ ३० ॥

चतुर्दशी माधवमासि शुक्ला नृसिंहसंभूतिचतुर्दशी स्यात् ॥
निशामुखे सा समुपोषणार्हा जयायुता पूर्णिमया युता वा ॥ ३१ ॥

अथ नरसिंहजन्मचतुर्दशीमाह—चतुर्दशीति ॥ माधवमासि वैशाखमासे शुक्ला श्वेता नृसिंहसंभूतिचतुर्दशी नरसिंहजन्मचतुर्दशी स्यात् सा चतुर्दशी निशामुखे रजनीमुखे समुपोषणार्हा उपोषणाय योग्या स्यात् । किंभूता जयायुता त्रयोदशीयुता वाथवा पूर्णिमया युता ॥ ३१ ॥

**अर्कास्तकालद्वयगा तु सा चेत्क्षयाधिकत्वात्प्रथमाऽपरा स्यात् ॥**
**तत्स्था नवा तद्विपरीतगार्हा वन्ही विधेयात्र सपारणा सा ॥ ३२ ॥**

अथात्र वृद्धिक्षये विवेकमाह—अर्केति ॥ चेत् यदि अर्कास्तकालद्वयगा सूर्यास्तकाल-द्वयगता स्यात् सा क्षयाधिकत्वात् क्षये प्रथमा अधिकेऽपरा अग्रेतना स्यात् । तत्स्था नवा इति ... विकल्पार्थे ... तदात्र वन्ही विधेयार्हा विधातुं योग्या किंभूता सा सपारणा पारण युक्ता ॥ ३२ ॥

**इषांतदर्शो रजनीमुखाधिको दीपोत्सवोऽसौ गदितो बुधैरिह ॥**
**श्राद्धं विधाय द्युदलक्षणत्रयं सायं सदैवोल्मुकमादृतं ततः ॥ ३३ ॥**

अथ दीपमालिकामाह—इषांतेति ॥ ... इषांतदर्श आश्विनमासस्यांतदर्शो रजनीमुखाधिकः संध्यातोऽधिकः स्यादिह जगति बुधैः सोऽसौ दीपोत्सवो गदितः प्रोक्तः । द्युदलक्षणत्रयं मध्यान्होपरि षट्घटिका यावत् श्राद्धं विधाय कृत्वा ततः सायंसंध्यायां सदैव उल्मुकं 'मेराईयां' इति भाषा आदृतमंगीकृतं ॥ ३३ ॥

**रिक्तानिशीथे किल विष्णुमायामभ्यर्च्य दीपोत्सवमप्यमायां ॥**
**कृत्वा बलेश्च प्रतिपद्यजस्य पूजानु गोक्रीडनमुद्धये स्यात् ॥ ३४ ॥**

रिक्तेति ॥ किलेति संभावनायां रिक्तानिशीथे चतुर्दश्या मध्यरात्रे विष्णुमायां लक्ष्मी-मभ्यर्च्य संपूज्य अपि पुनरमायाममावास्यायां दीपोत्सवं दीपमालिकां कृत्वा प्रतिपदि तिथौ बलेर्बलिराजस्य गेहमध्ये पूजा च पुनर्गृहवाह्येऽजस्य गोमयनिर्मितगोवर्धनस्य पूजाऽनु पश्चात् गोक्रीडनं नवीनगृहद्वये सौख्दायै स्यात् ॥ ३४ ॥

**अमा ३० यदा भूतदिने १४ऽपराण्हे प्रदृश्यते तद्दिवसेऽक्षयं स्यात् ॥**
**श्राद्धं पितॄणां तदनूल्मुकाख्यं तमीमुखे लोकनृपार्थकारी ॥ ३५ ॥**

अमेति ॥ यदा भूतदिने चतुर्दश्यामपराण्हेऽमा प्रदृश्येत तदा तद्दिवसे चतुर्दशी-दिने पितॄणां श्राद्धं कर्तृपदं अक्षयं स्यात्तदनु पश्चात्तमीमुखे रजनीमुखे उल्मुकाख्यं 'मेराईयां' लोकनृपार्थकारि जनानां भूपस्य च संपदाकृत् स्यात् ॥ ३५ ॥

**प्रातश्च संगवश्चैव मध्यान्हः शारदस्तथा ॥**
**सायान्हमर्धोदयतः पंचांशो द्युमितेः क्रमात् ॥ ३६ ॥**

अथ पंचधा दिवसांशमाह—प्रातरिति ॥ प्रातः प्रभात १ अपुनः संगवः २ च पुन-र्मध्यान्हः ३ पुनः शारदः ४ तथा पुनः सायान्ह ५ मिति अर्धोदयतः सूर्यस्यार्द्धमंडलो-दयात् द्युमितेर्दिनप्रमितस्य क्रमात् पंचांशः ॥ ३६ ॥

**पंचधा भागकालोऽसौ त्रिधा पूर्वाण्हकं ततः ॥**
**मध्यान्हमपराण्हं तु द्वेधा पूर्वापरार्द्धके ॥ ३७ ॥**

अथ त्रिधा कालमाह—पंचेति ॥ पंचधा भागकालोऽसौ कालस्त्रिधा पूर्वाण्हकं ततो मध्यान्हं ततोऽपराण्हं स्यात् । तु पुनः पूर्वापरार्द्धके पूर्वार्द्धे उत्तरार्द्धे द्वेधा कालः स्यात् ॥३७॥

**दिनावसाने क्षणमास्त्यमा चेच्छ्राद्धं विधायोल्मुकमत्र कुर्यात् ॥**
**क्षयेऽथ वृद्धौ प्रतिपद्युपेते दर्शे ततोऽग्रे बलिपूजनं स्यात् ॥ ३८ ॥**

दिनेति ॥ चेद्यदि दिनावसाने दिनप्रांतेऽमा क्षणमा मुहूर्त्तप्रमितास्ति तदात्र श्राद्धं विधाय उल्मुकं कुर्यात् । अथ क्षये वृद्धौ उपेते प्राप्ते दर्शे प्रतिपदि उल्मुकं स्यात्ततोऽग्रे बलिपूजनं स्यात् ॥ ३८ ॥

**श्राद्धे कृते शारदगामि दर्शे नंदोल्मुकं दूषणकृन्न राज्ये ॥**
**तदा निशीथे सुरशक्तिपूजा दर्शेऽपि लोकेश्वरसौख्यदा स्यात् ॥३९**

श्राद्धेति ॥ शारदगामि दर्शे आश्विनामावास्यायां श्राद्धे कृते सति नंदोल्मुके प्रतिपदि उल्मुकं राज्यदूषणकृन्न स्यात्तदा निशीथे मध्यरात्रिदर्शेऽपि सुरशक्तिपूजा लक्ष्मीपूजा लोकेश्वरसौख्यदा जननृपसुखदायिनी स्यात् ॥ ३९ ॥

**सूर्यास्तकालोल्मुकमंगिकर्म स्यादंगकर्माण्यपराणि चात्र ॥**
**दर्शोदरः पंचदिनात्मकोऽसौ दीपोत्सवस्तद्व्यवहारसिद्धः ॥ ४० ॥**

सूर्यास्तेति ॥ सूर्यास्तकालोल्मुकमंगिकर्म प्राणिकृतं स्यात् । च पुनरत्रापराणि अंगकर्माणि स्युः॥ दर्शोदरोऽमामध्यः पंचदिनात्मकः त्रयोदशी चतुर्दशी दर्शः प्रतिपत् द्वितीयात्मकोऽसौ दीपोत्सवः स्यात् । किंभूतो दीपोत्सवस्तद्व्य[illegible] श्राद्धादिकृत्यव्यवहारेण सिद्धः स्यात् । इति दीपमालिकाधिकारः ॥ ४० ॥

**अथाश्विने या दशमी निशामुखे शुक्ला स्मृता सा विजया बुधैरिह ॥**
**अर्कान्वितां बोधियुतां शमीमुत क्षितीश्वरः सर्वजनश्च पूजयेत् ॥ ४१॥**

अथ विजयादशमीमाह—अथेति ॥ अथानंतरमुत चेत् याश्विने शुक्ला दशमी निशामुखे रजनीमुखे स्यात् बुधैः सा विजयादशमी स्मृता प्रोक्ता । इह विजयायां क्षितीश्वरश्च पुनः सर्वजनः शमीं क्लेशनाशिनीं पूजयेत । किंभूतां शमीं अर्कान्वितां अर्कतरुयुक्तां पुनर्बोधियुतां अश्वत्थयुक्तां ॥ ४१ ॥

**दिनावसानद्वयगामिनी यदा पूर्णा तदैवं विजया परा भवेत् ॥**
**न वेति दोषाननिकटादृता शम्यर्चने सर्वहरिज्जयाय सा ॥ ४२ ॥**

दिनेति ॥ यदा दिनावसानद्वयगामिनी पूर्णा दशमी स्यात्तदा विजया परागाऽग्रेतना भवेत् । वाथवा एवं न स्यात्तदा दोषाननिकटा रजनीमुखसमीपस्था आदृता इति सा विजया दशम्यर्चने शमीतरुपूजने सर्वहरिज्जयाय सर्वदिग्विजयाय स्यात् ॥ ४२ ॥

हुताशनीं फाल्गुनपूर्णिमास्यां निशीथपूर्वां ज्वलयेच्छुभार्थी ॥
पश्चात्तमीतज्वलने दिवा वा नृपश्रियं हंत्यपि पक्षतिर्वा ॥ ४३ ॥

अथ होलिकाधिकारमाह—हुतेति ॥ शुभार्थी हितकांक्षी नरः फाल्गुनपूर्णिमास्यां निशीथपूर्वां मध्यरात्रित आदिमां हुताशनीं नयेत् कुर्यात् । द्विकर्म च पुनः पश्चात्तमीतज्वलने मध्यरात्रितोऽपरां रजनीं इतं प्राप्तं तत् ज्वलनं च तस्मिन् वाथवा दिवा दिने हुताशनी-ज्वलने सति पक्षतिः प्रतिपद् वा नृपश्रियं राजलक्ष्मीं हंति ॥ ४३ ॥

सूर्यास्तकालावधिरेव पूर्णिमाधिकोनगा वा कलया तदा कृते ॥
श्राद्धे च तत्र ज्वलिता हुताशनी नंदातिथौ स्याद्रजसोत्सवः श्रियै॥४४

सूर्यास्तेति । यदा सूर्यास्तकालावधिः सूर्यास्तसमयं यावत् पूर्णिमा एव निर्धारणे वाथवा कलया अंशेन आधिका वा ऊना हीना स्यात्तदा कृते श्राद्धे सति तत्र ज्वलिता हुताशनी होलिका स्यात् । च पुना रजसा रेणुना उत्सवः श्रियै स्यात् । कस्मिन् नंदातिथौ प्रतिपत्तिथौ ॥ ४४ ॥

रिक्तान्विताप्रद्युयुतोत पूर्णिमा नेयास्तगे तज्ज्वलने रवाविह ॥
विष्टिस्तु तन्नित्यतया न दोषकृत्तथोपरागं परिपूर्णिमारजः ॥ ४५ ॥

रिक्तेति ॥ तज्ज्वलने होलिकाज्वलने रिक्तान्विता चतुर्दशीयुक्ता उत अप्रद्युयुता प्रति-पदा युक्ता पूर्णिमा नेया । रवौ सूर्येऽस्तगे सति इह होलिकायां तुरवधारणे विष्टिर्भद्रा दोषकृत् न स्यात् । कया तन्नित्यतया होलिकाया नित्यभावात्तया उपरागं ग्रहणं दोषकृन्न तथा परिपूर्णिमारजो दोषकृत् न स्यात् ॥ ४५ ॥

पूर्णास्तकालसमयाप्यथ शारदांता या पूर्णिमा नभसि
संगवगा तु तस्यां ॥ विष्ट्या युतोत रहिता मुनित-
र्पणं स्याच्चेत्संक्रमो भवति वा ग्रहणं तदा न ॥ ४६ ॥

अथ पूर्णिमायां मुनितर्पणमाह—पूर्णेति ॥ नभसि श्रावणमासे पूर्णास्तकालसमया संपू-र्णास्तकालसमया अपि पुनरथ शारदांता शारदसंज्ञकालप्रांता तु पुनः संगवगा संगवसं-ज्ञकालगामा उत भद्रान्विता विष्टियुता उत रहिता विष्टिरहिता स्यात्तदा तस्यां पूर्णि-मायां मुनितर्पणं स्यात् । चेत् यदि तत्र संक्रमः सूर्यसंक्रांतिर्वा ग्रहणं सूर्यचंद्रोपरागो न स्यात्तदेति ॥ ४६ ॥

केचित्समिच्छंति तदेव तर्पणं श्रुतौ च हस्ते श्रुतिशाखिनो ग्रहे ॥
स्यात्संक्रमे वा सति सर्वशाखिनां तत्तर्पणे श्रावणशुक्लपंचमी॥४७

अथात्र मतमाह—**केचिदिति**॥ केचित्तदेव तर्पणं श्रुतौ श्रवणे हस्ते च समिच्छंति सम्यक्प्रकारेण वांछंति कस्य श्रुतिशाखिनो वेदशाखिनः॥ अथ ग्रहे सूर्यादिग्रहणे संक्रमे वा सति श्रावणशुक्लपंचमी सर्वशाखिनां सर्ववेदशाखिनां तर्पणे ऋषितर्पणे स्यात्॥ ४७॥

**सा संगवांतैवमुपाकृतौ स्यात् पूर्वान्विता वापि च पाकयज्ञे॥**
**तथा सिता पंचदशी समुक्ता तथाष्टकैतत्समयाभिरूपैः॥ ४८॥**

**सा संगवेति**॥ उपाकृतौ उपाकर्मणि सा श्रावणशुक्लपंचमी संगवांता संगवसंज्ञकालप्रांता एव वाथवा पूर्वान्वितापि स्यात्। च पुनः पाकयज्ञेऽभिरूपैः पंडितैस्तथा सिता शुक्ला पंचदशी पूर्णिमा समुक्ता प्रोक्ता। तथाष्टकाश्राद्धविशेषभवा प्रोक्ता किंभूता एतत्समया उक्तकालप्रमिता॥ ४८॥

**अथ भाद्रपदादिपंचमी द्युदलांतामृषीपंचमी च सा॥**
**द्युदलद्वयगोत सा न चेदधिकासन्नगता हि तां नयेत्॥ ४९॥**

अथ ऋषिपंचमीमाह—**अथेति**॥ अथ या भाद्रपदादिपंचमी सा ऋषिपंचमी स्यात् किंभूता ऋषिपंचमीउत चेत् द्युदलद्वयगा दिनार्द्धद्वयगता न चेत् अधिका आसन्नगता समीपगता तदा हि आचारणे सुधीः तां पंचमीं द्युदलांतां दिनार्द्धप्रांतां नयेत् प्राप्नुयात्॥ ४९॥

**अपरा मुनिपंचमीदिनादुत पूर्वा मुनिचारशुद्धिगा॥**
**हरितालयभिपूजनेऽष्टमी कथिता सातिजयाय योषिताम्॥५०॥**

अथ हरितालीपूजनमाह—**अपरेति**॥ मुनिपंचमीदिनात् ऋषिपंचमीदिवसात् अपरा उत्तरा पूर्वा वा मुनिचारशुद्धिगा अगस्त्यचारशुद्धिं प्राप्ता याष्टमी भवति साष्टमी हरितालयभिपूजने भवानीपूजने योषितां स्त्रीणामतिजयाय कथिता प्रोक्ता॥ ५०॥

**सिताष्टमी भाद्रपदस्य कीर्तिता दूर्वार्चनेऽस्ते सति कुंभजन्मनः॥**
**सिंहे रवौ शारदकालगामिनी मध्यान्हवृद्ध्याप्युत रिक्तया युता॥५१॥**

अथ दूर्वाष्टमीमाह—**सिताष्टमीति**॥ भाद्रपदस्य सिता शुक्ला शारदकालगामिनी शारदसंज्ञकालप्राप्ता उत मध्यान्हवृद्ध्या रिक्तया नवम्या युता युक्ताष्टमी दूर्वार्चने कीर्तिता प्रोक्ता क्व कुंभजन्मनोऽगस्त्यस्यास्ते सति पुनः क्व सिंहे रवौ सति॥ ५१॥

**कन्यारवौ कुंभजनावनस्तगे दूर्वाष्टमी वास्ति नभोऽपराष्टमी॥**
**नभस्सितापि क्वचिदादृता न सा मुनिव्रतासन्नविभेदभावतः॥५२॥**

अथात्र विभेदमाह—**कन्येति**॥ कन्यारवौ कन्यासंक्रांतौ कुंभजनौ अगस्त्येऽनस्तगेऽस्तवर्जिते वा नभोऽपराष्टमी श्रावणस्यापरा अग्रेतनाऽष्टमी अस्ति क्वचिन्नभःसिता श्रावणस्य शुक्ला सापि पंचमी नादृता कस्मात् मुनिव्रतासन्नस्य ऋषिपंचमीव्रतसमीपस्य विभेदभावतो भिन्नभावत्वात्॥ ५२॥

त्रयोदशीपूर्वमहश्चतुष्टयं सैतं जयापार्वतिकाभिधं व्रतं ॥
शुचौ सदोदीरितमेव योषितां नारंभयेत्तावदजघ्नुविद्धवत् ॥ ५३ ॥

अथ पार्वतीव्रतमाह—त्रयोदशीति ॥ सदा निरंतरं शुचौ आषाढमासे सितस्य भावः सैतं शौक्लं त्रयोदशीपूर्वमहश्चतुष्टयं दिनचतुष्कं जयापार्वतिकाभिधं व्रतं सदा योषितां स्त्रीणामुदीरितं प्रोक्तं योषित्तद्व्रतं तावत्कालं नारंभयेत् न प्रारंभयेत् यावत्कालमजघ्नुविद्धवत् अजो विष्णुस्तस्य दिनं द्वादशी तस्या वेधयुक्तं स्यात् ॥ ५३ ॥

व्रतांतरात्राविह जागरादिकं समस्तसौभाग्यकरं तथा परं ॥
शुचेरमाया रजनीसमाचिता द्युपक्षवत्सैवमहिव्रतं स्त्रियाम ॥ ५४ ॥

व्रतांतेति ॥ इह व्रते व्रतांतरात्रौ व्रतावसानरजन्यां जागरादिकं समस्तसौभाग्यकरं स्यात्। तथापरं शुचेराषाढस्य यामामावास्या रजनीसमाचिता रजनीव्याप्ता स्यात् स्त्रियां महिलायां सा एवमहिव्रतं स्यात् । किंभूतं अहिव्रतं द्युपक्षवत् दिनपक्षयुक्तं ॥ ५४ ॥

या स्यात्सिता सा नभसस्त्रिमा तिथिर्मधुप्रिया गौर्यभिपूजनोचिता ॥
चंद्रास्तकालानुगतादिगा क्षये वृद्धौ परा तद्वयगा न वान्यथा ॥५५॥

अथ गौरीतिथिमाह—या स्यादिति ॥ नभसः श्रावणस्य या सिता शुक्ला त्रिमा तृतीया तिथिः स्यात् सा गौरीतिथिर्भवति । किंभूता त्रिमा मधुप्रिया मद्यपानप्रिया पुनः किंभूता अभिपूजनोचिता पूजायोग्या पुनः किंभूता चंद्रास्तकालानुगता पुनः किंभूता क्षये आदिगा पुनर्वृद्धौ पराऽग्रेतना अथवा तद्वयगा तद्वयव्यापिनी अन्यथा न स्यात् ॥ ५५ ॥

मध्यान्हकालेऽधिगतादिसप्तमी नभस्यथो शीतलसप्तमीव्रते ॥
नेया वशाभिर्नवमी सिता तथा त्रिधा विभक्ते किल नाकुलव्रते॥५६॥

अथ शीतलसप्तमीमाह—मध्यान्हेति ॥ अथो वशाभिः स्त्रीभिः शीतलसप्तमीव्रते नभसि श्रावणे मध्यान्हकालेऽधिगता प्राप्ता आदिसप्तमी शुक्ला सप्तमी नेया कर्तव्या इत्यर्थः । तथा स्त्रीभिः त्रिधा विभक्ते नाकुलव्रते नकुलसंबंधिव्रते सिता शुक्ला नवमी नेया किलेति संभावना ॥ ५६ ॥

नभस्यशुक्लेंदुदयाधिका च या ग्राह्या तृतीया खलु सात्र कज्जला ॥
तथा तृतीया हि नभस्यशुक्लजा सा गर्भसूताव्रतमृक्षपास्तगा॥५७॥

अथ कज्जलीतृतीयामाह—नभस्येति ॥ खलु निश्चितं नभसि श्रावणेऽशुक्ला कृष्णा उदयगा सूर्योदयगता च पुनरधिका या तृतीया स्यात् सात्र कज्जला ग्राह्या । सत्रो दक्षप्रजापतिस्तस्य पुत्रीत्वात् हि युक्तार्थे। तथा नभस्यशुक्लजा भाद्रपदशुक्लतृतीया या स्याद्गर्भसूताव्रतं स्यात् । किंभूता ऋक्षपश्चंद्रस्तस्यास्तगा अस्तं गते सति प्राप्ता ॥ ५७ ॥

मासि भाद्रपदे शुक्ला द्वादश्यभयसंज्ञिका ॥
संगवानुगता कार्या स्त्रीजनैः कामसिद्धये ॥ ५८ ॥

अथाभयद्वादशीमाह —मासीति ॥ स्त्रीजनैर्भाद्रपदे मासि शुक्ला संगवानुगता संगवसंज्ञकालप्राप्ता अभयसंज्ञिका द्वादशी कार्या कर्तव्या कस्यै कामसिद्धये वांछितनिष्पत्तये ॥५८॥

मध्यान्हकालांतगता चतुर्दशी सिता हि सा भाद्रपदे नृयोषितां ॥
बुधैरनंतव्रतमादृतं सदा तथा कलोनापि ततः फलाप्तये ॥ ५९ ॥

अथानंतव्रतमाह—मध्यान्हेति ॥ भाद्रपदे मासि सिता शुक्ला मध्यान्हकालांतगता मध्यान्हकालावसाने प्राप्ता या स्यात् बुधैः सा चतुर्दशी एव अनंतव्रतमादृतमंगीकृतं हि निश्चितं सदा तथा तेन प्रकारेण मध्यान्हावसानतः कलोना कलया हीनापि सा चतुर्दशी एव अनंतव्रतमादृतं कस्यै नरस्त्रीणां फलाप्तये ॥ ५९ ॥

रवेर्व्रतं भानुदिने सदादिमे यामे चरेदन्यदिनस्य संक्रमे ॥
पूजादिदानादिकभोजनादिभिः प्रजायुरारोग्यधनादिसिद्धिकृत् ॥६०॥

अथ सूर्यव्रतमाह—रवेरिति ॥ सुधीः हंसदिने सूर्यदिने रवेः सूर्यस्य व्रतं चरेत कुर्यात् । संक्रमेऽन्यदिनस्यादिमे यामे प्रथमप्रहरे चरेत् । किंभूतं पूजादिदानादिकभोजनादिभिः कृत्वा प्रजा संततिः आयुः आरोग्यं धनादिः एषां द्वंद्वे एषां सिद्धिकृत् ॥ ६० ॥

तथैव सर्वद्युचरव्रते भवेत्स्ववासरो वा निजसंक्रमः सदा ॥
स्वहोमदानार्चनभोजनक्रियो ग्रहस्तदीयोऽपि मिथस्तदिष्टकृत ॥६१॥

अथ चंद्रादिग्रहाणां व्रतमाह—तथैवेति ॥ सदा स्ववासरो निजसंक्रमो वा तथैव सूर्यवत् सर्वद्युचरव्रते चंद्रादिग्रहाणां व्रते भवेत् । अपि पुनस्तदीयस्तस्य नरस्यायं ग्रहो मिथस्तदिष्टकृत् स्यात् । किंभूतः स्वहोमदानार्चनभोजनानां क्रिया यस्मिन् सः ॥ ६१ ॥

रवौ रवे राजदिने च राज्ञो यदोपरागो त्वुत संक्रमे स्यात् ॥
शतोपरागप्रममेव पुण्यमेतद्द्वयेऽनंतफलं जपादौ ॥ ६२ ॥

अथ सूर्यादिग्रहणे पुण्यफलमाह—रवाविति ॥ यदा रवौ रविवारे उत संक्रमे रविसंक्रमे रवेः सूर्यस्य उपरागो ग्रहणं स्यात् । च पुना राजदिने चंद्रवासरे चंद्रसंक्रमे वा राज्ञश्चंद्रस्य उपरागः स्यात्तदा शतोपरागप्रमं शत ग्रहणप्रमितमेव पुण्यं स्यात् । एतद्वये वारसंक्रमणद्वयग्रहणे जपादौ जपविधौ अनंतफलं स्यात् ॥ ६२ ॥

स्पर्शे विधाय स्नपनं जपाद्यं कुर्यात्सुरार्चां हवनं च मध्ये ॥
विमुच्यमाने निजशक्तिदानं स्नानं विमुक्ते तरणौ विधौ तु ॥६३॥

स्पर्श इति ॥ तपने सूर्ये तु पुनर्विधौ चन्द्रे स्पर्शे राहुणा स्पृष्टे स्नानं स्नानं विधाय जपाद्यं कुर्यात् पुमान् इति शेषः । च पुनर्मध्ये मध्यस्पृष्टसुरार्चा देवपूजां हवनं च कुर्यात् । विमुच्यमाने निजशक्तिदानं कुर्यात् । विमुक्ते सति स्नानं कुर्यात् ॥ ६३ ॥

**गर्भान्विता पश्यति चेन्नितंबिनी वैकल्यमूतिर्ग्रहणद्वयं हि सा ॥**
**न सूतकं जातमृतोद्भवं भवेद्यावच्छशांकार्कविधुंतुदेक्षणम् ॥ ६४ ॥**

अथ गर्भवत्या ग्रहणावलोकनं सदोषमाह—गर्भेति ॥ या नितंबिनी स्त्री चेद्यदि ग्रहणद्वयं चंद्रसूर्यग्रहणं पश्यति हि अवधारणे सा वैकल्या ग्रंथिला मूतिः संततिर्यस्याः सा ग्रंथिलसंततिः स्यात् । यावत्कालं शशांकार्कविधुंतुदेक्षणं चंद्रसूर्यराहुविलोकनं स्यात्तावत् जातमृतोद्भवं जन्मजं मृतजं सूतकं न भवेत् ॥ ६४ ॥

**ग्रस्तौ रवींदू व्रजतो यदास्तकं न भोजयेदुद्गम ईक्षिते पुनः ॥**
**भोक्तव्यमाद्यप्रहरद्वयं विधोरपास्य वै यामचतुष्टयं रवेः ॥ ६५ ॥**

ग्रस्ताविति ॥ यदा रवींदू सूर्यचंद्रौ ग्रस्तौ संतौ अस्तकं व्रजंतो गच्छतस्तदा सुधीर्न भोजयेत् । उद्गमे उदये ईक्षिते दृष्टे सति पुनर्भोजयेत् ॥ विधोश्चंद्रस्य आद्यं प्रहरद्वयमपास्य विहाय भोक्तव्यं रवेः सूर्यस्य ग्रहणे यामचतुष्टयमपास्य भोक्तव्यमिति। इदं ग्रहणसामान्ये॥६५॥

**जाते मृते रोगरजोग्रहादिके न सूतके यावदुदेति भानुमान् ॥**
**तत्पूर्वमेव द्यु नयेन्निशीह या तात्कालिकी सा तिथिरादृता विधौ ॥ ६६**

अथ सूतकादौ तिथिशुद्धिमाह—जात इति ॥ यावत् भानुमान् सूर्यो न उदेति उद्गच्छति तावज्जाते जन्मनि मृते रोगरजोग्रहादिके रोगे रजसि आर्तवे सूर्यादिग्रहणादिके सूतके पुर्वमेव द्यु दिनं नयेत् गृण्हीयात् किंतु निशि रात्रौ तात्कालिकी तत्समयव्यापिनी तिथिः सा तिथिरिह विधौ विधाने आदृता गृहीता सुधीभिरिति शेषः ॥ ६६ ॥

**घटीचतुष्कोनमितः क्षणः क्वचित्प्रातः ससैकस्त्वरुणोदयः स्मृतः ॥**
**सैकस्तथोषासमयो घटीद्वयं शेषं खरांशूदयं एव कर्मणि ॥ ६७ ॥**

अथ क्षणादिकालसंज्ञानमाह—घटीति ॥ घटिचतुष्कोनमितो घटिकाचतुष्केन ऊनो हीनो निशावसानसमये क्षणः क्षणसंज्ञकालः स्यात् । क्वचित्प्रातःकालः स्यात् । तु पुनः सैकः एकेन सहितः स कालोऽरुणोदयः स्मृतः कथितः । तथा सैकः एकेन सहितोऽरुणोदय उषासमयः स्मृतः । 'उषा निशांतेऽल्पे किंचित्' इति हैमः ॥ शेषं घटीद्वयं खरांशूदयः सूर्योदय एव स्मृतः क्व कर्मणि ॥ ६७ ॥

**यज्ञादिदेवकार्येषु नेयमेतन्मनीषिभिः ॥**
**पितृकार्ये च सर्वत्र त्रिपंचभागवर्जितम् ॥ ६८ ॥**

अथ श्राद्धे कालनियामकमाह—यज्ञादीति ॥ यज्ञादिदैवकार्येषु पितृकार्येषु सर्वत्र मनीषिभिः पंडितैरेतत् मदुक्तं नेयं ज्ञेयं किंभूतं एतत् त्रिपंचभागवर्जितं त्रिभागं पंचभागं कालं विहाय ॥ ६८ ॥

नीलोद्वाहोंऽगवच्छ्राद्धं यथाकालहितं गतं ॥
यतोंऽगिगो विवाहः स्यात्तदारब्धक्रमानुगम् ॥ ६९॥

अथ श्राद्धे त्रिपंचभागकालो नेष्ट उक्तः नीलोद्वाहादिश्राद्धेष्वनियामकमाह—नील इति ॥ नीलोद्वाहः अंगवच्छ्राद्धं पित्रादीनां श्राद्धं यथाकालहितं यथोपलब्धकाले हितं गतं प्राप्तं यतोंऽगिगो विवाहः स्यात् । कथमारब्धक्रमानुगं प्रारब्धानुक्रमणानुगतं स्यात् यथा भवति तथेति क्रियाविशेषणं । कोऽर्थः यथावसरे नीलोद्वाहादि कार्यं क्रियते तत्संलग्नमेव श्राद्धं कर्तव्यमवश्यमेव अगं नीलोद्वाहादि सोऽस्य श्राद्धस्यास्ति इति अंगिश्राद्धं नीलोद्वाहाद्यनुगतमेव भवति न स्वतंत्रं अतः कालनियामकता नास्ति ॥ ६९ ॥

नित्यं श्राद्धमनित्यं स्यान्नीलोद्वाहांगवन्मिथः ॥
प्रादुर्भावे प्रवृत्ते वै नैवासौ तदनेहसि ॥ ७० ॥

नित्यमिति ॥ वै निश्चितं नित्यश्राद्धं नीलोद्वाहांगवत् श्राद्धं मिथः परस्परमनित्यं स्यात्॥कोऽर्थः त्रिपंचभागवर्जितकालः श्राद्धे उक्तः अत्र नित्यश्राद्धे नीलोद्वाहादिश्राद्धे नासौ नियमः। प्रादुर्भावे प्रवृत्ते नीलोद्वाहादिकार्ये प्रवृत्ते तदनेहसि नीलोद्वाहादिकार्यसमयेऽसौ त्रिपंचभागवर्जितकालो न स्यात् ॥ ७० ॥

नासत्यपैत्रानलविश्वकर्मभाद्विदैवतर्क्षाभिधमासपूर्णिमाः ॥
पितृक्षयाहाश्च सुतीर्थसंगमाः पुण्या वृषोत्सर्गविधानतः स्मृताः॥७१॥

अथ नीलोद्वाहस्थलमाह—नासत्येति॥ नासत्यमश्विनी पैत्रं मघा आनलं कृत्तिका विश्वकर्मभं चित्रा द्विदैवतर्क्षं विशाखा एषां नक्षत्राणामभिधा नाम येषां ते च ते मासाश्च तेषां पूर्णिमाः आश्विनमाघकार्तिकचैत्रवैशाखमासानां पूर्णमास्यः च पुनः पितृक्षयाहाः पित्रोः क्षयदिनानि पुनः सुतीर्थसंगमाःपुण्या धर्मयोग्याः स्मृताः कस्मात् वृषोत्सर्गविधानतः नीलोद्वाहादिकार्येण ॥७१

न सिंहगेऽस्ते च गुरौ सितेऽस्तगेऽधिके क्षये मासि च हायने तथा ॥
नीलोक्षकोत्सर्गविधिं विदुर्गयां गोदावरीं च प्रथमाब्दिकं विना ॥७२॥

अथ गुर्वस्तादिदोषे नीलोद्वाहं निषेधति—न सिंहेति ॥ सिंहगेऽस्ते च गुरौ सति अस्तगे सिते शुक्रे तथाऽधिके क्षये मासि हायने वर्षे च सति बुधा नीलोक्षगोत्सर्गविधिं न विदुर्न कथयंति । गयां गोदावरीं प्रथमाब्दिकं प्रथमश्राद्धं विना एतानि विहायेत्यर्थः॥ ७२ ॥

क्षयाधिमासावुदितौ पुरा मया क्षयाधिकाब्दस्य च रूपमुच्यते ॥
क्षयाधिका मार्गवतो गुरोः समा द्विसंक्रमा या क्रमतो विसंक्रमा॥७३

अथ क्षयाधिकलक्षणमाह—क्षयेति ॥ पुरा पूर्वं मया क्षयाधिमासौ उदितौ प्रोक्तौ च पुनरथ क्षयाधिकाब्दस्य क्षयाधिकवर्षस्य रूपं स्वरूपमुच्यते कथ्यते । मार्गवतो गुरोर्मार्गिगीष्पतेर्या द्विसंक्रमा द्वौ संक्रमौ यस्यां सा समा वर्षः सा क्षया क्षयवर्षं स्यात् ॥ या समा विसंक्रमा गुरुसंक्रमणरहिता सा शरत् अधिका स्यात् क्रमतः ॥ ७३ ॥

**द्विचारवक्रांतरकालमैंदवं वर्षं तदंतर्गतमीज्यहायनं ॥**
**क्षुब्धं तदैज्याब्दसमं त्वनेहसं विहाय शेषे समयेस्तुमंगलम् ॥७४**

अथ क्षयवर्षे त्याज्यकालनियममाह—द्विचारेति ॥ तु पुनर्यत् ऐंदवं वर्षं चांद्रवर्षं द्विचारो द्विवारचारः वक्रश्च तयोरंतरकालं तदंतर्गतं चांद्रवर्षांतरगतमेवंविधमीज्यहायनं गुरुवर्षं स्यात्तदैज्याब्दसमं तद् बृहस्पतिवर्षतुल्यं क्षुब्धं क्षयमनेहसं कालं विहाय शेषे समयेऽतः शेषकाले मंगलकार्यमस्तु ॥ ७४ ॥

**मार्गी पुरोधा गदितोग्रधन्वनो द्विराशिचारं कुरुते यदा तदा ॥**
**लुप्ता शरत्सापि निपादिकं चरेच्चतुष्टयं मंगलसाधिनी भवेत् ॥७५॥**

अथ मार्गिगुरोर्लुप्तवर्षे कुंभादौ मंगलकार्यमाह—मार्गीति ॥ उग्रधन्वन इंद्रस्य पुरोधा गुरुर्मार्गी सन् यदा द्विराशिचारं कुरुते कोऽर्थो मिथुनादौ राशौ महातिचारेण समागतः सन् पश्चात् कियद्भिर्दिनैर्वक्रितो यदा पूर्वराशिं भुक्तराशिं एति गच्छति तदा लुप्ता शरत् गदिता प्रोक्ता । अपि पुनः सा लुप्ता शरत् निपादिकं कुंभादिचतुष्टयं कुंभमीनमेषवृषमिथुनानि चरेत् गच्छेत्तदा सा शरत् मंगलसाधिनी भवेत्कुंभादिचतुष्कयुक्ते लुप्तवर्षे मंगलं स्यादित्यर्थः ॥ ७५ ॥

**क्षणद्वयं यत् द्युदलोदरं स्मृतं सदादिजेभ्यः कुतपाख्यकालवत् ॥**
**दर्शक्षयाहाख्यनवान्नपक्षजश्राद्धेषु पिंडान् कुतपे प्रदापयेत् ॥ ७६ ॥**

अथ श्राद्धकालशुद्धिं दर्शयति—क्षणेति ॥ यत् द्युदलोदरं दिनदलगर्भकं क्षणद्वयमस्ति तत् कुतपाख्यकालवत् श्राद्धकालतुल्यं स्मृतं केभ्यः सदा निरंतरमादिजेभ्यः पितृभ्यो दर्शक्षयाहाख्यनवान्नपक्षजश्राद्धेषु सुधीः कुतपे पिंडान् प्रदापयेत् । 'श्राद्धकालस्तु कुतपोऽष्टमो भागो दिनस्य यः , इति हैमः ॥ ७६ ॥

**तिथिस्तदीया कुतपद्वये यदा पूर्वाक्षये स्यादपरा च वृद्धितः ॥**
**न तद्द्वये तन्निकटानुगा क्षये वृद्धौ विभातादुतयास्ति बह्व्यपि ॥७७॥**

तिथिरिति ॥ यदा तदीया तिथिः श्राद्धतिथिः कुतपद्वये स्यात्तदा क्षये पूर्वा स्यात् ॥ वृद्धिश्चातः पराग्र्या स्यात्तद्द्वये कुतपद्वये तिथिर्न स्यात्तदा तन्निकटानुगा श्राद्धकालसमीपगा स्यात् । उत चेत् विभातात् सूर्योदयात् क्षये वृद्धौ या बह्वी आस्ति सापि ग्राह्या ॥ ७७ ॥

**श्राद्धे तिथिं यामनुपाक्षिके क्वचित्तत्पंचधा भक्तदिनत्रिभागगां ॥**
**नयेद्युगादी सितपक्षजौ सदा द्विभागगौ प्रागुदितानि चोक्तवत् ॥७८**

श्राद्ध इति ॥ सुधीः क्वचित् अनुपाक्षिके मासपक्षादिके श्राद्धे या तिथिस्तां पंचधा भक्तदिनत्रिभागगां पुनः सितपक्षजौ श्वेतपक्षजातौ युगादितिथी सदा द्विभागगौ च पुनः प्रागुक्तानि उक्तकालवन्नयेत् ॥ ७८ ॥

**श्राद्धेषु संकल्पविधिं परेष्विह क्वचित्तदारभ्य समापयत्यरं ॥**
**निमित्तजान्यानि तदाप्तकालगान्यन्हीष्टकाद्याभ्युदयानि पूर्वगे ॥७९**

श्राद्धेष्विति ॥ सुधीरिह परेषु श्राद्धेषु कचित्तदारभ्य परमग्र्यं समापयेत् । निमित्तजान्यानि तदा सकालगानि इष्टकाद्याभ्युदयानि यज्ञाद्यभ्युदयश्राद्धानि पूर्वगेऽन्हि पूर्वाण्हे समापयेत् ॥ ७९ ॥

**यागद्युपूर्वं किल पर्व साग्निकैर्नेयं यदींदोरुदयो नहीष्टये ॥**
**भूतादिपद्दर्शपदत्रयं समं वृद्ध्यन्ययोः षोडशघस्रमोऽध्वरः ॥ ८० ॥**

**इति श्री कविकालिदासोदिते ज्योतिर्विदाभरणे कालनिर्णयाध्याय एकविंशतितमः॥ २१॥**

यागेति ॥ किलेति संभावनायां साग्निकैः पूर्वऋषिभिर्यागद्युपूर्वं पर्व यत् यस्मात् कारणात् हि अवधारणे इंदोरुदये चंद्रोदये इष्टये यज्ञाय भूतादिपद्दर्शपदत्रयं चतुर्दशीप्रथमचरणं दर्शचरणत्रयं समं न नेयं । वृद्ध्यन्ययोः षोडशघस्रमोऽध्वरः स्यात् ॥ सप्तदशप्रमितादिने चतुर्दशप्रमितादिने चंद्रोदये च यज्ञो न स्यादित्यर्थः ॥ अत्र विशेषतस्तारतम्यं संप्रदायाज्ज्ञेयम् ॥ ८० ॥

इति श्री ज्योतिर्विदाभरणस्य सुखबोधिकायां एकाधिकविंशतितमोऽध्यायः ॥ २१ ॥

## ग्रंथाध्यायनिरूपणप्रकरणम्

---

**अथेह पर्वव्रतकालनिर्णयादनंतरं ग्रंथनिरूपणक्रमं ॥**
**ब्रुवे तथा विक्रममेदिनीविभोरभिप्रजानंदकरस्य वर्णनम् ॥१॥**

अथ सर्वनिर्णयाध्यायकथनानंतरं बीजकाध्यायो घटतेऽतो ग्रंथनिरूपणक्रमस्य विक्रमार्कवर्णनस्य चाध्यायं संदधाति—अथेति ॥ अथ मांगल्ये इह द्वाविंशेऽध्याये पर्वव्रतकालनिर्णयानंतरं अहं ग्रंथनिरूपणक्रमं ब्रुवे कथयामि । तथाभिप्रजानंदकरस्य अभीष्टलोकहर्षकारकस्य विक्रममेदिनीविभोः श्रीविक्रमादित्यराज्ञश्च वर्णनं ब्रुवे ॥ १ ॥

**मानान्ययोगशुभयुग्गुणरूपसंज्ञाः पंचांगजाः करणरूपगुणावबोधः ॥**
**वातायनभ्रमणगोचरसर्वभेदाः संस्कारकालनयशुद्धिरिषान्निषेकात् ॥२॥**

अथ बीजकमाह—मानेति ॥ प्रथमाध्याये मानानि नवधा कालमानानि प्रोक्तानि इति ॥ १ ॥ द्वितीयेऽध्याये पंचांगजातिस्तिथिप्रमुखपंचांगजातं अथोगशुभयुग्गुणरूपसंज्ञाः कुयोगाः शुभयोगा एषां गुणरूपसंज्ञाः प्रोक्ता इति ॥ २ ॥ तृतीयेऽध्याये करणरूपगुणाः प्रोक्ता इति ॥ ३ ॥ चतुर्थेऽध्यायेऽवबोधो ज्ञानं पर्वज्ञानं पर्वाध्याय: प्रोक्त इति ॥ ४ ॥ पंचमेऽध्याये वातायनभ्रमणगोचरो ग्रहगोचरः प्रोक्त इति ॥ ५ ॥ षष्ठेऽध्याये सर्वभेदाः सर्वोत्पाताः प्रोक्ता इति ॥ ६ ॥ सप्तमेऽध्याये निषेकात् गर्भाधानकालात् ईषत् स्तोकमात्रं संस्कारकालनयशुद्धिः गर्भाधानादिसंस्कारकालनिर्णयनिर्दोषता प्रोक्ता इति ॥ ७ ॥

**षट्कर्मबाहुजविशामुपवीतकर्म विद्याजपव्रतविधेः समुपक्रमश्च ॥**
**राजाभिषेकवदनाखिलराजसत्तादिग्भेदवद्गमननीतिरशेषरीतिः ॥ ३ ॥**

षट्कर्मेति ॥ अष्टमेऽध्याये षट्कर्मा विप्रः बाहुजः क्षत्रियः विट् वैश्यः एषामुपवीतकर्म यज्ञसूत्रकृत्यं प्रोक्तमिति ॥ ८ ॥ च पुनर्नवमेऽध्याये एषां विप्रादित्रयाणां विद्याजपव्रत-विधेःसमुपक्रमः विद्याजपव्रतविधानप्रारंभः प्रोक्त इति ॥ ९ ॥ दशमेऽध्याये राजाभिषेकवद-नाखिलराजसत्ता भूपाभिषेकप्रमुखसमस्तराज्यांगानि प्रोक्तानीति ॥ १० ॥ एकादशेऽध्यायेऽ-शेषरीतिः समस्तभेदयुक्ता दिग्भेदवद्विभेदतुल्या गमननीतिः प्रयाणनिश्चयः प्रोक्त इति॥११॥

**अध्याययुग्ममुपयामविधानभेदं सर्वांबराभरणधारणमंगभाजां ॥**
**दुर्गं चतुर्विधमनेकविभेदरूपं चानेकभेदग्रहनिर्मितिरार्यरीत्या ॥४॥**

अध्यायेति॥ द्वादशे त्रयोदशे चाध्याये उपयामविधानभेदं विवाहविधानकृत्यं अध्याय-युग्मं प्रोक्तमिति ॥१२॥॥१३॥ चतुर्दशेऽध्यायेऽगभाजां प्राणिनां सर्वांबराभरणधारणं सकल-वस्त्रभूषणधारणं प्रोक्तमिति ॥ १४ ॥ पंचदशेध्यायेऽनेकविभेदरूपं चतुर्विधं दुर्गं सालं प्रोक्तमिति ॥ १५ ॥ च पुनः षोडशेऽध्याये आर्यरीत्या धर्ममार्गेणानेकभेदगृहनिर्मिति-र्गेहकर्तव्यता प्रोक्ता इति ॥ १६ ॥

**गेहप्रवेशननयादिसुरप्रतिष्ठा वन्हेः परिग्रहविधिर्बहुमिश्रकर्म ॥**
**वर्णक्रियाचरणधर्मनयोऽनु किंचित्सत्कालनिर्णयविधिर्व्यवहारसिद्धयै५**

गेहेति ॥ सप्तदशेऽध्याये गेहप्रवेशननयादिसुरप्रतिष्ठा गृहप्रवेशनिर्णयो देवप्रतिष्ठा च प्रोक्ता इति ॥ १७ ॥ अष्टादशेऽध्याये वन्हेरग्नेः परिग्रहविधिरग्न्याधानविधानं प्रोक्त-मिति ॥ १८ ॥ एकोनविंशतितमेऽध्याये बहुमिश्रकर्म प्रोक्तमिति ॥१९॥ विंशतितमेऽध्याये वर्णक्रियाचरणधर्मनयः अनेकवर्णानां क्रिया आचरणं धर्म एषां निर्णयः प्रोक्त इति ॥२०॥ एकविंशतितमेऽध्यायेऽनु पश्चात् किंचित् सत्कालनिर्णयविधिः शुभकालनिर्णयविधानं प्रोक्तं ॥ २१ ॥ कस्मै व्यवहारसिद्धयै सर्वत्र योज्यमिति ॥ ५ ॥

अध्यायकर्मविनिरूपणरीतिरित्थमध्यायकेषु
कृतमाकृति २२ संमितेषु ॥ श्लोकैश्चतुर्दशशतैः
सजिनै १४२४ मयैव ज्योतिर्विदाभरणकाव्यविधानमेतत् ॥ ६ ॥

अध्यायेति ॥ द्वाविंशतितमेऽध्याये अध्यायकर्मविनिरूपणरीतिः प्रोक्ता इति ॥ २२ ॥ इत्थममुना प्रकारेण आकृतिसम्मितेषु द्वाविंशतिप्रमितेष्वध्यायेषु मया श्रीकालिदासेन एव एतज्ज्योतिर्विदाभरणकाव्यविधानं ज्योतिर्विदाभरणनाम कविकर्म कृतं कैः सजिनैश्चतुर्विंशतियुतैश्चतुर्दशशतैः १४२४ श्लोकैः कृत्वा ॥ ६ ॥

वर्षे श्रुतिस्मृतिविचारविवेकरम्ये श्रीभारते खधृतिसंमितदेशपीठे ॥
मत्तोऽधुना कृतिरियं सति मालवेंद्रे श्रीविक्रमार्कनृपराजवरे समासीत्७

अथ विक्रमार्कवर्णनं संदधाति ॥ वर्षे इति ॥ श्रुतिस्मृतिविचारविवेकरम्ये खधृति १८० संमितदेशपीठेऽशीत्यधिकशतप्रमितदेशमंडले श्रीभारते वर्षे भरतक्षेत्रे मत्तः कालिदासात् अधुना सांप्रतमियं कृतिः समासीत् जाता कस्मिन् मालवेंद्रे श्रीविक्रमार्कनृपराजवरे सति शुभे सति ॥ ७ ॥

शंकुः सुवाग्वररुचिर्मणिरंगुदत्तो जिष्णुस्त्रिलोचनहरी घटखर्पराख्यः ॥
अन्येऽपि संति कवयोऽमरसिंहपूर्वा यस्यैव विक्रमनृपस्य सभासदोऽमी८

अथ प्रथमं नृपसभायां पंडितवर्गं वर्णयति—शंकुरिति ॥ यस्य विक्रमनृपस्यैव अमी शंकुप्रमुखाः पंडिताः सभासदः पारषद्याः संति । त्रिलोचनहरी इति द्वंद्वे इमौ शेषं स्पष्टं ॥ ८ ॥

सत्यो वराहमिहिरः श्रुतसेननामा श्रीबादरायणमणित्थकुमारसिंहाः ॥
श्रीविक्रमार्कनृपसंसदि संति चैते श्रीकालतंत्रकवयस्त्वपरे मदाद्याः॥९॥

सत्य इति ॥ च पुनः श्रीविक्रमार्कनृपसंसदि सत्याचार्यादय एते पंडिताश्च पुनरपरे मदाद्या अहं कालिदास आद्यो येषां ते च ते श्रीकालतंत्रकवयः कालविधानशास्त्रज्ञाः संति ॥ शेषं स्पष्टं ॥ श्रुतसेननामा सिद्धसेनदिवाकरो जैनश्वेतांबरसत्कविरपरोनमिकुमदाचंद्र इति श्रीकल्याणमंदिरस्तोत्रांत्यकाव्ये पठितं ॥ अत्र सिद्धशब्दस्थाने छंदोभंगभयात्कविना श्रुतशब्दः प्रयोजितः सिद्धशब्दस्य श्रुतशब्दपर्यायत्वात्॥यदुक्तं हैमानेकार्थ्यां 'सिद्धो व्याघ्रादिके देवयोनौ निष्पन्नमुक्तयोः ॥ नित्ये प्रसिद्धे' इति ॥'ख्याते प्रतीतप्रज्ञातवित्तप्रथितविश्रुताः' इत्याभिधानचिंतामणौ ॥ अस्य संबंधो जैनशास्त्रात् ज्ञेयः ॥ लेशेन सूचितो यतः ॥ दिदृक्षुभिक्षुःसंयातो द्वारपालो न मुंचति॥हस्ते न्यस्तचतुःश्लोक उतागच्छतु गच्छतु॥१॥दीयतां दशलक्षाणि शासनानि चतुर्दश । हस्ते न्यस्तचतुश्लोक उतागच्छतु गच्छतु ॥२॥ सरस्वती स्थिता वक्त्रे लक्ष्मीः करसरोरुहे॥ कीर्तिः किं कुपिता राजन् येन देशांतरं गता ॥ ३ ॥ सर्वदा सर्वदोऽसीति मिथ्या संस्तूयसे बुधैः ॥ नारयो लेभिरे पृष्ठं न वक्षः परयोषितः ॥४ ॥ आहते तत्र निःस्वाने स्फुटितं रिपुहृद्घटैः ॥ गलितं

तत्प्रियानेत्रे राजंश्चित्रमिदं महत् ॥ ९ ॥ अपूर्वेयं धनुर्विद्या भवता शिक्षिता कुतः ॥ मार्गणौघं समभ्येति गुणा यांति दिगंतरम् ॥६॥ इत्यादिना श्रीविक्रमार्कनृपसभायां प्राप्तगरिष्ठप्रतिष्ठ इत्यलं विस्तरेण ॥ ९ ॥

**धन्वंतरिः क्षपणकामरसिंहशंकुवेतालभट्टघटखर्परकालिदासाः ॥ ख्यातो वहारमिहिरो नृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य १०**

अथ पंडितनवकं वर्णयति—धन्वंतरिरिति॥ वै इति पादपूर्तौ शेषं स्पष्टं नवनिधानरत्नवत्स्थायिन एते ॥ १० ॥

**अष्टौ यस्य शतानि मंडलधराधीशाः सभायां सदा स्युः संसत्परिणाहकोटिसुभटाः सत्पण्डिताः षोडश ॥ दैवज्ञा दशषण्मिताश्च भिषजो भट्टास्तथा डाढिनो वेदज्ञा रसचंद्रमा विजयते श्रीविक्रमः सोऽधिभूः॥११**

अथ सभापरिजनान्वर्णयति ॥ अष्टाविति ॥ सदा यस्य श्रीविक्रमार्कस्य सभायां मंडलधराधीशा मुकुटवर्धनराजानोऽष्टौशतानि ८००स्युरेवं संसत्परिणाहकोटिसुभटाः संसदः सभायाः परिणाहो विशालता तस्मिन् कोटिप्रमितसुभटाः स्युः ॥ षोडश सत्पंडिताः स्युः॥ दशषण्मिता दैवज्ञा ज्योतिर्विदः १६ स्युः॥ तथा भिषजः १६ तथा तथा भट्टाः १६ तथा डाढिनः १६ वेदज्ञा वेदपाठकाः सचंद्रमाः १६ स्युः ॥ स श्रीविक्रमोऽधिभूः स्वामी विजयते ॥ ११ ॥

**यस्याष्टादशयोजनानि कटके पादातिकोटित्रयं वाहानामयुतायुतं च नवतित्रिघ्ना कृति २४३०० हस्तिनां ॥ नौकालक्षचतुष्टयं४००००० विजयिनो यस्य प्रयाणे भवत्सोऽयं विक्रमभूपतिर्विजयते नान्यो धरित्रीधरः ॥ १२ ॥**

अथास्य सैन्यं वर्णयति—यस्येति ॥ यस्य विजयिनो विक्रमार्कस्य प्रयाणे कटके सैन्येऽष्टादशयोजनानि निरंतरं कालाध्वनोर्नैरंतर्ये इति द्वितीया पादातिकोटित्रय ३००००००० मभवत् । वाहानामयुतायुतं १०००००००च पुनर्नवतेः९०कृतिः८१००सा त्रिघ्ना क्रियते तदा २४३००हस्तिनां गजानां शतत्रयाधिकचतुर्विंशतिसहस्रमभवत् ॥ पुनर्नौकालक्षचतुष्टयमभवत् ॥ शेषं स्पष्टं ॥ १२ ॥

**येनास्मिन्वसुधातले शकगणान्सर्वा दिशः संगरे हत्वा पंचनवप्रमा५५५५५५५५न्कलियुगे शाकप्रवृत्तिः कृता ॥ श्रीमद्विक्रमभूभुजा प्रतिदिनं मुक्तामणिस्वर्णगोसप्तीभाद्यपवर्जनेन विहितो धर्मः सुवर्णाननः ॥ १३ ॥**

अथास्य शाकप्रवृत्तिं दर्शयति—येनेति ॥ येन श्रीविक्रमार्कभूभुजा कलियुगेऽस्मिन् वसुधातले संगरे संग्रामे सर्वा दिशः सर्वदिक्पर्यंतं पंचानां नवतेः पंचपंचाशत्कोट्यः पंचपंचाशल्लक्षाणि पंचपंचाशत्सहस्राणि पंचशतानि पंचपंचाशत् एभिः प्रमान् प्रमितान् ५५५५५५५५५शकगणान् म्लेंछान् हत्वा शाकप्रवृत्तिः कृता ॥ पुनः श्रीविक्रमादित्येन प्रतिदिनं मुक्ताफलं मणिः रत्नं स्वर्णं हेम गौः सुरभिः सप्तिरश्वः इभो हस्ती इत्यादीनामपवर्जनेन दानेन सुवर्णाननः दानादिचतुर्विधा विप्रादिचतुर्वर्णात्मको वा धर्मो विहितः कृतः ॥ १३ ॥

**उद्दामद्रविडद्रुमैकपरशुर्लाटाटवीपावको वेल्लद्वंगभुजंगराजगरुडो गौडाब्धिकुंभोद्भवः ॥ गर्जद्गुर्जरराजसिंधुरहरिर्धारांधकारार्यमाः कांबोजांबुजचंद्रमा विजयते श्रीविक्रमार्को नृपः ॥ १४ ॥**

अथास्य दिग्विजयमाह—उद्दामेति ॥ स्पष्टम् ॥ १४ ॥

**येनाप्युग्रमहीधराग्रविषये दुर्गाण्यसह्यान्यहो नीत्वा यानि नतीकृतास्तदधिपा दत्तानि तेषां पुनः ॥ इंद्रांभोध्यमरद्रुमस्मरसुरक्ष्माभृद्गुणेनांजसा श्रीमद्विक्रमभूभृताखिलजनांभोजेंदुना मंडले ॥ १५ ॥**

अथास्य प्रभुत्वादिगुणान् वर्णयति—येनेति ॥ अंजसा शीघ्रं येन श्रीमद्विक्रमभूभृता राज्ञा उग्रमहीधरविषये पर्वत तुंगशृंगाग्रेऽसह्यानि गृहीतुमशक्यानि दुर्गाणि यानि अहो आश्चर्ये नीत्वा समादाय तदधिपास्तेषां दुर्गाणां स्वामिनो नतीकृता नम्रीकृताः पुनस्तेषां दुर्गाधिपानां तानि दुर्गाणि दत्तानि । किंभूतेन श्रीविक्रमार्केण इंद्रः अंभोधिः समुद्रः अमरद्रुमः कल्पतरुः स्मरः कामः सुरक्ष्माभृत् मेरुः एषां गुणाः प्रभुत्वगंभीरत्वदातृत्वसुरूपत्वस्थिरत्वाख्या यस्मिन् स तेन । पुनः किंभूतेन मंडले देशे खलजना दुर्जनास्त एवांभोजानि कमलानि तेषु इंदुरिव इंदुस्तेन खलानां पराभवकारकेन इत्यर्थः ॥ जलकमलानि चंद्रातपेन म्लानित्वं समागच्छंतीति रूढिः ॥ १५ ॥

**यद्राजधान्युज्जयिनी महापुरी सदा महाकालमहेशयोगिनो ॥ समाश्रयिप्राण्यपवर्गदायिनी श्रीविक्रमार्कोऽवनिपो जयत्यपि ॥ १६ ॥**

अथास्य पुरीं वर्णयति—यद्राजेति ॥ समाश्रितास्तत्रोषिता ये प्राणिनो लोकास्तेषामपवर्गदायिनी यद्राजधानी विक्रमस्य मूलनिवासनगरी उज्जयिनी यच्छब्दापेक्षया तच्छब्दोऽग्रे ग्राह्यः शेषं सुगमं ॥ १६ ॥

॥२॥ श्रीवर्द्धमानात्तु परंपराप्ते पदेऽभवत् सूरिवरः श्रियाढ्यः ॥ चंद्रप्रभाख्यो विधुकांतिकीर्तिः श्रीपौर्णिमीयाभिधपक्षगच्छे ॥ ३ ॥ श्रीसिद्धराजसदसीह विजित्य सूरीन् वादं विधाय बत षण्मितमामकालं ॥ यः पूर्णिमां जिनवरागमसूक्तियुक्त्या सत्योद्धधार दृढधीरनवद्यनृत्यः ॥४॥ तत्पदे सुक्रियायुक्तो धर्मघोषस्ततो यतः ॥ खद्विचंद्रमिता १२० जाताः शाखाः पौर्णिमिकाभिधाः ॥५॥ परंपराप्ते क्रमतस्ततः श्रीविद्याप्रभः सूरिवरोऽत्र पदे ॥ बभूव शास्त्रार्थसुधासमुद्रप्रोल्लासेन चंद्रसमानधर्मा ॥६॥ ललितप्रभसूरिकुंजरोऽजनि पदे तत आश्रितः श्रियं ॥ विनयप्रभसूरिपुंगवोऽजनि पदे तत आश्रितः श्रियं॥७॥ सत्तत्पूर्वाचलमानुमंतो जयंति शश्वत्किल सूरिराजाः॥ वाग्नार्थतश्चापि गुणैरशेषैः सर्वोत्तमैः श्रीमहिमाप्रभाख्याः ॥ ८ ॥ एषां प्रतापतपनश्च यशःसितांशुर्भुव्यंबरे स्वरिसमस्तपदे प्रयातः॥ नित्योदयौ विदधतो ख लराहुनाशं चित्रं ततो न महतामभितानुभावः ॥ ९ ॥ आप्तोक्तौ परिपूर्णनिर्मलमतिः शब्दानुशास्तौ प्रधीः काव्ये कर्कशतर्कशास्त्रकलने गाणित्यशास्त्रे तथा ॥ सांगे श्रीमहिमाप्रभाख्यसुगुरुः सूरीश्वरो राजते ख्यातः सर्वगणे परोपकरणाद् विद्यादिदानेन वै ॥ १० ॥ तच्छिष्योऽभूद्भावरत्नाभिधानस्तत्पादाब्जोपासनासक्तचित्तः ॥ एतत्सूक्त्या कालिदासस्य गुर्व्या ज्ञातार्थो यस्तद्गुरोर्ज्ञानलाभात् ॥११॥ तेनासौ सुखबोधिका सुललिता ज्योतिर्विदां तुष्टये शास्त्रस्यास्य कृता यथामति मया शोध्या सुधीभिर्यतः॥ संश्लिष्टानि पदान्यनेकश इहैकैकाक्षराख्यान्यपि काठिन्यं कविना गिरां समुदितं त्याज्यं खलत्वात्पुनः ॥१२॥ परिश्रमोऽयं सफलो ममास्यास्ताद्वाच्यमानेन विलेखनेन ॥ सतां प्रसादाच्च ततो दधानैः खलैः खलत्वं जगतीह किं स्यात् ॥ १३ ॥ सज्जनेभ्यो नमो नित्यं खलेभ्योऽपि नमो नमः ॥ भवंत्येके गुणज्ञा यद्दोषज्ञास्त्वपरे दृढं ॥१४॥ उभयेषां कृपादृग्भिः कृतिमें यातु शुद्धितः ॥ अग्निक्षारे यथा हेम निर्दोषं च सुधानतां ॥१५॥ श्रीविक्रमार्कादहिपद्वहयोर्वीमिते गतेऽब्दे खलु राध १७६८। मासे ॥ शुक्ले तृतीयेऽथ तिथौ गभस्तिवारे समाप्ता सुखबोधिकेयम् ॥ १६ ॥ इति श्रीपौर्णिमीयगच्छाधिराजभट्टारकपुरंदरश्री५श्रीमहिमाप्रभसूरीश्वरचरणसरोरुहचंचरीकायमानशिष्यभावरत्नविरचितायां श्रीकालिदासकृतज्योतिर्विदाभरणस्य सुखबोधिकायां ग्रंथाध्यायनिरूपणक्रमश्रीविक्रमार्कनृपवर्णनोनाम द्वाविंशतितमोऽध्यायः संपूर्णः ॥ २२ ॥ गच्छे श्रीमहिमाप्रभाख्यसुगुरोः श्रीपौर्णिमीयाभिधो शिष्यः सूरिवरस्य मांडणसुतो यो भावरत्नाभिधः ॥ वाल्हाकुक्षिसमुद्भवः सुकृतवान् श्रीपत्तने पत्तने छंदोव्याकरणाभिधस्मरणतोऽलंकारयुक्तामिमां॥१॥वक्रवाळधिमारूढो बरडाव्हो महाबली ॥ सुखाय क्षेत्रपालोऽस्तु राकापक्षकधारिणाम् ॥ २ ॥ अस्य मूलग्रंथस्य सर्वाध्याय राशीकृतवृत्तसंख्या १४२० श्लोकमानं तु २४२० अथ वृत्ते संख्या सप्तसहस्रा ७००० सूत्रवृत्तिमीलने ग्रं० ९४२७ अनुष्टुभ्यः ॥ श्रीः

समाप्तम्.

यो रुमदेशाधिपतिं शकेश्वरं जित्वा गृहीत्वोज्जयिनीं महाहवे ॥
आनीय संभ्राम्य मुमोचयस्त्वहो स विक्रमार्कः समसह्यविक्रमः ॥१७॥

यो रुम्मेति ॥ यो विक्रमार्को रुम्मदेशाधिपतिं शकेश्वरं म्लेंछनायकं आहवे संग्रामे जित्वा गृहीत्वा च उज्जयिनीमानीय संभ्राम्य च तु पुनस्तं शकेश्वरं मुमोच अहो इति आश्चर्ये शेषं स्पष्टं ॥ १७ ॥

तस्मिन् सदाविक्रममेदिनीशे विराजमाने समनंतिकायां ॥
सर्वप्रजामंगलसौख्यसंपद्बभूव सर्वत्र च वेदकर्म ॥ १८ ॥

तस्मिन्निति स्पष्टं ॥ १८ ॥

शंक्वादिपंडितवराः कवयस्त्वनेके ज्योतिर्विदः सभमवंश्च वराहपूर्वाः ॥ श्रीविक्रमार्कनृपसंसदि मान्यबुद्धिस्ते- प्यहं नृपसखा किल कालिदासः ॥ १९ ॥
काव्यत्रयं सुमतिकृद्रघुवंशपूर्वं पूर्वं ततो ननु कियच्छ्रु- तिकर्मवादः ॥ ज्योतिर्विदाभरणकालविधानशास्त्रं श्रीकालिदासकवितो हि ततो बभूव ॥ २० ॥

शंकादीति स्पष्टं ॥ २० ॥

वर्षैः सिंधुरदर्शनांबरगुणै३०६८र्याते कलौ संमिते मासे माधवसंज्ञिके च विहितो ग्रंथक्रियोपक्रमः ॥ नानाकालविधानशास्त्रगदितज्ञानं वि- लोक्यादरादूर्जे ग्रंथसमाप्तिरत्र विहिता ज्योतिर्विदां प्रीतये ॥ २१ ॥

अथ ग्रंथारंभसमाप्तिकालौ दर्शयति—वर्षैरिति ॥ सिंधुरो हस्ती ८ दर्शनानि षट् ६ अंबरं खं ० गुणास्त्रयः ३ एभिर्वर्षैः ३०६८ संमिते प्रमिते कलौ कलियुगे याते गते सति माधवसंज्ञिके वैशाखे मासे मया ग्रंथक्रियोपक्रमो ग्रंथकरणप्रारंभो विहितः कृतः ॥ च पुनरत्रोर्जे कार्तिकमासे ग्रंथसमाप्तिर्विहिता कृता कस्यै ज्योतिर्विदां दैवज्ञानां प्रीतये किंकृत्वा नानाकालविधानशास्त्रगदितज्ञानमादरात् विलोक्य दृष्ट्वा । अत्र ग्रंथांते मंगलमपि दर्शितं यतो ज्योतिर्विदां प्रीता प्रसन्ना चासौ या लक्ष्मीश्च प्रीतया तस्याः संबोधने हे प्रितये हे प्रसन्नलक्ष्मी त्वमसि ॥ २१ ॥

इति श्रीकविकालिदासोदिते ज्योतिर्विदाभरणे ग्रंथाध्यायानिरूपणक्रमनृपविक्रमवीरवर्णनाध्यो द्वाविंशतितमः ॥ २२ ॥

अथ सुखबोधिकाकृत्यशस्तिमाह ॥ ध्वस्तैकांतगृहध्वांतं स्यात्काराशीतरश्मिना ॥ सदनुष्ठानफलोपेतं जयताज्जैनदर्शनं ॥१॥ त्रिशदकनकगात्रो रत्नपात्रो गुणाढ्यो विविधफलविशालप्रश्रमार्ङ्गं दधानः ॥ सकलसुरविभूनां सेव्यसामीप्यदायी जयति सततमर्हन् वर्द्धमानः सुरद्रुः॥